# द्विषष्टितमोऽध्यायः

(अध्यायेऽस्मिन् विजयध्वजीयव्याख्या नास्ति)

राजोवाच

★ बाणस्य तनयामूषामुपयेमे यदूत्तमः ।
तत्र युद्धमभूद्घोरं हरिशङ्करयोर्महत् ।
एतत्सर्वं महायोगिन् समाख्यातुं त्वमर्हसि ॥ १ ॥

श्रीशुक उवाच

बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः ।
❖ [1-]अदायि मेदिनी येन वामनाय महात्मने[-1] ॥ २ ॥

तस्यौरसः सुतो बाणः शिवभक्तिरतः सदा ।
मान्यो वदान्यो धीमांश्च सत्यसन्धो दृढव्रतः ॥ ३ ॥

शोणिताख्ये पुरे रम्ये स राज्य मकरोत्पुरा ।
तस्य शम्भोः प्रसादेन किङ्करा इव तेऽमराः ॥

सहस्रबाहु र्वाद्येन ताण्डवेऽतोषयन्मृडम् ॥ ४ ॥

भगवान् सर्व भूतेशः शरण्यो भक्तवत्सलः ।
वरेणच्छन्दयामास स[2] तं वव्रे पुराधिपम् ॥ ५ ॥

---

★ This verse is not found in MI & V editions. ❖ Five half verses begining with अदायि and ending with तेऽमराः are not found in MI. & V edns. 1- -1 B.G.J.MI.v येन वामनरूपाय हरयेऽदायि मेदिनी । 2. K.T.W. स च

## श्रीधरस्वामि विरचिता भावार्थदीपिका

द्वियुक् षष्टितमे प्रोक्त मनिरुद्धस्य रोधनम् । कन्यया रममाणस्य बाणेन बहुबाहुना ॥
★ अनिरुध्दोद्वहेऽन्यस्मिन् बाणयादव संयुगे । श्रीकृष्णः श्रीहरं जित्वा बाणबाहूनथाच्छिनत् ॥ १-४

पुराधिपम् पुरपालकम् ॥ ५ ॥

★ This verse is not found in Ml. V edns.

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथानिरुद्धविवाहा[1]नन्तरं तदीयमेव विवाहान्तरं समासतः श्रुतपूर्वं विस्तरबुभुत्सया पृच्छतिराजा **बाणस्येति**। उषां उषानाम तनयां यदूत्तमोऽनिरुद्धः तत्र निमित्ते हरिशङ्करयोः कृष्णशिवयोः महद्धोरं युद्धमभूदित्येतत्सर्वं मह्यम्, आख्यातु मर्हसि ॥ १ ॥

आचष्टे बाण इत्यादिना, बलेः पुत्राणां शतस्य ज्येष्ठः बाणो नामासीत्। कोऽसौ बलिरित्यत आह। येन बलिना मेदिनी भूमि रदायि दत्ता ॥ २ ॥

बाणं विशिनष्टि - **तस्येति**। तस्य बले रौरसः उरसा निर्मितः सुतः सत्ये सन्धा अभिसन्धिर्यस्य, धृतं रुद्रोपासनात्मकं व्रतं येन सः ॥ ३ ॥

**शोणिताख्य** इति। स बाणः तस्य बाणस्य शम्भोः प्रसादेन वरेण हेतुना, अमरा देवाः किङ्करा इव,किं बहुनेत्याह सहस्त्रबाहुरिति। सहस्त्रं बाहवो यस्य स बाणः "सहस्त्र बाहुवाद्येनेति", समस्तपाठे तु सहस्त्र बाहुभिः यद्वाद्यं वादनं तेन मृडं रुद्रं ताण्डवे नृत्ये अतोषयत्। मृडे ताण्डवं कुर्वति सति सहस्त्रबाहुभिः पञ्चशतवाद्यानि वादयन् तमतोषयदित्यर्थः ॥ ४ ॥

इत्थं तोषितः स भगवान् रुद्रः तं बाणं वरेण, अध्ययनेन वसतीतिवत् तृतीया। वरार्थं छन्दयामास [2]चोदयामास[2] बाणस्तं रुद्रं पुराधिपं पुरपालकं वव्रे त्वं मत्पुरीं पालयन्नास्वेति वव्रे इत्यर्थः ॥ ५ ॥

1. B.K. ह प्रसङ्गात् 2- -2 B. Omits

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

**स एकदाऽऽह गिरिशं पार्श्वस्थं[1] वीक्ष्य दुर्मदः ।**
**किरीटेनार्कवर्णेन संस्पृशंस्तत्पदाम्बुजम् ॥ ६ ॥**

**नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम् ।**
**पुंसामपूर्णकामानां कामपूरामराङ्घ्रिपम् ॥७॥**

**दोस्सहस्त्रं त्वया दत्तं वरं भाराय मेऽभवत् ।**
**त्रिलोक्यां प्रतियोध्दारं न लभे त्वदृते समम् ॥८॥**

**कण्डूत्या निभृतैर्दोर्भिः युयुत्सुर्दिग्गजानहम् ।**
**[2]अभ्ययां चूर्णयन्नद्रीन् भीतास्तेऽपि प्रदुद्रुवुः ॥९॥**

**तच्छ्रुत्वा भगवान् क्रुध्दः केतुस्ते भज्यते यदा ।**
**त्वद्दर्पघ्नो भवेन्मूढ संयुगोमत्समेन ते ॥१०॥**

---

There is no commentary of Vijayadwaja to this Chapter 1. B.G.J.K.T.W. वीर्य 2. B.G.J.MI.V. आद्याऽ या°

**श्रीध० नमस्य** इति। कामान् पूरयतीति कामपूरः स चासौ अमराङ्घ्रिपः कल्पतरुः तं त्वा ॥६,७॥

**कण्डूत्येति**। हे आद्य निभृतैः भरितैः दोर्भिः अद्रीन् चूर्णयन् आयां आगच्छम् ॥८-१०॥

**वीर० स** इति। स बाणः वीर्येण दुष्टो मदो यस्य सः, अर्क इव वर्णो यस्य तेन किरीटेन तस्य रुद्रस्य पादाम्बुजं स्पृशन् गिरिशमुवाच ॥६॥

उक्तिमेवाह - **नमस्य** इति। हे महादेव! त्वां नमस्करोमि। कथम्भूतं, न पूर्णः कामो येषां तेषां पुंसां कामान्पूरयतीति तथा स चासौ अमराङ्घ्रिपः कल्पतरुः तम् ॥७॥

त्वया दत्तं भुज सहस्त्रं केवलं मम भाराय भारार्थमेवाभवत्, त्वदृते त्वां विना मया प्रतियोध्दारं तुल्यं पुरुषं न पश्यामि मदिष्टदैवेन त्वया तु समेनापि न **योत्स्यामीति** भावः ॥८॥

**कण्डूत्येति**। निभृतैः भरितैः भुजैः योध्दुमिच्छुः अद्रींश्चूर्णयन् दिग्गजान् अभ्ययां अभिद्रुतवानस्मि तेऽपि दिग्गजाअपिदुद्रुवुः ॥९॥

**तदिति**। तद्बाणवचः श्रुत्वा भगवान् रुद्रः प्राहेति शेषः। उक्तिमेवाह - केतुरिति। तव **केतुः ध्वजो** यदा भज्यते **स्वयमेव** भग्नः पतेदित्यर्थः। तदा हे मूढ! तव दर्पं हन्तीति तथाभूतः भवेत् सम्भवेत् तेन अमत्समेनेति छेदः नाहं समो यस्य सः तेन मत्तोप्यधिकेन त्वद्दर्पघ्नेन संयुगश्च भवेत् ॥१०॥

इत्युक्तः कुमतिर्हृष्टस्स्वगृहं प्राविशन्नृप ।
प्रतीक्षन् गिरिशादेशं स्ववीर्य[1]नशनं कुधीः ॥ ११ ॥

## उषापरिणय कथा

तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् ।
कन्याऽलभत कान्तेन प्रागदृष्ट श्रुतेन सा ॥ १२ ॥

सा तत्र तमपश्यन्ती क्वासि [2]कान्तेति वादिनी ।
सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् ॥ १३

बाणस्य मन्त्री कुम्भाण्ड श्चित्रलेखा च तत्सुता ।
सख्यपृच्छत्[3-]सखीं चोषां[-3] कौतूहलसमन्विता ॥ १४ ॥

[4-]कान्तं मृगयसे सुभ्रु[-4] कीदृशस्ते मनोरथः ।
हस्त ग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये ॥ १५ ॥

---

1. K.T.W. भ्रं° 2. K. क्वासीति 3- -3 B.G.J. °खीमुषां 4- -4 B.G.J. कं त्वं मृगयसे सुभ्रूः

**श्रीध० इतीति**। स्ववीर्यनशनं नाशकं केतुभङ्गं प्रतीक्षमाणः ॥ ११ ॥

श्रीमहेशादिष्टसङ्ग्रामस्य प्रसङ्गमाह - **तस्येति** प्राद्युम्निना अनिरुध्देन तत्रापि स्वप्ने ॥१२

**सेति**। तं कान्तं अपश्यन्ती सा उत्तस्थौ ॥ १३ ॥

ततः किं [1]वृत्तं तदाह - **बाणस्येति** ॥ १४ ॥

**कान्तमिति**। हस्तग्राहं भर्तारम् ॥ १५ ॥

---

1. Ml.v. कृतं

**वीर० इतीति**। हे नृप! कुबुध्दिः बाणः स्ववीर्यं भ्रंशयतीति तथा तं गिरीशस्यादेशं केतुभङ्गात्मकं प्रतीक्षमाणो गृहान् प्राविशत् ॥ ११ ॥

एवं स्थिते रुद्रादिष्ट सङ्ग्राम प्रसङ्गमाह-**तस्येत्यादिना**। तस्य बाणस्य दुहिता उषा नाम कन्या प्रागदृष्टः अश्रुतश्च तेन प्राद्युम्निना अनिरुध्देन सह रतिं लेभे ।। १२ ।।

**सेति**। सा स्वप्नोप्थिता उषा तं कान्तमपश्यन्ती क्वासि क्वासीत्येवं वदन्ती तत्तदा नितरां व्रीडिता लज्जिता च ।। १३ ।।

ततः किमासीत्तत्राह - **बाणस्येति**। तस्य कुम्भाण्डस्य सुता चित्रलेखा इदमन्वर्थं नाम, सा कौतूहलेन युक्ता सखी° उषां अपृच्छत् ।। १४ ।।

प्रश्नमेवाह - **कान्तमिति**। हे सभ्रु! मनोरथविषयः कीदृशः? हे राजपुत्रि! ते तव हस्तग्रहं हस्तं गृह्णतीति तथा तं भर्तारं अद्यापि नोपलक्षये इत्थंत्वेन न निश्चिनोमीत्यर्थः ।। १५ ।।

**उषोवाच**

**दृष्टः कश्चिन्नरःस्वप्ने श्यामः कमललोचनः ।**
**पीतवासाबृहद्बाहुर्योषितां हृदयङ्गमः ।। १६ ।।**

**तमहं मृगये कान्तं पाययित्वाऽधरं मधु ।**
**क्वापि यातस्स्पृहयतीं क्षिप्त्वा मां व्यसनार्णवे[1] ।। १७ ।।**

**चित्रलेखोवाच**

**व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते[2] ।**
**तमानेष्ये नरं यस्ते मनोहर्ता तमादिश ।।१८ ।।**

**इत्युक्त्वा देवगन्धर्व सिध्दचारणपन्नगान् ।**
**दैत्यान् विद्याधरान् यक्षान् मनुजांश्च यथालिखत् ।।१९ ।।**

**मनुजेषु च सा वृष्णीन् शूर मानकदुन्दुभिम् ।**
**व्यलिखद्रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता ।। २० ।।**

1. B.G.J.Ml.v वृजिनार्णवे 2. K.T.W. °से

**श्रीध० इतीति।** स्वप्ने त्वया दृष्ट एषां मध्ये को वा भवेदिति। देवादीन् यथावत् पटे आलिखत्॥१६-१९॥

**मनुजेष्विति।** प्रद्युम्नं लिखितं वीक्ष्य श्वशुरोऽयमिति लज्जिता ॥२०॥

**वीर०** एवमुक्ता प्राहोषा दृष्टमिति। हृदयङ्गमः मनोहरः ॥१६॥

**तमिति।** मृगये विचिनोमि स्पृहयतीं कांक्षन्तीं मां दुःखार्णवे क्षिप्त्वा क्वापि नूनं यातः ॥१७॥

इत्येवमुक्ता प्राह चित्रलेखा **व्यसनमिति।** तव व्यसनं दुःखं अपनयामि, कथं, त्वया यदि त्रिलोक्यां कश्चिद्भाव्यते अयमेवेति निश्चीयते तर्हि तं नरं पुरुषमानेष्ये, अतो यस्ते मनोहर्ता तं प्रति मां आदिश आज्ञापय ॥१८॥

**इतीति।** इत्थमुक्त्वा देवादीन् पटे यथावत् अलिखत् ॥१९॥

यदा च मनुष्येष्वपि वृष्णीन् तत्रापि सुरादीनलिखत् तदा प्रद्युम्नं वीक्ष्य लज्जिता पुत्रतुल्यरूपत्वादिति भावः ॥२०॥

**अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया[1]।**
**सोसावसाविति प्राह स्मयमाना महीपते ॥२१॥**

**चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ।**
**ययौ विहायसा राजन् द्वारकां कृष्णपालिताम् ॥२२॥**

**तत्र सुप्तं सुपर्यङ्के प्राद्युम्निं योगमास्थिता[2] ।**
**गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् ॥२३॥**

**सा च तं सुन्दरवरं विलोक्य मुदितानना ।**
**दुष्प्रेक्षे स्वगृहे पुम्भी रेमे प्राद्युम्निना समम्[3] ॥२४॥**

**परार्ध्यवासस्त्रक् गन्ध धूपदीपासनादिभिः ।**
**पानभोजन भक्ष्यैश्च वाक्यैश्शुश्रूषयार्चितः ॥२५॥**

---

1. Ml. T.V.W. स्थिता 2. K.T.W. °माश्रिता 3. K.T.W. सह

**श्रीध० अनिरुद्धमिति।** अनिरुद्धं विलिखितं वीक्ष्य उषा अवाङ्मुखी बभूव ॥२१, २२॥

**तत्रेति**। शोणितपुरं नीत्वा ॥२३॥

**सेति**। पुम्भिर्दुष्प्रेक्ष्ये प्रेक्षितु मशक्ये ॥२४॥

**परार्थ्येति**। स च परार्थ्यैरमूल्यैः वासस्त्रक् गन्धादिभिः शुश्रूषणपूर्वकं अर्चितस्सन् ॥२५॥

**वीर०** ततः अनिरुध्द मवलोक्य ह्रिया लज्जया अवाङ्मुखी बभूव। स स्वप्नदृष्टः असावेव असावेवेति प्राह हे महीपते! ॥२१॥

तमुषया निश्चितं कृष्णस्य पौत्रं अनिरुध्दं विज्ञाय योगिनी वैहायसगमनान्तर्धान तूर्णगमनाद्यावहयोगशालिनी आकाशमार्गेण द्वारकां ययौ ॥२२॥

तत्र द्वारकायां शोभने पर्यङ्के सुप्तं प्राद्युम्निं अनिरुध्दं गृहीत्वा शोणितपुरमागत्येति शेषः। सख्यै उषायै ॥२३॥

**सा चेति**। सा उषा पुम्भिरितरैः प्रेक्षितुमशक्ये स्वगृहे प्राद्युम्निना सह अनिरुध्देन समं रेमे ॥२४॥

**परार्थ्येति**। परार्थ्यैः वासःप्रभृतिभिः शुश्रूषया अर्चितो बहुमतः सोऽनिरुध्दः ॥२५॥

**गूढः कन्यापुरे[1] शश्वत् प्रवृध्दस्नेहया[2] तया।**
**नाहर्गणान् स बुबुधे ह्युषयापहृतेन्द्रियः[3] ॥२६॥**

**तां तथा यदुवीरेण भुज्यमानां हतव्रताम् ।**
**हेतुभि र्लक्षयाञ्चक्रुः आप्रीतां[4] दुरवच्छदैः ॥२७॥**

**भटा आवेदयाञ्चक्रुः[5-5] राजंस्ते दुहितुर्वयम्।**
**विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥२८॥**

**अनपायिभिरस्माभिः गुप्तायास्स्वगृहे[6] प्रभो ।**
**कन्याया दूषणं पुम्भिः दुष्प्रेक्ष्यायाः[7] न विद्महे ॥२९॥**

**ततः प्रव्यथितो बाणो दुहितुश्श्रुत दूषणः ।**
**त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीद्यदूद्वहम् ॥३०॥**

---

1. K.T.W. ध्यान्तःपुरे 2. K.T.W. प्ररूढ° 3. B.G.J. उ° 4. K.T.W. दूषितां 5- -5 K.T.W. निवेदयामासु° 6. B.G.J. °ध्व 7. B.G.J. °क्षा°

**श्रीध० गूढ** इति। तया उषया अपहृतेन्द्रियः अहर्गणान् दिवससमूहान् न बुबुधे ॥ २६ ॥

**तामिति**। आप्रीतां अतिहृष्टां दुरवच्छदैः आच्छादयितु मशक्यैः ॥ २७ ॥

**भटा** इति। विचेष्टितं विरुद्धाचरणम् ॥ २८ ॥

**अनपायिभिरिति**। अनपायिभिः अपायः अपसर्पणं प्रमादो वा, तद्रहितैः। पाठान्तरे [1]दुष्प्रेष्यायाः दुष्टा प्रेष्या सखी यस्याः तस्याः[1]। पुम्भिः दूषणं कुतो वेति न जानीम इति ॥ २९, ३० ॥

---

1- -1 B.J. omit

**वीर०** उषाया गृहे गूढः शश्वन्नित्यं प्रवृध्दः स्नेहो यस्यास्तया उषयाऽपहृतं इन्द्रियं मनो यस्य सः, अहर्गणान् न बबुधे न ज्ञातवान् ॥ २६ ॥

**तामिति**। यदुवीरेणानिरुध्देन भुज्यमानमत एव क्षतं विहतं व्रतं कन्याया विहतं यस्यास्तथाभूतां वीक्ष्य दुरवच्छदैः छादयितुमशक्यैः हेतुभिः चिह्नैः दूषितां लक्षयाञ्चक्रुः ॥ २७ ॥

**भटा** इति। तत स्ते राज्ञे बाणाय आवेदयाञ्चक्रुः। आवेदनप्रकारमेवाह - 'राजन्नित्यादिना' 'न विद्महे' इत्यन्तेन। हे राजन्! कुलं दूषयतीति तथा तच्चेष्टितं लक्षयामः ॥ २८ ॥

अनपायिभिः अनुसरद्भिः अप्रमादैः अस्माभिः स्वगृहे गुप्ताया अपि दूषणं न विद्महे ॥ २९ ॥

**तत** इति। दुहितुः यत् दूषणं तच्छ्रुतं येन स बाणः अत एव प्रव्यथितः त्वरायुक्तः कन्यकागृहं प्राप्य यदूद्वहं अनिरुद्धं ददर्श ॥ ३० ॥

**कामात्[1]मजातं भुवनैकसुन्दरं श्यामं पिशङ्गाम्बर मम्बुजेक्षणम् ।**
**बृहद्भुजं कुण्डलकुन्तलत्विषा स्मितावलोकेन च मण्डिताननम् ॥ ३१ ॥**

**दीव्यन्तमक्षैः प्रिययाभिनृम्णया तदङ्गसङ्गस्तनकुङ्कु[2]मां स्रजम् ।**
**बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः ॥ ३२ ॥**

**स तं प्रविष्टं वृतमाततायिभिः [3]भुजैः सहस्रै रवलोक्य माधवः ।**
**उद्यम्य मौर्वं परिघं व्यवस्थितो यथान्तको दण्डधरो जिघांसया ॥ ३३ ॥**

जिघृक्षया तान् परितः प्रसर्पतः शुनो यथा सूकर यूथपोऽहनत् ।
ते हन्यमाना भवनाद्विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥ ३४ ॥

तं नागपाशैः बलिनन्दनो बली घ्नन्तं स्वसैन्यं कुपितो बबन्ध ह ।
उषा भृशं शोकविषादविह्वला बद्धं निशाम्याश्रुकलाक्ष्यरोदीत् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्त्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

दशमस्कन्धे उत्तरार्धे द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

1. B.G.J. °स्रजं तं 2. B.G.J. MI.V. °म° 3. B.G.J.K.T.W. भटैरनेकैः 4. T.W. वि° ; B.G.J. क्ष्यरौदिषीत. 5. K.T.V.W. °क्ष्यरोदीत.

**श्रीध० कामात्मजातमिति**। कामस्यात्मनो देहात् जातम् ॥ ३१ ॥

**दीव्यन्तमिति**। अभिनृम्णया सर्वमङ्गलया। तस्या अग्ङसङ्गेन स्तनकुङ्कुमं यस्यां स्रजि तां बाह्वो र्मध्ये वक्षसि दधानं मधुमल्लिकाः वसन्तभवा मल्लिकाः तदाश्रिताम्। तस्याग्र इत्यार्षः सन्धिः तस्या अग्र इत्यर्थः ॥ ३२ ॥

**स इति**। आततायिभिः उद्यतशस्त्रैः माधवः अनिरुध्दः, मौर्वं मुरुः लोहविशेषः तन्निर्मितम् ॥ ३३-३४ ॥

**तमिति**। शोकविषादाभ्यां विह्वला विवशा[1] अश्रूणां कलाः बिन्दवः ययो स्ते अक्षिणी यस्यास्सा ॥ ३५ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

1. B.J. अवशाः

**वीर०** कथम्भतम्? कामस्य प्रद्युम्नस्य आत्मनो देहाज्जातम्। अत एव भुवनैकसुन्दरं कुण्डलयोः कुन्तलानां च त्विषा स्मितयुक्तेन अवलोकेन च मण्डितं आननं यस्य तम् ॥ ३१ ॥

अभिनृम्णया सर्वतो मङ्गलया प्रियया सह अक्षैर्दिव्यन्तं क्रीडन्तं तस्या अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां, मधुमल्लिकाः वसन्तभवमल्लिकाः ताभिः आश्रितां स्रजं बाह्वोर्मध्ये वक्षसि दधानं तस्याग्रेपुरतः, अत्र सन्धिरार्षः। आलक्ष्य अवलोक्य विस्मितो बभूव ॥ ३२ ॥

**स** इत्यादि सार्धमेकान्वयि। स माधवो मधुवंशप्रभवोऽनिरुद्धः, अत एव आततायिभिः उद्यतायुधैः भटैः परिवृतं तं बाणमवलोक्य यथा दण्डधरोऽन्तकः तद्वत्। जिघांसया तत्र व्यवस्थितं लोहमयं परिघमुद्यम्य ग्रहीतु मिच्छया परितः [1]परिसर्पतः तानाततायिनः अहनत् जघान। यथा सूकराणां यूथं पातीति तथा सूकरश्रेष्ठः शुनो हन्ति तद्वत्। त इति, ते आततायिनः निर्भिन्नाः मूर्धादयो येषां ते। अत एव गृहात् निर्गताः दुद्रुवुः ॥३३,३४॥

**तमिति**। बली बलवान्, बलि नन्दनो बाणः स्वसैन्यं घ्नन्तं अनिरुद्धं कुपितो नागपाशैः बबन्ध ह। शोकविषादाभ्यां बाह्याभ्यन्तर दुःखाभ्यां विह्वला अवशा अश्रूणां कला बिन्दवो ययो स्ते अक्षिणी यस्याः सा रुरोद ॥३५॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्विषष्टितमोऽध्यायः ॥६२॥

---

1.B. प्रसर्पतः



# त्रिषष्टितमोऽध्यायः

## (अध्यायेऽस्मिन् विजयध्वजीय व्याख्या नास्ति)

-: बाणासुर युद्धकथारम्भः :-

**श्रीशुक उवाच**

**अपश्यतां चानिरुद्धं तद्बन्धूनां च भारत ।**
**चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥ १ ॥**

**नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ।**
**प्रययुश्शोणितपुरं वृष्णयः कृष्णपालिताः[1] ॥ २ ॥**

**प्रद्युम्नो युयुधानश्च गदस्साम्बोऽथ सारणः ।**
**नन्दोपनन्द भद्राद्या रामकृष्णानुवर्तिनः ॥ ३ ॥**

**अक्षौहिणीभिर्द्वादशभिः समेतास्सर्वतोदिशम् ।**
**रुरुधुर्बाणनगरं समन्तात्सात्त्वतर्षभाः ॥ ४ ॥**

**भज्यमान पुरोद्यान प्राकाराट्टालगोपुरम् ।**
**प्रेक्षमाणो रुषाऽऽविष्टः तुल्यसैन्योऽभिनिर्ययौ[2] ॥ ५ ॥**

---

1. B.G.J. देवताः 2. K.T.W. विनिर्ययौ ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रियुक्षष्टितमे नाथ बाणयादवसङ्गरे । स्तुतिर्ज्वरेण रुद्रेण बाणबाहुभिदो हरेः ॥
[1-]अनिरुद्धोद्वहेन्यस्मिन् बाणयादवसंयुगे । श्रीकृष्णः श्रीहरं जित्वा बाणबाहूनथाच्छिनत्[-1] ॥

**नारदादिति** । तत्ततः कर्म च युद्धादिकम् ॥ १,२ ॥

**प्रद्युम्न** इति । रामकृष्णानुवर्तिन इति तौ पुरतो निर्गतावित्यर्थः ॥ ३ ॥

**अक्षौहिणीभिरिति** । सर्वतोदिशमित्यस्य उत्तरेणान्वयः ॥ ४ ॥

**भज्यमानेति** । भज्यमानानि पुरोद्यानानि द्वन्द्वैकवद्भावः, अट्टालाः प्राकारादुपरि अत्युन्नतस्थानानि, अभिनिर्ययौ बाणः ॥ ५ ॥

1- -1 B.J. Omit

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथानिरुद्धादर्शनजव्यथानां क्रमेण नारदाच्छ्रुत तद्वार्तानां प्राप्तशोणितपुराणां यदूनां बाणेन सह संग्रामं वर्णयति त्रिषष्टितमेन - **अपश्यतामिति** । अनिरुद्धमपश्यतां तस्य अनिरुद्धस्य बन्धूनां अनुशोचतां सतां वार्षिकाः आषाढाद्याश्विनान्ताः चत्वारो मासाः व्यतीयुः अतिक्रान्ताः ॥ १ ॥

**नारदादिति** । बद्धस्यानिरुद्धस्य वार्तां बन्धनात्पूर्वं तस्य कर्म च श्रुत्वा कृष्णेन पालिताः कृष्णसहिता इत्यर्थः, वृष्णयो यादवाः ॥ २ ॥

वृष्णिप्रधानानाह - **प्रद्युम्न** इति । एते सर्वे रामकृष्णावनुवर्तन्त इति तथा भूताः ययुः ॥ ३ ॥

**अक्षौहिणीभिरिति** । समेताः सहिताः ॥ ४ ॥

**भज्यमानेति** । भज्यमानानां पुरादीनां द्वन्द्वैकवद्भावौ, यद्वा बहुव्रीहिरेव । पुरमिति विशेष्याध्याहारः । रुषा आविष्टो व्याप्तो बाणः । तुल्यसैन्यः द्वादशाक्षौहिणीसैन्ययुक्तः विनिर्गतः, पुरादिति शेषः, अट्टालाः प्राकारादुपरितनानि उन्नतस्थानानि ॥ ५ ॥

अस्मिन्नध्याये विजयध्वजीय व्याख्यानं नास्ति ।

**बाणार्थे[1] भगवान् रुद्रः ससुतः[2] प्रमथैर्वृतः ।**
**आरुह्य नन्दिवृषभं युयुधे रामकृष्णयोः ॥ ६ ॥**

**आसीत्सुतुमुलं युद्धमद्भुतं रोमहर्षणम् ।**
**कृष्णशङ्करयोः राजन् प्रद्युम्नगुहयोरपि ॥ ७ ॥**

**कुम्भाण्डकूपकर्णाभ्यां बलेन सह संयुगः ।**
**साम्बस्य बाणपुत्रेण बाणेन सह सात्यकेः ॥ ८ ॥**

ब्रह्मादयस्सुराधीशा मुनयस्सिद्धचारणाः ।
गन्धर्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥९॥

शङ्करानुचरान् शौरिः भूतप्रेतान् सगुह्यकान् ।
डाकिनीयातुधानांश्च [3-]यक्षरक्षो[-3]विनायकान् ॥१० ॥

---

1. K.MI.T.V.W. बाणार्थं 2. B.G.J.MI.V. °तैः 3- -3 B.G.J. भेतालान् स°

**श्रीध० बाणार्थमिति**। सुतः स्कन्दः तत्सहितैः। प्रमथगणैः रामकृष्णाभ्यां युयुधे ॥६-१०॥

**वीर० बाणार्थमिति**। बाणस्य सहायार्थं ससुतः स्कन्देन सहितः नन्दिनाम वृषभमारुह्य, रामकृष्णाभ्यां युयुधे [1]आयुध्यत ॥६॥

**आसीदिति**। तुमुलं सङ्कुलं रोमहर्षणं शृण्वतां पश्यतां च रोमोद्गमावहम्, कस्य केन सहेत्यत आह कृष्णशङ्करयोरिति सार्धेन। हे राजन्! बलेन बलभद्रेण सह ॥७॥

**ब्रह्मादय** इति। सिद्धचारणानां इतरेतरयोगद्वन्द्वः, तदा गन्धर्वादयोऽपि आगमन् आजग्मुः ॥८,९॥

**शङ्करानुचरानिति** । शौरिः कृष्णः शार्ङ्गाख्यात् धनुषः च्युतैः तीक्ष्णमग्रं येषां तैः, शरैः भूतादीन् शङ्करस्यानुचरान् द्रावयामासेति सम्बन्धः ॥१०॥

---

1.B.K. अ°

[1]भूतमातृपिशाचांश्च कूष्माण्डान् ब्रह्मराक्षसान् ।
[2]द्रावयामास तीक्ष्णाग्रैश्शरैः शार्ङ्गधनुश्च्युतैः ॥११॥

पृथग्विधानि प्रायुङ्क्त पिनाक्यस्त्राणि शार्ङ्गिणे[3] ।
प्रत्यस्त्रैश्शमयामास शार्ङ्गपाणि रविस्मितः ॥१२॥

ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् ।
आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥१३॥

**मोहयित्वाऽथ गिरिशं जृम्भणास्त्रेण जृम्भितम् ।**
**बाणस्य पृतनां शौरिर्जघानासिगदेषुभिः ॥१४॥**

**स्कन्दः प्रद्युम्नबाणौघैरर्द्यमानस्समन्ततः ।**
**असृग्विमुञ्चन् गात्रेभ्यश्शिखिनाऽपाक्रमद्रणात् ॥१५॥**

---

1. B.G.J.K. प्रेत 2. Ml.v ताडया 3. K.T.W. °णि

**श्रीध०** प्रत्यस्त्राण्येवाह - **ब्रह्मास्त्रस्येति**। नैजं नारायणास्त्रम् ॥११-१४॥

**स्कन्द** इति। शिखिना मयूरेण वाहनेन ॥१५॥

**वीर० पृथग्विधानीति**। पिनाकी रुद्रः शार्ङ्गिणि कृष्णे पृथग्विधानि नानाविधान्यस्त्राणि प्रयुक्तवान्, शार्ङ्गपाणिः कृष्णः अविस्मित एव तानि प्रत्यस्त्रैः शमयामास ॥११,१२॥

तदेवाह **ब्रह्मास्त्रस्येति**। नैजं नारायणास्त्रं शामकं प्रायुङ्क्तेत्यर्थः ॥१३॥

**मोहयित्वेति**। जृम्भणाख्येनास्त्रेण गिरिशं जृम्भितं जृम्भणयुक्तं यथा तथा मोहयित्वा ॥१४॥

**स्कन्द इति**। स्कन्दः षण्मुखः, असृग् रुधिरं विमुञ्चन् शिखिना मयूरवाहनेन सह रणस्थानात् प्राद्रवत् ॥१५॥

**कुम्भाण्डः कूपकर्णश्च पेततुर्मुसलार्दितौ ।**
**दुद्रुवुस्तदनीकानि हतनाथानि सर्वतः ॥१६॥**

**विशीर्यमाणं स्वबलं दृष्ट्वा बाणोऽत्यमर्षणः[1] ।**
**कृष्णमभ्यद्रवत्संख्ये रथी हित्वैव सात्यकिम् ॥१७॥**

**धनूंष्याकृष्य युगपत् बाणः पञ्चशतानि वै ।**
**एकैकस्मिन् शरौ द्वौ द्वौ सन्दधे रणकोविदः ॥१८॥**

**तानि चिच्छेद भगवान् धनूंषि युगपद्धरिः ।**
**सारथिं रथमश्वांश्च हत्वा शङ्खमपूरयत् ॥१९॥**

**तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा ।**
**पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥ २० ॥**

---

1. K.T.W. °मर्दितः

**श्रीध० कुम्भाण्ड** इति। तयोरनीकानि [1-]हताः नाथाः[-1] येषां तानि ॥ १६-२० ॥

---

1--1 B.J. हतौ नाथौ

**वीर० कुम्भाण्ड** इति। मुसलेन बलभद्रप्रयुक्तेन अर्दितौ पेततुः हतौ नाथौ येषां तानि तयोरनीकानि सर्वतो दिक्षु दुद्रुवुः ॥ १६ ॥

**विशीर्यमाणमिति**। विशीर्यमाणं हन्यमानं दृष्ट्वा अतीव न मृष्यतीति तथा, सबाणस्सात्यकिं प्रतियोद्धारं हित्वा अनादृत्य सङ्ख्ये युद्धे रथी सन् कृष्णमभ्यद्रवत् ॥ १७ ॥

**धनूंषीति**। रणे दुष्टो मदो यस्य स बाणः एकैकस्मिन् धनुषि द्वौ द्वौ शरौ सन्दधे तानि संहितमात्रशराण्येव, न तु प्रयुक्तबाणानि, धनूंषि चिच्छेद, सायकैरिति शेषः। ततः सारथिरथाश्वान् हत्वा नाशयित्वा, शङ्खं पाञ्चजन्यमपूरयत् ॥ १८, १९ ॥

**तन्मातेति**। तस्य बाणस्य माता कोटरा नाम नग्ना, मुक्ता विस्रस्ताः केशाः यस्यास्तथाभूता च पुत्रस्य प्राणान् रक्षितुमिच्छया। कृष्णस्य पुरतः उपतस्थे अवस्थितवती ॥ २० ॥

**ततस्तिर्यङ्मुखो नग्नामनिरीक्षन् गदाग्रजः ।**
**बाणश्च तावद्विरथ श्छिन्नधन्वाऽविशत्पुरम् ॥ २१ ॥**

**विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ।**
**महादेव प्रयुक्तोऽसौ घोररूपो विभीषणः ॥**
**★ अभ्य[1]धावत दाशार्हं दहन्निव दिशो दश ॥ २२ ॥**

**❖ आविर्बभूव पुरतस्समरे शार्ङ्गधन्वनः ।**
**अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ २३ ॥**

**माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ।**
**माहेश्वरः समाक्रन्दत् वैष्णवेन बलार्दितः ॥ २४ ॥**

**अलब्ध्वाऽभयमन्यत्र भीतो माहेश्वरो ज्वरः ।**
**शरणार्थी हृषीकेशं तुष्टाव प्रयताञ्जलिः ॥ २५ ॥**

---

★ This half verse is not found in Ml.v editions. 1. K.T.W. पद्यत । ❖ This half verse is not found in G.J. editions

**श्रीध० तत** इति। अनिरीक्षमाणः तिर्यङ्मुखो बभूवेति ॥ २१, २२ ॥

**आविर्बभूवेति**। ज्वरस्तु योध्दुमभ्यधावदिति नारायणश्शीतज्वरमसृजत् ॥ २३.२५ ॥

**वीर०** तत इति। नग्नामनीक्षमाणः तिर्यङ्मुखो बभूव, तावत् तदन्तरं लब्ध्वेत्यर्थः ॥ २१ ॥

**विद्रावित** इति। भूतगणे विद्राविते पलायिते सति शङ्करेण प्रयुक्तः घोरं रूपं यस्य सः, विशेषेण भीषयतीति तथा, त्रीणि शिरांसि यस्य, त्रयः पादा यस्य सः, तापज्वरः दश दिशो दहन्निव दाशार्हं कृष्णमभ्यपद्यत अभ्याजगाम ॥ २२ ॥

समरे शार्ङ्गधन्वनः कृष्णस्याग्रे आविर्बभूव च अथेति। देवः कृष्णः तं ज्वरं दृष्ट्वा, ज्वरं वैष्णवं शीतज्वरं व्यसृजत् प्रायुङ्क्त ॥ २३ ॥

माहेश्वरो वैष्णवश्चेत्युभौ ययुधाते युद्धं कृतवन्तौ, तदा वैष्णवेन ज्वरेण कर्त्रा बलेन साधनेनार्दितः विहतः माहेश्वरो ज्वरः समाक्रन्दत् रुरोद ॥ २४ ॥

**अलब्ध्वेति**। अन्यत्र अन्यतः अभयमलब्ध्वा अत एव नितरां भीतः शरणं रक्षितारं तदुपायं वा। अर्थयत इति तथा बद्धाञ्जलिः, कृष्णं तुष्टाव ॥ २५ ॥

**माहेश्वरज्वर उवाच**

**नमामि त्वाऽनन्तशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम् ।**
**विश्वोत्पत्तिस्थान संरोधहेतुं यत्तद्ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ॥ २६ ।**

**कालो दैवं कर्मजीवस्स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः ।**
**तत्संधातो बीजरोह प्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥२७॥**

**नानाभावैर्लीलयैवोपपन्नैः दैवान् साधून् लोकसेतून् बिभर्षि ।**
**हंस्युन्मार्गान्[1] हिंसया वर्तमानान् जन्मैतत्ते भारहाराय भूमेः ॥२८॥**

**तप्तोऽहं ते तेजसा दुस्सहेन शान्तोग्रेणात्युल्बणेन ज्वरेण ।**
**तावत्तापो देहिनां तेऽङ्घ्रिमूलं नो सेवेरन् यावदाशानुबद्धाः ॥ २९॥**

**श्रीभगवानुवाच**

**त्रिशिरस्ते प्रसन्नो[2]ऽहं व्येतु ते मज्ज्वराद्भयम् ।**
**यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम् ॥३०॥**

---

1. K. स्वेच्छया 2. B.G.J. °न्नोऽस्मि

**श्रीध०** आत्मानं परमशक्तं मन्यमानः श्रीकृष्णं तापयितुं प्रवृत्तः स्वयमेव तप्यस्सन्, तं परमेश्वरं ज्ञात्वा स्तुवन् नमस्करोति - **नमामीति**। त्वा त्वां अनन्तशक्तिं नमामि कुतः परेषां ब्रह्मादीनां ईशं तत्र हेतुः सर्वात्मानं **सर्वस्य** आत्मानं चेतयितारं, तत्कुतः केवलं शुद्धं ज्ञप्तिमात्रं चैतन्यघनं, तदेवं सर्वचेतयितृत्वेन परमेश्वरत्वमुक्तं, किञ्च विश्वसृष्ट्यादि हेतुत्वादपीत्याह - विश्वोत्पत्तीति, नन्वेवम्भूतं ब्रह्मप्रसिद्धं नाहमिति चेत् तत्राह यत्तद्ब्रह्मेति। **यद्ब्रह्म** तदेव त्वमित्यर्थः। किं तद्ब्रह्म इत्यत आह - ब्रह्मलिङ्गं ब्रह्मणा वेदेन लिङ्ग्यते द्योत्यत इति, तत्कुतः **प्रशान्तं** सर्वविक्रियारहितत्वात् न साक्षात् वाच्यमिति भावः ॥२६॥

किञ्च यत्सविशेषं वस्तु तत्र वयं प्रभवामः त्वयि तु सर्वविशेषातीते न कस्यापि प्रभुत्वं, किन्तु त्वमेव सर्वप्रभुरिति ज्ञप्तिमात्रत्वं विवृण्वन् स्तौति **काल** इति। कालः क्षोभकः कर्म निमित्तं, तदेव फलाभिमुखमभिव्यक्तं दैवं स्वभावः तत्संस्कारः जीवः तद्वान्। द्रव्यं भूतसूक्ष्माणि क्षेत्रं प्रकृतिः प्राणः सूत्रं आत्मा अहङ्कारः विकार एकादशेन्द्रियाणि महाभूतानि चेति षोडशकः तत्संघातो लिङ्गदेहः एतस्य च बीजरोहप्रवाहः रोहोङ्कुरः देहाद्बीजरूपं कर्म ततोङ्कुररूपो देहः ततः पुनरेवमिति प्रवाहः एषा त्वन्माया तस्या निषेधः अपोहो यस्मिन्निति तं त्वां निषेधावधिभूतं प्रपद्ये भज इति ॥२७॥

ननु देवकीतनयस्य कथमेवम्भूतत्वं तत्राह **नानाभावैरिति**। सर्वोपाधि विनिर्मुक्त एव त्वं यथा लीलया स्वीकृतैः मत्स्याद्यवतारैः देवादीन् बिभर्षि पालयसि तदर्थं लोकसेतून् वर्णाश्रमधर्मान् तदर्थं तदनुष्ठातॄन् साधून्। तदङ्गत्वेन उन्मार्गान् दैत्यादीन् हंसि संहरसि। एवमेतदपि तव जन्मभूमेर्भारहरणाय। लीलावतारोऽयं न कस्यापि त्वं तनय इत्यर्थः ॥२८॥

अतः अज्ञानतस्त्वदभिभवे प्रवृत्तं मां तप्तं रक्षेत्याशयेनाह-**तप्त** इति। तेजसा त्वत्सृष्टेन ज्वरेण, शान्तोग्रेण शीतज्वरेण परसन्तापकस्य युक्त एव ताप इति चेदत आह-तावदिति। त्वत्सेवायां प्रवृत्तानामनुचित इति भावः ॥२९॥

**त्रिशिर** इति। हे त्रिशिरः! व्येतु अपयातु मदाज्ञापालकस्सन् सुखं विचरका सा आज्ञा? तामाह-य इति। नौ आवयो रिमं संवादं यः स्मरति तस्य त्वत् त्वत्तः भयं न भवेत् त्वया भयं नोत्पादनीयं इत्यर्थः ॥३०॥

**वीर०** स्तुतिमेवाह-**नमामीति** चतुर्भिः। तावत्स्वरक्षणोपयुक्त परत्वविशिष्टं स्तौति द्वाभ्यां, परेशं त्वां नमामि परेषां ब्रह्मादीनामपीशं नियन्तारं किं प्राकृत राजादिवत् नेत्याह-सर्वात्मानमिति। सर्वेषां ब्रह्मादीनां आत्मानं अन्तः प्रविश्य धारकत्वेन नियन्तारमित्यर्थः। कथमणुस्वरूप ब्रह्मादि जीववर्गान्तः प्रवेश इत्यतो विशिनष्टि केवलं निरवयवं ज्ञानमात्रस्वरूपं साजात्यादन्तःप्रवेशोपपत्ति रिति भावः। मात्रशब्देन क्वचिदपि जाड्यराहित्यं विवक्षितं, ननु परेशस्तर्हि कोऽसौ जगत्कर्तेत्यत्र त्वमेवेति वक्तुं कारणत्वोपयुक्त सर्वशक्तित्वादि गुणयोगमाह अनन्तशक्तीति। कारणत्वमाह विश्वोत्पत्तीति। स्थानं स्थितिः विश्वस्योत्पत्त्यादि हेतुमित्यर्थः। ममैवंविधत्वे किं प्रमाणमत आह ब्रह्मलिङ्गं वेदप्रमाणकम् ननूक्तविधं ब्रह्म न त्वहं तत्राह यत्तद्ब्रह्मेति। यद्वेदान्तप्रसिद्धं ब्रह्म तदभिन्नं त्वां, नन्वहमपि, कदाचित् शोचामि। नेत्याह प्रशान्तं अशनायापिपासाशोकमोहजरामृत्युरूपोर्मिषट्करहितम् ॥२६॥

कालकर्मस्वभावादीनामेव जगद्धेतुत्वं न ममेत्यत आह-**काल** इति। दैवं कालाद्यभिमानि देवता। कर्म जीवादृष्टं, स्वभावः जडत्वाऽजडत्वपरिणामित्वादि तत्तद्वस्तु स्वभावः, द्रव्यं पृथिव्यादि भूतपञ्चकं, क्षेत्रं पृथिव्याद्युत्पत्तिभूमिः प्रकृतिः, प्राणः पञ्चवृत्तिः प्राणः, आत्मा मतिः, विकारः अवस्थाभेदः, तत्सङ्घातश्शरीरं, बीजरोहप्रवाहः कार्यकारणप्रवाहः, एषा एतत्सर्वं त्वन्माया त्वत्सङ्कल्परूप ज्ञानाधीनमित्यर्थः। एषेति सर्वनामत्वात्पर्यायेणोद्देश्य विधेयलिङ्ग भांक्त्यात् प्रतिनिर्दिश्यमानमायापेक्षया स्त्रीलिङ्ग निर्देशः। तं त्वां निषेधं नेति नेतीति प्रकृति प्राकृत समस्त वस्तु गत प्रकारो यस्मिन्निषिध्यते तं त्वा प्रपद्ये इत्यर्थः। निषेधं इत्यत्र अधिकरणे घञ् ॥२७॥

ननूक्तविधः परेशोऽन्य एव अहं तु यदुष्वन्यतम इत्यत आह-**नानाभावैरिति**। लीलयैव हेतुभूतया उपपन्नैः अन्यथा त्वय्यकर्मवश्ये तेषामनुपपन्नत्वादिति भावः। तैर्भावैः प्रकारभूतैः मत्स्याद्यवतारैः इति यावत्। धर्मसेतून् धर्ममर्यादाश्च बिभर्षि पुष्णासि उन्मार्गान् उत्पथान् हंसि नाशयसि उन्मर्गा नित्यस्यैव विवरणं[2] हिंसया वर्तमानानिति। यथा मत्स्यकूर्मादिजन्म तद्वदेतदपि तव जन्म अवतारः भूमेः भारहाराय भारापनयनार्थम्। अनेन वासल्य सौशील्य सौलभ्यादीनि सूचितानि ॥२८॥

इत्थं[3] शरण्यत्वमाविष्कृत्य स्वकीयां आर्तिं आवेदयति-**तप्त इति**। तावच्छान्ते नाप्यन्ततः उग्रेणोल्बणेन दारुणेन[4] अत एव मोढुमशक्येन त्वत्तेजसा उपबृंहितेन ज्वरेणाहं तप्तः। ततो मां प्रपन्नं पाहीति भावः, परसन्तापकस्य युक्त एव ताप इत्यत आह--तावदिति। यावदाशया रक्षकान्तरसम्भावनाशयाऽनुबद्धाः तवाऽङ्घ्रिमूलं न सेवेरन् तावदेव देहिनां तापः, सेवायां प्रवृत्तानां तु अनुचित इति भावः ॥२९॥

इत्थं संस्तुतः शरण्या भगवान् तमनुगृह्णन् आह **त्रिशिर** इति। हे त्रिशिरः! ते तुभ्यं अहं प्रसन्नः तव मज्ज्वराद्भयं व्येतु व्यपैतु, यः पुमान् आवयोरिमं संवादं स्मरति तस्य त्वत् त्वत्तः भयं न भवेत्, तं त्वं मा भीषय इत्यर्थः ॥३०॥

---

1. W. परतत्त्व 2. B.K. स्वेच्छया 3. B. adds तस्य 4. K.T.W. omit दारुणेन।

**इत्युक्तोऽच्युत मानम्य गतो माहेश्वरोज्वरः ।**
**बाणस्तु रथमारूढः प्रागाद्योत्स्यन्[1] जनार्दनम् ॥३१॥**

**ततो बाहुसहस्रेण नानायुधधरो बली[2] ।**
**मुमोच परमक्रुद्धो[3] बाणांश्चक्रायुधे[4] नृप ॥३२॥**

**तस्यास्यतोऽस्त्राण्यसकृच्चक्रेण[5] क्षुरनेमिना ।**
**चिच्छेद भगवान् बाहून् शाखा इव वनस्पतेः ॥३३॥**

**बाहुषु छिद्यमानेषु बाणस्य भगवान् भवः ।**
**भक्तानुकम्प्युपव्रज्य चक्रायुधमभाषत ॥३४॥**

श्रीरुद्र उवाच

**त्वं हि ब्रह्म परं ज्योतिः गूढं ब्रह्मणि वाङ्मये ।**
**यं पश्यन्त्यमलात्मान आकाशमिव केवलम् ॥ ३५**

1.T.W. प्रायात् 2. B.G.J.K.T.W. °सुरः 3. K.T.W. परिघं 4. K.T.W. बाण° 5. K. °णि स° ।

**श्रीध०** भक्तसंरक्षणार्थं° श्रीरुद्रो भगवन्तं स्तौति-**त्वमिति**। अयमर्थः त्वां अज्ञात्वा अयमयुध्यतेति न चित्रं यतस्त्वं वाङ्मये ब्रह्मण्यपि गूढं ब्रह्म अभिधानाविषयत्वात्। कुतः परं ज्योतिः ज्योतिषामपि प्रकाशकत्वात् अविषयः कथं तर्हि प्रतीतिः अत आह-यमिति। अमलात्मनां स्वतः प्रकाशसे इत्यर्थः ॥ ३१-३५॥

**वीर० इतीति** ।आनम्य प्रणम्य योत्स्यन् योद्धुं जनार्दनं कृष्णं प्रागात् अभ्यापतत् ॥ ३१ ॥

**तत** इति। नानाविधान्यायुधानि धरतीति तथा। सोऽसुरो बाणः क्रुद्धो हे नृप! चक्रायुधे कृष्णे परिघं मुमोच प्रायुङ्क्त ॥ ३२ ॥

**तस्येति**। अस्यतः क्षिपतः प्रयुञ्जानस्येति यावत्, तस्य बाणस्यास्त्राणि बाहूंश्च सकृद्युगपत् क्षुरस्येव नेमिर्यस्य तेन चक्रेण सुदर्शनेन चिच्छेद वनस्पतेः वृक्षस्य शाखा इव ॥ ३३ ॥

**बाहुष्विति**। छिद्यमानेषु सत्सु भगवान्भवो रुद्रः भक्तानुकम्पी, हेतुगर्भमिदं तत्त्वादभाषत ॥ ३४ ॥

भाषणमेवाह - **त्वं हीत्यादिभिर्द्वादशभिः**। केवलं वेदान्तैकवेद्यं योगपरिशुद्धमनोग्राह्यं त्वत्स्वरूप स्वभावादिकं कथमयं जानीयादित्यभिप्रयन् स्तौति **त्वं हीति**। वाङ्मये ब्रह्मणि वेदे उपनिषदीति यावत्। गूढं यत्परं ब्रह्म तत् त्वम्। किन्तद्ब्रह्मस्वरूपमत आह ज्योतिरिति। स्वप्रकाशं ज्ञानस्वरूपमित्यर्थः, अमलात्मानः योगविशुद्धान्तःकरणाः[1] यं पश्यन्ति स त्वमिति सम्बन्धः। अथ शरण्यत्वोपयुक्तकल्याणगुणान्विवक्षुः तावत् दृष्टान्तमुखेन निर्दोषत्वमाह, आकाशमिव केवलं निरस्तनिखिलदोषम् ॥ ३५ ॥

1. B. परिशु°

**नाभि र्नभो ऽग्नि र्मुख मम्बु रेतो द्यौश्शीर्ष माशा श्रुति रङ्घ्रि रुर्वी।**
**चन्द्रो मनो यस्य दृगर्क आत्मा ह्यहं समुद्रो जठरं भुजेन्द्रः ॥ ३६ ॥**

रोमाणि यस्यौषधयोऽम्बुवाहाः केशा विरिञ्चो धिषणा विसर्गः ।
प्रजापतिर्हृदयं यस्य धर्मस्स वै भवान् पुरुषो लोककल्पः ॥३७॥

तवावतारोऽयमकुण्ठधामन् धर्मस्य गुप्त्यै जगतो भवाय ।
वयं च सर्वे भवतानुभाविता विभावयामो भुवनानि सप्त ॥३८॥

त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यस्स्वदृग्घेतु रहेतुरीशः ।
प्रतीयसेऽथापि यथाविकारं स्वमायया सर्वगुण प्रसिद्ध्यै ॥३९॥

यथैव [1-]सूर्यः पिहितस्स्वयं घनैः[-1]छायां च रूपाणि च सञ्चकास्ति ।
एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥४०॥

---

1--1 B.G.J. °सूर्योऽ पिहितश्छायया स्वया ; K.T.W °सूर्योऽपिहित स्वच्छायया

**श्रीध०** आस्तां तावन्निर्गुणस्य तव ज्ञानं, लीलयाधिष्ठितस्त्वया यो विराड्विग्रहः सोऽपि न ज्ञायते उदुम्बुरफलान्तर्वर्ति मशकैरिवोदुम्बरफलमित्याशयेन विराड्रूपं स्तौति-द्वाभ्यां-**नाभिरिति**। यस्य नभ आदयो नाभ्याद्यवयवाः स भवान् लोककल्पः पुरुष इत्युत्तरेणान्वयः। नभो यस्य नाभिः, अग्निर्यस्य मुखं अम्बुरेतः, द्यौः शीर्षं, आशाः दिशः, श्रुतिः श्रवणेन्द्रियं, उर्वी अङ्घ्रिः, चन्द्रो मनः, अर्को दृक्, अहं शिवः, आत्मा अहङ्कारः, समुद्रो जठरं, इन्द्रो भुजा, बाहुः इन्द्रादयो लोकपालाः बाहव इत्यर्थः ॥३६॥

**रोमाणीति**। ओषधयो रोमाणि यच्छब्दस्यावृत्तिः स्पष्टतार्था अम्बुवाहाः केशाः विरिञ्चो धिषणा बुद्धिः प्रजापतिः विसर्गो मेढ्रं धर्मो हृदयम्। लोकैः कल्प्यते [1]उपकल्प्यत इति लोककल्पः ॥३७॥

ननु प्रादेशिकशरीरस्य कथं नभोनाभित्यादि इत्यत आह **तवेति**। हे अकुण्ठधामन्! अप्रच्युतस्वरूपभवाय अभ्युदयाय, न केवलमेतावत्, किन्तु अस्मदनुग्रहार्थमपीत्याह वयं चेति, सर्वे लोकपाला वयं त्वया पालिताः सप्तापि भुवनानि पालयाम इति ॥३८॥

ननु यदि विभावयितारो यूयं विभाव्यानि भुवनानि च सन्ति तर्हि कथमुक्तं त्वं हि ब्रह्मेति। न हि ब्रह्मत्वे मम सजातीय विजातीयभेदः सम्भवतीत्यत आह-**त्वमिति**। एकः सजातीयभेदरहितः कुतः, आद्यः पुरुषः पुरुषाणाम् अवस्थात्रयवतामाद्यः प्रकृतिभूतः पुरुषः कुतः तुर्यः शुद्ध इत्यर्थः। तदपि कुतः? स्वदृक् स्वप्रकाशज्ञानरूपः

शुद्धादेव ह्युपाधियोगाज्जीवा जायन्ते। "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येव मेवास्मादात्मानस्सर्व एवात्मानो व्युच्चरन्ति" (बृह० उ० 2-1-26) इति श्रुतेः। अतः सजातीयरहितः किञ्च अद्वितीयः विजातीयरहितः, तदपि कुतः हेतुस्सर्वस्य तथा स्वयं अहेतुरीशश्चेति। कथं तर्हि प्रतिशरीरं जीवभेदः प्रतीयते। अतआह-प्रतीयस इति। सर्वगुणप्रसिद्ध्यै सर्वविषयप्रकाशनाय ॥३९॥

तर्हि किमहमेवं संसारीत्युच्यते? नहि नहीति सदृष्टान्तमाह-**यथेति**। हे भूमन्। स्वया छायया मेघलक्षणया परदृष्ट्या पिहितः छादितोऽपि सूर्यः छायां मेघं च रूपाणि च भवनान्तरितान् घटादीनपि सञ्चकास्ति प्रकाशयति। एवंगुणेनाऽहङ्कारेण स्वकार्येण जीवाऽऽवरकेण तद्दृष्ट्या पिहितोऽपि गुणान् सत्त्वादीन् उपाधीन् गुणिनश्च उपहितान् जीवानपि चकास्ति।आत्मप्रदीपः स्वप्रकाशः अतः सर्वसाक्षिणस्तव न संसार इत्यर्थः ॥४०॥

---

1. B.J. अव

**वीर०** न हि शरीरमात्मनोऽप्रियम् अतस्त्वच्छरीरभूत कृत्स्नजगदन्तर्गतोऽयं मूर्खोऽपि तवानुकम्प्य एवेत्यभिप्रयन् विराड्रूपत्वेन स्तौति-**नाभिरिति** द्वाभ्याम्। नभोऽग्न्यम्बुद्युदिक् पृथिव्यो यथाक्रमं तव नाभिमुखरेतश्शिरश्श्रोत्रपादाः, चन्द्रो मन इति कार्यकारणभावेन सामानाधिकरण्यम्। "चन्द्रमा मनसो जातः" (पु. सू. 1-6) इति श्रुतेः। भगवन् मानसात् प्रसूतस्य चन्द्रस्य सर्वदेहि मनोऽभिमानदेवतात्वाच्च। एवं दृगर्क इत्यपि "चक्षोस्सूर्योऽजायत" (पु. सू. 1-6) इति श्रुतेः। दृगभिमानि देवतात्वाच्च यस्य तवेति सर्वत्र योज्यम्। अहं रुद्रः, आत्मा अन्तःकरणभेदोऽहङ्कारः। अत्रापि पूर्ववदेव सामानाधिकरण्यं द्रष्टव्यम्। समुद्रः जठरं कुक्षिः, भुजात्मकः" इन्द्रः इन्द्रादयस्तव भुजा इत्यर्थः। यच्छब्दानां स वै भवानित्यनेन सम्बन्धः ॥३६॥

**रोमाणीति**। ओषधयो यस्य रोमाणि, अम्बुवाहाः मेघाः केशाः, विरिञ्चो धिषणा बुद्धिः, प्रजापतिः विसर्गः मेढ्रं, धर्मो हृदयं, स वै भवान्। इत्थं लोकैः कल्प्यते अवयवत्वेनेति लोककल्पः ॥३७॥

नन्वेवमप्ययं दुरात्मा निग्राह्य एवेति चेत्। यद्यप्येवं तथाप्यधुना शरणं गतोऽनुग्राह्य एव, युक्तं चैतत्। तवावतारस्य प्रपन्नलोकाभ्युदय हेतुत्वादित्यभिप्रयन्नाह **तवेति**। हे अकुण्ठधामन्![1] तेजस्स्वभावेति यावत् अवतारदशायामप्यप्रच्युत सार्वज्ञ्य सर्वशक्त्यादि स्वभावे त्यर्थः। जगतः प्रपन्नलोकस्य भवायाऽभ्युदयाय, अभवायेति वा च्छेदः। अभवाय भवप्रयुक्त तापत्रयनिवृत्तये इत्यर्थः। अनुग्राह्यश्चेत् तर्हि त्वमेवैनमनुगृह्णीष्व इत्यत आह-**वयमिति**। सर्वे वयं लोकपालास्तावत् त्वया सृष्टाः अनु ततः भाविताः पालिताः सप्त भुवनानि विभावयामः पालयामः। वयं त्वत्परतन्त्रा इति भावः ॥३८॥

आकाशमिव केवलमिति निरस्तनिखिलदोषत्वमुक्तम्। विराट्शरीरकत्वोक्त्या सर्वान्तरात्मत्वं फलितं, तवावतारोऽयमित्यनेन निरुपाधिकरक्षकत्व वात्सल्यसौशील्यादिकं आविष्कृतं, अथ परत्वोपयुक्त कारणत्वादि कमाह-**त्वमेक** इति। त्वमस्य जगतो हेतुः कारणं, किं चतुर्मुखादिवत्, नेत्याह-अहेतुरिति। स्वयं कारणान्तर रहितः, किं निमित्तकारणं, नेत्याह एक इति। अविभक्तनाम रूपसूक्ष्मचिदचिद्विशिष्टत्वेन एकत्व व्यपदेशार्हः, आद्यः पुरुषः जगदुपादान कारणभूत पुरुषश्चेत्यर्थः। किमुपादानकारणमेव, नेत्याह अद्वितीय इति। अधिष्ठात्रन्तररहितः निमित्तकारणं चेत्यर्थः। अत एव प्रकृति पुरुष विलक्षण इत्याह स्वदृक् तुर्यश्चेति, स्वदृक् स्वयं प्रकाशज्ञान स्वरूपः, अनेन प्रकृति वैलक्षण्यमुक्तम्। तुर्यः जाग्रत्स्वप्न सुषुप्ति रूपावस्थात्रय सम्बन्धरहितः, अनेन जीववैलक्षण्यमुक्तं, आकाशमिव केवलमित्यनेन च निर्विकारत्व मुक्तं, एक आद्यः पुरुष इत्यनेन विकाराश्रयत्व रूपोपादानत्वं, कथमेतदुभयं मिथो विरुद्धमेकस्मिन्नुपपद्यते इत्याशङ्क्य परिहरति प्रतीयस इति। यद्यपीदं परस्परविरुद्ध मथापि सर्वगुणप्रसिद्ध्यै सर्वेषां गुणानां स्वापृथक् सिद्ध विशेषणानां प्रकृतिपुरुषादीनां प्रसिद्ध्यै देवमनुष्यत्वाद्याकार सिध्दये स्वमायया आत्मीय सङ्कल्पेन यथाविकारं, प्रकृतिपुरुषगत स्वरूपान्यथाभाव स्वभावान्यथाभावरूप विकारानुगुणं प्रतीयसे। तत्तदन्तरात्मतया तत्तन्नामरूप निर्वाहकत्वेन प्रतीयसे प्रमीयसे, वेदान्तजन्य प्रमाविषयो भवसीत्यर्थः, अस्मिन्विषये वेदान्तानामेव प्रामाण्यमिति भावः ॥३९॥

सर्वगुणेत्यनेन प्रकृतिसम्बन्धस्सूचितः। तर्हि जीवस्येव प्रकृत्या तिरोहितस्य यथाविकारमन्तरात्मतया प्रकाशो न स्यादित्याशङ्कां दृष्टान्तेन निराकरोति **यथैवेति**। अपिहित इति छेदः। दार्ष्टान्तिके गुणेन अपिहित इति दर्शनात्, अन्यथा उपध्मानीयप्रसङ्गाच्च। अपिहित इति नञ् समासः, नतु 'वष्टिवागुरिरिति' वचनविहिताकारलोपाभावपक्षे रूपम्। स्वया स्वप्रकाश्यया छायया मेघादिरूपया। अपिहितोऽतिरोहित स्वरूपस्वभाव एव सन्। नहि मेघादिना सूर्यतत्प्रभयोस्तिरोधिः, मेघादीन् भित्वा तदन्तर्बहिश्च प्रसरणात्। अन्यथा तद्व्यवहितरूपाग्रहणप्रसङ्गात्, यथैवम्भूतः सूर्यः छायां मेघादीन् रूपाणि तद्व्यवहितानि रूपाणि च सञ्चकास्ति सम्यक्प्रकाशयति। एवं हे भूमन्। गुणेन सत्त्वादिगुणेन गुणमयप्रकृत्येति यावत्। अपिहितः अतिरोहित स्वरूपस्वभाव एव त्वम्। गुणान् प्रकृति तत्कार्यगत धर्मान्गुणिनः प्रकृत्यादींश्च प्रकाशयसि आत्मप्रदीपः स्वप्रकाशश्च यद्यपि दृष्टान्ते छायासूर्ययोः न सम्बन्धः मिथस्तयोः विप्रकृष्टत्वात्। दार्ष्टान्तिके त्वपृथक्सिद्ध विशेषण विशेष्य भावसम्बन्ध इति दृष्टान्तो विषमः, तथापि विप्रकृष्टस्येव अपृथक्सिद्धाया अपि प्रकृतेः तिरोधायकत्वमन्य प्रकाश्यत्वं तिरोधानप्रतीतेः भ्रमरूपत्वं च इत्येतदेव दृष्टान्ताभिप्रेतम् ॥४०॥

1. B,K. add धाम

यन्मायामोहितधियः पुत्रदारगृहादिषु ।
उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे ॥४१॥

देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः ।
यो नाद्रियेत त्वत्पादौ सशोच्यो ह्यात्मवञ्चकः ॥४२॥

यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् ।
विपर्ययेन्द्रियार्थार्थं[1] विषमित्यमृतं त्यजन् ॥४३॥

अहं ब्रह्मा च विबुधा मुनयश्चामलाशयाः ।
सर्वात्मना प्रपन्नास्त्वां आत्मानं प्रेष्ठमीश्वरम् ॥४४॥

तं त्वा जगत्स्थित्युदयान्तहेतुं समं प्रशान्तं सुहृदात्म दैवम्[2] ।
अनन्यमेकं जगदात्मकेतं भवापवर्गाय भजाम देव ॥४५॥

अयं ममेष्टो दयितोऽनुवर्ती मयाऽभयं दत्तममुष्यदेव ।
सम्पाद्यतां तद्भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः ॥४६॥

---

1- -1 K.T.W °र्तो 2. K.T.W. नायकम्

श्रीध० किञ्च मायाश्रयस्यान्यान् मोहयतस्तव कुतः संसृतिरिति आशयेनाह --यदिति। पुत्रादिषु प्रसक्ताः वृजिनार्णवे दुःखसागरे उन्मज्जन्ति देवादियोनिषु, निमज्जन्ति स्थावरादियोनिषु। तदुक्तं वायवीये- "विपर्ययश्च भवति ब्रह्मत्वस्थावरत्वयोः" ॥४१॥

एवं जीवेश्वर व्यवस्थां निरूप्येदानीं अभजन्तं निन्दति --द्वाभ्यां देवेति। देवेन त्वया कर्माध्यक्षेण दत्तं नृदेहमिमं लब्ध्वापीति ॥४२॥

शोच्यत्वे हेतुः य इति। विपर्ययाः विपरीताः अनात्माऽप्रियाऽनीश्वराः ये इन्द्रियार्थाः पुत्रादयस्तदर्थम् ॥४३॥

अहमन्ये च शुद्धमनसस्त्वामेव भक्त्या प्रपन्ना इत्याह-अहमिति ॥४४॥

भगवतो भजनीयत्वे हेतून् वदन् तद्भक्तिं प्रार्थयते-तमिति। समत्वे हेतुः-प्रशान्तमिति। सुसेव्यत्वमाह-सुहृदात्मदैवं सुहृद् बुद्धि प्रवर्तकत्वात् आत्मा च सर्वात्मकत्वात्, एवम्भूतं दैवं ईश्वरं त्वाम्। न चान्यो भजनीयोऽस्तीत्याह-अनन्यमेकं समानासमानजातीयरहितम्। तत्कुतः? जगतामात्मनां च केतमधिष्ठानम्॥ ४५॥

स्वयं भक्तिमाशास्य स्वभक्तस्याभीष्ट माशास्ते - **अयमिति**, दैत्यपतौ प्रह्लादे ॥४६॥

**वीर०** न केवलमयमेवाज्ञः किन्तु सर्वेऽपि त्वन्मायामोहितत्वादित्यभिप्रयन्नाह **यन्मायेति**। यस्य तव मायया मोहिता धीर्येषां ते पुत्रादिषु सक्ताः[1] वृजिनार्णवे दुःखार्णवे उन्मज्जन्ति उत्प्लवन्ते पुनर्निमज्जन्ति च ॥४१॥

ननु मोहयन् वृजिनार्णवे पातयंश्चाहं किं निर्घृणः नेत्याह-**देवदत्तमिति**। देवेन निरवधिक कृपावता त्वया दत्तं त्वदाराधनोपयुक्त° त्वन्मायातरणसाधनं चेमं मनुष्यदेहं लब्ध्वाऽपि अजितेन्द्रियः इन्द्रियपरवशस्सन् यः पुमान् त्वच्चरणौ नाद्रियेत न सेवेत स शोच्यः, अहो किमस्य दौर्भाग्यमित्येवं शोचनीयः। कुतः? हि यस्मात् अयमात्मवञ्चकः आत्मापहारी-'योन्यथा सन्त मत्मानमन्यथा प्रतिपद्यते, किं तेन न कृतं पापं चोरेणात्मापहारिणा' (भार० 1-68-26) इति वचनार्थोऽत्रानुसन्धेयः। स्वदोषेणैव स्वयं दुःख्यतीति न तव दोषप्रसङ्ग इति भावः ॥४२॥

इतोऽपि शोच्य हत्याह - **यस्त्वामिति**। स्वयं मरणशीलस्सन् आत्मानं प्रियं ईश्वरं च त्वां विसृजते त्यजति न सेवते किन्तु विपर्ययेषु अनात्मस्वप्रियेष्वनीश्वरेषु इन्द्रियार्थेषु शब्दादिषु आर्तः दीनः अमृतमपि त्वां अमृततुल्यां त्वत्सेवां वा विषबुद्ध्या त्यजन् आस्ते स शोच्य इति सम्बन्धः ॥४३॥

यतस्त्वत्सेवाऽमृततुल्या अत एव वयं त्वामेव प्रपन्ना इत्याह - **अहमिति**। अहं रुद्रः त्वामेवोक्तविधं सर्वभावेन उपायोपेयभावेन शरणं गताः ॥४४॥

न केवलमात्मत्वानुगुण गुणमात्रयुक्तमेव त्वां प्रपन्नाः किन्तु शरण्यत्वोपयुक्ता संख्येय गुणान्तरयुक्तं चेत्यभिप्रयन्नाह - **तमिति**। हे देव! तमुक्तविधं किञ्च जगदुत्पत्तिस्थिति कारणम्। समं वैषम्यरहितं प्रशान्तं ऊर्मिषट्करहितं भजतामपि शान्त्यावहं च सुहृद्यासावात्म नायकश्च तं अनन्यं स्वतुल्य सेव्यान्तररहितं एकं स्वाधिक प्रपदनीयान्तर रहितं आत्मकेतं आत्मनां अस्माकं केतं आश्रयमाधारमिति यावत्। आत्मैव केतं यस्य तमिति वा 'स्वे महिम्नि प्रतिष्ठितः' (छान्दो ०उ० 7-24-1) इति श्रुतेः। भवाभ्युदयायैहिकसुखाय अपवर्गाय मोक्षाय च भजामः ॥४५॥

प्रकृतिं विज्ञापयति-**अयमिति**। अयं बाणः मे त्वां प्रपन्नस्य मम इष्टो भक्तः। अनेन 'मम मद्भक्त भक्तेषु प्रीतिरभ्यधिका भवेत्' इति भगवद्वचनं स्मारितम्। अत एव दयितः प्रियः अनुवर्तत इति। तथा च हे देव! अमुष्य बाणस्य मया अभयम् दत्तम् .किमत इत्यत आह .तन्मया दत्तमभयं सम्पाद्यतां सफलीक्रियतां अयमेव भवतोऽनुग्रहः। यथा हि ते त्वया दैत्यपतौ प्रह्लादे प्रसादः, कृत इति शेषः। त्वद्वंशजं न हनिष्यामीति प्रह्लादमनुगृहीतवानित्यर्थः ॥४६॥

---

1. B. आसक्ताः

**श्रीभगवानुवाच**

**यदात्थ भगवंस्त्वं नः करवाम प्रियं तव ।**
**भवतो[1] यद्व्यवसितं तन्मे साध्वनुमोदितम् ॥४७॥**

**अवध्योऽयं ममाप्येष[2] वैरोचनि[3] सुतोऽसुरः ।**
**प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥४८॥**

**दर्पोपशमनायास्य प्रवृक्णा बाहवो मया ।**
**सूदितं[4] च बलं भूरि यच्च भारायितं भुवः ॥४९॥**

**चत्वारोऽस्य भुजाश्शिष्टा भविष्यन्त्यजरामराः ।**
**पार्षदमुख्यो भवतो न कुतश्चिद्भयोऽसुरः ॥५०॥**

---

1. MI.V. °ता 2. K.MI.T.V.W °या° 3. K.T.W. °न 4. K.T.W. नाशितं

**श्रीध० अवध्य** इति। वैरोचनि र्बलिर्मद्भक्तः तत्सुतत्वादयमवध्यस्तावत् किञ्च प्रह्लादायेति अन्वयो वंशः ॥४७, ४८॥

तर्हि किमत्येवं कृतं तत्राह-**दर्पोपशमनायेति** ॥४९॥

अनुगृह्णाति - **चत्वार** इति ॥५०॥

**वीर० इत्थं संस्तुतः प्रसन्नः प्राह भगवान् - यदात्थेति।** हे भगवन्! रुद्र! नः अस्मान्प्रति यदात्थ अवोचः यच्च तव प्रियं तन्नोऽस्माकमपि अतः तत् करवाम भवता यन्निश्चितमेतत्प्राणसंरक्षणात्मकं तन्मयाऽप्यनुमोदितम् ॥४७॥

वैरोचनिसुत इति हेतुगर्भं तत्त्वादवध्यः, तत्रापि हेत्वन्तरमाह-प्रह्लादायेति। अन्वयः वंशजः ॥४८॥

तर्हि किमर्थं बाहूनच्छिनः तत्राह-**दर्प** इति। प्रवृक्णाश्छिन्नाः, किमर्थम्? बहुसैन्यं हतवानसीत्यत आह-नाशितमिति। भूभारापनयनार्थमिति भावः ॥४९॥

रुद्रमुखेन बाणमनुगृह्णाति -**चत्वार** इति। अस्य बाणस्य चत्वारः भुजाः शिष्टाः आज्ञप्ताः अनुगृह्य अवशेषिता इत्यर्थः। अयं जरामरणरहितः भविष्यतीति, न कुतश्चित् भयं यस्य तथाभूतश्च भविष्यतीति सम्बन्धः ॥५०॥

इति लब्ध्वाऽभयं कृष्णं प्रणम्य शिरसाऽसुरः ।
प्राद्युम्निं रथमारोप्य सवध्वा[1] समुपानयत्[2] ॥५१॥

अक्षौहिण्या परिवृतं सुवाससमलङ्कृतम्[3] ।
सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥५२॥

स्वराजधानीं समलङ्कृतां ध्वजैस्सतोरणै र्भूषितमार्गचत्वराम्[4] ।
विवेश शङ्खानक दुन्दुभिस्वनैरभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥५३॥

य एतत्कृष्णविजयं[5] शङ्करेण च संयुगम् ।
संस्मरेत्प्रातरुत्थाय न तस्य स्यात्पराजयः ॥५४॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे त्रिषष्टितमोऽध्यायः ॥६३॥

---

1. K. सह 2. K. समानयत् ;T.W. समुपानयत् 3. B.G.J. °सः 4. B.G.J.K.T.W. रुक्षितमा° 5. B.G.J. एवं कृ°

**श्रीध० इतीति**। सहवध्वा उषया कान्तया सह ॥५१॥

**अक्षौहिण्येति**। रुद्रानुमोदित इति तदभिप्रेतस्यैव बाणभुजभङ्गस्य कृतत्वात् ॥५२॥

**स्वेति**। पौरादिभिरभ्युद्यत अभिमुखमागत्य सत्कृतः ॥५३,५४॥

इति श्रीमद्भागवते दशमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां त्रिषष्टितमोऽध्यायः ॥६३॥

**वीर० इतीति**। अभयमिति च्छेदः। वध्वा उषया सह प्राद्युम्निमनिरुद्धं समानयत् द्वारकां प्रापयामासेत्यर्थः ॥५१॥

तदेवाह - **अक्षौहिण्येति**। शोभने वाससी यस्य तं, पत्न्या सहितं अनिरुद्धं पुरस्कृत्य पुरतो गमयन् रुद्रानुमोदितः स्वयमप्यनुययौ ॥५२॥

**स** इति। स बाणः कृष्णो वा। अन्यतरसहितोऽन्यतरो वा। पौरादिभिः अभ्युद्यतः अभिमुखमागत्य सत्कृतः शङ्खादिध्वनिभिः राजधानीं द्वारकां विवेश। कथम्भूतम्? उक्षिताः सिक्ताः, मार्गाः वीथयः, चत्वराण्यङ्गणानि च यस्यां ताम् ॥ ५३ ॥

उक्तकथासु संस्मरणफलमाह-**य** इति। यः पुमान् संस्मरेदिति श्रवणाख्यानादीनामप्युपलक्षणम्। तस्य स्मरतः पराजयो न स्यात् ॥ ५४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥



# चतुष्षष्टितमोऽध्यायः

## (विजयध्वजरीत्या सप्ताशीतितमोऽध्यायः)

-: नृगापाख्यानम् :-

**श्रीशुक उवाच**

**★ एकदोपवनं राजञ्जग्मु र्यदुकुमारकाः ।**
**विहर्तुं साम्ब प्रद्युम्न चारुभानु गदादयः ॥ १ ॥**

**क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः ।**
**[1]स्थितं निरुदके कूपे ददृशुः सत्त्वमद्भुतम् ॥ २ ॥**

**कृकलासं गिरिनिभं वीक्ष्य विस्मित[2]मानसाः ।**
**तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयान्विताः ॥ ३ ॥**

**[3]चार्मभिस्ता[4]न्तवैः पाशैर्बद्धा पतितमर्भकाः ।**
**नाऽशक्नुवन्समुद्धर्तुं कृष्णायाऽऽचख्युरुत्सुकाः ॥ ४ ॥**

**[5]तत्रगत्वाऽरविन्दाक्षो भगवान्विश्वभावनः ।**
**वीक्ष्योज्जहार वामेन तं करेण स लीलया ॥ ५ ॥**

---

★ श्रीविजयध्वजीय पाठानुसारेण सप्ताशीतितमाध्यायस्य त्रयोदशश्लोकादारभ्य अयमध्यायः दृश्यते । 1. B,G,J, Ml,V जलं 2. M, Ma चेतसः 3. B,G,J चर्मजै° ;M,Ma चर्मभि° 4. B,G,J °स्तं तथा 5. B,G,J तत्रागत्या°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुष्षष्टितमे कृष्णो नृगं पापादमोचयत् । ब्रह्मस्वहारि दोषोक्त्या राज्ञो दृप्तानशिक्षयत् ॥
विभूतिभाग्यभोगादि मदोन्नद्धमनोरथान् । अन्वशासद्यदून्कृष्णो नृगोद्धारप्रसङ्गतः ॥

**क्रीडित्वेति** । पिपासिताः तृषिता जलं विचिन्वन्तः । सत्त्वं जीवम् ॥ १,२ ॥

**कृकलासमिति** । तं च कृकलासं वीक्ष्य ॥ ३ ॥

**चर्मजैरिति**। चार्मभिः[1] चर्ममयैः पाशैः तान्तवैः तन्तुमयैश्च ॥४, ५॥

1. B,J चर्मजैः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ दत्तापहारप्रयुक्तदुरितनिमित्त कृकलासजन्मनो नृगस्य तज्जन्मविमोचनात्मकं भगवच्चेष्टितमनुवर्णयति चतुष्षष्टितमेन-**एकदेत्यादिना**। तावदुपोद्घातमाह - हे राजन्। साम्बादयो यदुकुमारकाः ॥१॥

**क्रीडित्वेति**। तत्रोपवने पिपासिताः तृषिताः जलमन्वेषयन्तः क्वचिन्निरुदके निर्जले कूपे महदुन्नतं अद्भुतं च सत्त्वं जन्तुं ददृशुः ॥२॥

कृकलासं नाम गिरिनिभं गिरितुल्यं विस्मितं चेतो येषां ते तस्य कृकलासस्योद्धरणे निमित्ते यत्नं च चक्रुः ॥३॥

**चार्मभिरिति**। चर्ममयैः तन्तुमयैश्च पाशैः रज्जुभिः बद्ध्वा पतितं तमुद्धर्तुं न प्रबभूवुः ॥४॥

**तत्रेति**। विश्वं भावयति अभ्यधिकं करोतीति तथा वामेन करेण लीलयैव तमुज्जहार बहिर्निष्कासितवान् ॥५॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

विचिन्वन्तः अन्वेषणं कुर्वन्तः सत्त्वं प्राणिनम् ॥१,२॥

कृकं लासयति नर्तयतीति कृकलासः, 'शिरः प्राग्रं कृकं विदुः' इति च ॥३-५॥

**स उत्तमश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम्।**
**सन्तप्त चामीकर चारुवर्णः [1-]स्वर्ग्यद्भुता[-1]लङ्करणाम्बरस्रक् ॥६॥**

**★भूत्वा मुकुन्दस्य पदारविन्दं ननाम मूर्ध्ना पतितो धरण्याम् ॥**
**पप्रच्छ विद्वानपि [2-]तन्निदानं[-2] जनेषु विख्यापयितुं मुकुन्दः।**
**[3]कस्त्वं महाभाग वरेण्यरूपो देवोत्तमं त्वां गणयामि[4] नूनम् ॥७॥**

दशामिमां वा कतमेन कर्मणा सम्प्रापितो[5]ऽस्य तदर्हः[-5] [6]सुभद्र ।
आत्मानमाख्याहि विवित्सतां नो यन्मन्य[7]से नः क्षममत्र वक्तुम् ॥८॥

श्रीशुक उवाच

इति स्म राजा संपृष्टः कृष्णेनाऽन[8]न्तमूर्तिना ।
[9]माधवं प्रणिपत्याह किरीटेनार्कवर्चसा ॥९॥

नृग उवाच

नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो ।
दा[10]निष्वाख्यायमानेषु यदि ते कर्णमस्पृशम् ॥१०॥

किं न तेऽविदितं नाथ सर्वभूतात्मसाक्षिणः ।
कालोनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया ॥११॥

यावत्यः सिकता [11]भूमौ यावत्यो दिवि तारकाः ।
यावत्यो वर्षधाराश्च तावतीरददां च गाः ॥१२॥

पयस्विनीस्तरुणीः शीलरूप गुणोपपन्नाः कपिला हेमशृ[12]ङ्गाः ।
न्यायार्जिता [13]रौप्यखुराः सवत्सा दुकूलमा[14]ल्याभरणा [15]ददावहम् ॥१३॥

स्वलङ्कृतेभ्यो गुणशीलवद्भ्यः सीदत्कुटुम्बेभ्य ऋतव्रतेभ्यः ।
तपःश्रुतब्रह्मवदान्यसद्भ्यः प्रादां युवभ्यो द्विजपुङ्गवेभ्यः ॥१४॥

गोभूहिरण्यायतनाश्वहस्तिनः कन्याः सदासीस्तिलरूप्यशय्याः ।
वासांसि रत्नानि परिच्छदान्रथा निष्टं च यज्ञैश्चरितं च [16]पूर्तम् ॥१५॥

---

1- -1 M, Ma स्वर्गोचिता ★ This additional half verse is found in M, Ma only. 2- -2 K, Ml, T, V, W तस्य दानं ;M, Ma तस्य कर्म 3. M, Ma add श्रीभगवानुवाच 4. k, T, Ml, V, W °म 5- -5 K, T, M, Ma,W तोह्यतदर्हः ;Ml, V तोऽसि ह्यतदर्हः 6. K. सुदीप्तिः ;Ml.V. सुप्रभः 7. M, Ma, W °सेऽङ्गो ;Ml, V °से तत् 8. K, Ml, T, V, W °न्द° 9. K, T, W मानुषः ;M, Ma प्रतीतः 10. K, Ml, T, V, W °ने° 11. B, G, J,M, Ma, Ml, V भूमेः 12. B, G, J, M, Ma °ङ्गीः 13. B, G, J, K, T, W रू° 14. B, G, J, M, Ma माला° 15. K, T, W ददाम्यहम् ;Ml. V °स्त्यदामहम् 16. M, Ma पूर्तैः

**श्रीध० स इति**। सन्तप्तं चामीकरं सुवर्णं तद्वच्चारु[1] वर्णो यस्य सः। अद्भुता अलङ्करणाम्बरस्रजो यस्य सः। स्वर्गी देवो बभूवेति ॥६, ७॥

**दशामिति**। यद्यदि। क्षमं योग्यम् ॥८, ९॥

**नृग इति**। यदि ते कर्णमस्पृशमित्यसन्देहे सन्देहवचनं यदि वेदाः प्रमाणं स्युः इतिवत्। कर्णपथं नूनं प्राप्तः स्यामित्यर्थः ॥१०॥

किञ्च **किं न्विति**। सर्वेषां भूतानामात्मनो बुध्देः साक्षिण[1]स्तेऽविदितं किं नु, न किञ्चित् ॥११, १३॥

**स्वलङ्कृतेभ्य इति**। ऋतव्रतेभ्योऽदम्भाचारेभ्यः। तपसा श्रुताः प्रख्याताश्च न ब्रह्मणि वदान्या अत्युदारा अध्यापनशीलाश्च ते सन्तश्च तेभ्यः ॥१४॥

**गोभूहिरण्येति**। पूर्तं वापीकूपादि। चरितं कृतम् ॥१५॥

---

1. B, J Omit चारु

**वीर० स इति**। स उध्दृतः उत्तमश्लोकस्य करणाभिमृष्ट इति हेतुगर्भमिदम्। सन्तप्तं चामीकरं सुवर्णं तद्वद्वर्णो यस्य सः। अभ्दुता अलङ्करणादयो यस्य सः। स्वर्गी देवो बभूव ॥६॥

**पप्रच्छेति**। तस्य कृकलासस्य जन्मनो निदानं कारणं जानन्नपि मुकुन्दः तज्जनेषु ख्यापयितुं प्रसिद्धीकर्तुं पप्रच्छ। प्रश्नमेवाह-**कस्त्वमिति**। हे महाभाग! वयं तु त्वां देवोत्तमं[1] देवश्रेष्ठं गणयाम ॥७॥

कतमेन केन वा कर्मणा इमां कृकलासत्वरूपां दशाम् अवस्थां प्रापितोऽसि, तत्र हेतुः - अतदर्हा एतदवस्थानर्हा शोभना दीप्तिः यस्य सः, आत्मानमिति। विवित्सतां वेत्तुमिच्छतां नोऽस्मभ्यम् आत्मानमाख्याहि, यत् यदि तद्वक्तुं क्षमं योग्यं तर्ह्याख्याहीति सम्बन्धः ॥८॥

**इतीति**। आनन्दमूर्तिना हृद्यमूर्तिना सम्पृष्टो राजा मानुष इति च पूर्वजन्माभिप्रायेणोक्तम्, अर्कस्येव वर्णो यस्य तत् तेन किरीटेन नमस्कृत्याऽऽह ॥९॥

उक्तिमेवाह - **नृग** इत्यादिना इत्युक्त्वा तमित्यतः प्राक्तनेन। अहं नृगो नाम नरेन्द्रः राजश्रेष्ठः, हे प्रभो!

दानेष्वाख्यायमानेषु दानप्रशंसासु वक्तव्यास्वित्यर्थः। दानेषु दानशीलेषु वा यदि तव कर्णमस्पृशमित्यसन्देहे सन्देहवचनं यदि वेदाः प्रमाणं स्युः इतिवत्, कर्णपथं नूनं प्राप्तः स्यामित्यर्थः ॥ १० ॥

किञ्च, **किन्चिति**। ते त्वया न विदितं किन्नु विदितमेवेत्यर्थः। तत्र हेतुत्वेन विशिनष्टि सर्वभूतानामात्मनो बुध्देः साक्षिणः साक्षाद्द्रष्टुः कालेनाव्याहता अविप्लुता दृक् ज्ञानं यस्य तस्य अथापि यद्यप्येवं तथापि वक्ष्ये ॥ ११[1] ॥

**यावत्य** इति। सिकतादयो यावत्यस्तावतीः धेनूः अददां दत्तवानस्मि, मया दत्तानां गवां सङ्ख्या न विद्यत इत्यर्थः ॥ १२ ॥

ता एव विशिनष्टि - **पयस्विनीरिति**। अत्र भूम्नि मत्वर्थीयः, शीलादिभिर्युक्ताः कपिलवर्णाः हेमस्वर्णालङ्कारः शृङ्गयोर्यासां ताः, न्यायतः सम्पादिताः रौप्यं रजतालङ्कारः खुरेषु यासां ताः, वत्सैस्सहिताः दुकूलादीनां द्वन्द्वः,ततो मत्वर्थीयोऽच्, ददामि अदामित्यर्थः ॥ १३ ॥

अथ सत्पात्राणि विशिनष्टि - **स्वलङ्कृतेभ्य** इति। सीदन् क्लिश्यन् कुटुम्बो येषां तेभ्यः ऋतव्रतेभ्यः अदम्भाचारेभ्यः तपसा श्रुताः प्रख्याताः ते ब्रह्मणि वदान्याः ब्रह्मवादिनः ते च ते सन्तः, तेभ्यः, वदान्यवद्भ्यः इति पाठे तप आदिविशिष्टेभ्यः एवंविधेभ्यो ब्राह्मणोत्तमेभ्योऽदाम् ॥ १४ ॥

न केवलं गा एवादाम्, अन्यानपीत्याह[2]-**गोभ्विति**। पुनर्गोग्रहणमितरापेक्षया तद्बहुत्वाभिप्रायकं, गवादीनामितरेतरयोगद्वन्द्वः, तत्रायतनानि गृहाः, दासीभिस्सहिताः कन्याः, तिलादीनां द्वन्द्वः, तत्र रूप्यं रजतं, परिच्छदान् गृहोपकरणानि, न केवलं प्रादामेव, किन्तु, यज्ञैरिष्टं च पूर्तं स्मार्तं कर्म चरितं कृतं च ॥ १५ ॥

---

1. B adds ध्रुवं 2. B अन्यदपी°

**विज०** विवित्सतां ज्ञातुकामानां यद्यदि ॥ ८-९ ॥

तव कर्णमस्पृशं तर्हि ज्ञातुं योग्य इत्यर्थः ॥ १० ॥

अन्यथापि ज्ञातुं शक्य इत्याह-**किं स्विति** ॥ ११ ॥

सिकतारजांसि अददास्म अददाम् 'दा दाने' इति धातुः। सुडागमश्छान्दसः ॥ १२-१५ ॥

**कस्यचिद्द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने ।**
**सम्पृक्ताऽविदुषा सा च मया दत्ता द्विजातये ॥ १६ ॥**

**तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति तम् ।**
**ममेति प्रतिग्राह्याह[1] नृगो मे दत्तवानिति ॥ १७ ॥**

**विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ ।**
**भवान्दाताऽपहर्तेति तच्छ्रुत्वा मेऽभवद्भ्रमः ॥ १८ ॥**

**अनुनीतावुभौ विप्रौ धर्मकृच्छ्र[2]गतेन वै[3] ।**
**गवां लक्षं प्रगृ[4]ह्यैतां दास्याम्येषा प्रदीयताम् ॥ १९ ॥**

**भवन्तावनुगृह्णीतां किङ्करस्याऽविजानतः ।**
**समुध्दरतं[5] मां कृच्छ्रात्पतन्तं निरयेऽ[6]शुचौ ॥ २० ॥**

---

1. Ml.v गृह्या° 2. K,M,Ma, T, W च्छं 3. M,Ma,Ml, T,V, W मे 4. B, G, J, K, Ml, T, V, W प्रकृष्टानां 5. G, K, M, Ma, T, W °रत 6. Ml, V °ऽशुभे ।

**श्रीध०** एवं वर्तमानस्य मम सङ्कटं किञ्चिदापन्नं शृण्वित्याह - **कस्यचिदिति**। द्विजमुख्यस्य प्रतिग्रहनिवृत्तस्य। सम्पृक्ता मिलिता। अविदुषा ब्राह्मणस्येयमित्यजानता ॥ १६,१७ ॥

**विप्राविति**। प्रतिग्राहिणोक्तम्-दातेति। स्वामिनोक्तमपहर्तेति। अभवद्भ्रमः, व्याकुलोऽभवमित्यर्थः ॥ १८ ॥

**अनुनीताविति**। तदोभावपि प्रत्येकमनुनीतौ प्रार्थितौ। कथं तदाह - गवामिति सार्धेन ॥ १९, २० ॥

---

1. Ml, v मिश्रिता

**वीर०** एवं वर्तमानस्य मम किञ्चित्सङ्कटमापन्नं शृण्वित्याह - **कस्यचिदिति**। द्विजमुख्यस्य गां प्रतिगृहीतवतो गौर्भ्रष्टा बलात् तध्दस्ताद्विमोचिता सती मम गोधने सम्पृक्ता मिलिता सा च अविदुषा पूर्वमेव कस्मैचित् दत्ता इत्येवमजानता मया द्विजातये अन्यस्मै ब्राह्मणाय दत्ता ॥ १६ ॥

**तामिति**। तामन्यस्मै दत्तां गां दृष्ट्वा तस्याः गोः स्वामी पूर्वप्रतिगृहीतां तां गां मम मदीयेत्याह, प्रतिग्राही पश्चात्प्रतिग्रहीता मदीयैव अधुनैव मह्यं नृगो दत्तवानित्याह ॥१७॥

**विप्राविति**। भवान् दाता ततोऽपहर्ता चेत्येवमूचतुः। यतस्तौ स्वार्थसाधकौ स्वार्थपरौ, अत एवमूचतुरित्यर्थः। तद्विप्रयोः वचश्श्रुत्वा ममापि भ्रमो जातः ॥१८॥

तदा धर्मकृच्छ्रं धर्मसङ्कटं प्राप्तेन मया अनुनीतौ उपच्छन्दितौ, अनुनयनप्रकारमेवाह-गवामिति सार्धेन। प्रकृष्टानां श्रेष्ठानां गवां लक्षमन्यतरस्मै प्रदीयतां युवयोरन्यतरेणेत्यर्थः ॥१९॥

किञ्च **भवन्ताविति**। किङ्करस्य मम कर्मणः शेषत्वविवक्षयेयं षष्ठी, किङ्करं मामनुगृह्णीतामित्यर्थः। तत्र हेतुत्वेन विशिनष्टि - अविजानत इति। कृच्छ्राद्धर्मसङ्कटादशुचौ निरये पतन्तं मां समुद्धरतेति पूजार्थं बहुवचनम् ॥२०॥

**विज०** भ्रष्टा अभ्यस्तदेशं विहाय अन्यदेशङ्गता। संसृष्टा सङ्कुलिता अविदुषा अजानता ॥१६॥

तस्याः गोः स्वामी पूर्वतनो नाथः अन्यः प्रतिग्रहीता ममेति प्रतिगृह्याब्रवीत् ॥१७॥

विवदमानौ विप्रतिपद्यमानौ 'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वद' (अष्टा० 1-3-47) इत्यतः आत्मनेपदम्, भ्रमः संभ्रमः ॥१८-२०॥

**[1]नाहं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् ।**
**नान्यद्गवामप्ययुतमिच्छामीत्यपरो ययौ ॥२१॥**

**★ [2]ततश्च कालयोगेन मृतः परममायया ।**
**❖ देव दैववशान्नीतस्तद्वदामि तवाऽग्रतः ॥२२॥**

**एतस्मिन्नन्तरे याम्यैर्दूतैर्नीतो यमक्षयम् ।**
**यमेन पृष्टस्तत्राहं देव देव जगत्पते ॥२३॥**

**पूर्वं त्वमशुभं भुङ्क्षे उताहो नृपते शुभम् ।**
**नान्तं दानस्य [3]धर्मस्य [4]पश्य लोकांश्च[4] भास्वतः ॥२४॥**

पूर्वं देवाशुभं भुञ्ज इति प्राह पतेति सः ।
तावदद्राक्षमात्मानं कृकलासं पतन्प्रभो। ॥ २५ ॥

ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव ।
स्मृतिर्नाद्यापि विध्वस्ता [5]भवत्सन्दर्शनार्थिनः ॥ २६ ॥

---

1 M, Ma नान्यां ★ This verse is not found in G, J, MI, V edns. ❖ This half - verse is not found in M, Ma Edns. 3. K, MI, T, V, W भवतः 4- -4 B, G, J, K, MI, T, V, W पश्ये लोकस्य 5. M, Ma तव स°

**श्रीध० नेति**। अपरः प्रतिग्राही। दुराग्रहो यल्लक्षं त्वयोक्तमन्यदपि गवामयुतं यदि तदपीमां विहाय नेच्छामीत्युक्त्वा गां त्यक्त्वा ययौ इत्यर्थः ॥ २१ ॥

**एतस्मिन्नन्तर** इति। इतः पूर्वं पापाभावान्नेतुमसमर्था इति भावः ॥ २३ ॥

**पूर्वमिति**। उताहो इत्येकं पदम्। अभवा पूर्वं शुभमिति। नान्तमिति यमस्य स्वस्य वा वाक्यम्। पश्ये पश्यामि ॥ २४ ॥

**ब्राह्मणस्येति**। हे देव! यम! पूर्वमशुभं भुञ्ज इति मयोक्ते, स यमः पतेति प्राह ॥ २५, २६ ॥

**वीर०** एवमुक्तयोस्तयोरन्यतरः गोस्वामी हे राजन्! अहं गवां लक्षमपि न प्रतीच्छे न प्रतिगृह्णामि, किन्तु दत्तामेव नयामीत्युक्त्वा अपाक्रमत् ययौ। तथा अपरोऽपि प्रतिग्राही दुराग्रहः यल्लक्षं त्वया प्रतिश्रुतम्, अन्यदपि गवामयुतं दत्तं यदि तथाप्येनां विहाय नेच्छामीत्युक्त्वा गां त्यक्त्वा ययावित्यर्थः ॥ २१ ॥

**तत** इति। हे परम! मायया परमस्य तव मायया वा हेतुभूतेन सङ्कल्पेन कालयोगेन निमित्तेन मृतः हे देव! दैववशाददृष्टवशात् यत्र नीताः तत्तवाग्रतो वदामि ॥ २२ ॥

**एतस्मिन्निति**। हे देवदेव! जगत्पते! एतस्मिन्नन्तरे इतः पूर्वं पापाभावात् नेतु[1]मसमर्थैरिति भावः। याम्यैः यमसम्बन्धिभिः यमसदनं प्रापितः तत्र यमसदने यमेनाहं पृष्टश्च ॥ २३ ॥

प्रश्नमेवाह - **पूर्वमिति**। किं पूर्वम् अशुभं पापफलं भुङ्क्षे, उताहो किं वा शुभं पुण्यफलं भोक्ष्यसे, भवतो दानस्य यो लोकः लोक्यत इति लोकः फलं तस्य भास्वतः प्रकाशमानस्य उपस्थितस्य इति यावत्, अन्तम् अवधिं न पश्यामि ॥ २४ ॥

पूर्वमेवाशुभं पापफलं भुञ्जे तस्याल्पीयस्त्वादिति भावः। इति मयोक्ते पत निरये इति शेषः। इतीत्थं स यमः मां प्राह, तावदिति। तावत्तदैव हे **प्रभो!** पतन् अहमात्मानं कृकलासमद्राक्षं दृष्टवानस्मि ॥ २५ ॥

**ब्रह्मण्यस्येति**। हे केशव! ब्रह्मण्यस्येत्यादि विशेषण चतुष्टयं पूर्वजन्मस्मृत्यनपाये हेतुतयोपात्तं, ब्रह्मणि ब्राह्मणकुले साधुः ब्रह्मण्यः ॥ २६ ॥

---

1. B °मक्षमैरिति

**विज०** अपाक्रमत् अपगतवान् ॥ २१ ॥

याम्यैः यमस्य विद्यमानैः ॥ २२ ॥

भुङ्क्ष्व भोक्षयसे ॥ २३ ॥

तव दानस्य धर्मस्य अन्तं नास्ति तज्जन्यलोकान् पश्य इत्युक्तोऽहं प्राक् अशुभं भुञ्जे इत्युक्ते स यमः तर्हि पतेति मां प्राह ॥ २४-२६ ॥

**★ स त्वं कथंमम विभोऽक्षिपथः[1] परात्मा योगेश्वरैः श्रुतिदृशाऽमलहृद्विभाव्यः ।**
**साक्षादधोक्षज उरुव्यसनान्धबुध्देः स्यान्मेऽनुदृश्य[2] इह यस्य भवापवर्गः ॥ २७ ॥**

**देव देव जगन्नाथ गोविन्द! पुरुषोत्तम!**
**नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय ॥ २८ ॥**

**अनुजानीहि मां कृष्ण यान्तं[3] देवगतिं प्रभो ।**
**यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ॥ २९ ॥**

**नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये ।**
**कृष्णाय वासुदेवाय योगानां[4] पतये नमः ॥ ३० ॥**

**इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना ।**
**अनुज्ञातो विमानाग्र्य्र मारुहत्पश्यतां नृणाम् ॥ ३१ ॥**

---

**★ This verse is not found in M, Ma Edns. 1. K, T, W °ऽक्षिगतः ;Ml, V °ऽक्षपथः 2. K, T, W शास्तेऽनुदृश्य ;Ml, V स्यादेव दृश्य 3. K, M, Ma, T, W यातुं 4. M, Ma गोपानां**

**श्रीध०** दुर्घटेन श्रीकृष्णदर्शनेन विस्मितस्सन्, आत्मनो भाग्यमभिनन्दति - स **त्वमिति**। हे विभो! स त्वं ममाक्षिपथो लोचनगोचरस्सन् कथं साक्षात्प्रत्यक्षोऽसीत्यर्थः। किमत्राश्चर्यं तदाह-पर आत्मा। अत एव योगेश्वरैरपि श्रुतिदृशा उपनिषच्चक्षुषाऽमले हृदि विभाव्यः चिन्त्यः। यतोऽधोक्षजः। अक्षजमैन्द्रियकज्ञानं तदधोऽर्वागेव यस्मात्सः। यस्येह भवापवर्गो भवेत् तस्य भवानुनुदृश्यः स्यात्। उरुव्यसनेन कृकलासत्वभवेन[1] दुःखेनान्धबुध्देस्तु ममैतच्चित्रमित्यर्थः ॥२७॥

उद्रिक्तभक्तिर्बहुधा सम्बोधयन्नाह **देव देवेति** ॥२८॥

अनुज्ञापयति - **अनुजानीहीति**। देवलोकेऽपि सतो वर्तमानस्यात्मनो मनसः सन्निधिंप्रार्थयते। यत्र क्वापीति। त्वत्पदमास्पदं विषयो यस्य तथाभूतं भूयादिति ॥२९॥

यास्यन्नमस्यति - **नम** इति। सर्वभावाय सर्वस्य भावो जन्म येन तस्मै। ब्रह्मणे कर्तृत्वेऽप्यविकाराय। कुतः? अनन्तशक्तये, अनन्ता मायाख्या शक्तिर्यस्य तस्मै। वासुदेवाय सर्वभूताश्रयायेत्युपादानत्वमुक्तम्। श्रीकृष्णाय सदानन्द रूपायेति पुरुषार्थत्वमुक्तम्। 'कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते। भारत° (5-68-5) इति स्मृतेः। किञ्च योगानामिष्टपूर्तादिकर्मणां पतये फलदात्रे। अयं भावः - एवम्भूतं त्वां विहाय गन्तुमनिच्छुरपि गमिष्यामि त्वद्दत्तकर्मफलभोगायेति ॥३०, ३१॥

---

1. B, J °सभवदुः° 2. MI, V omit कर्म

**वीर०** अलभ्यलाभेनाधुना कृतार्थोभूवमित्याह - **सत्वमिति**। हे विभो! सः यस्याहं सन्दर्शनार्थी सत्वं कथं ममाक्षिपथं गतः लोचनगोचरः, कथमित्यनेन दौर्लक्ष्यं[1] सूचितं, तत्र हेतुत्वेन विशिनष्टि - परमात्मा न हि परमात्मा केवलं मांस चक्षुषा वीक्ष्य इति भावः। किञ्च योगेश्वरैः श्रुतिदृशा उपनिषच्चक्षुद्वारेण निर्मले हृदये विभाव्यः केवलं चिन्त्यः, यद्यप्येवमथापि हे अधोक्षज! अभक्तेन्द्रियजन्यज्ञानाविषयः यस्य भवापवर्गः संसारनाशः तस्योरुणा व्यसनेनान्धा बुध्दिर्यस्य तथाभूतस्यापि शान्ते सति हृदये त्वं दृश्य एवेत्यर्थः ॥२७॥

हर्षातिशयेन बहुधा सम्बोधयन् किञ्चित्प्रार्थयमान श्चानुज्ञां पृच्छति - **देव देवेति** द्वाभ्याम्। देवगतिं स्वर्गलोकं प्रति यातुं गन्तुमुद्यतं मामनुजानीहि आज्ञापय, यत्र क्वापि सतो वर्तमानस्य मम चेतः त्वत्पदास्पदं त्वत्पदारविन्दसंश्रयं भूयात् तथाऽनुगृहीष्वेत्यर्थः ॥२८, २९॥

यास्यन्नमस्करोति - **नमस्त** इति। ते तुभ्यं सर्वभावाय **सर्वः** भावः पदार्थो यस्य शरीरत्वेनेति स तथा तस्मै तत्र हेतुः **ब्रह्मणे** स्वरूपेण गुणैश्च निरतिशयबृहत्त्वाय अनन्ताश्शक्तयः कार्योपयुक्ताऽपृथक्सिद्धप्रकृतिपुरुषकाल सार्वज्ञ्य सर्वशक्तित्वादयो यस्य तस्मै। योगानां पतये निर्वाहकाय ॥ ३० ॥

**इतीति**। स्वमौलिना स्वकिरीटेन विमानाग्र्यं विमानश्रेष्ठम् आरुरोह नृणां पश्यतां सताम् ॥ ३१ ॥

1. K. दौर्लभ्यं

**विज०** देवगतिं स्वर्गम् ॥ २७ ॥

यत्र क्वापि **योनिविशेषे** सतः सम्भवतः ॥ २९ ॥

सर्वभावाय सम्पूर्णैश्वर्याय सर्वोत्पादनकर्त्रे वा। अखण्डलीलयेति वा ॥ ३०, ३१ ॥

**कृष्णः परिजनं प्राह भगवान्देवकीसुतः ।**
**ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥ ३२ ॥**

**दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि ।**
**तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥ ३३ ॥**

**नाऽहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया ।**
**ब्रह्मस्वं हि विषं प्रोक्तं नाऽस्य प्रतिविधिर्भुवि ॥ ३४ ॥**

**हिनस्ति विषमत्तारं वह्नि[1]रद्भिः प्रशाम्यति ।**
**कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ ३५ ॥**

**ब्रह्मस्वं दुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम् ।**
**प्रसह्य[2] तु बला[3]द्भुक्तं दश पूर्वान्दशापरान् ॥ ३६ ॥**

**राजानो राजलक्ष्म्यान्धा नात्मपातं विचक्षते ।**
**[4]निरयं येऽभिमन्यन्ते ब्रह्मस्वं साधुबालिशाः ॥ ३७ ॥**

1. K, M, Ma, T, W अग्नि 2. M, Ma °ह्याति 3. K. T, W °क्ष्म्या च ;M, Ma क्ष्म्याश्च 4. M, Ma निरये।

**श्रीध० दुर्जरमिति**। मनागीषदपि भुक्तं सदग्नेरग्नि सदृशस्य तेजीयसोऽतितेजस्विनोऽपि दुर्जरम् ।। ३२-३४ ।।

किञ्च विषादपि घोरमित्याह - **हिनस्तीति**। संसर्गि संसर्गेण मारकत्वादग्नितुल्यता स्यात्, तदपि नेत्याह-वह्निरिति। अपि च समूलमिति वह्निर्मूलान्यवशेषयति, ब्रह्मस्वलक्षणारणिजः पापपावकस्तु कुलं तदपि समूलमिति ।। ३५ ।।

**ब्रह्मस्वमिति**। दुरनुज्ञातं यथावदननुज्ञातम्। त्रिपूरुषं कुलं स्वं पुत्रं पौत्रं च। प्रसह्य हठात्। बलाद्राजाद्याश्रयतः ।। ३६ ।।

**राजान** इति। ये ब्रह्मस्वमभिमन्यन्ते इच्छन्ति ते निरयमेवाभिमन्यन्ते। अतो बालिशा अज्ञा आत्मपातं न विचक्षत इति ।। ३७ ।।

**वीर० कृष्ण** इति। ब्रह्मण्यदेवो धर्मात्मेति च हेतुगर्भम्। तत्त्वात्, राजन्याननुशिक्षयन् इत्यत्र 'लक्षणहेत्वोः' (अष्टा 3-2-126) इति शत्रादेशः, अनुशिक्षयितुमित्यर्थः। परिजनं परितो विद्यमानं प्रति आह ।। ३२ ।।

उक्तिमेवाह - **दुर्जरमित्यादिना** एतद्विश्राव्येत्यतः प्राक्तनेन। बतेत्याश्चर्ये। ब्रह्मस्वं मनागीषदपि भुक्तं सत् अग्नेरग्निसदृशस्य अतितेजस्विनोऽपि दुर्जरं दुःखेनापि न जीर्यतीति तथा, किं वक्तव्यम् ईश्वरम्मन्यानां[1] राज्ञां दुर्जरमिति ।। ३३ ।।

किञ्च **नाहमिति**। हालाहलं न विषं मन्ये, कुतः? यस्य हालाहलस्य प्रतिक्रिया प्रतीकारः, वर्तत इति शेषः। किन्तु ब्रह्मस्वमेव विषं प्रोक्तम् हि यस्मादस्य ब्रह्मस्वस्य भूमौ प्रतिक्रिया नास्ति ।। ३४ ।।

किञ्च **हिनस्तीति**। विषं तु अत्तारं भक्षयितारमेव हन्ति, अग्निस्तु अद्भिर्जलैः प्रशाम्यति, अनेन संसर्गि संसर्गेण मारकत्वादग्नितुल्यता स्यात् इत्येतदपि नास्तीत्युक्तम्। अपि च समूलमिति वह्निर्हि मूलान्यवशेषयति, ब्रह्मस्वलक्षणः अरणिजः पावकस्तु कुलं तदपि समूलं दहति ।। ३५ ।।

किञ्च - **ब्रह्मस्वमिति**। दुरनुज्ञातं सम्यगननुज्ञातं सत् भुक्तं स्वं पुत्रं पौत्रं चेति त्रीन् पुरुषान् दहति, बलात् राजाद्याश्रयबलात् प्रसह्य बलात्कृत्य[2] भुक्तं तु दश पूर्वान् पितृपितामहादीन् हन्ति, नरके पातयति अपरान् पुत्रपौत्रादीन् दश नाशयति ।। ३६ ।।

तर्हि राजानः किमिति ब्रह्मस्वं भुञ्जत इत्यत्राह - **राजान** इति। ये राजानः साधु यथा तथा ब्रह्मस्वमभिमन्यन्ते आकाङ्क्षन्ति, ते राज्यलक्ष्म्या अन्धा इति शेषः। आत्मा पतत्यस्मिन्निति तथा तन्निरयं न प्रचक्षते न प्रतीक्षन्ते न विचारयन्ति, अतस्ते केवलं बालिशाः मूढाः ॥ ३७ ॥

---

1. B मन्यमानानां 2. B. °त्कृत्वा

**विज०** परिजनं परित उपासमानं जनम् ॥ ३२ ॥

अग्नेरपि दुर्जरं जीर्णीकर्तुमशक्यं मनागल्पमपि किं पुनरन्यस्येत्यर्थः ॥ ३३ ॥

प्रतिनिधिः प्रतिक्रिया नास्ति ॥ ३४ ॥

ब्रह्मस्वाख्यारणिजन्यपावकः ॥ ३५ ॥

दुरनुज्ञातम् अनुज्ञां विना भुक्तम्, अननुज्ञातं वा प्रसह्य अविचार्य ॥ ३६ ॥

राजलक्ष्म्या राजश्रियः पातं निरये आत्मपातं च न प्रचक्षते न पश्यन्ति। ये ब्रह्मस्वं साधु मन्यन्ते ते बालिशाः ॥ ३७ ॥

**श्रीशुक उवाच**

**गृह्णन्ति यावतः पांसून् [1]क्रन्दतामश्रुबिन्दवः ।**
**विप्राणां हृत[2]वृत्तीनां वदान्यानां कुटुम्बिनाम् ॥३८॥**

**राजानो राजकुल्याश्च [3]तावतोऽब्दान्निरङ्कुशाः ।**
**[4-]कुम्भीपाकेषु [-4]पच्यन्ते ब्रह्मदायापहारिणः ॥३९॥**

**स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरे[5]च्च यः ।**
**षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥४०॥**

**[6]न मे ब्रह्मधनं भूया[7]द्यद् गृद्ध्वाऽल्पायुषो [8]नृपाः ।**
**पराजिताश्च्युता [9]राज्याद्भवन्त्यु[10]द्वेगिनो हि ये ॥४१॥**

विप्रं कृतागसमपि [11]मैव द्रुह्यत मामकाः ।
घ्नन्तं बहु शपन्तं वा नमस्कुरुत नित्यशः ॥४२॥
यथाऽहं प्रणमे [12]विप्राननुकालं समाहितः ।
तथा नमत यूयं च योऽन्यथा मे स दण्डभाक् ॥४३॥
ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः ।
अजानन्तमपि ह्येनं नृगं ब्राह्मणगौरिव ॥४४॥
[13]एवं विश्राव्य भगवान्मुकुन्दो [14]द्वारकौकसः ।
पावनः सर्व[15]लोकानां विवेश निजमन्दिरम् ॥४५॥★

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे चतुष्षष्टितमोऽध्यायः ॥६४॥

---

★ The following extra verses belong to Vijayadhvaja are found in M, Ma edns. in between 37 & 38 slokas. सद्भिः समागमो राजन् कदाचिन्नाफलो भवेत्। विमुक्तो नरकाद्राजा नृगः साधु समागमात्॥ साधूनां दर्शनं स्पर्शं कीर्तनं स्मरणं तथा। तीर्थानामिव पुण्यानां सर्वमेव हि पावनम्॥ एतच्छ्रुत्वा त्वया सन्तः सदोपास्याः परन्तप। ब्रह्मस्वं मैव हर्तव्यं यदीच्छसि पराङ्गतिम्॥ 1. K, M, Ma, Ml, T, V, W रुदता 2. K, M, Ma, Ml, T, V, W वित्तानां 3. M, Ma तावन्तो° 4--4 K, T, W कुम्भीपाकेन प° ;M, Ma नरके तु वि° 5. K, M, Ma, Ml, T, V, W °त 6. Ml, V मा 7. M, Ma °ध्यञ्जग्ध्वा 8. B,G, J नराः 9. K, M, Ma, T, W स्थानात् 10 B, G, J °जिनोऽहयः ;M, Ma जिता नृपाः ; K, T, W जिनो वयम् 11. B, G, J, K, M, Ma नैव 12. M, Ma °प्रान्सर्वं° 13. K, T, W एतत् 14. Ml, V °रका प्रजाः 15. K, T, W भूतानां

**श्रीध०** अपि च **गृह्णन्तीति** ॥३८-४०॥

**नेति**। गृध्ना अभिकाङ्क्ष्य ॥४१, ४२॥

**यथेति**। प्रणमे नमामि ॥४३॥

न केवलमर्थवादविभीषिकेयं किन्तु प्रत्यक्षमित्याह - **ब्राह्मणार्थ इति** ॥४४, ४५॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुष्षष्टितमोऽध्यायः॥६४॥

**वीर०** गृह्णन्तीत्यादि श्लोकद्वयमेकान्वयम्। हृतं वित्तं येषां तेषाम् अत एव रुदतां विप्राणाम् **अश्रुबिन्दवः** यावतः पांसून् गृह्णन्ति आर्द्रान्कुर्वन्ति तावतोऽब्दान्वत्सरान् **कुम्भीपाकेन** निरयेण पच्यन्ते, ब्रह्मदायापहारिणः ब्रह्मस्वापहारिणः निरङ्कुशाः दुर्निवाराः राजादिविशेषणमिदं द्वयम् ॥३८, ३९॥

**स्वदत्तामिति**। ब्रह्मवृत्तिं ब्राह्मणस्याजीविकाम् ॥४०॥

ब्रह्मस्वं न मां स्पृशेदित्याशास्ते **नम** इति। विपर्ययेऽनर्थमाह - यदिति। यद्ब्रह्मधनं गृध्वा अभिकाङ्क्ष्य अल्पायुषः पराजिताश्च राज्याद्भ्रष्टाश्च भवन्ति, अतो वयमुद्वेजिनः भीतिमन्तो भवेम ॥४१॥

**विप्रमिति**। मामका यदि यूयं मदीयास्तर्हि कृतापराधमपि विप्रं नैव द्रुह्यत, आर्षत्वात् 'क्रुधद्रुह' (अष्टा°1-4-37) इति चतुर्थ्यभावः, किन्तु बहु यथा तथा शपन्तमपि नित्यं नमस्कुरुत ॥४२॥

इदमेव स्वदृष्टान्तेन द्रढयति **यथेति**। अनुकालं त्रिसन्ध्यं प्रणमे नमस्करोमि, योऽन्यथा न नमेत् स दण्डभाक् मे मत्तः ॥४३॥

न केवलमर्थवाद इति बिभीषिकेयम्, किन्तु प्रत्यक्षमित्याह - **ब्राह्मणार्थ** इति। ब्राह्मणार्थो विप्रधनं हर्तारम् अधो नरके पातयति, यथा अजानन्तमेनं नृगं ब्राह्मणस्य गौरपातयत् तद्वत्, अजानन्तमपीत्यनेन किमु वक्तव्यं जानन्तं पातयतीति कैमुत्यन्यायोऽभिप्रेतः ॥४४॥

**एतदिति**। द्वारकौकसः प्रति एतत् उक्तं श्रावयित्वा, तत्र हेतुः - सर्वलोकानां पावनः ॥४५॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां चतुष्षष्टितमोऽध्यायः ॥६४॥

**विज०** यद्ब्रह्मस्वं जग्ध्वाऽल्पायुषो भवन्ति ॥३८-४१॥

द्रुह्यत द्रोहं न कुरुत ॥४२-४४॥

सर्वलोकानां पावनः शुद्धिकर्ता ॥४५॥

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां**

**श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां**

**दशमस्कन्धे उत्तरार्धे चतुष्षष्टितमोऽध्यायः ॥६४॥**

**(विजयध्वजरीत्या सप्তाशीतितमोऽध्यायः ॥८७॥)**

# पञ्चषष्टितमोऽध्यायः

## (विजयध्वजरीत्या अष्टाशीतितमोऽध्यायः)

बलरामस्य पुनर्नन्दव्रजागमनकथा

### श्रीशुक उवाच

बलभद्रः कुरुश्रेष्ठ भगवान्रथमास्थितः[1] ।
सुहृद्दिदृक्षुरुत्कण्ठः प्रययौ नन्दगोकुलम् ॥ १ ॥

परिष्वक्तश्चिरोत्कण्ठै र्गोपैर्गोपीभिरेव च ।
रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः ॥ २ ॥

चिरं नः पाहि दाशार्ह सानुजो जगदीश्वर[2] ।
इत्यारोप्याङ्कमालिङ्ग्य नेत्रैः सिषिचतुर्जलम्[3] ॥ ३ ॥

गोपवृध्दांश्च विधि [4]वद्यविष्ठैरभिवन्दितः[4] ।
यथावयो यथासख्यं यथासम्बन्धमात्मनः ॥ ४ ॥

[5]समुपेत्याऽथ गोपा[6]लान् हास्यहस्तग्रहादिभिः ।
विश्रान्तं सुखमासीनं पप्रच्छुः पर्यु[7]पागताः ॥ ५ ॥

---

1. K.T.W. °श्रितः 2. B.G.J. रः 3. B.G.J.K. M.Ma. T.W °र्जलैः 4- -4 M. Ma. T.W. °द्यविष्ठैरभिवादितः ;Ml. V °द्यभिवन्द्याभिवादितः 5. M. Ma त मु° 6. M.Ma. Ml.V. °लाः हास्य 7. M. Ma. °पासिताः ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चषष्टितमे राम श्चक्रे गोकुल मागतः। रममाणस्तु गोपीभिः कालिन्द्याः कर्षणं मदात् ॥

रामस्य चरितं चित्रं कालिन्द्याकर्षणादि यत्। पौण्ड्रकान्तादि कृष्णस्य पृथगुक्तं[1] ततः परम् ॥ १ ॥

**परिष्वक्त** इति। आशीर्भिरभिनन्दितो बभूव ॥ २ ॥

तदाह - **चिरमिति** ॥ ३ ॥

**गोपवृद्धानिति**। गोपवृध्दांश्च विधिवदभिवन्द्य यविष्ठैरभिवन्दितो बभूवेत्यर्थः। अपि च यथावय इति ॥ ४ ॥

**समुपेत्येति**। ते सर्वे स्वेषु यादवेषु तं राममनामयमारोग्यं पप्रच्छुः। ते च तेन पृष्टा इति ॥ ५ ॥

---

1. B.J. कृ गतः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ प्रत्येकं रामकृष्णयोश्चेष्टितानि वर्णयति **बलभद्र** इति। हे कुरुश्रेष्ठ! सुहृद्दिदृक्षुरिति समस्तं पदम्। सुहृदो बन्धून् द्रष्टुमिच्छुः, तत्र हेतुरुत्कण्ठः प्रेमयुतः तद्विषयाभिलाषयुक्तो वा ॥ १ ॥

**परिष्वक्त** इति। आलिङ्गितः पितरौ यशोदानन्दगोपौ अभिवाद्य प्रणम्य ताभ्यामाशीर्भिरभिनन्दितश्च ॥ २ ॥

तदेवाह - **चिरमिति**। हे दाशार्ह! हे जगदीश्वर! इदं सम्बोधनद्वयं हेतुगर्भम्। जगदीश्वरत्वा त्स्वाश्रितसंरक्षणार्थं दाशार्हेष्ववतीर्णत्वाच्च सानुजस्त्वं नोऽस्मान् चिरं पाहि चिरमात्मरक्षाप्रार्थनेनैव[1] तयोर्दीर्घायुष्ट्वादिकं सर्वं प्रार्थितप्रायमेव तेन विना तदनुपपत्तेरित्याशयेन चिरं पाहीत्युक्तम्, इतीति। आदिश्याऽऽशास्य नेत्रैः नेत्रजैर्जलैः हर्षजलै स्सिषिचतुः स्नपयामासतुः ॥ ३ ॥

**गोपवृद्धानिति**। ततो गोपवृद्धांश्चाभिवाद्येति शेषः। यविष्ठैः न्यूनवयस्कैः अभिवन्दितः, किञ्च यथावय इति। अथ ततो हास्यादिभिः आदिशब्देन आलिङ्गनादि सङ्ग्रहः। आत्मनः स्वस्य वयस्सख्यसम्बन्धानुरूपम् ॥ ४ ॥

गोपान् समुपेत्य उपविवेशेति शेषः ॥ ५ ॥

---

1. T.W. °नयैव

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवच्छिक्षितकेशाविष्टस्य शेषावतारस्य बलभद्रस्य हरिमाहात्म्याविनाभूतं माहात्म्यं वर्णय त्यनेन प्रारिप्सितेनाऽध्यायत्रयेण। तत्र प्रथमे यमुनामदहरणलक्षणं विक्रमं वक्तुं बलस्य गोकुलगमनं वक्ति। द्वितीये द्विविदवधलक्षणं, तृतीये कौरवगर्वनिर्वापणार्थं तत्पुराकर्षणलक्षणं वक्तुं दुर्योधनसुताहरणं वक्ति ॥ १ ॥

पितरौ यशोदानन्दौ गोपौ ॥२॥

इति समाप्ताभिवादनादिकर्माणं तं राममङ्कमारोप्य नेत्रैश्चक्षुर्नाडीनिर्गतैः 'नेत्रं नाड्यांतरोः मूले' (वैज. को. 6-3-17) इति यादवः ॥३॥

यविष्ठैः कनिष्ठैः ॥४॥

हास्येन मन्दस्मितेन, हस्तग्रहेण, आदिशब्देन परिरम्भणादिकं गृह्यते ॥५॥

[1-]पृष्टाश्चानामयं स्वेषु[-1] प्रेमगद्गदया गिरा ।
कृष्णे कमलपत्राक्षे सन्न्यस्ताखिलराधसः ॥६॥

कच्चिन्नो बान्धवा राम सर्वे कुशलमासते ।
कच्चित्स्मरथ नो राम यूयं दारसुतान्विताः ॥७॥

दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः ।
निहत्य निर्जित्य रिपून्दिष्ट्या दुर्गं समाश्रिताः ॥८॥

गोप्यो हसन्त्यः पप्रच्छू रामसन्दर्शनादृताः ।
कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥९॥

कच्चित्स्मरति वा बन्धून्पितरं मातरं च नः[2] ।
★ अप्यसौ मातरं द्रष्टुं सुकृदप्यागमिष्यति ॥
अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः ॥१०॥

---

1- -1 K.T.W. पृष्ट्वा च अनामयं स्वेषु ;M. Ma पृष्टश्चाकथयत्स्वेषु ;Ml.V पृष्टाश्चनामयं प्रीताः 2. B.G.J.K.M. Ma. T.W. सः ★ This extra half verse is found in B.G.J. editions only.

श्रीध० पृष्टाश्चेति। कृष्णे कृष्णप्राप्त्यर्थं सन्न्यस्ताखिलराधस स्त्यक्तसर्वविषयाः ॥६-८॥

[1-]गोप्य इति। रामस्य सन्दर्शनेनादृताः[-1] सादराः ॥९, १०॥

---

1- -1 Ml.V. Omit

**वीर० पृष्टाश्चेति**। अनामयमारोग्यं पृष्ट्वा कमलपत्राक्षे कृष्णे सन्न्यस्ताः सम्यङ्निहिताः अखिलाः सकला राधसः बुद्धयो यैस्ते कृष्णैकप्रवणचित्ता इत्यर्थः। प्रेम्णा गद्गदया गिरा परिपप्रच्छुः ॥६॥

प्रश्नमेवाह-**कच्चिदि**त्यादिना।हेराम ! नोऽस्माकं सर्वे बान्धवाः कुशल मासते; कच्चिद्दारैस्सुतैरन्विताः, इदं विस्मृत्यभावसूचकं विशेषणम्। यूयं नोऽस्मान् स्मरथ कच्चित् ?॥७॥

दिष्ट्येत्यानन्दे, अयमस्माकमानन्द इत्यर्थः। सुहृज्जनाः वसुदेवदेवक्यादयः मुक्ताः कंसनिर्बन्धात् मोचिताः, कांश्चिद्रिपून्निहत्य कांश्चिन्निर्जित्य च दुर्गं जलदुर्गं द्वारकामित्यर्थः ॥८॥

**गोप्य** इति। रामस्य सन्दर्शने पुनः पुनर्वीक्षणे आदृताः पप्रच्छुः, प्रश्नमेवाह - कच्चिदास्त इति। पुरस्त्रीजनवल्लभ इत्यनेन ग्राम्यस्त्रीष्वात्मसु तस्य प्रीत्यभावो हेतुगर्भितः ॥९॥

स कृष्णः पितरं नन्दं मातरं यशोदां च स्मरति कच्चित् ? अपि वेति। अस्माकमनुसेवामनुवर्तनं स्मरते किं वा? न स्मरत्येवेति भावः ॥१०॥

**विज०** सन्न्यस्ताखिलराधसः समर्पित समस्तसम्पदः ॥६-८॥

रामसन्दर्शनेनादृताः जातबहुमानाः ॥९॥

अस्माकमनुसेवां स्मरते न वा ॥१०॥

**मातरं पितरं भ्रातॄन्पतीन्पुत्रान्स्वसॄरपि ।**
**यदर्थे [1]जहिम दाशार्ह दुस्त्यजान्स्वजनान्प्रभो ॥११॥**

**ता नः सद्यः परित्यज्य गतः सञ्छिन्नसौहृदः ।**
**कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम् ॥१२॥**

**कथं नु गृह्णन्त्यनवस्थितात्मनो [2]वचः कृतघ्नस्य [3-]बुधाः पु[-3]रस्त्रियः ।**
**[4]गृह्णन्ति वै चित्रकथस्य सुन्दरस्मितावलोकोच्छ्वसितस्मरातुराः ॥१३॥**

**किं नस्तत्कथया गोप्यः कथाः कथयतापराः ।**
**यात्यस्माभिर्विना कालो यदि तस्य तथैव नः ॥१४॥**

**इति प्रहसितं शौरेर्जल्पितं चारु वीक्षितम् ।**
**गतिं प्रेमपरिष्वङ्गं स्मरन्त्यो रुरुदुः स्त्रियः ॥१५॥**

1. K. Ml. T. V. W अत्याक्ष्म ; M. Ma. छिन्न 2. K.T.W. वाचः 3- -3 M. Ma मुधा प॰ 4. M. Ma कृष्णस्य

**श्रीध० ता** इति। तर्हि तद्गमने युष्माभिः प्रतिबन्धः किं न कृतः तद्वाक्यविश्वासादिति चेत्, ननु विश्वासः किमिति कृतस्तत्राहुः - कथंन्विति। वक्तृबहुत्वान्नानाविधानि वाक्यानि ॥११, १२॥

तत्रान्या ऊचुः - **कथं नु गृह्णन्तीति**। अन्या ऊचुः - गृह्णन्ति वा इति। चित्रकथस्य चित्रकथाकथनकोविदस्य। किञ्च सुन्दरं स्मितं यस्मिंस्तेनावलोकेनोऽछ्वसितः क्षुभितो यः स्मरस्तेनातुराः ॥१३॥

तत्रान्या ऊचुः - **किं न** इति। कालस्तावत्तस्य चास्माकं च यात्येव। किन्तु तस्य सुखेन, अस्माकं तु दुःखेनेत्येतावानेव विशेष इति ध्वनितम् ॥१४, १५॥

**वीर०** एतदेव स्पष्टयितुं तस्य सौहार्दाभावमाहुः - **मातरमिति** सार्धेन। हे दाशार्ह! हे प्रभो! मात्रादीनन्यांश्च स्वजनान् यदर्थे यन्निमित्तम् अत्याक्ष्म त्यक्तवत्यः, ताः नोऽस्मान् सद्य एव परित्यज्य गतः, अत एव सञ्छिन्नं सौहृदं येन तथाभूतः तर्हि तद्गमने युष्माभिः प्रतिबन्धः किं न कृतः, तद्वाक्यविश्वासादिति चेत् विश्वासः किमिति कृतः, तत्राऽऽहुः - कथं न्विति अर्धेन। तादृशमित्यनेन वञ्चनशीलत्वं विवक्षितम्। स्त्रीभिरित्यनेन मौढ्यमभिप्रेतम्। कथं न श्रद्धीयेत न विश्वस्येत अज्ञत्वाद्विश्वसितवत्यस्मेति भावः॥ ११,१२॥

वक्तृबहुत्वान्नानाविधानि वाक्यानि तत्रान्या ऊचुः - **कथमिति**। अनवस्थितः चञ्चलः आत्मा मनो यस्य तस्य कृतघ्नस्य च कथन्नु बुधाः कुशलाः पुरस्त्रियो गृह्णन्ति विश्वसन्ति। अन्या ऊचुः - गृह्णन्ति वा इति। विचित्राः कथाः भाषणानि यस्य तस्य, हेतुगर्भमिदम्। भाषणेनैव व्यामोहयितुरित्यर्थः। सुन्दरं स्मितं यस्मिन् तेन अवलोकनेन उच्छ्वसित उद्दीपितो यः स्मरः कामः तेनाऽऽतुराः आकुलाः, इदमपि हेतुगर्भम्। तत्वात्ताः गृह्णन्ति, वै इति निश्चये ॥१३॥

अपरा ऊचुः - **किं न** इति। हे गोप्यः! तस्य कथया वार्तया नोऽस्माकं किं को वा पुरुषार्थः, अतोऽन्याः कथाः कथयत, तस्य श्रीकृष्णस्यास्माभिर्विना यदि कालो याति, तर्हि तथैव नोऽस्माकमपि यात्येव, किन्तु तस्य सुखेन अस्माकं तु दुःखेनेत्येतावानेव विशेष इत्यनेन ध्वनितम् ॥१४॥

**इतीति**। प्रेम्णा परिष्वङ्गमालिङ्गनं च स्मरन्त्यः ॥१५॥

**विज०** यस्य कृष्णस्यार्थे दृढस्नेहनिमित्तं मात्रादीन् स्वजनान् हिन्म अत्याक्ष्म छान्दसप्रयोगः ॥ ११ ॥

स्त्रीभिस्तादृशं गुडजिह्विकालक्षणं भाषितं कथं नु न श्रध्दीयेत श्रध्देयमेवेत्यर्थः ॥ १२ ॥

अस्मदन्यानैव श्रद्दधत इत्याहुः - **कथमिति**। परस्त्रियः अस्मदन्यस्त्रियः, अन्यत्र उत्तमस्त्रियः, अनवस्थितात्मनः चञ्चलमनसः, अन्यत्र सङ्गरहितस्य कृतघ्नस्य अनुपकारिणः, अन्यत्रकारिणः विनाशिनः कृष्णस्य पुमधीनस्य अन्यत्र पूर्णानन्दस्य मुधावचः कथं नु गृह्णन्ति अन्यत्र मुधा कथं न गृह्णन्ति सार्थमेव गृह्णन्तीत्यर्थः। वैचित्रा नानाविधाः कथाः वाक्यप्रबन्धा यस्य स तथा तस्य उभयत्र समं कीदृश्यः सुन्दरस्मितावलोकेन उच्छ्वसितेन उद्धतेन स्मरेण आतुराः अन्यत्र निरन्तरस्मरणपरवत्यः ॥ १३ ॥

हरये प्रेम्णा कम्पन्त्यो मिथो जल्पन्ति **किं न** इति। हे गोप्यः! अपराः कथाः कथयत तस्य कृष्णस्य कथया किं नः प्रयोजनम्? तस्य कृष्णस्य यद्यस्माभिर्विना कालो याति। तथा तर्हि तेन विना नः कालोऽपि यातीत्यन्वयः॥ १४ ॥

शुकः स्त्रीणां धैर्यशिथिलं वचनं वज्रधारोपममिति लोकसिध्दमित्याशयेनाह - **इतीति**। इत्थमुक्त्वा शौरेः कृष्णस्य प्रहसितादि च स्मरन्त्यो रुरुदुरित्यन्वयः ॥ १५ ॥

**सङ्कर्षणस्ताः कृष्णस्य सन्देशैर्हृदयङ्गमैः ।**
**सान्त्वयामास भगवान्नानानुनय कोविदः ॥ १६ ॥**

**द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च ।**
**रामः क्षपासु भगवान्गोपीनां रतिमावहन्[1] ॥ १७ ॥**

**पूर्णचन्द्रकलामृष्टे कौमुदीगन्धवायुना ।**
**यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः ॥ १८ ॥**

**वरुणप्रेषिता[2] देवी वारुणी वृक्षकोटरात् ।**
**पतन्ती तद्वनं सर्वं स्वगन्धेनाध्यवासयत्[3] ॥ १९ ॥**

**तं गन्धं मधुधाराया वायुनोपहृतं बलः ।**
**आघ्रायोपगतस्तत्र ललनाभिः समं[4] पपौ ॥ २० ॥**

1. T.W. मुद° 2. MI. V. °रि° 3. M. Ma सौरभेना° 4. K.M. Ma. T. W. पपौ समम्

**श्रीध० सङ्कर्षण** इति। नानाविधेष्वनुनयेषु कोविदः ।। १६ ।।

**द्वाविति**। मधुं चैत्रम्। माधवं वैशाखम्। गोपीनां रतिमिति श्रीकृष्ण क्रीडासमयेऽनुपन्नानामतिबालानां अन्यासामित्यभियुक्त प्रसिध्दिः ।। १७ ।।

**पूर्णेति**। पूर्णचन्द्रस्य कलाभिः मरीचिभिरामृष्टे उज्ज्वलिते। कौमुदीगन्धवायुना कुमुद्वतीनां गन्धसहितेन सेविते। यद्वा कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यन्ते कुमुदगन्धवायुनेत्यर्थः ।। १८ ।।

**वरुणेति**। वारुणी सुधया सहोत्पन्ना मदिरा ।। १९, २० ।।

**वीर० सङ्कर्षण** इति। नानाविधेषु अनुनयेषु सान्त्वनेषु कोविदो निपुणः ताः गोपीः सान्त्वयामास ।। १६ ।।

**द्वाविति**। मधुं चैत्रं माधवं वैशाखं चेत्येतौ द्वौ मासाववात्सीदुषितवान्। अत्यन्तसंयोगे द्वितीया, कथम्भूतस्सन्? तासु मधुमाधवयोस्सम्बन्धिनीषु क्षपासु रात्रिषु गोपीनां पूर्वं स्वपरिगृहीतगोपीनां व्रजान्निष्क्रमणान्तरमुत्पन्नानां वा रतिमनुरागमावहन् उद्रेचयन् ।। १७ ।।

किञ्च **पूर्णेति**। पूर्णचन्द्रस्य कलाभिः मरीचिभिः आमृष्टे उज्ज्वले कौमुदीगन्धवायुना कुमुद्वतीनां गन्धवातेन सेविते। यद्वा कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यन्ते, कुमुदगन्धवायुनेत्यर्थः यमुनायाः उपवने स्त्रीसमूहैः परिवृतो रेमे क्रीडितवान् ।। १८ ।।

**वरुणेति**। वारुणी सुधया सह उत्पन्ना मदिरा, सा च वरुणप्रेरिता सती इदमेव तस्यां वारुणीशब्दप्रवृत्तौ निमित्तम्। वृक्षकोटरादापतन्ती अधस्स्रवन्ती स्वगन्धेन तद्वनमध्यवासयत् परिमलयाञ्चकारेत्यर्थः ।। १९ ।।

**तमिति**। तं वायुनोपहृतं घ्राणं प्रत्यानीतं मधुधारायाः गन्धमाघ्राय तत्रागतो बलो रामः स्त्रीभिस्सह पपौ पीतवान् ।। २० ।।

**विज०** मधुं माधवं वसन्तर्तुम् ।। १६, १७ ।।

कौमुदी कुमुद्वती तस्याः गन्धेन संपृक्तेन वायुना सेविते ।। १८ ।।

अध्यवासयत् - संस्कारोपेतमकरोत् ।। १९,२० ।।

**★ उपगीयमान उद्गायन्वनिताशोभिमण्डले ।**
**रेमे[1] करेणु[2] यूथेशो[3-] माहेन्द्र इव वारणः[-3] ।। २१ ।।**

नेदुर्दुन्दुभयो व्योम्नि ववृषुः कुसुमैर्मुदा ।
गन्धर्वा मुनयो रामं तद्वीर्यैरीडिरे मुदा ॥ २२ ॥

उपगीयमानचरितो वनिताभिर्हलायुधः ।
वनेषु व्यचरत्क्षीबो [4]मदविह्वललोचन[4]ः ॥ २३ ॥

[5]स्रग्व्येककुण्डलो मत्तो वैजयन्त्या च मालया ।
बिभ्रत्स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम् ॥ २४ ॥

स [6]चाऽऽजुहाव यमुनाञ्जल क्रीडार्थमीश्वरः ।
[7]निजं वाक्यमनादृत्य मत्त इत्यापगां बलः ॥
अनागतां हलाग्रेण कुपितो विचकर्ष ह ॥ २५ ॥

पापे त्वं मामविज्ञाय यन्नायासि मयाऽऽहुता ।
नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् ॥ २६ ॥

---

★ This verse is not found in G. J. M. Ma. editions. 1. Ml. V. रेजे 2. Ml. V °शो 3- -3 B. °न्द्रो वारणो यथा 4- -4 M. Ma माहेन्द्र इव वारणः 5. M. Ma. शुभैक° 6. B. G. J. K. Ml. T. V. W. आ° 7. M. Ma. T.W. निज

**श्रीध०** **उपगीयमानेति**। क्षीबो मत्तः ॥ २१, २२ ॥

**स्रग्वीति**। स्वेद एव प्रालेयं हिमं तेन भूषितम् ॥ २३, २४ ॥

**स इति**। मत्तोऽयमित्यनादृत्य अनागतामापगां नदीम् ॥ २५ ॥

**पापे** इति। आहुता आहूता यत् यस्मान्नागच्छसि तस्मात्। नेष्ये गमयिष्यामि ॥ २६ ॥

**वीर०** वनितानां शोभिनि मण्डले उपगीयमानः स्वयं चोद्गायन् रेमे, यथा करेणूनां इभीनां यूथेषु माहेन्द्रो वारणो गजः ऐरावतः, तद्वत् ॥ २१ ॥

**नेदुरिति**। ववृषुः देवा इत्यध्याहारः, मुदा हर्षेण तस्य रामस्य वीर्यैः वीर्यप्रकाशकैः वचोभिरीडिरे तुष्टुवुः ॥ २२ ॥

10-65-27-34

इत्थमुपगीयमानानि चरितानि यस्य सः। क्षीबो मत्तः, मदेन विह्वले चञ्चले लोचने यस्य सः वनिताभिस्सह वनेषु चचार ॥२३॥

तमेव विशिनष्टि - **स्रग्वीति**। स्रगस्यास्तीति तथा एकं कुण्डलं यस्य सः। वनमालया अलङ्कृत इति शेषः। स्वेद एव प्रालेयं हिमं तेन भूषितं स्मितयुक्तं मुखाम्भोजं बिभ्राणः ॥२४॥

तस्यैव चरित्रान्तरमाह-**स** इत्यादिना। ईश्वरः प्रभुः स रामः यमुनां आजुहाव आहूतवान्। ततो मत्तोऽयमित्यात्मवाक्यमनादृत्यानागतामापगां यमुनां कुपितो बलरामः हलाग्रेण विचकर्ष आकृष्टवान्। हेति विस्मये ॥२५॥

**पापे** इति। आहुतेति च्छेदः, हे पापे! यद्यतो मया त्वमाहूता मामवज्ञाय अवहेल्य नागताऽसि, अतस्त्वां स्वैरचारिणीं शतधा नेष्यामि शतकुल्यावतीं करिष्ये ॥२६॥

**विज०** ईडिरे तुष्टुवुः ॥२१,२२॥

क्षीबः मद्यपानमत्तः ॥२३॥

स्वेदप्रालेयेन धर्महिमजलेन भूषितम् ॥२४, २५॥

हे पापे! आहुता आहूता ॥२६॥

**एवं निर्भर्त्सिता भीता यमुना यदुनन्दनम् ।**
**उवाच चकिता वाचं पतिता[1] पादयोर्नृप ॥२७॥**

**राम राम महाबाहो न जाने तव विक्रमम् ।**
**यस्यैकांशेन विधृता जगती जगतः पते ॥२८॥**

**परं भावं भगवतो भगवन्मामजानतीम् ।**
**मोक्तुमर्हसि विश्वात्मन्प्रपन्नां भक्तवत्सला ॥२९॥**

**ततो व्यमुञ्चद्यमुनां याचितो भगवान्बलः ।**
**विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट् ॥३०॥**

**कामं विहृत्य सलिलादुत्तीर्णायासिताम्बरे ।**
**भूषणानि [2]महार्हाणि ददौ [3-]कान्तिः शुभां[-3] स्रजम् ॥ ३१ ॥**

**वसित्वा वाससी नीले माला[4]मामुच्य काञ्चनीम् ।**
**रेजे स्वलङ्कृ[5]तो लिप्तो माहेन्द्र इव वारणः ॥ ३२ ॥**

**अद्यापि दृश्यते राजन् यमुनाऽऽकृष्टवर्त्मना ।**
**बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि ॥ ३३ ॥**

**एवं सर्वा निशा याता एकेव रमतो व्रजे ।**
**रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥ ३४ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

1. M. Ma °त्या 2. M. Ma विचित्राणि 3- -3 K. M. Ma. T. W कान्तिमतीं 4. M. Ma °माधाय 5. M. Ma °तस्ताभिः

**श्रीध० एवमिति**। चकिता कम्पिता ॥ २७ ॥

**रामेति**। एकांशेन शेषाख्येन ॥ २८,२९ ॥

**तत इति**। विजगाहे अवगाहनं कृतवान् ॥ ३० ॥

**काममिति**। उत्तीर्णाय निर्गतायासिताम्बरादीनि कान्तिर्ददौ। कान्तिः लक्ष्मीः। यथोक्तं वैष्णवे (पुराणे) "वरुणप्रहिता चास्मै मालामम्लान पङ्कजाम्। समुद्राभे तथा वस्त्रे नीले लक्ष्मी रयच्छत॥" (विष्णु.पु. 5-25-16) इति। हरिवंशे च बलं प्रति लक्ष्मीवाक्यम् - "जातरूपमयं चैकं कुण्डलं वज्रभूषणम्। आदिपद्मं च पद्माख्यं दिव्यं श्रवणभूषणम् ॥ देवेमां प्रतिगृह्णीष्व पौराणीं भूषणक्रियाम् ॥" इत्यादि ॥ ३१ ॥

**वसित्वेति**। वसित्वा परिधाय, आमुच्य कण्ठे निधाय। चन्दनादिभिरालिप्तः ॥ ३२,३३ ॥

**एवमिति**। एकेव एकैव निशा यथा तथा। माधुर्यैः विलासैः ॥ ३४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

**वीर०** इत्येवं निर्भर्त्सिता अत एव भीता यमुना तथैव कर्तुं अयं प्रभुरिति शङ्किता हे नृप! पादयोः पतित्वा यदुनन्दनं रामं प्रति उवाच ॥२७॥

वाचमेवाऽऽह - **रामेति** द्वाभ्याम्। तव विक्रमं महिमानं न जाने अपारत्वादिति भावः । तदेव स्पष्टयितुमाह- यस्येति। हे जगतां पते ! षष्ठ्यन्त पाठे तस्य यस्य एकांशेन सहस्रतममूर्धैकदेशेन जगती पृथ्वी विधृता विशेषेण धृता, तस्य तवेति सम्बन्धः ॥२८॥

भगवतस्तव परं निरवधिकं भावं प्रभावं हे भगवन्! अजानतीम् अधुना प्रपन्नां च मां मोक्तुमर्हसि, तदुपयुक्तं सम्बोधयति भक्तवत्सलेति। मुञ्चेत्यस्य यथापूर्वं गमयेत्यर्थः ॥२९॥

**तत** इति। बलो रामः इत्थं याचितः तां[1] यमुनां व्यमुञ्चत्। ततः स्त्रीभिस्सह जलं विजगाहे च, यथा करेणुभिस्सह इभराट् ऐरावतः तद्वत् ॥३०॥

**काममिति**। कामं यथेच्छं विहृत्योत्तीर्णाय निर्गताय रामाय असिताम्बरे नीलाम्बरे महार्हाणि [2-]अनार्घाणि[-2] भूषणानि कान्तिमतीमम्लानश्रियं स्रजं मालां च ददौ, यमुनेति कर्तृपदाध्याहारः। यत्तु "वरुणप्रहितां चास्मै मालामम्लानपङ्कजाम्। समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत" (विष्णु. पु. 5-25-16) इति वैष्णवं वचनम्। तत्रापि लक्ष्मीः दर्शनीयरूपा मूर्तिधरा यमुनेति व्याख्येयम् ॥३१॥

**वसित्वेति**। वसित्वा परिधाय काञ्चनीं स्वर्णमयीं मालामामुच्य आबध्य कण्ठे निधाय काञ्चनीं माला मित्यनुक्त भूषणोपलक्षणम् ।इत्थं सुष्ठु अलङ्कृतः स्त्रीभिस्सह रेजे यथा माहेन्द्रो वारणस्तद्वत् ॥३२॥

हलेन कृष्टा यमुनेत्येतदसम्भावितं मन्वानस्य राज्ञस्संशयनिराचिकीर्षयाऽऽह - **अद्यापीति**। हे राजन्! अनन्तं वीर्यं यस्य तस्य बलस्य रामस्य वीर्यं सूचयती "लक्षणहेत्वोः" (अष्टा 3-2-126) इति शत्रन्तात् ङीप्, सूचयितुमित्यर्थः। आकृष्टवर्त्मना हलाकृष्टमार्गेण यमुना स्यन्दमानेति शेषः ॥३३॥

**एवमिति**। आक्षिप्तं रिरंसाप्रवणं चित्तं यस्य तस्य व्रजे रमतो रामस्य माधुर्यैः विलासैस्सर्वा निशाः रात्रयः योषितामेकेव निशा याताः, एकनिशाप्राया बभूवुरित्यर्थः ॥३४॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां पञ्चषष्टितमोऽध्यायः ॥६५॥

विज० भावमभिप्रायं माहात्म्यं वा ॥ २७-३० ॥

असिताम्बरे नीलवस्त्रे ददौ यमुनेति शेषः ॥ ३१,३२ ॥

आकृष्टेन वर्त्मना मार्गेण दृश्यते ॥ ३३ ॥

एका निशेव व्रजस्त्रीणां माधुर्यैः सौन्दर्यैः कर्णरम्यवचनैः आक्षिप्तमाकृष्टं चित्तं यस्य स तथा तस्य ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां

दशमस्कन्धे उत्तरार्धे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

(विजयध्वजरीत्या अष्टाशीतितमोऽध्यायः)



# षट्षष्टितमोऽध्यायः

## (श्रीकृष्णकृत पौण्ड्रककाशिराज वधादि कथारम्भः)

**श्रीशुक उवाच**

**नन्द व्रजं गते रामे करूशाधिपतिर्नृप[1] ।**
**वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥१ ॥**

**त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः ।**
**इति प्रस्तोभितो बालैर्मेने[2] स्वात्मानमच्युतम् ॥२ ॥**

**दूतं च प्राहिणोन्मन्दः कृष्णायाव्यक्त वर्त्मने ।**
**द्वारकायां यथा बालो नृपो बालकृ[3]तो[4]ऽग्रमः ॥३ ॥**

**दूतस्तु[5] द्वारकामेत्य सभायामास्थितं प्रभुम् ।**
**कृष्णं कमलपत्राक्षं राजसन्देशमब्रवीत् ॥४ ॥**

**[6-]कारूश उवाच[-6]**

**वासुदेवोऽवतीर्णोऽह मेक एव न चापरः ।**
**भूतानामनुकम्पार्थं त्वन्तु मिथ्याभिधां त्यज ॥५ ॥**

---

1. B.G.J.T.W. °षा° 2. B.G.J. °न आ° 3. K. °लैःकृ° 4. B.G.J.K. Ml. V. °तोऽबुधः । 5. K.T.W. °स्तद्दवा° 6- -6 B.G.J. K.T.W omit

## श्रीधरस्वामि विरचिता भावार्थदीपिका

षड्युक् षष्टितमे काशीं गत्वाहन् पौण्ड्रकं हरिः । तन्मित्रं च ततो वृत्तं सुदक्षिणवधादिकम् ॥

**त्वमिति** । प्रस्तोभितः स्तुत्या प्रोत्साहितः बालैः अज्ञैः ॥१,२ ॥

**दूतमिति** । बालकृतो नृपः बालैः नृपत्वेन क्रीडायां परिकल्पितः ॥३-५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ कृष्णचरितं पौण्ड्रकवधकाशी पुरदहनात्मक मनुवर्णयति **नन्दव्रज** मित्यादिना । हे नृप। करूषाणां देशानां

अधिपतिः अहमेव वासुदेव इत्यभिमन्यमानः, अत एव अज्ञः श्रीकृष्णाय दूतं प्राहिणोत् प्रेषयामास। दूतमुखेन वक्ष्यमाणं वचः प्राहिणोदित्यर्थः ॥ १ ॥

तदेवाह - **त्वमिति**। इतीत्थं बालैः अज्ञैः त्वं प्रस्तोभितः स्तुत्या मुधा प्रोत्साहितः अहन्तु आत्मानमेवाच्युतं वासुदेवं मेने मनवै ॥ २ ॥

**दूतमिति**। अस्यैतद्वक्तुमित्यादि - न व्यक्तं वर्त्म याथात्म्यं यस्य तस्मै, किं वक्तु मित्यत आह - द्वारकायामिति। बालैः अज्ञैः यथा बालः क्रीडायां नृपः कृतः नृपत्वेन कल्प्यते, तथा त्वमप्यबुधेऽज्ञो द्वारकायां नृपत्वेन कल्पितः इत्यतः त्वं वासुदेव इति पूर्वोक्तं च वक्तुमित्यर्थः ॥ ३ ॥

**दूत** इति। तत् ततः राजसन्देशं राज्ञः पौण्ड्रकस्य सन्देशम् ॥ ४ ॥

तदेवाह - **वासुदेव** इति। न चापरः न त्वं वासुदेव इति भावः, किन्तु त्वं भूतानां स्वसम्बन्धविषयभूतानाम् अनुकम्पार्थं मिथ्या वासुदेवः। अतस्तामभिधामाख्यां त्यज ॥ ५ ॥

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

अयमध्यायस्य कथाभागः, एकोनषष्टितमाध्यायानन्तरं, योजनीये विजयध्वजीय अधिकपाठे पञ्चमाध्यायत्वेन दृश्यते ॥

**यानि त्वमस्मच्चिह्नानि मौढ्याद्[1]बिभर्ष्य[1]भीतवत् ।**
**त्यक्त्वै हि मां त्वं शरणं नो चेदेहि ममाहवम् ॥ ६ ॥**

**श्रीशुक उवाच**

**[2]विकत्थनं [3]तदाकर्ण्य पौण्ड्रकस्याल्पमेधसः ।**
**उग्रसेनादयस्सभ्या उच्चकै र्जहसुस्तदा ॥ ७ ॥**

**उवाच दूतं भगवान् परिहास कथामनु ।**
**उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे ॥ ८ ॥**

**मुखं [4]यदापिधायाज्ञ कङ्कगृध्रवटैर्वृतः ।**
**शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥ ९ ॥**

इति दूतस्तदा[6]ऽऽक्षेपं स्वामिने सर्वमाहरत् ।
कृष्णोऽपि रथमास्थाय काशीमुपजगाम ह ॥१०॥

---

1--1 B.G.J. K.T.W. °र्षि सात्वत! 2. B.G.J. omit वि 3. B.G.J. तदुपा° 4. B.G.J.K.T.W तदपि 5. K. ML. T.V.W. °लै° 6. K. MI. T.V.W. °मा°

**श्रीध० उवाचेति**। हे मूढ! उत्स्रक्ष्ये त्वयि प्रक्षेप्स्यामि यै स्सह त्वमेवं विकत्थसे तेष्वपीत्यर्थः। यद्वा यैः कृत्रिमैस्सुदर्शनादिभिः त्वमेवं श्लाघसे तानुत्स्रक्ष्ये त्याजयिष्यामि इत्यर्थः ॥६-८॥

मां शरणं एहीत्यस्योत्तरं **मुखमिति**। वटाः कङ्कादिवत् पक्षि विशेषाः। तत्र तदा शुनां शरणमाश्रयो भवितासि ॥९॥

**इतीति**। काशीमिति। पौण्ड्रकस्यापि तदा मित्रपुरे अवस्थानात् ॥१०॥

**वीर० यानीति**। हे सात्वत! अस्मदसाधारणानि यानि चिह्नानि शङ्खचक्रादीनि त्वं मौढ्याद्बिभर्षितानि त्यक्त्वा मां शरणमेह्यागच्छ नो चेच्छरणं नाभ्येषि तर्हि आहवं युद्धं देहि युध्यस्वेत्यर्थः ॥६॥

**विकत्थनमिति**। तद्दूतोक्त मल्पबुद्धेः पौण्ड्रकस्य विकत्थनमाकर्ण्य सभ्यास्सभायां स्थिताः जहसुः हसितवन्तः ॥७॥

**उवाचेति**। परिहास कथामनु उग्रसेनादीनां परिहासकथनानन्तरं प्राह तदेवाह उत्स्रक्ष्य इति। हे मूढ! चिह्नानि त्वया धृतानि। उत्स्रक्ष्ये त्याजयिष्यामि। तत्र हेतुत्वेन विशिनष्टि यैश्चिह्नैः त्वमेवं विकत्थसे ॥८॥

मां शरणं एहीत्यस्योत्तरमाह **मुखमिति**। हे अज्ञ! तत् येनेत्थं विकत्थितं तन्मुखमपिधाय आच्छाद्य कङ्कादिभिः वृतः शयिष्यसे वलाः कङ्कादिवत् पक्षिविशेषाः। ततस्तत्र शयनस्थले भवान् शुनां शरणं भविता भविष्यति, मया हतं शयितं च त्वां श्वसृगालादयः खादिष्यन्तीति भावः ॥९॥

**इतीति**। आक्षेपमधिक्षेपं स्वामिने पौण्ड्रकाय समाहरत् आगत्य न्यवेदयत् इत्यर्थः। कृष्णोऽपीति। रथमास्थाय अधिष्ठाय काशीमुपजगाम तत्समीपमुपजगामेत्यर्थः ॥१०॥

पौण्ड्रकोपि तदुद्योगमुपलभ्य महारथः ।
[1-]अक्षौहिणीभिः सहितो[-1] निश्चक्राम पुरा[2]द्द्रुतम् ॥११॥

**तस्य काशिपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृप ।**
**अक्षौहिणीभिस्तिसृभिरपश्यत्पौण्ड्रकं हरिः ॥ १२ ॥**

**शङ्खार्यसिगदाशार्ङ्ग श्रीवत्साद्युपलक्षितम् ।**
**बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥ १३ ॥**

**कौशेय वाससी पीते वसानं गरुडध्वजम् ।**
**अमूल्यमौल्याभरणं स्फुरन्मकर कुण्डलम् ॥ १४ ॥**

**दृष्ट्वा तमात्मनस्तुल्यं[3] वेषं कृत्रिममाश्रितम् ।**
**यथा नटं रङ्गगतं विजहास भृशं हरिः ॥ १५ ॥**

---

1--1 B.G.J. MI. V. °भ्यां संयुक्तो 2. K. T.W. द्विहिः 3. K.T. MI. T.V.W. °ना तुल्यं

**श्रीध० तस्येति ।** पार्ष्णिग्राहः [1-]पृष्टप्रान्त रक्षण तत्परः[-1] ॥ ११-१३ ॥

**कौशेयेति ।** गरुडः कृत्रिमः ध्वजे यस्य तं, अमूल्यं अनर्घं मौल्याभरणं किरीटं यस्य तम् ॥ १४,१५ ॥

---

1--1 B.J. पृष्ठतो रक्षकः ।

**वीर० पौण्ड्रकोपीति ।** तस्य कृष्णस्योद्योग मुपगम्य उपलभ्य ज्ञात्वा, द्रुतं शीघ्रं पुरात् कारूषपुरात् निश्चक्राम यद्वा पौंड्रकस्य तदा मित्रपुरेऽवस्थानात् काशीपुरादित्यर्थः ॥ ११ ॥

**तस्येति ।** तस्य पौण्ड्रकस्य मित्रं सखा काशीपतिः काशिराजः पार्ष्णिग्राहः पृष्ठतो रक्षकः सहायभूतस्सन् तिसृभिः अक्षौहिणीभिः सह अन्वयात् अनुजगाम । तदा हरिः कृष्णः पौण्ड्रकं ददर्श ॥ १२ ॥

कथम्भूतम्? शङ्खादिभिः उपालक्षितं तत्र अरि अरयुक्तं चक्रं कौस्तुभमणिं बिभ्राणं वनमालया विराजितम् ॥ १३ ॥

पीते पिशङ्गे कौशेयवस्त्रे, वसानं परिदधानं गरुडः कृत्रिमो ध्वजे यस्य, अमूल्य मनर्घं मौल्याभरणं यस्य, स्फुरन्ती मकराकारे कुण्डले यस्य ॥ १४ ॥

आत्मना कृष्णेन तुल्यो वेषो यस्य तं, अथापि कृत्रिमं वेषमास्थितमाश्रितं तत्र दृष्टान्तः । यथा नटं रङ्गगतमिति, रङ्गे नृत्यस्थले गतं नटमिव स्थितमित्यर्थः । तमेवंविधं दृष्ट्वा हरिर्भृशं प्रहसितवान् ॥ १५ ॥

**शूलैर्गदाभिः परिघैश्शक्तिभिः[1] प्रासतोमरैः ।**
**असिभिः पट्टिसैर्बाणैः[2] प्राहरन्नरयो हरिम् ॥१६ ॥**

**कृष्णस्तु तत्पौण्ड्रक काशिराजयो र्बलं गजस्यन्दन वाजिपत्तिमत् ।**
**गदासि चक्रेषुभिरार्दयद्भृशं[3] यथा युगान्ते हुतभुक् पृथक्प्रजाः ॥१७ ॥**

**आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रैररिणावखण्डितैः[4] ।**
**बभौ चितं[5] मोदवहं मनस्विनामाक्रीडनं भूतपते रिवोल्बणम् ॥१८ ॥**

**अथाह पौण्ड्रकं शौरिर्भोभोः पौण्ड्रक यद्भवान् ।**
**दूतवाक्येन मामाह तानस्त्राण्युत्सृजामि ते ॥१९॥**

**त्याजयिष्येऽभिधानं मे यत्त्वयाज्ञ मृषा धृतम् ।**
**व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ॥२०॥**

---

1. B.G.J. त्यृष्टि ;MI.v क्त्यष्टि 2. K. MI. T.V.W °ट्ट° 3. MI. V. °र्द° 4. K.T.W. च 5. K.T.W. चिरं

**श्रीध० कृष्ण** इति। गजस्यन्दनादि चतुरङ्गबलमर्दितवान्, पृथक् प्रजाः, चतु र्विधं भूतग्रामं, यथा युगान्ताग्निरिति ॥१६,१७ ॥

**आयोधनमिति**। आयोधनं रणस्थानं अरिणा चक्रेण चितं आकीर्णं आक्रीडनमिव कल्पान्ते रुद्रस्य क्रीडास्थानमिव ॥१८-२० ॥

**वीर० शूलैरिति**। तदा अरयः शत्रवः कृष्णं शूलादिभिः प्राहरन् प्रत्याहतवन्तः ॥१६॥

**कृष्णस्त्विति**। गजादयोऽस्य सन्तीति तथा चतुरङ्गमित्यर्थः। तत् पौण्ड्रक काशिराजयोः बलं गदादिभिः भृशं आर्दयत् पीडयामास। आजघ्ने इति यावत्। यथा युगान्ताग्निः पृथक् प्रजाः चतुर्विधभूतग्रामा नर्दयिष्यति तद्वत् ॥१७॥

**आयोधनमिति**। अरिणा चक्रेण। चकाराद्गदादिभिश्च खण्डितैः रथादिभिः तदायोधनं युध्दस्थलं मनस्विनां सूराणां चिरं सन्तोषावहं सद्रेजे, भूतपतेः[1] आक्रीडन मिव कल्पान्ते रुद्रस्य क्रीडास्थानमिव उल्बणं दारुणं सद्बभौ इति सम्बन्धः ॥१८॥

**अथेति**। उक्तिमेवाह भो भो इत्यादिना संयुगमित्यन्तेन। भो भोः पौण्ड्रक! दूतवाक्य मुखेन, भवान् मां प्रति यदाह "यानि त्वमस्मच्चिन्हानि" (भाग० 10-66-6) इत्यादि तान्येवास्त्राण्युत्स्रुजामि प्रतियोक्ष्यामि[2] ॥१९॥

हे अज्ञ! मे मत्सम्बन्धि मदसाधारण मित्यर्थः अभिधानं नाम ते त्वया मृषा धृतं तत्त्याजयिष्ये, यदि संयुगं नेच्छामि संयुगाद्भीतोऽस्मि चेत् त्वां शरणं व्रजामि नाहं भीत इत्यर्थः ॥२०॥

1. B. Omits भूतपतेः 2. B. प्रयोक्ष्यामि

**इति क्षिप्त्वाशितैर्बाणै र्विरथीकृत्य पौण्ड्रकम् ।**
**शिरोऽवृश्च्यद्रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ॥२१॥**

**तथा काशीपतेः[1] कायाच्छिर उत्कृत्य पत्रिभिः ।**
**व्यपातयत्काशिपुर्यां पद्मकोशमिवानिलः ॥२२॥**

**एवं मत्सरिणं हत्वा पौण्ड्रकं स सखं हरिः ।**
**द्वारकामाविशत्सिद्धैर्[2]गीयमान कथामृतः ॥२३॥**

**स नित्यं भगवद्ध्यान प्रध्वस्ताखिल बन्धनः ।**
**बिभ्राणश्च हरे राजन् स्वरूपं तन्मयोऽभवत् ॥२४॥**

**शिरः पतितमालोक्य राजद्वारि सकुण्डलम् ।**
**किमिदं कस्य वा वक्त्रमिति संशिशियिरे[3] जनाः ॥२५॥**

1. B.G.J.K.T.W °शि° 2. Ml. V. स्तू° 3. B.J. शयिरे ;Ml. V. शिरे

**श्रीध० इतीति** गिरेः श्रृङ्गं यथेति ॥२१-२४॥

**शिर** इति। प्रथमं किमिदमिति पश्चात् वक्त्रमिति विभाव्य कस्य चेति संशयिरे[1] संशयं कृतवन्त इति ॥२५॥

1. Ml. V. °शिशिरे

**वीर० इतीति**। उक्त्वेति शेषः। रथाङ्गेन चक्रेण शिरोऽवृश्च्यत् चिच्छेद। यथेन्द्रो वज्रेण गिरेः श्रृङ्गं तद्वत् ॥२१॥

**तथेति**। पत्रिभिः बाणैः काशिपतेः कायाच्छिरः उत्कृत्य उत्प्लुत, यथा तथा छित्वा काशीपुर्यां न्यपातयत्, अनिलो वायुः पद्मकोशमिव ॥२२॥

**एवमिति**। ससखं सकाशिराजं मत्सरिणं शत्रुं पौण्ड्रकं हत्वा सिद्धैर्गीयमाना कथैवामृतं यस्य स हरिः द्वारकां विवेश ॥ २३ ॥

**स** इति। सपौण्ड्रकः भगवतः श्रीकृष्णस्य ध्यानेन ध्वस्तान्यखिलानि बन्धनानि कर्मबन्धनानि यस्य सः, हेतु गर्भमिदं तथा हरेः कृष्णस्य रूपं रूपतुल्यं स्वरूपं[1] स्ववेषं बिभ्राण इत्यपि तत्त्वात्तन्मयः तदीय वेषप्रचुरो बभूव। साधर्म्यं गत इत्यर्थः। शिरच्छेदेन दोषस्य प्रायश्चित्तं कृतम्। अत भगवद्ध्यानस्य फलं तत्साधर्म्यं लब्धमिति भावः ॥ २४ ॥

**शिर** इति। प्रथमं किमिदमिति पश्चात् सकुण्डलत्वात् शिर इति, ततः कस्येदं मुखमिति संशिश्यिरे संशयं चक्रुः ॥ २५ ॥

1. K.T.W. omit स्व°

**राज्ञः काशीपते र्ज्ञात्वा महिष्यः पुत्र बान्धवाः ।**
**पौराश्च हा हता राजन्नाथ नाथेति प्रा[1]रुदन् ॥ २६ ॥**

**सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः ।**
**निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः ॥ २७ ॥**

**इत्यात्मनाभिसन्धाय सोपाध्यायो महेश्वरम् ।**
**सुदक्षिणोऽर्चयामास परमेण समाधिना ॥ २८ ॥**

**प्रीतोऽविमुक्ते भगवान् तस्मै वरमदाद्भवः ।**
**पितृहन्तृवधोपायं स वव्रे [2-]वरमीप्सितम्[-2] ॥ २९ ॥**

**[3-]रुद्र उवाच[-3]**

**[4]सुदक्षिणाग्निं परिचर ब्राह्मणैस्सह[5] ऋत्विजम् ।**
**अभिचार विधानेन स चाग्निः प्रमथै र्वृतः ॥**
**साधयिष्यति सङ्कल्पमब्रह्मण्ये प्रयोजितः ॥ ३० ॥**

1. Ml. v. चा° 2--2 K. परमेश्वरम् ;Ml. V. वरमीशितुः। 3--3 B.G.J. omit 4. B.G.J. दक्षिणा° ;K.T.W. त्वं दक्षिणा° 5. B.G.J. °स्समम्°; K.T.W. °स्सम्यग्°

**श्रीध० सुदक्षिण** इति। संस्थाविधिं उत्तरक्रियां, अपचितिं निष्कृतिम् ॥२६, २७॥

**इतीति**। आत्मना अभिसन्धाय बुद्ध्या अध्यवस्य सुदक्षिणः अत्युदारः ॥२८॥

**प्रीत** इति। वरमदात् वृणीष्वेत्युक्तवान् इत्यर्थः ॥२९॥

**सुदक्षिणेति**। ऋत्विजं ऋत्विज मिव स्वनियोगकारिणं "यज्ञस्य देवमृत्विजम्" (तैत्ति. सं 4-3-13-3b) इति श्रुतेः। अब्रह्मण्ये प्रयोजित इति, कृष्णे प्रयोजितो विपरीतो भविष्यतीति सूचितम् ॥३० ॥

**वीर० राज्ञ** इति। ततः क्रमेण काशिपतेः राज्ञ एवेदं शिरः इति ज्ञात्वा निश्चित्य महिष्यस्तस्य भार्याः पुत्रादयश्चेत्थं रुरुदुः ॥२६॥

**सुदक्षिण** इति। तस्य काशिराजस्य सुदक्षिणो नाम पुत्र आसीदिति वाक्यान्तरं, स च सुदक्षिणः पितुः संस्थाविधिमुत्तरक्रियां कृत्वा मत्पितृहन्तारं हत्वा पितुः अपचितिं ऋणापनयनात्मिकां निष्कृतिं यास्यामि ॥२७॥

इतीत्थं अभिसन्धाय उपाध्यायेन सहितः परमेण समाधिना ध्यानयोगेन महेश्वरं रुद्रं आराधयामासेति सम्बन्धः ॥२८॥

**प्रीत** इति। सुदक्षिणः प्रसन्नं परमेश्वरं रुद्रं प्रति वधोपायमेव वरं वव्रे "शास्त्र दृष्ट्यातूपदेशो वामदेववत्" (ब्र. सू. 1-1-30) इति न्यायेन महेश्वरं परमेश्वरमिति च मुनिप्रयोगः, प्रीत इति विविक्ते एकान्ते प्रीतःप्रसन्नो रुद्रः तस्मै वरं ददौ ॥२९॥

वरमेवाह - **सुदक्षिणाग्निमिति**। सम्यक् ऋत्विजो यस्य तं दक्षिणाग्निमभिचारहोमेन परिचर आराधय, स च परिचरितोग्निः प्रमथैः परिवृतः अब्रह्मण्ये प्रयुक्तः सङ्कल्पं त्वदभिसन्धिं साधयिष्यति। ब्रह्मण्ये प्रयोजितस्तु स्वयमेव हन्यत इति भावः ॥३०॥

**इत्यादिष्ट स्तथा चक्रे कृष्णायाभिचरन् व्रती[1] ॥३१॥**

**ततोऽग्नि रुत्थितः कुण्डान्मूर्तिमानति भीषणः ।**
**तप्तताम्र शिखाश्मश्रु रङ्गारोद्गारिलोचनः ॥३२॥**

**दंष्ट्रोग्र भ्रुकुटीदण्ड[2] कठोरास्य स्वजिह्वया ।**
**आलिहन् सृक्वणीं[3] नग्नो विधून्वन् त्रिशिखं ज्वलन्[4] ॥३३॥**

**पद्भ्यां तालप्रमाणाभ्यां कम्पयन्नवनीतलम्[5] ।**
**सोऽभ्यधावद्वृतो भूतैः द्वारकां प्रदहन् दिशः ।। ३४ ।।**

**तमाभिचारदहनमायान्तं द्वारकौकसः ।**
**विलोक्य तत्रसुस्सर्वे वनदाहे यथा मृगाः ।। ३५ ।।**

---

1. K.T.W. कुधीः 2. K.T.W. °न्त 3. B.G.J. °क्कि ;K. °क्कि° 4. B.T.W. °त् 5. K.T.W. न्धरणी°

**श्रीध० इतीति।** अभिचरन् अभिचारं कुर्वन् व्रती गृहीतनियमः ।। ३१ ।।

**तत इति।** ततं ताम्रमिव शिखाः श्मश्रूणि च यस्य सः। अङ्गारोद्गारीणि लोचनानि यस्य सः ।। ३२ ।।

**दंष्ट्रेति।** दंष्ट्राभिः उग्रैः भ्रुकुटी दण्डैश्च कठोरं क्रूरमास्यं यस्य सः, त्रिशिखं त्रिशूलम् ।। ३३ ।।

**पद्भ्यामिति।** दिशः प्रदहन् ।। ३४, ३५ ।।

**वीर० इतीति।** इतीत्थं आदिष्टः कुबुद्धिः सुदक्षिणः, तथा यथोक्तं कृष्णाय अभिचरन् द्रुह्यन् चक्रे ।। ३१ ।।

**तत इति।** कथम्भूतः अग्निः? मूर्तिमान् विग्रहधारी अतिदारुणः ततं यत् ताम्रं तद्वच्छिखा श्मश्रूणि च यस्य अङ्गारोद्गारिणी लोचने यस्य, दंष्ट्राभि रुग्रैश्च भ्रुकुटी दन्तैः कठोरं[1] आस्यं यस्य सः, सृक्विणीमुत्तरोष्ठोर्ध्व देश मालिहन् आस्वादयमानस्तिस्रः शिखाः यस्य तं शूलं धुन्वन् कम्पयन् ।। ३२, ३३ ।।

**पद्भ्यामिति।** सोऽग्निः भूतैः प्रमथैः वृतः ।। ३४ ।।

**तमिति।** आयान्तं आगच्छन्तं विलोक्य तत्रसुः वनदाहे सति यथा मृगास्त्रस्यन्ति तद्वत् ।। ३५ ।।

---

1. B. adds क्रूरं

**अक्षैस्सभायां क्रीडन्तं भगवन्तं भयातुराः ।**
**त्राहि त्राहि त्रिलोकेश वह्नेः प्रदहतः पुरम् ।। ३६ ।।**

**श्रुत्वा तज्जन वैक्लव्यं दृष्ट्वा स्वानाञ्च साध्वसम् ।**
**शरण्यस्सम्प्रहस्याह माभैष्टे त्ववितास्म्यहम् ।। ३७ ।।**

**सर्वस्यान्तर्बहिस्साक्षी कृत्यां माहेश्वरीं विभुः ।**
**विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ।। ३८ ।।**

**तत्सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानल प्रभम् ।**
**स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुन्दास्त्रमथाग्नि मार्दयत्[1] ॥३९ ॥**
**कृत्यानलः प्रतिहतस्सरथाङ्ग पाणे रस्त्रौजसा[2] स[3-] नृप भग्न[-3] मुखोऽनिवृत्तः ।**
**वाराणसीं प्रतिसमेत्य सुदक्षिणं तं सर्त्विग्जनं समदहत्स्वकृतोऽभिचारः ॥४० ॥**

---

1. Ml. V. °म° 2. K.T.W. स्वतेजसा 3- -3 K.Ml.T.V.W नृप विभग्न

**श्रीध० अक्षैरिति**। त्राहि त्राहीत्याहुरिति शेषः ॥३६॥

**श्रुत्वेति**। अहमवितास्मि रक्षिष्यामि ॥३७, ३८॥

**तदिति**। रोदसी च प्रकाशयदिति शेषः, यद्वा स्वतेजसा खादीन् प्रति जाज्वल्यमानं अत्यर्थं प्रकाशमानित्यर्थः। आर्दयत् अपीडयत् ॥३९॥

अर्दितोऽग्निर्यत्कृतवान् तदाह **कृत्यानल** इति। सहर्त्विग्भिः जनैश्च वर्तमानं अभिचर्यते मार्यते अनेनेत्यभिचारः। कृत्यानलः ॥४०॥

**वीर० अक्षैरिति**। पुरं द्वारकां प्रदहतो वह्नेस्सकाशात् अस्मान् त्राहीत्याहुरिति शेषः ॥३६॥

**श्रुत्वेति**। तज्जनानां वैक्लब्यमधैर्यं श्रुत्वा स्वानां साध्वसं भयं दृष्ट्वा प्रहस्योवाच - तदेवाह शरण्योहम् अविता चास्मि, भयं माकुरुत दुष्टजनात्संसाराच्च सम्भवद्भयं वो न विद्यत इति ॥३७॥

**सर्वस्येति**। सर्वस्य लोकस्यान्तर्बहिश्च साक्षाद्द्रष्टा, हेतुगर्भ मिदम्। अतो माहेश्वरीं कृत्यां विज्ञाय तद्विघातार्थं कृत्यानाशनार्थं पार्श्वस्थं चक्रं सुदर्शनमाज्ञापयामास ॥३८॥

**तदिति**। तद्भगवता आदिष्टं चक्रं कर्तृ अग्निं आर्दयत्, चक्रं कथम्भूतम्? सूर्याणां कोटिः प्रतिमा तुला यस्य तत्। सुदर्शनाख्यं अतिशयेन ज्वलत् प्रलयाग्ने रिव प्रभा यस्य तत्। स्वेतजसा खं अन्तरिक्षं रोदसी द्यावापृथिव्यौ ककुभो दिशश्च प्रकाशयदिति शेषः मुकुन्दस्यैव असाधारणमस्त्रम् ॥३९॥

अर्दितस्सन् किमकरोदित्यत आह-**कृत्यानल** इति। रथाङ्गपाणे तेन प्रसिध्देन तेजसा तेजःप्रचुरेण सुदर्शनेन भग्नं मुखं यस्य स, प्रतिहतश्च अत एव निवृत्तः सः प्रसिध्दः कृत्यानलो, हे नृप ! वाराणसीं प्रत्यागत्य स्वेन कृतः अभिचारो येन तं ऋत्विग्जनैः सहितं, प्रथमान्तपाठे ऋत्विग्भिः जनैश्च वर्तमानं अभिचरति मारयतीति तथा, स कृत्यानलः तं सुदक्षिणमदहत् ॥४०॥

**चक्रन्तु विष्णो स्तदनुप्रविष्टं वाराणसीं साट्ट सभालयापणाम् ।**
**सगोपुराट्टालक [1-]कोष्ठ सङ्कुलां[-1] सकोश हस्त्यश्वरथान्नशालाम् ॥ ४१ ॥**
**दग्ध्वा वाराणसीं सर्वां [2]विष्णोश्चक्रं सुदर्शनम् ।**
**भूयः पार्श्व मुपातिष्ठत्कृष्णस्या क्लिष्ट कर्मणः ॥ ४२ ॥**
**य [3]एनं श्रावयेन्मर्त्य उत्तम श्लोक [4]विक्रमम् ।**
**समाहितो[5]ऽनु श्रुणुयात् सर्वपापैः प्रमुच्यते ॥ ४३ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यायां संहितायां
दशमस्कन्धे उत्तरार्धे षट् षष्टितमोऽध्यायः ॥ ६६ ॥

---

1. Ml. V. गोष्ठगोकुलां 2. K. Ml. T.V.W. विष्णुच° 3. G.K.Ml.T.V.W. °तच्छ्रा° 4. K. चेष्टितम् 5. B.G.J. Ml. V. °वा श्रु°

**श्रीध० चक्रमिति।** अट्टादि सहितां, अट्टाः मञ्चाः ॥ ४१-४३ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां षट् षष्टितमोऽध्यायः ॥ ६६ ॥

**वीर०** किञ्च **चक्रमिति।** तद्विष्णोश्चक्रं वाराणसीं अनु कृत्यानल मनुसृत्य प्रविष्टं सत् अदहदिति पूर्वेण **सम्बन्धः।** कथम्भूताम्? अट्टादिभिः सहितां तत्र सभालयाः सभा गृहाणि, सभा आलयाश्चेति वा। अट्टालकाः उपरितन प्रदेशाः, गोपुरादि सहितैः [1]गोकुलैः सङ्कुलां व्याप्तां कोशादीनां शालाभिस्सहितां, तत्र कोशो धनम् ॥ ४१ ॥

**दग्ध्वेति।** भूयः पुनः अक्लिष्ट कर्मणः उदारचेष्टितस्य श्रीकृष्णस्य पार्श्वं उपातिष्ठत् पार्श्वं समीपे तस्थावित्यर्थः ॥ ४२ ॥

उक्तकथाश्रवणादि फलमाह- **य** इति। यः पुमान् एतदुत्तमश्लोकस्य चेष्टितं मर्त्यान्प्रति श्रावयेत् यद्वा समाहितः श्रुणुया त्सर्वैः पापैः मुक्तो भवेत् ॥ ४३ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघव विदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षट् षष्टितमोऽध्यायः ॥ ६६ ॥

---

1. K.T.W. कोष्ठैः

# सप्तषष्टितमोऽध्यायः

(विजयध्वजरीत्या एकोननवतितमोऽध्यायः)

(बलरामकृत द्विविदवध कथा)

### राजोवाच

भूयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः ।
अनन्तस्याप्रमेयस्य यदन्यत्कृतवान् विभुः[1] ॥ १ ॥

### श्रीशुक उवाच

नरकस्य सखा कश्चित् द्विविदो नाम वानरः ।
सुग्रीवसचिवस्सोऽथ भ्राता मैन्दस्य वीर्यवान् ॥ २ ॥

सख्युस्सोपचितिं कुर्वन् वानरो राष्ट्रविप्लवम् ।
पुरग्रामाकरान् घोषानदहद्वह्निमुत्सृजन् ॥ ३ ॥

क्वचित्सशैलानुत्पाट्य तैर्देशान् समचूर्णयत् ।
आनर्तान् सुतरामेव[2] यत्रास्ते[3]मित्रहा हरिः ॥ ४ ॥

क्वचित्समुद्रमध्यस्थो दोर्भ्या[4]मुत्क्षिप्य तज्जलम् ।
देशान्नागायुतप्राणो वेलाकू[5]लानमज्जयत् ॥ ५ ॥

---

1. B.G.J.M.Ma प्रभुः 2. K.T.W. °वं ;M.Ma °त्य 3. M.Ma शत्रुहा 4. K.M.Ma.T.W. °मुध्दृत्य 5. K.MI.T.V.W. कूले न्यम°

## श्रीधरस्वामि विरचिता भावार्थदीपिका

सप्तषष्टितमे रामो गिरौ रैवतके मदात्। स्वैरं युवतिभिः क्रीडन् अवधीत् द्विविदं खलम्[1] ॥

कालिन्दी विदारणानन्तरं रामचरितं द्विविदवधादि सङ्गतमपि अनुक्त्वा तत्पूर्वभावित्वेन पौण्ड्रकवधादिकं[2] निरूप्येदानीं तदेव प्रस्तौति - **भूय** इति। रामचरित श्रवणेच्छायां अद्भुत कर्मत्वं हेतुः तत्र च अनन्तत्वं तत्राप्यप्रमेयत्वमिति ॥ १ ॥

**नरकस्येति**। नरकस्य सखेति हरिणावैरे कारणं **सुग्रीव सचिव इति** तस्य मन्त्रबलं, मैन्दस्य भ्रातेति रामायणे अतिप्रसिद्धत्वेन वीर्याधिक्यमुक्तमिति ॥ २ ॥

**सख्युरिति**। सख्युर्नरकस्य अपचितिं आनृण्यं राष्ट्रस्य विप्लवो नाशो यथा भवति तथा पुरादीनदहदिति ॥ ३ ॥

किञ्च **क्वचिदिति**। कदाचित् सः द्विविदः मित्रहा [3-] मित्रं सखायं नरकासुरं हन्तीति मित्रहा हरिः श्रीकृष्णः [-3] ॥ ४ ॥

**क्वचिदिति**। तस्य समुद्रस्य जलं बाहुभ्यां उत्क्षिप्य वेलायाः कूले वर्तमानान् देशान् [4-] न्यमज्जयत् [-4] प्लावयामासेति ॥ ५ ॥

1. MI.V. बलः 2. B.J. Omit कं 3- -3 B.J. सखिहन्ता 4- -4 B.J. Omit.

## श्रीवीरराघव विदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवमन्तरागर्भिणीति न्यायेन श्रुतकृष्णचरित्रः [1] पुनर्बलभद्र चेष्टितबुभुत्सया पृच्छति राजा **भूय इति**। अद्भुतं कर्म चेष्टितं यस्य तस्यानन्तस्य अनन्तावताररूपस्य अप्रमेयस्य अपारमहिम्नो रामस्य चेष्टितं श्रोतुमिच्छामि किं पूर्वोक्तं नेत्याह यदन्यदिति। विभुः रामः यदन्यत् कृतवान् तच्चेष्टितम् ॥ १ ॥

द्विविदवधात्मकं कर्माख्यातुं तावद्विविदस्य दुश्चेष्टितमाचष्टे **नरकस्येत्यादिना**। द्विविदो नाम कश्चिद्वानरः स च नरकस्य सखा सुग्रीवस्य सचिवो मन्त्री मैन्दस्य भ्राता च वीर्यवांश्चेति रामायणादौ प्रसिद्ध इति तात्पर्यम् ॥ २ ॥

**सख्युरिति**। सः द्विविदः सख्युर्नरकस्यापचितिमानृण्यं, कुर्वन् 'लक्षणहेत्वोः, (अष्टा. 3-2-126) इति शता कर्तुं राष्ट्रस्य विप्लवो नाशो यथा तथा पुरादीन् वह्निमुत्सृजन् ददाह ॥ ३ ॥

**क्वचिदिति**। स द्विविदः तैरुत्पाटितैः शैलैः देशान् तत्राप्यानर्तान् सुतरामचूर्णयत्। तत्र हेतुत्वेन तान्विशिनष्टि-यत्र येष्वानर्तेषु मित्रहा नरकघ्नो हरिरास्ते ॥ ४ ॥

**क्वचिदिति**। दोर्भ्यां बाहुभ्यां तत्सामुद्रं जलं उद्धृत्योक्षिप्य वेलायाः कूले वर्तमानान् देशानमज्जयत्। तत्र हेतुत्वेन तं विशिनष्टि, नागायुतप्राणः नागानां गजानां अयुतस्य दशसहस्रस्य प्राणो बलं यस्य सः ॥ ५ ॥

1. B. चरित्र

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अनन्तस्य शेषस्य एन विष्णुना प्रमेयस्य ज्ञेयस्य ॥ १,२ ॥

सख्युर्नरकस्य अपचितिं निष्कृतिम् ॥ ३,४ ॥

वेलया समुद्रजलाभिवृद्ध्याकूलान् नीचभूमीः समुद्रतीर निकटवर्ति देशान् अनाशयदित्यर्थः ॥ ५ ॥

**आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् ।**
**अदूषयच्छकृन्मूत्रैरग्नीन् वैतानिकान् खलः ॥६॥**

**पुरुषान् योषितो दृप्तः क्ष्माभृद्द्रोणी गुहासु सः ।**
**निक्षिप्य चाप्यधाच्छृङ्गैः[1] पेशस्कारीव कीटकम् ॥७॥**

**[2-]एवं देशान्[-2] विप्रकुर्वन् दूषयंश्च[3] कुलस्त्रियः ।**
**श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥८॥**

**तत्रापश्यद्यदुपतिं रामं पुष्करमालिनम् ।**
**सुदर्शनीय सर्वाङ्गं ललनायूथमध्यगम् ॥९॥**

**गायन्तं वारुणीं[4] पीत्वा मदविह्वललोचनम् ।**
**विभ्राजमानं वपुषा प्रभिन्नमिव वारणम् ॥ १० ॥**

---

1. B.G.J. °च्छैलैः 2- -2 M.Ma तं देशं 3. M.Ma वै धर्षयंश्च 4. M.Ma मदिरां

**श्रीध० आश्रमानिति।** आश्रमस्थान् वनस्पतीन् भुङ्क्त्वा आहवनीयाद्यग्निषु मूत्रादि कृतवानित्यर्थः ॥ ६ ॥

**पुरुषानिति।** अप्यधात् पिदधे पेशस्कारी भ्रमरः ॥७-९॥

**गायन्तमिति।** प्रभिन्नं मत्तम् ॥ १० ॥

**वीर० आश्रमानिति।** ऋषिमुख्यानां आश्रयभूतान् वनस्पतीन् भस्मसात्[1]कृत्वा दग्ध्वेत्यर्थः। भग्नवनस्पतीनिति पाठे भग्नाः वनस्पतयो येषु तथाभूतान् कृत्वा शकृन्मूत्रैः मलमूत्रैः वैतानिकान् यज्ञीयान् आहवनीयादीन् अग्नीन् अदूषयत् यतः स खलः दुरात्मा ॥ ६ ॥

**पुरुषानिति**। दुष्टो द्विविदो गिरेः कन्दरेषु गुहासु च निक्षिप्य शृङ्गैः गिरिशृङ्गैः अप्यधात् पिहितवान् पेशस्कारी भ्रमरकीटमिव ॥७॥

**एवमिति**। विप्रकुर्वन् पीडयन् तत्र तत्र कुलस्त्रीः दूषयंश्च सुललितं मधुरं गीतं श्रुत्वा रैवतकं पर्वतं ययौ ॥८॥

**तत्रेति**। तत्र रैवतकोपवने पुष्करमाला पद्ममालास्यास्तीति तथा व्रीह्यादित्वान्मत्वर्थीय इनिः सुष्ठु दर्शनीयानि सर्वाण्यङ्गानि यस्य तं योषित्समूहमध्यगतं वारुणीं मदिरां पीत्वा मदेन विह्वले घूर्णिते लोचने यस्य तं प्रभिन्नं मत्तं वारण मैरावतमिव स्थितं राममपश्यदिति सम्बन्धः ॥९,१०॥

---

1. K.T.W. °स्मकृ°

**विज०** वैतानिकान्यज्ञ सम्बन्धिनः ॥६॥

क्ष्माभृद्द्रोणीम् गुहासु पर्वतनितम्बगुहासु ॥७-९॥

प्रभिन्नं मदजल स्राविणम् ॥१०॥

**दुष्टश्शाखामृगश्शाखामारूढः कम्पयन् द्रुमान् ।**
**चक्रे किलकिलाशब्दमात्मानं सम्प्रदर्शयन् ॥११॥**

**तस्य धार्ष्ट्यं कपेर्वीक्ष्य तरुण्यो जाति (त) चापलाः ।**
**हास्यप्रिया विजहसुर्बलदेव परिग्रहाः ॥१२॥**

**ता हेलयामास कपिर्भ्रूक्षेपैस्संमुखादिभिः ।**
**[1-]दर्शयन् स्वगुदं[-1] तासां रामस्य च निरीक्षतः ॥१३॥**

**तं ग्राव्णां प्राहरत्क्रुद्धो बलः प्रहरतां वरः ।**
**स वञ्चयित्वा ग्रावाणं मदिराकलशं कपिः ।**
**गृहीत्वा हेलयामास धूर्तस्तं कोपयन् हसन्[2] ॥१४॥**

**[3-]निर्भिद्य कलशं[-3] दुष्टो[4] [5-]वासांस्यास्फालयद्बलम्[-5] ।**
**कदर्थीकृत्य बलवान् विप्रचक्रे मदोद्धतः ॥१५॥**

---

1- -1 M.Ma सन्दर्शयन् गुदं 2. M.Ma भृशम् 3- -3 M.Ma भृशं निर्भिद्य 4. K. दृप्तः ;5- -5 M.Ma वासांस्याकृष्य योषिताम् ।

**श्रीध० तस्येति।** जात्या स्वभावेनैव चापलं यासां ताः ॥ ११,१२ ॥

**ता इति।** हेलयामास अवजज्ञे निरीक्षतः निरीक्षमाणस्य तमनादृत्येत्यर्थः ॥ १३,१४ ॥

**निर्भिद्येति।** आस्फालयत् योषितां वासांस्याकृष्य पाटितवान्। विप्रचक्रे एवमपकृतवान् ॥ १५ ॥

**वीर० दुष्ट इति।** दुष्टश्चासौ शाखामृगश्च शाखामृग इत्यनेन स्वभावत एव दौष्ट्यं व्यज्यते दुष्ट इत्यनेन तत्रापि किल किलेत्यनुकरणं आत्मानं स्वशरीरं दर्शयन् चक्रे ॥ ११ ॥

**तस्येति।** तस्य द्विविदस्य धार्ष्ट्यं दौष्ट्यं प्रागल्भ्यं दृष्ट्वा जात्या स्वभावेनैव चापलं यासां, हास्यं प्रियं यासां ताः। परिगृह्यन्ते इति परिग्रहाः, बलदेवस्य परिग्रहाः तत्परिगृहीता इत्यर्थः। हेतुगर्भाण्येतानि अतो विजहसुः प्रहसितवत्यः ॥ १२ ॥

**ता इति।** कपिः द्विविदः भ्रूविक्षेपैः सम्मुखागमनादिभिः आदिशब्देन दन्तप्रदर्शनादि सङ्ग्रहः स्वगुदं तासां दर्शयन्। रामस्य पश्यतस्स त एव ताः हेलयामास अवजज्ञे ॥ १३ ॥

**तमिति।** ग्राव्णा पाषाणेन तं कपिं प्राहरत् सः कपिः तं रामं कोपयन् हसंश्च हेलयामास अवमतवान्। किञ्च निर्भिद्येति दृप्तो गर्वितः कलशं [1-]मदिरापात्रं[-1] निर्भिद्य योषितां वासांस्याकृष्यात्मानं प्रापितवान् मदेनोद्धतो बलवांश्च कपिरेकं बलं रामं कदर्थीकृत्य तुच्छीकृत्य विप्रचक्रे अपचकार ॥ १४,१५ ॥

---

1- -1 T.W. Omit

**विज०** कपिजति चापलं दृष्ट्वा ॥ ११,१२ ॥

हेलयामास अवज्ञाताश्चक्रे समुखादिभिः पुरः स्थित्यादिभिः ॥ १३-१५ ॥

**[1-]तं तस्याविनयं[-1] दृष्ट्वा देशांश्च तदुपद्रुतान् ।**
**क्रुद्धो मुसलमाद (ध) त्त हलं चारिजिघांसया ॥ १६ ।**

**द्विविदोपि महावीर्य [2-]स्सालमुत्पाट्य[-2] पाणिना ।**
**अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत् ॥ १७ ॥**

**तं तु सङ्कर्षणो मूर्ध्नि पतन्तमचलो[3] यथा ।**
**प्रति जग्राह [4]भगवान् [5]सुनन्देनाहन[6]च्च तम् ॥ १८ ॥**

**मुसलाहतमस्तिष्को विरेजे रक्तधारया ।**
**गिरिर्यथा गैरिकया प्रहारं नानु[7]चिन्तयन् ॥१९॥**

**पुनरन्यं [8]समुत्क्षिप्य कृत्वा निष्पत्रमोजसा ।**
**तेनाहनत् सुसङ्क्रुद्धस्तं बलश्शत[9]धाच्छिनत् ॥२०॥**

---

1--1 M.Ma तस्याप्यविनयं 2--2 B.G.J. शालमुद्यम्य ; M.Ma शैलमुत्पाट्य 3. M.Ma °लं रुषा 4. B.G.J. बलवान् 5. M.Ma मुसलेना° 6. K.T.W. °नद्धरिम् 7. M.Ma °न्वचिन्तयत् 8. M.Ma समुत्पाट्य । 9. M.Ma °धारुजत्

**श्रीध० द्विविद** इति। सालं वृक्षम् ॥१६,१७॥

**तमिति**। सुनन्देन मुसलेन अहनत् अहन्नित्यर्थः, [1-]तं वानरम्[-1] ॥१८॥

**मुसलेति**। मस्तिष्कं मस्तके अवयवविशेषः। गैरिकया लोहितधातुना नानुचिन्तयन् अगणयन् ॥१९,२०॥

---

1--1 B. Omit

**वीर० तमिति**। तं कपिं तस्याविनयं धाष्टर्यं तेनोपद्रुतान्। देशांश्चावलोक्य क्रुद्धो रामः हलं मुसलं चाददे ॥१६॥

**द्विविदोऽपीति**। महद्वीर्यं यस्य सः। द्विविदोऽपि सालवृक्षं उत्पाट्य बलमूर्धनि राममूर्धनि तेन सालेनाताडयत् ॥१७॥

**तमिति**। पतन्तं तं सालं प्रतिजग्राह [1-]गृहीतवान्[-1]। तत्प्रहारमङ्गीकृतवान् इत्यर्थः। यथा पर्वतस्तद्वत्। ततस्सुनन्देन मुसलेन हरिं कपिमहनत् ताडयामास ॥१८॥

**मुसलेति**। मुसलेनाहतो मस्तिष्को मस्तकावयवविशेषो यस्य सः, अत एव रक्तधारया रेजे यथा गिरिर्गैरिकधारया राजते तद्वत्। ततः तं प्रहारमननुचिन्तयन् पुनरन्यं सालमोजसा बलेनोत्पाट्य पर्णरहितं कृत्वा तेन सालेनाहनत् तं सालं बलो रामः शतधा चिच्छेद ॥१९,२०॥

---

1--1 W. Omits

**विज०** गैरिकया गिरिधातु रसधारया ॥१६-२०॥

**[1-]ततोऽन्यं तरुमुत्पाट्य जघ्ने तं [-1]शतधाच्छिनत् ॥२१॥**

**एवं युध्यन् भगवता भग्ने [2]भग्ने पुनः पुनः ।**
**आकृष्य सर्वतो वृक्षान्निर्वृक्षमकरोद्वनम् ॥२२॥**

ततोऽमुञ्चच्छिलावर्षं बलस्योपर्यमर्षितः ।
तत्सर्वं चूर्णयामास लीलया मुसलायुधः ॥ २३ ॥

[3]स बाहू तालसङ्काशौ मुष्टीकृत्य कपीश्वरः ।
आसाद्य रोहिणीपुत्रं [4]ताभ्यां वक्षस्यरूरुजत् ॥ २४ ॥

यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललाङ्ग[5]लौ ।
जत्राव[6-]भ्यर्दयत्[-6]क्रुद्धः सोपतद्रुधिरं वमन् ॥ २५ ॥

चकम्पे तेन पतता [7-]सटङ्कस्स[-7]वनस्पतिः ।
पर्वतः [8]कुरुशार्दूल वायुना नौरिवाम्भसि ॥ २६ ॥

जयशब्दो नमश्शब्दः साधु साध्विति चाम्बरे ।
सुरसिद्धमुनीन्द्राणामासीत्कुसुम वर्षिणाम् ॥ २७ ॥

एवं निहत्य द्विविदं जगद्व्यतिकरावहम् ।
संस्तूयमानो भगवान् जनैस्स्वपुरमाविशत् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयसिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

1- -1 B.G.J. ततोऽन्येन रुषा जघ्ने तच्चापि श° ; M. Ma. Ml.V ततोऽन्यमुत्पाट्य जघ्ने तच्चापि श° 2. Ml.V तस्मिन् 3. K. Ml.T.V.W. स्व 4.K.M.Ma.T.V.W. दोर्भ्यां 5. B.G.J. ले 6- -6 K.T.W. वभ्यार्द्रयत्क्रु ; M.Ma °वताडयत्क्रु 7- -7 K.M.Ma T.W. सकण्टक व° 8. M.Ma नृप

**श्रीध० स्वेति** । अरूरुजत् ताडयामास ॥ २१-२४ ॥

**यादवेन्द्र इति** । [1-]यादवेन्द्रः सङ्कर्षणः क्रुद्ध[-1]स्सन् जत्रौ कण्ठबाहुमूले ॥ २५ ॥

**चकम्पइति** । टङ्काः सतोयविवराणि तत्सहितः ॥ २६,२७ ॥

**एवमिति** । जगतो व्यतिकरं नाशमावहतीति तथा तम् ॥२८ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

1- -1 Ml.V. Omit

**वीर०** ततोऽन्य मुत्पाट्य प्रयुक्तं तथा चिच्छेद ॥ २१ ॥

**एवमिति**। प्रयुक्ते साले भग्ने सति सर्वतो वृक्षानाकृष्य तद्वनं वृक्षरहितं चकार ॥ २२ ॥

**तत** इति। बलस्य रामस्योपरि तच्छिलाजालम् सर्वम् ॥ २३ ॥

**स्वबाहू** इति। ताभ्यां मुष्टीकृताभ्यां बाहुभ्यां अरूरुजत् अताडयत् ॥ २४ ॥

यादवेन्द्रो रामोऽपि मुसललाङ्गलौ त्यक्त्वा दोर्भ्यामेव तं कपिं जत्रौ कण्ठबाहुमूले अभ्यर्दयत् अताडयत्। स कपी रुधिरं वमन् उद्गिरन् पपात ॥ २५ ॥

**चकम्प** इति। पतता तेन द्विविदेन कण्टकादिसहितो गिरिश्चकम्पे चचाल। हे कुरुशार्दूल! यथा वायुना नौरम्भसि कम्पते तद्वत् ॥ २६ ॥

जयशब्दः कुसुमानि वर्षन्तीति तथा तेषां सुरादीनां यथायोग्यं जयशब्दादिरासीत् ॥ २७ ॥

**एवमिति**। जगतो व्यतिकरं नाशमावहत्यापादयतीति तथाभूतं द्विविदमेवं निहत्य जनै स्संस्तूयमानो भगवान् रामः स्वपुरं द्वारकां प्रविवेश ॥२८॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

**विज०** अरूरुजत्[1] चूर्णयामास ॥ २१ - २४ ॥

सकण्टकाः वनस्पतयो यस्मिन् स तथा ॥ २६ ॥

जगतो व्यतिकरं नाशमावहति करोतीति जगद्व्यतिकरावहस्तम् ॥२७,२८॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
विजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
(विजयध्वजरीत्या एकोन नवतितमोऽध्यायः)

---

1. M. Ma अरुजत्

# अष्टषष्टितमोऽध्यायः

## (विजयध्वजरीत्या नवतितमोऽध्यायः)

### बलरामकृत हास्तिनपुराकर्षणादि घट्टः

**श्रीशुक उवाच**

दुर्योधनसुतां राजन् लक्ष्मणां समितिञ्जयः ।
[1-] स्वयंवरस्थामहरत् [-1] साम्बो जाम्बवती सुतः ॥ १ ॥

[2] कौरवाः कुपिता ऊचु र्दुर्विनीतोऽय मर्भकः ।
कदर्थीकृत्य नः कन्या मकामा महर द्बलात् ॥ २ ॥

बध्नीते[3]मं दुर्विनीतं किं करिष्यन्ति वृष्णयः ।
येऽस्म[4]त्प्रसादोपचितां दत्तां नो भुञ्जते महीम् ॥ ३ ॥

निगृहीतं सुतं श्रुत्वा यद्येष्यन्तीह वृष्णयः ।
भग्नदर्पाः शमं यान्ति [5-] शीर्णदन्ता इवाहयः [-5] ॥ ४ ॥

---

1- -1 T.W. स्वयंवरे जहारैकः 2. M.Ma कुरवः 3. B.G.J. °नेमं 4. K.T.W. °त्प्रसादोप° 5- -5 B.G.J.K.MI.T.V.W. प्राणा इव सुसंयताः

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टषष्टितमे साम्बे निबद्धे कौरवै र्युधि । तद्विमोक्षाय रामेण गजाह्वयविकर्षणम् ॥

रामचरित्रान्तरं निरूपयितु माह- **दुर्योधनसुतामिति** । समितिञ्जयः सङ्ग्रामजित् ॥ १,२ ॥

**बध्नीतेति** । नोऽस्माकं मही मस्माभि र्दत्ताम् । न ते भूपतय इति भावः ॥ ३ ॥

**निगृहीतमिति** । यान्ति यास्यन्ति । प्राणा इन्द्रियाणीव । सुसंयताः प्राणायामादिभि र्दमिताः ॥ ४ ॥

## श्रीवीरराघव विदुषा लिखिता भागवतचन्द्रचन्द्रिका

रामस्यैव चेष्टितान्तर मनुवर्णयितु मुपोद्घातमाह अष्टषष्टितमेन **दुर्योधनसुता** मित्यादिना। समितौ सङ्ग्रामे जयतीति तथा। समिति श्शत्रुः तं जयतीति वा। स जाम्बवत्यास्सुतः। साम्बो लक्ष्मणां नाम दुर्योधनस्य सुतां स्वयंवरस्थां हृतवान् ॥ १ ॥

**कौरवा** इति। उक्तिमेवाऽऽह-दुर्विनीत इत्यादिना सुसंयता इत्यन्तेन। नोऽस्मान् कदर्थीकृत्य तुच्छीकृत्य बलात् अकामयमानामपि कन्या महरत् ॥ २ ॥

अत एव दुर्विनीतं मूर्खं बध्नीत बन्धयत। वृष्णयः किं करिष्यन्ति, न किमपीत्यर्थः। तत्र हेतुः य इति। ये वृष्णयः अस्माकं प्रतापेन पराक्रमेण उपचिता मेधितां समृध्दामिति यावत्। नोऽस्माभिर्दत्ताञ्च महीं भुञ्जते अनुभवन्ति। तेन भूपतयो बभूवुरिति भावः ॥ ३ ॥

**निगृहीतमिति**। निगृहीतं बद्धं सुतं शृत्वा यदि वृष्णयः आगमिष्यन्ति, तर्हि भग्नो दर्पो [1]गर्वो येषां ते तथाभूताः, शमं शान्तिं यास्यन्ति। सुसंयताः प्राणायामादिभिः दमिताः प्राणाः इन्द्रियाणीव ॥ ४ ॥

---

1. B. Omits गर्वो

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

समिति शब्देन सङ्गरसभे गृह्येते। उभे अपि शस्त्रेण वाचा जयतीति समितिञ्जयः खश्प्रत्ययो मुमागमोऽनुस्वारः। "समितिः सङ्गतिसभयोः" (हला. को. 5-35) इत्यभिधानम् ॥ १ ॥

अकामां कुमारकामविधुराम् ॥ २ ॥

अस्मत्प्रसादेनोपचिताः संवर्धिताः, अत एव नो महीं भुञ्जते, दत्ताम्, अस्माभिरिति शेषः ॥ ३ ॥

निगृहीतं बध्दं, शीर्णदन्ताः भग्नदन्ताः ॥ ४ ॥

**1- इति कर्ण श्शलो भूरि र्यज्ञकेतु स्सुयोधनः -1 ।**
**★ सुदुश्शासन गान्धारी दुर्मन्त्रैकान्तशीलिनौ ॥**

**एतेऽतिक्रम्य विदुरं गान्धारीञ्च यशस्विनीम् ।**
**साम्बमारेभिरे बद्धुं 2- कुरुवृद्धैरसङ्गताः -2 ॥५॥**

**दुष्ट्वाऽनुधावतस्साम्बो धार्तराष्ट्रान् महारथान् 3 ।**
**प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥६॥**

**तं ते जिघृक्षवः क्रुध्दा स्तिष्ठ तिष्ठेति भाषिणः 4 ।**
**आसाद्य धन्विनो बाणैः 5- कर्णाग्रण्यः -5 समाकिरन् ॥७॥**

**6 सोऽतिविध्दः कुरुश्रेष्ठ कुरुभि र्यदुनन्दनः ।**
**नाऽमृष्य 7- तदचिन्त्याऽर्भः -7 8- सिंहः क्षुद्रमृगैरिव -8 ॥८॥**

---

1- -1 M.Ma इति कर्णं समालोक्य भूरिश्रवसुयोधनौ । ★ These two extra half verses are found in M and Ma editions only. 2- -2 B.G.J.K.Ml.T.V.W. °वृद्धानुमोदिताः 3. B.G.J. थः । 4. K.M.Ma.T.W. वादिनः 5- -5 M.Ma कर्णमुख्यः 6. B.G.J. °ऽप° K.T.W. °ऽभि° 7- -7 M.Ma तत्परिभवं 8- -8 M.Ma.T.W. दण्डाहत इवोरगः

**श्रीध० इतीति** । कुरुवृध्दो भीष्मः, तेनाऽनुमोदिताः तत्सहिताः षडेते इत्यर्थः ॥५॥

**1- दृष्ट्वेति** । एकलः एकः -1 ॥६॥

**तमिति** । कर्णोऽग्रणी र्येषां ते ॥७॥

**स इति** । 2- नाऽमृष्यत् असहत् -2 अचिन्त्यस्य भगवतोऽर्भोऽर्भकः अचिन्त्यश्चाऽसावर्भश्चेति वा ॥८॥

---

1- -1 B.J. Omit 2- -2 Ml.V. Omit

**वीर०** इतीत्थं निश्चित्य कर्णादयः कुरुवृद्धैः धृतराष्ट्रादिभिः अनुमोदिताः साम्बं बद्धु मारेभिरे आरब्धवन्तः ॥५॥

**दृष्ट्वेति** । अनुधावतः पृष्ठतः आगन्तॄन् दृष्ट्वा एकलोऽसहायः सिंह इव तस्थौ ॥६॥

**तमिति** । ते धार्तराष्ट्राः तं साम्बं जिघृक्षवः ग्रहीतुमिच्छवः कर्णः अग्रणीः पुरतो नायको येषां तथाभूताः आसाद्य समीपमेत्य वा समाकिरन् पिदधुः ॥७॥

**स** इति। हे कुरुश्रेष्ठ! कुरुभिरभितो विध्दस्ताडितः **स** यदुनन्दनः साम्बः अचिन्त्यस्य भगवतोऽर्भः[1] अर्भकः हेतुगर्भमिदम्। अतस्तद्वेधनं नाऽमृष्यत् न सेहे। तत्र दृष्टान्तः- क्षुद्रमृगै र्विध्दः सिंह इव ॥८॥

---

1. K.W. Omit अर्भः

**विज०** एते इत्यवलोक्य साम्वं बध्दु मारेभिरे। असङ्गताः विनाभूताः ॥५॥

एकलः अपुरुषद्वितीयः ॥६॥

जिघृक्षवः ग्रहीतुकामाः ॥७,८॥

**[1]विस्फूर्ज्य [2-]रुचिरं चापं[-2] सर्वान् विव्याध सायकैः ।**
**कर्णादीन् [3-]षड्रथान् वीर[-3] स्तावद्भि र्युगपत्पृथक् ॥९॥**

**चतुर्भिश्चतुरो वाहान् एकैकेन च सारथीन् ।**
**रथिनश्च महेष्वासां[4] स्तस्य तत्तेऽभ्यपूजयन् ॥१०॥**

**तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान् ।**
**एकस्तु सारथिं जघ्ने चिच्छेदाऽन्यश्शरासनम् ॥११॥**

**तं तथा विरथं चक्रुः कृच्छ्रेण कुरवो युधि ।**
**कुमारं गृह्य कन्याञ्च स्वपुरं जयिनोऽविशन् ॥१२॥**

---

1. Ma. Ml.V विस्फार्य 2- -2 K. M.Ma.T.W. सुमहच्चापं 3- -3 M. Ma सहयाग्रण्यां° Ml.V. षड्रथान् वीक्ष्य 4. K.M.Ma. Ml.T.V.W. सा°

**श्रीध०** तत्प्रपञ्चयति- **चतुर्भिरिति**। चतुर्भिश्चतुर इत्यत्र वीप्साऽनुसन्धेया। तत्कर्म ते सम्मानितवन्तः ॥९-११॥

**तमिति**। स्वस्य दुर्योधनस्य कन्याञ्च, नीत्वेति शेषः ॥१२॥

**वीर० विस्फूर्ज्येति**। आरोपितज्यं चापं विस्फूर्ज्य वज्रनिर्घोषवत् ध्वनयित्वा वीर स्साम्बः कर्णादीन् पूर्वोक्तान् षट् संख्याकान् तावतो रथांश्च तावद्भिस्सायकैः बाणैः युगपत्पृथक् प्रत्येकं विव्याध ॥९॥

तथा चतुर्भिश्चतुर्भिः सायकैः चतुरो वाहान् अश्वान् एकैकेन बाणेन सारथींश्च विव्याध। रथिनश्चेति ते रथिनः कर्णादयः तस्य साम्बस्य तत्कर्म अपूजयन्नभ्यनन्दन् ॥१०॥

[1-]**तमिति**। ते कर्णादयस्तं साम्बं विरथं चक्रुः। तदेवाह-चत्वार इति। आजघ्नुरिति वचनपरिणामेन चत्वार इत्यस्य सम्बन्धः। तमिति।[-1] एवं युध्दे तं साम्बं कृच्छ्रेण प्रयासेन विरथीकृत्य जयिनः प्राप्तजयाः कुमारं साम्बं स्वकन्यां स्वस्य दुर्योधनस्य कन्याञ्च, आदायेति शेषः। पुरं हास्तिनपुरं, आविशन् ॥११,१२॥

---

1- -1 W Omits

**विज०** हयानामग्रण्यं अग्राणीभवं कर्म तेन सह वर्तन्त इति सहयग्रण्या स्तान् यावन्तः तावद्भिश्शरैः ॥९॥

एतदेव विवृणोति-**चतुर्भिरिति**। साम्बस्य तत्कर्म सन्दृश्य कुरवः किमकुर्वन्? अत्राऽऽह-महेष्वासा इति ॥१०॥

अत्र साम्बस्य पराजयो नास्तीति भावेनाऽऽह चत्वार इति ॥११॥

गृह्य गृहीत्वा जयिनो जेतुकामा एव न तु लब्धजया इति तात्पर्यार्थः ॥१२॥

**तच्छ्रुत्वा नारदेनोक्तं राजन् सञ्जातमन्यवः।**
**कुरून्प्रत्युद्यमं चक्रु रुग्रसेन प्रचोदिताः ॥१३॥**

**सान्त्वयित्वा तु तान्रामः [1]संक्रुध्दान् वृष्णिपुङ्गवान्[2]।**
**नैच्छत्कुरूणां वृष्णीनां कलिं [3]कलिमलापहः ॥१४॥**

**जगाम हास्तिनपुरं रथेनाऽऽदित्य वर्चसा।**
**ब्राह्मणैः कुलवृध्दैश्च वृतश्चन्द्र इव ग्रहैः ॥१५॥**

**गत्वा गजाह्वयं रामो बाह्योपवन [4]मास्थितः।**
**उध्दवं प्रेषयामास [5-]धृतराष्ट्रं बुभुत्सया[-5] ॥१६॥**

1. B.G.J.K.Ml.T.V.W. सन्न° 2. Ml.V. °वः 3- -3 M.Ma कलहशङ्कितः 4. K.M.Ma.Ml.T.V.W. °माश्रितः 5- -5 K.T.W. राजन् तेषां बुभुत्सया ;M.Ma धृतराष्ट्राय शान्तये

**श्रीध० सान्त्वयित्वेति**। यतः कलिं नैच्छत्, अतस्सान्त्वयित्वा जगामेति ॥ १३-१५ ॥

**गत्वेति**। धृतराष्ट्रं प्रति बुभुत्सयेति, अभिप्रायजिज्ञासयेत्यर्थः ॥ १६ ॥

**वीर० तदिति**। हे राजन्, नारदोक्त्या तद्वृत्तान्तं शृत्वा सञ्जातो मन्यु र्येषां ते उग्रसेनप्रचोदिताश्च यदवः[1] कुरून्प्रत्युद्यमं प्रति चिकीर्षां चक्रुः ॥ १३ ॥

**सान्त्वयित्वेति**। सन्नध्दान् गन्तु मायत्तानाशु सान्त्वयित्वा रामः कुरूणां वृष्णीनाञ्च मिथः कलिं कलहं नैच्छत् यत स्स कलिमलं कलहात्मकं मल मपहन्तीति तथा ॥ १४ ॥

किन्तु आदित्यस्यैव वर्चो यस्य तेन रथेन गमनसाधनेन ग्रहै र्गुरुशुक्रादिभिः चन्द्र इव ब्राह्मणादिभिः परिवृतो हास्तिनपुरं जगाम ॥ १५ ॥

**गत्वेति**। गजाह्वयं हास्तिनपुरम्। हे राजन्, तेषां कुरूणां बुभुत्सया अभिप्रायजिज्ञासया उद्धवं प्रेषयामास ॥ १६ ॥

---

1. T.W. Omit यदवः

**विज०** नारदोक्तेन नारदवचनेन ॥ १३ ॥

कलिम् विरोधम् ॥ १४, १५ ॥

**सोऽभिवन्द्याम्बिकापुत्रं भीष्मं द्रोणञ्च बाह्लिकम् ।**
**दुर्योधनञ्च विधिवत् राम मागत मब्रवीत् ॥ १७ ॥**

**तेऽतिप्रीता[1] स्समाकर्ण्य प्राप्तं रामं सुहृत्तमम् ।**
**तमर्चयित्वाऽभिययुः सर्वे मङ्गलपाणयः ॥ १८ ॥**

**तं सङ्गम्य यथान्यायं गा मर्घ्यञ्च न्यवेदयन् ।**
**तेषां ये तत्प्रभावज्ञाः प्रणेमुश्शिरसा बलम् ॥ १९ ॥**

**बन्धून् कुशलिनः दृष्ट्वा[2] पृष्ट्वा शिव मनामयम् ।**
**परस्पर मथो रामो बभाषेऽविक्लबं वचः ॥ २० ॥**

---

1. K.M.Ma. पि 2. B.G.J.K.M.Ma.T.W. शृत्वा

**श्रीध० स** इति। विधिवदभिवन्द्य[1] ॥ १७।

**त** इति। तमुध्दवमर्चयित्वा सत्कृत्य, मङ्गलपाणयः उपायनहस्ताः ॥१८।

**तमिति**। वृध्दा अपि प्रणेमुः ॥१९,२०॥

1. MI.V. वाद्य

**वीर० स** इति। उध्दवः अम्बिकायाः पुत्रं, भीष्मं बाह्लीकेन सहितं दुर्योधनञ्च विधिवदभिवन्द्य ॥१७॥

**तेऽपीति**। तेऽपि भीष्मादयोऽपि राम मागतं शृत्वा प्रीताः तमुध्दवं सुहृद्भिर्वृत मर्चयित्वा सर्वे मङ्गलद्रव्याणि पाणिषु येषां तथाभूताः राम मभिजग्मुः ॥१८॥

**तमिति**। तं रामं यथान्यायं स्वस्ववयःस्थानाद्यनुरूपमालिङ्गनादिभिः आलिङ्गय सम्यक् गां धेनु मर्घ्यञ्च तस्मै न्यवेदयन्। तेषां मध्ये ये तत्प्रभावज्ञाः रामप्रभावविदस्ते बलं रामं शिरसा प्रणेमुः ॥१९॥

**बन्धूनिति**। रामः परस्परं बन्धून् कुशलिनः शृत्वा अनामय मारोग्यं शिवं शुभञ्च पृष्ट्वा च। अविक्लब मिति छेदः। अदीनं वचो बभाषे ॥२०॥

**विज०** परस्परं शिवं सुख मनामय मारोग्यम् अविक्लबम् धाष्टर्ययुक्तम् ॥१७-२०॥

**उग्रसेनः क्षितीशेशो यद्व आज्ञापयत्प्रभुः ।**
**तदव्यग्रधियः श्रुत्वा कुरुध्वं[1] मा विलम्बितम्[2] ॥२१॥**

**यद्यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम् ।**
**अबध्नीताऽथ तन्मृष्ये बन्धूना [3-]मैक्यकाम्यया[-3] ॥२२॥**

**श्रीशुक उवाच**

**वीर्यशौर्यबलोन्नध्द मात्मशक्ति समं वचः ।**
**कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः ॥२३॥**

**अहो महच्चित्र मिदं कालगत्या दुरत्ययम् ।**
**आरुरुक्षत्युपान द्वै शिरो [5-]मकुटसेवितम्[-5] ॥२४॥**

---

1.MI.T.V.W. °ध्वमपि 2. K. तत् 3- -3 M. Ma मिष्टकाम्यया 4- -4 B.G.J.M.Ma Omit 5- -5 B.G.J.M.Ma मुकुटसेवितम् ;K मकुटभूषितम्

**श्रीध० यदिति**। यद्यूयमिति उग्रसेनवाक्यं मृष्ये सहे, अथाऽऽह तमानीय, समर्पयतेति शेषः ॥२१,२२॥

**वीर्येति**। वीर्यं प्रभावः, शौर्यमुत्साहो, बलं सत्त्वं, तैः उन्नध्दम् उच्छृङ्खलं, कथम्? आत्मनः शक्तेः सम मनुरूपम् ॥२३॥

**अहो** इति। उपानत्पादरक्षा शिर आरोढुमिच्छति हीना अपि अस्मान् आज्ञापयन्तीत्यर्थः ॥२४॥

**वीर०** तदेवाऽऽह-**उग्रसेन** इति द्वाभ्याम्। तदाज्ञापित मव्यग्रधियः अवहितचित्तास्सन्तः श्रुत्वा कुरुध्वं, तन्मा विलम्बितम् इणन्तमिदं [1-]मा विलम्बि[-1]तव्य मित्यर्थः ॥२१॥

किञ्च **यदीति**।एक मसहायं धार्मिकञ्च बालं बहवो यूयम् अधर्मेण जित्वा अबध्नीत बध्दवन्त इति यत्तदहं मृष्ये सोढवानस्मि। कुतः? बन्धूना मैक्यकाम्यया मिथ स्सौहार्द कामनया अथाऽऽशु तमानीय, समर्पयतेति शेषः ॥२२॥

**वीर्येति**। वीर्यं युध्दे ग्लान्यभावः, शौर्यं तत्र स्वगृह इव प्रवेशसामर्थ्यं, बलं धारणसामर्थ्यं एभिरुन्नध्द मृच्छृङ्खलं बलदेवस्य वचो निशम्याऽऽकर्ण्य कुरवः प्रकोपिताः प्रोचुः ॥२३॥

उक्तिमेवाह-**अहो** इति षड्भिः। (दुरन्तया)दुरत्ययया दुरतिक्रमणीयया कालगत्या अहो महदिदं चित्रं जातम्। किन्तदित्यत आह-आरुरुक्षतीति। उपानत् पादरक्षा मकुटेन भूषितं शिरो मूर्धानमारोढु मिच्छति। उपानत्स्थानीया यदवः किरीटालङ्कृत शिरःस्थानीयान् अस्मान् आज्ञापयन्तीत्येतत् अतिचित्रमिति भावः ॥२४॥

---

1- -1 W न विलम्बि

**विज०** अधर्मेण अबध्नीत बन्धन मकार्ष्ट। **मृष्ये** सहेयम् ॥२१-२३॥

आरुरुक्षति आरोढु मिच्छति ॥२४॥

**एते यौनेन[1] सम्बध्दाः[2] सह शय्यासनाशनाः ।**
**वृष्णय स्तुल्यतां नीता अस्मद्दत्तनृपासनाः ॥२५॥**

**चामरव्यजने शङ्ख मातपत्रञ्च पाण्डुरम्[3] ।**
**किरीटमासनं शय्यां भुञ्जन्त्यस्मदुपेक्षया ॥२६॥**

**अलं यदूनां नरदेवलाञ्छनै [4]र्दातुः प्रतीपैः फणिनामिवामृतम्[-4] ।**
**ये[5]ऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयन्त्यद्य गतत्रपा बत ॥२७।**

**कथमिन्द्रोऽपि कुरुभि र्भीष्मद्रोणार्जुनादिभिः ।**
**अ[6]दत्तमवरुन्धीत[-6] सिंहग्रस्त[7] मिवोरणः ॥२८॥**

---

1. M.Ma °य 2. K.M.Ma.T.W. मम्बन्धाः 3. K. °ण्ड° 4- -4 M.Ma दातृप्रतीपैः फणिनामिवामृतैः ; Ml.V. दातुः प्रतीपाचरितोध्दतात्मनाम् 5.K.Ml.T.V.W नः प्र 6- -6 K.T.W मुपयुञ्जीत 7.M.Ma °स्न इवो°

**श्रीध०** अस्यैव प्रपञ्चः एत इति चतुर्भिः। यौनेन पृथाया विवाहेन ॥२५॥

किञ्च **चामरेति**। भुञ्जन्त्युपभुञ्जते इत्यर्थः। अस्मदुपेक्षया अस्माक मनाग्रहेण अस्माकमनुग्रहेणेति यावत् ॥२६॥

**अलमिति**। अतः परं तान्यपहरिष्याम इत्यर्थः ॥२७॥

**कथमिति**। अवरुन्धीत स्वीकुर्यात्, उरणो मेषः ॥२८॥

**वीर०** एतदेव प्रपञ्चयति चतुर्भिः। एते वृष्णयः यौनेन पृथाविवाहेन सम्बध्दाः सम्बन्धिनः। सम्बन्धशब्दोऽत्र अर्शाद्यजन्तः अतः सहाऽस्माभिः सह शय्यासनभोजनानि येषां ते अस्माभिर्दत्तं नृपासनं येषां ते, अत एव तुल्यतामस्माभिः साम्यं प्रापिताः, वस्तुतो न समा इति भावः ॥२५॥

किञ्च। **चामरेति**। अस्मदुपेक्षया हेतुभूतया चामरादीन् भुञ्जते उपयुञ्जत इत्यर्थः। तत्रासनं नृपासनम् ॥२६॥

**अलमिति**। यदूनां नरदेवलाञ्छनैः चामरिदिभिरलम्। अतः परं तान्यपहरिष्याम इति भावः। तत्र हेतुत्वेन तानि विशिंषन्ति दातुः प्रतीपैरिति दातृणामस्माकमेव प्रतीपैः प्रतिकूलैः। तत्र दृष्टान्तः- फणिना मिवामृतमिति। सर्पाणां पोषणाय यद्दत्तममृतं क्षीरं दातुरेव प्रतीपं तद्वत्। एतदेव दार्ष्टान्तिकेऽनुगमयति य इति। ये यादवाः

अस्मदनुग्रहेणोपचिता एधिताः, नोऽस्मानेव अधुना आज्ञापयन्ति। अहो बत[1] एते निर्लज्जाः खलु। यद्वा गतत्रपा स्सन्तः आज्ञापयन्ति बतेत्याश्चर्ये ॥२७॥

**कथमिति**। इन्द्रोऽपि भीष्मादिभिः कुरुभिः अदत्तं कथमुपयुञ्जीत, सिंहग्रस्त मुरणो मेष इव ॥२८॥

---

1. B. °तेति नि° ;K. °त ते नि°

**विज०** यौनेयेन योनिनिमित्तेन सम्बन्धो येषां ते तथा। ततः किमत्राऽऽह-सह इति ॥२५॥

अस्मद्दत्तेत्युक्तं विवृणोति-**चामरेति**। मह्यं महनीय मासनं भुञ्जन्ति भजन्ति। अन्योपद्रवमन्तरेण रक्षन्ति। "भुजोऽनवने" (अष्टा० 1-3-66) इति पाणिनिः॥२६॥

दातॄणा मस्माकं प्रतीपै र्विरोधिभिः दत्तै रमृतैः क्षीरादि रसैः विषात्मना परिणतैः दातॄणां मरणप्रदत्वेन प्रतीपैः ॥२७॥

अवरुन्धीत प्राप्नोति। सिंहग्रस्त उरणः अविर्यथा कवलं न गृह्णाति। सिंहग्रस्तमितिपाठे कबल मादातुं न शक्तः ॥२८॥

**श्रीशुक उवाच**

**जन्मबन्धुश्रियोन्नद्ध[1] मदा स्ते भरतर्षभ!**
**आश्राव्य रामं [2-]दुर्वाच्य मसभ्याः पुरमा[-2] विशन् ॥२९॥**

**दृष्ट्वा कुरूणां दौश्शील्यं [3-]श्रुत्वाऽवाच्यानि चाऽच्युतः[-3]।**
**अवोच त्कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन्मुहुः ॥३०॥**

**नूनं [4]नानामदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः।**
**तेषां हि प्रशमो दण्डः पशूनां [5]लगुडो यथा ॥३१॥**

**अहो यदून् सुसंरब्धान् कृष्णञ्च कुपितं शनैः।**
**सान्त्वयित्वाऽहमेतेषां शम मिच्छन्निहाऽऽगतः ॥३२॥**

---

1. K. श्रियालब्ध 2- -2 M.Ma °क्यै रटथ्यां पुर आ° 3- -3 M.Ma वच्यातिवाच्यताम् 4. M.Ma नामम° 5. M.Ma लकुटः

**श्रीध० जन्मेति।** जन्मना बन्धुभिश्चेपलक्षितया श्रिया उन्नद्धः उत्कटो मदो येषां ते, दुर्वाच्यं परुषं वाक्यं असभ्याः दुर्जनाः ॥२९, ३०॥

**नूनमिति।** नाना धनाभिजनादिमदैरुन्नध्दा स्तेषां दण्ड एव प्रशमः प्रकर्षेण शमयतीति तथा, यथा लगुडो दण्डः ॥३१, ३२॥

**वीर० जन्मेति।** हे भरतर्षभ। अभिजनबन्धुसम्पद्भिः लब्धः मदो येषां ते। अत एव असभ्याः कुरवः इत्थं रामं प्रति दुर्वाच्यं परुषं वाक्यं श्रावयित्वा पुरं हास्तिनं विविशुः ॥२९॥

**दृष्ट्वेति।** दौश्शील्यं दौर्जन्यं दृष्ट्वाऽवाच्यानि वचांसि श्रुत्वा अच्युतः स्वासाधारणकल्याण गुणजातान्न च्यवते इत्यच्युतो रामः कोपेन संरक्तो[1]ऽत एव दुष्प्रेक्ष्यः पुनः पुनः प्रहसन्नुवाच ॥३०॥

उक्तिमेवाऽऽह **नून** मिति। नाना धनादिमदैः उन्नध्दा असाधवो दुरात्मान एते नूनं शान्तिं नेच्छन्ति। अत स्तेषां दण्ड एव प्रशमः शान्तिकरः, यथा पशूनां उद्धतानां लगुडो यष्टिविशेषः, तद्वत् ॥३१॥

**अहो इति।** सुसंरब्धान् क्रुद्धान् हरिं कृष्णञ्च सान्त्वयित्वा शमं शान्तिपूर्वकं सन्धिं इच्छन् इहाऽऽगतोऽस्मि ॥३२॥

1. B.K. संरब्धः

**विज०** अटव्या मुपवने स्थितं रामम्। ॥२९॥

वाच्यातिवाच्यता मपवादातिशयिता मपवादताम् ॥३०॥

प्रशमः शान्तिकरः लकुटः यष्टिः ॥३१, ३२॥

**त इमे मन्दमतयः कलहाभिरताः खलाः ।**
**तं[2] मा मवज्ञाय[2] मुहुः दुर्भाषां[3] मानिनोऽब्रुवन् ॥३३॥**

**नोग्रसेनः किल विभुः भोजवृष्ण्यन्धकेश्वरः ।**
**शक्रादयो लोकपाला यस्याऽऽदेशानुवर्तिनः ॥३४॥**

**सुधर्माऽऽक्रम्यते येन पारिजातोऽमराङ्घ्रिपः ।**
**आनीय[4] भुज्यते सोऽसौ न किलाध्यासनार्हणः[5] ॥३५॥**

**यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी ।**
**न नाऽर्हति किल श्रीशो नरदेवपरिच्छदान् ॥ ३६ ॥**

---

1. M. Ma °ति° 2--2 K.M.Ma.T.W. तस्मात् तं मामवज्ञाय 3.B.G.J.K.MI.T.V.W °षान् 4. MI.V. आहृत्य 5. M.Ma °कः

**श्रीध० त** इति। दुर्भाषान् अवाच्यशब्दान् ॥ ३३ ॥

दुर्भाषणमनुस्मरति षड्भिः-**नोग्रसेन** इति। विभुराज्ञापयितुं समर्थः ॥ ३४ ॥

अहो धृष्टा श्रीकृष्णमप्यधिक्षिपन्तीति **कुपित** आह-**सुधर्मे**त्यादिभिस्त्रिभिः ॥ ३५, ३६ ॥

**वीर० त इम** इति। खला मूर्खश्च मामवज्ञाय अवहेल्य मानिनो दुरहङ्कारिणो दुर्भाषान् दुर्वाक्यान्यूचुः ॥ ३३ ॥

दुर्भाषणमेवानुस्मरति-**नेति**। उग्रसेनो विभुर्न प्रभुः किलेति काकुः । काक्वा सूचितमनुशयमेव व्यञ्जयितुं विशिनष्टि-भोजवृष्ण्यन्धकेश्वरः इति। एवमग्रेऽपि इन्द्रादयो यस्य यदुराजस्य आज्ञानुवर्तिनः किल। पूर्ववद्विशिनष्टि लोकपाला इति ॥ ३४ ॥

**सुधर्मेति**। सुधर्मा नाम सभा येनाऽऽक्रम्यते अधिष्ठीयते सोऽसौ कृष्णः सिंहासनार्हो न किल ॥ ३५ ॥

पुनस्तमेव विशिंषन्नेतदेवाऽऽह-**यस्येति** द्वाभ्याम्। अखिलानां ब्रह्मादीनां ईश्वरी श्रीः लक्ष्मीः, साक्षाद्यस्य पादयुग्मं उपास्ते सोऽसौ भगवान् श्रियःपतिर्नरदेवचिह्नानि नार्हति किल। त्रीश इति पाठे त्रिलोकेशः ॥ ॥

**विज०** सोऽसौ कृष्णः ॥ ३३-३६ ॥

**यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालैः[1] मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ।**
**ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः[2] [3]श्रद्धामहे सुचिरमस्य[3] नृपासनं क्व? ॥ ३७ ॥**
**[4]भुञ्जते कुरुभिर्दत्तं भूखण्डं [5]किल वृष्णयः[5]**
**उपानहः किल वयं स्वयन्तु कुरवश्शिरः ॥ ३८ ॥**

**अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् ।**
**असम्बन्धागिरो रूक्षाः कस्सहेताऽनुशासिता ॥ ३९ ॥**

अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः ।
गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥४०॥

1. B.G.J.MI.V. °लैः 2. M.Ma कलांशाः 3- -3 B.G.J.K.MI.T.V.W श्रीश्चोद्वहेम 4. M.Ma.T.W. भुज्यते 5. M.Ma.T.W. वृष्णिभिः किल 6. K.T.W. °वां

**श्रीध० यस्येति** । मौल्युत्तमैर्मौलियुक्तै रुत्तमाङ्गैः उत्तमैर्मौलिभिरिति वा । उपासितानि तीर्थानि यै र्योगिभिः तेषामपि तीर्थम् । यद्वा, उपासितं सर्वैः सेवितं तीर्थं गङ्गा तस्याः तीर्थं तीर्थत्वनिमित्तम् । किञ्च ब्रह्मा भवः श्रीश्चाऽहमपि उद्वहेम । कथम्भूता वयम्? यस्य कलाया अंशस्य कला अंशा ॥३७, ३८॥

**अहो इति** । मत्तानामिव मद्यादिना रूक्षाः परुषाः । अनुशासिता स्वयं दण्डधरस्सन् ॥३९, ४०॥

**वीर० यस्येति** । अखिलैर्लोकपालैः कर्तृभिः, मौल्युत्तमैः मौलियुक्तैः उत्तमैः उत्तमाङ्गैः शिरोभिः यस्याऽङ्घ्रिरजोधृतम् । कथम्भूतम्? उपासिततीर्थ तीर्थम् । उपासितानि तीर्थानि गङ्गादीनि यैर्योगिभिः तेषामपि तीर्थं पावनम् । यद्वा, उपासितगुरूणां सतामपि पावनम्, उपासितानां गङ्गादितीर्थानामपि पावनं वा । यस्य कलायाः कला अंशांशभूताः अहमनन्तः श्रीर्लक्ष्मीः, उद्वहेम बिभृम । अङ्घ्रिरज इत्यनुषज्यते । अस्यैवम्भूतस्य नृपासनं क्व कथं वा तदधिकारः इति काकुः ॥३७॥

**भुञ्जत इति** । भुञ्जते किल ॥३८॥

**अहो इति** । मत्तानां मद्यादिना प्रमत्तानां मानिनां स्वैरिणामिव एषामैश्वर्येण मत्तानामसम्बद्धाः रूक्षाः परुषाश्च गिरः को वा अनुशासिता दण्डयितुं समर्थश्चेत्सहेत? ॥३९॥

अतोऽद्य भूमिं निष्कौरवां करिष्यामीत्यभिसन्धायेति शेषः । अतिक्रुद्धो जगत्त्रयं दहन्निव हलं गृहीत्वा उदतिष्ठत् ॥४०॥

**विज० श्रद्धामहे** आकाङ्क्षामहे । सर्वैरुपासितं निषेवितं तीर्थं भागीरथी, अस्या अपि तीर्थं शुद्धिकरम् अस्य कृष्णस्य ॥३७, ३८॥

अनुशासिता शिक्षाकरः ॥३९, ४०॥

**लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् ।**
**विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः ॥४१॥**

**जलयानमिवाऽऽघूर्णं गङ्गायां नगरं पतत् ।**
**आकृष्यमाणमालोक्य कौरवा जातसम्भ्रमाः ॥४२॥**

**तमेव शरणं जग्मुः सकुटुम्बा जिजीविषवः ।**
**सलक्षमणं पुरस्कृत्य साम्बं प्राञ्जलयो[1]ऽब्रुवन् ॥४३॥**

**राम रामाऽखिलाधार प्रभावं न विदाम[2] ते ।**
**मूढानां नः [3-]कुबुद्धीनां[-3] क्षन्तुमर्ह[4]स्यतिक्रमम् ॥४४॥**

1. B.G.J. यः प्रभुम् 2. M.Ma °महे 3- -3 M.Ma कुटुम्बीनां 4. K.M.Ma MI.T.V.W. °स्यधीश्वर

**श्रीध० लाङ्गलेति।** लाङ्गलाग्रेण दक्षिणतः प्राकारमूले निखातेन उद्विदार्य उत्पाट्य ॥४१, ४२॥

**तमिति।** जिजीविषवः इत्यक्षराधिक्यं सोढव्यम् ॥४३॥

[1-]**रामेति।** मूढानां प्रभावानभिज्ञानाम् अतिक्रममपराधम्[-1] ॥४४॥

1- -1 MI.V. Omit

**वीर० लाङ्गलाग्रेणेति।** स रामः गजाह्वयं नगरमुद्विदार्य दक्षिणतः प्राकारमूले निखातेनोत्पाट्य गङ्गायां प्रहरिष्यन् पातयितुमित्यर्थः। विचकर्ष आकृष्टवान्। यतोऽमर्षितः ॥४१॥

**जलयानमिवेति।** आकृष्यमाण मत एव जलयानं प्लवमिव आघूर्णं भ्रमत् गङ्गायां पतच्च नगरमालोक्य जातः सम्भ्रमः सम्यग्भ्रमः कम्पो येषां ते ॥४२॥

जिजीविषवः जीवितुमिच्छवः कुटुम्बै स्सहिताः तं राममेव शरणं जग्मुः ययुः। सलक्ष्मणं लक्ष्मणया सहितं साम्बं पुरस्कृत्य पुरतो निधाय बद्धाञ्जलयः प्रोचुश्च ॥४३॥

उक्तिमेवाऽऽह-**राम रामेति** पञ्चभिः। कुबुद्धीनां नोऽस्माकमपराधमिति शेषः ॥४४॥

**विज०**- कुटुम्बीनामिति दीर्घश्छान्दसः ॥ ४१-४४ ॥

**स्थित्युत्पत्ति[1-] लयानां[-1] त्वमेको हेतु र्निराश्रयः[2] ।**
**लोकान् क्रीडनकानीश [3]वहतस्ते वदन्ति हि ॥ ४५ ॥**

**त्वमेव मूर्ध्नीद मनन्तलीलया भूमण्डलं बिभर्षि सहस्रमूर्धन् ।**
**अन्ते च यः स्वात्मनिरुद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः ॥ ४६ ॥**

**कोपस्तेऽ[4]खिल शिक्षार्थं न द्वेषान्न च मत्सरात् ।**
**बिभ्रतो भगवन्सत्वं स्थितिपालनतत्परं[5]! ॥ ४७ ॥**

**नमस्ते सर्वभूतात्मन् सर्वशक्तिधराऽव्यय ।**
**विश्व कर्मन्नमस्तेऽस्तु त्वां वयं शरणं गताः ॥ ४८ ॥**

---

1--1 B.G.J.K.MI.T.V.W. °त्यप्ययानां 2. K.T.W. °जा° 3. B.G.J.K.MI.T.V.W क्रीडत° 4. K.MI.T.V.W. बल° 5. B.J.M.Ma °रः

**श्रीध० त्वमिति**। शेषे शयनङ्करोषि शेषपर्यङ्के परिशिष्यमाणो यः स च त्वमेवेति वा ॥ ४५, ४६ ॥

अस्मासु कोपश्च तवाऽयमुचित एवेत्याहुः-**कोपस्ते** इति। [1]स्थितिपालने तत्परस्तात्पर्यवान् कोपः, पाठान्तरे सम्बोधनम् ॥ ४७ ॥

**नम** इति। विश्वं कर्म कृत्यं यस्य स त्वमिति सम्बोधनम् ॥४८॥

---

1. MI.V. क्षिति

**वीर० स्थितीति**। अप्ययः प्रलयः। तेषां त्वमेक एव हेतुराधारतयेति भावः। कस्तर्हि मम हेतुस्तत्राहुः-निजाश्रयः इति। निज आत्मा आधारो यस्य सः। हे ईश! क्रीडत स्ते तवेति क्रीडनकान् क्रीडोपकरणभूतान् वदन्ति त्वद्याथात्म्यविदः ॥ ४५ ॥

त्वमेको हेतुरित्येतदेव प्रपञ्चयति- **त्वमिति**। हे अनन्त! मूर्ध्नेत्यस्य सहस्रेत्यादिः सहस्रमूर्धा त्वमेक एवेदं कृत्स्नं भूमण्डलं मूर्ध्नि लीलयेव बिभर्षि। अन्ते प्रलये स्वात्मनि रुद्धं लीनं विश्वं यस्य सः। अत एव अवशिष्यमाणः, अत एव चाऽद्वितीयः, समाभ्यधिकरहितः शेषे शयिष्यसे। परमात्मदृष्ट्येदमुक्तम् ॥ ४६ ॥

**कोप** इति। हे क्षितिपालनतत्पर। हे भगवन्। हे बल। सत्वं शुद्धसत्वमयं शरीरं बिभ्रतस्तव कोपः केवलं शिक्षार्थमेव न तु द्वेषात्, नाऽपि मत्सराच्च। द्वेषोऽप्रीतिः। मत्सरः कौटिल्यम् ॥ ४७ ॥

शरण्यत्वोपयुक्तगुणैः सम्बोधयन्तः शरणं व्रजन्ति। सर्वभूतात्मन्नित्यनेन सार्वज्ञ्यं, सर्वशक्तिधरेत्यनेन सर्वशक्तित्वम्, अव्ययेत्यनेन रागद्वेषादिविकारराहित्यम् अत एव सर्वसुहृत्त्वम्, विश्वकर्मन्नित्यनेन परत्वञ्चोक्तं भवति। क्रियते इति कर्म कार्यं विश्वं यस्य कार्यं तथाभूतेत्यर्थः। सर्वमिदं परमात्मदृष्ट्योक्तम् ॥ ४८ ॥

**विज०** क्रीडनकान् क्रीडासाधनानि ॥ ४५ ॥

अन्ते जगत्संहारे परिशिष्यमाणोऽद्वितीयः शेषे ॥ ४६ ॥

जगद्बिभ्रतस्ते कोपोऽखिलशिक्षार्थं सत्त्वं स्थित्यादि तत्परः सद्भिरत्र हलधरे यथोचितं ग्राह्यम्। अनुचितमन्तर्यामि विषयमिति तात्पर्य मवगन्तव्यम्। विश्वस्य प्रपञ्चस्य अनुग्रहार्थं कर्म विक्रमलक्षणो व्यापारो यस्य स तथा। तस्य सम्बुद्धिः हे विश्वकर्मन्। ॥ ४७, ४८ ॥

**[1-] श्रीशुक उवाच [-1]**

**एवं प्रपन्नैः संविग्नै [2-] र्वेपमानै [-2] र्हलायुधः।**
**प्रसादित [3-] स्सुप्रसन्नो [-3] मा भैष्टेत्यभयं ददौ ॥ ४९ ॥**

**दुर्योधनः पारिबर्हं कुञ्जरान् [4] षष्टिहायनान्।**
**ददौ [5-] च द्वादशशतान्य [-5] युतानि तुरङ्गमान् ॥ ५० ॥**

**रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम्।**
**दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥ ५१ ॥**

**प्रतिगृह्य तु तत्सर्वं भगवान्सात्वतर्षभः।**
**ससुतः सस्नुषः [7] प्रायात्सुहृ [8] द्भिरभिनन्दितः ॥ ५२ ॥**

---

1- -1 M.Ma Ml.V. Omit 2- -2 °नायनैर्बलः 3- -3 K. प्रसन्नोसौ M.Ma.T.W. °स्सम्प्रसन्नो 4. Ml.V. षा° 5- -5 K. द्विशतसाहस्रं नि° ,M,Ma द्विदशसाहस्रान् नि° Ml.T.V.W ददौ द्वादश साहस्रं नि° 6. G.K.T.W. प्रागात्सु° ; 7. M.Ma °व°

**श्रीध० एवमिति**। वेपमानमयनं पुरं येषां तैः ॥४९॥

**दुर्योधन** इति। तुरङ्गमांश्च द्वादशायुतानि ॥५०, ५१॥

**प्रतिगृह्येति**। सुहृद्भिः कौरवैः ॥५२॥

**वीर० एवमिति**। संविग्नैर्भीतैः अत एव कम्पमानैः, अत एव प्रपन्नैः प्रसादितः प्रसन्नश्चाऽसौ हलायुधः रामः भयं[1] माकार्ष्टेत्येवमभयं ददौ ॥४६॥

**दुर्योधन** इति। पारिबर्हमुपायनम् ददाविति सम्बन्धः। तदेव प्रपञ्चयति-द्वितीयान्तैः। षष्टिः हायनानि वत्सरा येषां तान्, द्विशतञ्च साहस्रञ्च तयोस्समाहारः तावतो गजान् ददौ। द्वादशसाहस्रमिति पाठान्तरे तु स्पष्टोऽर्थः। तुरङ्गमांश्च द्वादश नियुतानि ददौ ॥५०॥

**रथानामिति**। रौक्माणां स्वर्णालङ्कृतानां सूर्यस्येव वर्चो येषां तेषां रथानाम्। निष्कं पत (द)काख्यं भूषणं कण्ठे यासां तासां दासीनां सहस्रं ददौ। तत्र हेतुः दुहितृवत्सल इति ॥५१॥

**प्रतिगृह्येति**। तत्सर्वमुपायनं प्रतिगृह्य सात्त्वतर्षभो रामः सतेन स्नुषया च सहितः सुहृद्भिः कौरवैरभिनन्दितो ययौ ॥५२॥

**विज०** सांवग्नैर्भयमङ्गातैः वेपमानानां कम्पमानानां अङ्गोपाङ्गानाम् अयनैराश्रयैः ॥४९, ५०॥

रौक्माणि हेमचितान्याभरणानि एषां सन्तीति रौक्मिणस्तेषाम् ॥५१, ५२॥

**ततः प्रविष्टः स्वपुरं[1] हलायुधः समेत्य बन्धूननुरक्तचेतसः।**
**शशंस सर्वं यदुपुङ्गवानां मध्ये सभायां कुरुषु स्वचेष्टितम् ॥५३॥**

**अद्याऽपि वः पुरं ह्येतत्सूचयद्रामविक्रमम् ।**
**समुन्नतं दक्षिणतो गङ्गायां[2] ननु दृश्यते ॥ ५४॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादश साहस्र्यां

श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां

दशमस्कन्धे उत्तरार्धे अष्टषष्टितमोऽध्यायः ॥६८॥

1. K.M.Ma.T.W. °री° 2. B.G J. °यामनु°

**श्रीध० तत** इति। **मध्ये** सभायाम् सभामध्ये ॥ ५३, ५४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

**वीर० तत** इति। स्वपुरीं द्वारकाम् अनुरक्तं चेतो येषां तान् बन्धून् यदून् समेत्य यदुपुङ्गवानां मध्ये सभाया सभाया मध्ये यत् कुरुषु स्वचेष्टितं तत्सर्वं शशंस कथयामास ॥ ५३ ॥

यद्बलेन गङ्गायां पुरपातनं तदसम्भावितं मन्वानं राजानं प्रत्याह मुनिः:- **अद्यापीति**। यो युष्माकं पुरं हास्तिनं रामपराक्रमं सूचयद्वर्तते। तत्र लिङ्गमाह समुन्नतमिति। गङ्गायां दक्षिणतः समुन्नतं सत् दृश्यते ननु ॥ ५४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघव विदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

**विज०** रामविक्रमो जलरेखावन्नश्वरो न, किन्तु सर्व चक्षुर्विषय इत्याह- अद्यापीति। रामविक्रमं सूचयत् गङ्गायां दक्षिणतः समुन्नतं दृश्यत इत्यन्वयः ॥ ५३, ५४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे उत्तरार्धे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
श्रीविजयध्वजतीर्थरीत्या नवतितमोऽध्यायः ॥ ९० ॥



# एकोनसप्ततितमोऽध्यायः

## (विजयध्वजरीत्या सप्तसप्ततितमोऽध्यायः)

### श्रीकृष्णंप्रति नारदागमनम्

श्रीशुक उवाच

नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् ।
कृष्णेनैकेन बह्वीनां तं[1] दिदृक्षुः स्म नारदः ॥ १ ॥

चित्रं बतैतद्वेवेन वपुषा युगपत्पृथक् ।
गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥ २ ॥

इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत् ।
पुष्पितोपवनाराम द्विजालिकुलनादिताम् ॥ ३ ॥

उत्फुल्लेन्दीवराम्भोज कह्लारकुमुदोत्पलैः ।
छुरितेषु सरस्सूच्चैः कूजितां हंससारसैः ॥ ४ ॥

प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः ।
महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः ॥ ५ ॥

---

1. B.G.J.M.Ma तत्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एकोनसप्ततितमे गार्हस्थ्यं प्रतिमन्दिरम्। कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततः स्तुवन् ॥ १ ॥

दिदृक्षामभिनयेनाह-**चित्रमिति**। द्व्यष्ट सहस्र[1] स्त्रीः उदावहत् परिणीतवान् ॥ २ ॥

**इतीति**। तां द्वारवती मनुवर्णयति-पुष्पितेति सार्धत्रयेण। पुष्पितेषूपवनेषु आरामेषूद्यानेषु च द्विजानामलीनां च कुलानि तैर्नादिताम् ॥ ३ ॥

**उत्फुल्लेति**। छुरितेषु व्याप्तेषु ॥४॥

प्रासादेति। महामरकतैः प्रख्यायन्ते प्रकाशन्त इति तथा तैः। स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः ॥५॥

1. MI.V. साहस्त्रं

## श्रीवीरराघव विदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथैको भगवानष्टाधिक (शत) षोडश सहस्रपत्नीभिस्सह कथं रमत इति दिदृक्षयाऽऽगताय नारदाय प्रदर्शितं भगवतश्चेष्टित मनुवर्णयति **नरकमित्यादिना**। एकेन कृष्णेन सह कर्त्रा वा बह्वीनां योषितां विवाहं च श्रुत्वा नारदस्तं कृष्णं दिदृक्षुरासीदिति शेषः अत्र उद्वाहशब्देन तत्पूर्वक क्रीडा च विवक्षिता ॥१॥

दिदृक्षामेवाभिनयति - **चित्रमिति**। एतच्चित्रं बत अतिचित्रमित्यर्थः। किं तत् ? यदेकेन वपुषा विग्रहेण युगपदेव पृथग्गृहेषु बहुषु गृहेषु योषित्समान सङ्ख्याक गृहेष्वित्यर्थः द्व्यष्टसाहस्त्रं षोडश सहस्रसङ्ख्याकाः स्त्रियः स्त्रीः एक उपयेमे इत्येतत्॥

**इतीति**। इत्थं द्रष्टुमुत्सुको देवर्षिनारदः द्वारकां ययौ। सार्धत्रयेण तामेव वर्णयति-पुष्पितेति। पुष्पितेषूपवनेष्वारामेषु उद्यानवनेषु च द्विजानां पक्षिणाम् अलीनां च कुलैर्नादिताम् ॥३॥

उत्फुल्लैरिन्दीवरादिभिः छुरितेषु व्याप्तेषु सरस्सु हंसैस्सारैश्च उच्चैर्नादिताम् ॥४॥

नवभिः प्रासादानां लक्षैर्जुष्टां युक्तामित्यर्थः। कथम्भूतैः ? स्फटिकमयैः रजतमयैश्च महामरकतस्येन्द्रनीलस्य स्वर्णश्रेष्ठस्य रत्नानां च तन्मयाः[1], परिच्छदाः उपकरणानि येषु तैः। महामरकत प्रख्यैः इति पाठे महामरकतैः प्रख्यान्ति प्रकाशन्ते इति तथा,तैः स्वर्णरत्नमयाः येषु तैः ॥५॥

1. K. Omits तन्मयाः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

नरकं निहतं श्रुत्वा तथा एकेन कृष्णेन बह्वीनां योषितां च उद्वाहं श्रुत्वा नारदः तद्वृत्तिं दिदृक्षु रभूदित्यन्वयः ॥१॥

ततः किमिति तत्राह - **चित्रमिति**। एकः एकेन वपुषा पृथक् गृहेषु द्व्यष्टसाहस्रं स्त्रिय एकस्मिन्मुहूर्ते उदावहदिति यत्तदिदं विचित्रमाश्चर्यमिति च ॥ २ ॥

सन्तोषादुत्सुको भूत्वा देवर्षिः कृष्णचेष्टितं द्रष्टुं द्वारवतीमागमदित्यन्वयः। कीदृशम्? द्वारवती नाम पुरं पुष्पिता उपवनारामा यस्मिंस्तत् द्विजानामलीनां पक्षिणां कुलेन नादितम्। ॥ ३ ॥

उत्फुल्लेन्दीवरादिभिः छुरितेषु मिश्रितेषु सरस्सु हंसादिभिरुच्चैः प्लुतस्वरेण कूजितं यद्वा सामान्यत उक्तं नारदागमनं विशिनष्टि - पुष्पितेत्यादिना। प्रथमतो द्विजादिनादितं पुष्पितोपवनारामं प्राप। पश्चादुत्फुल्लेन्दीवरादिभिः छुरितेषु सरस्सु हंसादिभिः उच्चैः कूजितं स्थलमाप ॥ ४ ॥

ततः पश्चात्स्फाटिकराजतैः स्फटिकादिनिर्मितैः नवभिः नूतनैः प्रासादलक्षणैः (क्षैः!) जुष्टं स्थलमाप। कीदृशैः? महामरकतप्रख्यैः इन्द्रनीलविहितसोपानैः स्वर्णरत्नानि सुवर्ण श्रेष्ठानि परिच्छदा येषां तानि यथा अत्युत्तम सुवर्णजल[1] विचित्रितानीत्यर्थः नः ॥ ५ ॥

1. B. स्थल

**विभक्तरथ्या पथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः ।**
**संसिक्त मार्गाङ्गण वीथिदेहली[1] पतत्पताकाध्वजवारिता तपाम् ॥ ६ ॥**

**तस्यामन्तः पुरं श्रीमदर्चितं सर्वधिष्ण्यपैः ।**
**हरेः स्वकौशलं यत्र त्वष्ट्रा कार्त्स्न्येन दर्शितम् ॥ ७ ॥**

**तत्र षोडशभिः सद्म सहस्रैः समलङ्कृतम् ।**
**विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ८ ॥**

**विष्टब्धं विद्रुमस्तम्भैर्वैदूर्य फलकोत्तमैः ।**
**इन्द्रनीलमयैः [2-]जालैः स्तम्भैर्मरकतोत्तमैः[-2] ॥ ९ ॥**

**वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविलम्बिभिः ।**
**दान्तैरासनपर्यङ्कैर्मण्युत्तम परिष्कृतैः ॥ १० ॥**

1. M.Ma गेहिनीं ; T.W. गेहलीं 2- -2 B.G.J. कुड्यैर्जगत्या चाहतत्विषा ; M.Ma कुड्यै र्जालैर्मरकतोत्तमैः ;Ml.v. कुड्यै र्जगत्या चाहितत्विष

**श्रीध० विभक्तेति**। पतन्त्यः प्रचलन्त्यः पताका येषु तैर्ध्वजैर्वारित आतपो यस्यां ताम् ॥६॥

**तस्यामिति**। तस्यां द्वारकायाम्। सर्वैर्धिष्ण्यपैर्लोकपालैरर्चितम्। षोडशभिः सद्मसहस्रैः समलङ्कृतं हरेरन्तः पुरं विवेश। तत्र च तस्य शौरेः पत्नीनां भवनेष्वेकतमं विवेशेत्यन्वयः। यत्र च स्वकौशलं त्वष्ट्रा दर्शितमित्यन्तः पुरभवनयोर्विशेषणम् ॥७, ८॥

तदनुवर्णयति चतुर्भिः-**विष्टब्धमिति**। विद्रुमस्तम्भैर्विष्टब्धं विधृतम्। वैदूर्यमयानि फलकोत्तमानि स्तम्भाश्रयणानि छादनानि तैरिन्द्रनीलमयैः कुड्यादिभिश्चोपलक्षितम् जगत्या भूमिकया चेन्द्रनीलमणिमय्या। [1-]न हता[-1] त्विड् यस्यास्तया॥९॥

**वितानैरिति**। मुक्तादाम्नां विलम्बा विविधानि लम्बनानि विद्यन्ते येषु तैः। मण्युत्तमैः परिष्कृतैर्भूषितैः ॥१०॥

1- -1 MI.V आहिता

**वीर०** किञ्च **विभक्तेति**। विभक्तैः रथ्या पथादिभिः शालादिस्सभाभि स्सुराणां देवता प्रतिमानाम् आलयैश्च रुचिरां शोभमानां रथ्यापथाः राजवीथयः संसिक्ताः मार्गादयो यस्यां तां पतन्तीभिः चलन्तीभिः पताकादिभिः ध्वजैश्य वारित आतपो यस्यां ताम् ॥६॥

**तस्यामिति**। तस्यां द्वारकायाम् अन्तःपुरं तत्रापि शौरेरेकतमं भवनं गृहं विवेशेति सम्बन्धः, अन्तःपुरं विशिनष्टि-श्रीमद्भोग्य भोगोपकरणादि समृद्धिमत् सर्वैः धिष्ण्यपैः लोकाधिपतिभिः अर्चितं बहुमतं, किं बहुना? यत्र यस्मिन्नन्तः पुरे हरेः हरये त्वष्ट्रा स्वकौशलं स्वशिल्पनैपुण्यं कात्स्न्र्येन प्रदर्शितम्, किञ्च षोडशभिः शौरेः पत्नीनां गृहसहस्रैस्समलङ्कृतम् ॥७, ८॥

पुरं भवनं चैव (वं?) विशिनष्टि-**विष्टब्धमिति** चतुर्भिः विद्रुमस्तम्भैः वैडूर्यमयानि फलकोत्तमानि स्तम्भाश्रयाणि च्छादनानि तैश्च विष्टब्धं प्रतिबद्धम् इन्द्रनीलमयैः जालैः गवाक्षैः मरकतमयैः उत्तमैश्च स्तम्भै र्विष्टब्धं त्वष्ट्रा विश्वकर्मणा निर्मितैः मुक्तादामानि विलम्बयन्तीति तथा तैः वितानैः उल्लोचैः दान्तैः निर्मलैः मणिश्रेष्ठालङ्कृतैश्च आसनैः पर्यङ्कैश्च उपलक्षितमिति शेषः। अलङ्कृतमित्युपरिष्टात्संबन्धो वा ॥९, १०॥

**विज०** किञ्च विभक्तैः विभक्त रथ्यापथैः रथ मार्गैश्चत्वरैरापणैश्च शोभितां ततःपरं शालाभिः सभाभिरतिरुचिरां सुरालयैः देवगृहैश्च मनोरमां गोमयचन्दनोदकादिना संसिक्ता मार्गाश्च अङ्गणानि च वीथयश्च गृहपङ्क्ति-पुरोमार्गाश्च संसिक्तमार्गाङ्गण वीथयः ताश्च गेहानि चास्याः सन्तीति संसिक्तमार्गङ्गण वीथिगेहिनी तां, पतन्त्यः विवरणावरणे

कुर्वन्त्यः पताका येषां ते पतत्पताकाः ते च ध्वजाः पतत्पताकाध्वजास्तैः वारितस्तम्भित आतपो यत्र सा तथा ताम्। एवं विधायां तस्यां कुशस्थल्यामन्तर्भागे हरेः पुरं सर्वसम्पदापूर्णं स्थानमस्तीति शेषः। सर्वधिष्ण्यपैः समस्तैः ब्रह्मादिभिरर्चितं धिष्ण्यं गृहं [1-]मध्यगृहपतिर्ब्रह्मा परितः पतय इन्द्रादयः[-1] यत्र पुरे त्वष्ट्रा विश्वकर्मणा ॥ ६, ७॥

ततः परितः कृष्णस्य पत्नीनां षोडशभिः सद्मसहस्रैः गृहसहस्रैः सन्दर्शनीयतया अलङ्कृतं भवनानामेकतमं भवनम् ॥ ८॥

कीदृशम् तद्गृहम्? अत्राह-विष्टब्धमिति। मूले अग्रे च फलकोत्तमानि येषां ते तथा तैः जालैः गवाक्षैः ॥ ९॥

मुक्तादामविलम्बिभिः अवलम्बमान मौक्तिकमालैः दान्तैः गजदन्तनिर्मितैः ॥ १०॥

1--1 B. M.Ma प्रकाशेषु स्वीकृतोऽयं पाठः अनन्वितः।

**दासीभिर्निष्ककण्ठीभिः सुवासोभिरलङ्कृतम्।**
**पुम्भिः सकञ्चुकोष्णीष[1]सुवस्त्रमणिकुण्डलैः ॥ ११॥**

**रत्नप्रदीपनिकरद्युतिभिर्निरस्त ध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग।**
**नृत्यन्ति यत्र विहितागुरु[2] धूपमक्षै र्निर्यान्त[3]मीक्ष्य घनबुद्धय उन्नदन्तः ॥ १२॥**

**तस्मिन्समानगुणरूपवयस्सुवेष दासीसहस्रयुतयाऽनुसवं गृहिण्या।**
**विप्रो ददर्श चमरव्यजनेन रुक्म दण्डेन सात्वतपतिं परिवीजयन्त्या ॥ १३॥**

**तं सन्निरीक्ष्य भगवान्सहसोत्थितः श्री पर्यङ्कतः सकलधर्म भृतां वरिष्ठः।**
**आनम्य[4] पादयुगलं[5] शिरसा किरीट जुष्टेन साञ्जलिरवीविशदासने स्वे ॥ १४॥**

**तस्यावनिज्य चरणौ तदपः स्वमूर्ध्नाऽबिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि।**
**ब्रह्मण्यदेव इतियद्गुणनाम युक्तं तस्यैव यच्चरण शौचमशेष तीर्थम् ॥ १५॥**

1. T.W. °षैः 2. K.T.W. °ग° 3. M.Ma °त° 4. Ml.V. °गम्य 5. Ml. T.V.W. °गले

**श्रीध०** रत्नेति। ईक्ष्यसमीक्ष्य। घनो मेघोऽयमिति बुद्धिर्येषां ते ॥ ११, १२

**तस्मिन्निति**। अनुसवं सर्वकालम्। आत्मना समानानि गुणरूपवयांसि सुवेषोऽलङ्काराश्च यस्य तेन दासीसहस्रेण युतया गृहिण्या सह ॥ १३ ॥

**तमिति**। श्रियो रुक्मिण्याः पर्यङ्कतः। अवीविशदुपवेशयामास ॥ १४ ॥

**तस्येति**। अविभ्रत् दधारेत्यर्थः। बिभ्रदिति शत्रन्तं वा। तदा संपूज्याभिभाष्य च प्राहेत्युत्तरेणान्वयः। कथम्भूतः? यस्य चरणशौचं गङ्गा अशेषतीर्थं सः। अत एव जगद्गुरुतरोऽपि सतां धर्मभृतां पतित्वादेवमकरोदित्यर्थः। सतां पतित्वे हेतुः-ब्रह्मण्यदेव इति यद्गुणकृतं नाम तस्यैव, यतो युक्तं समञ्जसमतस्तद्धर्मप्रवर्तना यैव माचरणमित्यर्थः ॥१५॥

**वीर०** शोभनानि वासांसि याभिः ताभिर्दासीभिः शोभनानि कञ्चुकादीनि येषां तैः पुम्भिश्चालङ्कृतम् ॥११॥

रत्नप्रदीपानां ये निकरास्समूहाः तेषां द्युतिभिः निरस्तं तमो यस्मिन् तत्। किञ्च यत्रान्तःपुरे भवने च वलभीषु **स्तम्भाग्र** प्रसारित वक्रदारुविशेषेषु शिखण्डिनो मयूराः गवाक्षमार्गैः निर्यान्तं विहितं[1] कृतम् अगरुधूपं वीक्ष्य घनो नीलाम्बुदोऽयमिति बुद्धिर्येषां तथाभूताः अतएव उन्नदन्तः उच्चैर्नदन्तः नृत्यन्ति, तथाभूतं च ॥ १२ ॥

**तस्मिन्निति**। तस्मिन्नेव भवने गृहिण्या भार्यया रुक्मिण्येति भावः। समं सहितमित्यर्थः। सात्वत पतिं श्रीकृष्णं विप्रो नारदो ददर्श। कथम्भूतया? अनुसवं सर्वकालम् आत्मना समानानि गुणरूपवयांसि सुवेषः अलङ्कारश्च यस्य तेन दासीनां सहस्रेण युतया रुक्मिण्या रुक्ममयो दण्डो यस्य तेन चामरव्यजनेन वीजयन्त्या च ॥ १३ ॥

**तमिति**। तं दृष्टवन्तं नारदं सम्यक् निरीक्ष्य भगवान् श्रियः रुक्मिण्याः पर्यङ्का दाशूत्थितः, तदिष्टदैवतभूतः किमित्युत्थित इत्यतो विशिनष्टि सकलधर्मभृतां वरिष्ठः धर्मात्मभिः महत्स्वेवं वर्तितव्यमिति प्रदर्शनार्थमिति भावः। अत एव किरीटालङ्कृतेन शिरसा तस्य पादयुगलं प्रणम्य अञ्जलिना सहितः स्वकीये आसने अवीविशदुपवेशयामास इत्यर्थः ॥ १४ ॥

**तस्येति**। स भगवान् जगतां साधुजनानां गुरुतरोऽपि परमगुरुरपि हि यतस्सतां पतिरपि तस्य नारदस्य चरणाववनिज्य प्रक्षाल्य तदपः अवनेजनजलानि मूर्ध्नि बिभ्रत् बिभ्राणः आसेति शेषः। दधारेत्यर्थः अबिभ्रदिति वाच्छेदः। अबिभ्रत् अबिभ्रत् दधारेत्यर्थ। युक्तं चैतदित्याह - ब्रह्मण्येति। ब्रह्मणि ब्राह्मणकुले साधवो ब्रह्मण्याः तेषां देव इति यद्गुणनाम अन्वर्थं नाम तस्यैव यतो भगवत एवासाधारणमित्यर्थः। अतः युक्तं ब्रह्मण्यदेवत्वाद्विप्राङ्घ्रिजलधारणमित्येतदुचितमेवेत्यर्थः। अन्यथा तु न घटत इत्यभिप्रयन्विशिनष्टि - यच्चरणशौचं यस्य भगवतः चरणसम्बन्धाच्छौचं पवित्रता यस्य तथाभूतम्। अशेषं गङ्गादितीर्थम्, तस्यैवं विधस्योक्तादेव हेतोस्तदुचितमित्यर्थः ॥ १५ ॥

---

1. B.T.w. Omit विहितं

**विज०** अक्षैर्गवाक्षैः निर्यातं निर्गतं विहितागुरुचूर्णं धूपं दृष्ट्वा शिखण्डिनो मयूराः ॥ ११, १२ ॥

चामरव्यजनेन चामराख्यव्यजनेन तस्मिन्भवने अविवेश उपविष्टः ॥ १३, १४ ॥

भो परीक्षित्। नैतच्चित्रमित्याह - ब्रह्मण्यदेव इतीति। यस्य चरणशौचजलमशेषांस्तीर्थयति शुद्धान्करोतीति अशेषतीर्थम्। यद्वाऽशेषाणि तीर्थानि यस्मिंस्तत् तस्य हरेः ब्रह्मण्यदेव इति यत्तद्गुणनाम तस्यैव युक्तमित्यवधारयेत्यर्थः ॥ १५ ॥

**संपूज्य देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन ।**
**वाण्याभिभाष्य मितयाऽमृत[1] जुष्टया तं प्राह प्रभो भगवते करवाम किं[2] ते ॥ १६ ॥**

**नारद उवाच**

**नैवाद्भुतं त्वयि विभोऽखिललोकनाथे मैत्रीं[3] जनेषु [4-] दधतश्च दमं[-4] खलानाम्**
**निःश्रेयसाय [5-] जगतां[-5] स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥ १७ ॥**

**दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिन्त्यमगाध बोध[6] म् ।**
**संसारकूपपतितोत्तरणावलम्बं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ १८ ॥**

**ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः स नारदः ।**
**योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया ॥ १९ ॥**

**दीव्यन्तं [7]अक्षैस्तत्रापि प्रियया चोद्धवेन च ।**
**पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ २० ॥**

---

1. B.G.J. मिष्टया ; M. Ma कल्पया 2. B.G.J. हे किम्। 3. B.G.J. K.Ml. T.V.W. मैत्री 4- -4 B.G.J.K.Ml.T.V.W. सकलेषु दमः 5- -5 B.G.J. °य हि जगत्स्थि° ;K. Ml. T.V.W. °य जगतः स्थि° 6. B.G.J. M. Ma. Ml.V. °धैः 7. M.Ma मक्षभिः

**श्रीध० सम्पूज्येति**। अभिभाष्य दिष्ट्यात्र त्वदागमनमित्यादि प्रियमुक्त्वा ॥ १६ ॥

भगवता स्वस्यार्हणमनर्हं मन्यमानस्तत्सम्भावयन्नाह - **नैवेति**। सर्वमित्रत्वादेवमर्हणं न तु मम गौरवात्। तर्हि कथं कंसादिष्वमैत्री तत्राह - खलानां दमश्च नैवाद्भुतमिति। कुतः? जगतः स्थितिर्धारणं रक्षणं पालनं ताभ्यां सह

तस्य निश्श्रेयसाय तवायं स्वेच्छावतार इति वयं सुष्ठु सम्यक् विदाम विद्मः। अतः खलदमः साधु सम्माननं च युक्तमिति भावः ॥ १७ ॥

यदुक्तं प्रभो किं करवामेति तत्राह - **दृष्टमिति**। भक्तजनताया अपवर्गरूपम्। किञ्च अतिदुर्लभतया ब्रह्मादिभिर्योगीश्वरैरपि हृदि विचिन्त्यम्। किञ्च संसारकूपे पतितानामुत्तरणायावलम्बमाश्रयम्। एवम्भूतं तवाङ्घ्रियुगलं मया दृष्टम् अतः कृतकृत्योऽस्मि तथापि [1-]त्वत्स्मृति[-1]र्यथा स्यात् तथा अनुगृहाण। ततः तद्ध्यायन्नेव नित्यं चरामीति ॥१८, १९॥

**दीव्यन्तमिति**। अक्षैर्दीव्यन्तमित्यादौ ददर्शेति ज्ञातव्यम् ॥ २० ॥

---

1--1 Ml. V. तस्यस्मृति

**वीर० संपूज्येति**। नरस्य सखा नारायणः पुराण ऋषिरपि उक्तादेव हेतोः देवऋषिवर्यं नारदं शास्त्रोक्तेन विधिना संपूज्य अमृतेन जुष्टया अमृतवर्षिण्येत्यर्थः। मितया च [1-]अल्पाक्षरया[-1] वाण्या अभिभाष्य सम्बोध्य प्राह, उक्तिमेवाह-प्रभो ! भगवते ! करवाम किं ते, हे प्रभो भगवते तुभ्यं किङ्करवाम किङ्करा वयमित्यर्थः। किमिष्टं करवामेति वा, किं यत्किञ्चिदिष्टमस्ति तत्करवामेति वा ॥ १६ ॥

इत्थमुक्तः प्राह नारदः - **नैवेति** द्वाभ्याम्। तावदात्मार्हणमनर्हणं मन्यमानस्तत्सम्भावयन्नाह - नैवेति। सर्वेषु जनेषु विषयभूतेषु मैत्रीत्येतल्लोकनाथे त्वयि नैव चित्रं सर्वं मित्रत्वादेवमर्हणं न तु गौरवादिति भावः कथं तर्हि कंसादिष्वमैत्री तत्राह-दम इत्यादि। खलानां दमश्च नेवाद्भुतमिति भावः। कुतः? हि यस्मात् उरुगाय जगतः स्थितिः धारणं रक्षणं पालनं ताभ्याम्, चतुर्थ्यन्तमिदम्। निश्श्रेयसाय मोक्षप्रदानाय च ताभ्यां सह मोक्षप्रदानायेति वा। स्वैरावतारः स्वेच्छावतारः इति वयं सुष्ठु सम्यक् विद्मः, अतः खलदमः साधुसम्माननं च युक्तमिति भावः ॥ १७ ॥

यदुक्तं प्रभो भगवते करवाम किं ते इति, तत्रा[2]ऽऽह - **दृष्टमिति**। तावत्तवाङ्घ्रि युगलं दृष्टं मयेति शेषः। कथम्भूतम्? जनतायाः प्रपन्नजनसमूहस्य अपवर्गम् अपवर्गसाधनं फलभूतं वा किञ्चातिदुर्लभतया बह्मादिभिर्योगीश्वरैरपि हृदि विचिन्त्यम् अगाधः बोधो विज्ञानं यस्मात्तथाभूतं संसारकूपे पतितानाम् उत्तरणाय अवलम्बमाश्रयम्, एवम्भूतं दृष्ट्वा कृतार्थोऽस्मीति भावः। अतस्तदेव ध्यायन् चरामि। किन्तु तद्विषया स्मृतिर्यथास्यात्, तथा अनुगृहाण ॥ १८ ॥

**तत इति**। सः नारदः अन्यत् कृष्णपत्न्याः गृहमविशत्, किं कर्तुमिच्छया? अङ्ग! हे राजन्! योगीश्वरेश्वरस्य भगवतो योगमायामाश्चर्यशक्तिं वेतुमिच्छया ॥ १९ ॥

**दीव्यन्तमिति**। तत्रापि गृहे प्रिययोध्दवेन च सह अक्षैः देवनाक्षैः दीव्यन्तं क्रीडन्तं ददर्शेति शेषः। असौ नारदः प्रत्युत्थानादिभिरुत्कृष्टया भक्त्या तत्पूर्वकं पूजितः ॥२०॥

---

1- -1 K.T.W. Omit 2. B. स्वमनीषितं तत् प्रार्थयते

**विज०** शास्त्रोदितेन विधिना संपूज्य ॥१६॥

तत्र नारदः प्रतिवक्ति - **नेति**। त्वयि अद्भुतं नैव मानादिदानमिति शेषः। स्वैरावतारः स्वेच्छावतार इति सुष्ठु विदाम ॥१७॥

अद्य दृष्टं तवाङ्घ्रियुगलं ध्यायंश्चरामि। यथा स्मृतिः स्यात् तथाऽनुगृहाण ॥१८, १९॥

अक्षभिः अक्षैः दीव्यन्तं देवनक्रियां कुर्वन्तम् ॥२०॥

**पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति ।**
**क्रियते किं नु पूर्णानामपूर्णैरस्मदादिभिः ॥२१॥**

**अथापि ब्रूहि नो ब्रह्मञ्जन्मैतच्छोभनं कुरु ।**
**स तु विस्मित उत्थाय तूष्णीमन्यदगाद्गृहम् ॥२२॥**

**तत्राप्याचष्ट गोविन्दं लालयन्तं शिशून् सुतान्।**
**ततोऽन्यस्मिन्गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥२३॥**

**जुह्वन्तं च वितानाग्नीन्यजन्तं पञ्चभिर्मुखैः ॥**
**भोजयन्तं द्विजान्क्वापि भुञ्जानमवशेषितम् ॥२४॥**

**क्वापि सन्ध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम् ।**
**एकत्र चासि चर्मभ्यां चरन्तं[1]मसिवर्त्मसु ॥२५॥**

**अश्वैर्गजैरथैः क्वापि विचरन्तं गदाग्रजम् ।**
**क्वचिच्छयानं पर्यङ्के स्तूयमानं च वन्दिभिः ॥२६॥**

**मन्त्रयन्तं च कस्मिंश्चिन्मन्त्रिभिश्चोध्दवादिभिः ।**
**जलक्रीडारतं क्वापि वारमुख्याऽबलावृतम् ॥२७॥**

**कुत्रचिद्द्विजमुख्येभ्यो ददतं गाः स्वलङ्कृताः ।**
**इतिहास पुराणानि शृण्वन्तं मङ्गलानि च ॥२८॥**

**हसन्तं हास्यकथया कदाचित्प्रियया गृहे ।**
**क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित् ॥२९॥**

**ध्यायन्तमेक[2] मात्मानं पुरुषं प्रकृतेः परम् ।**
**शुश्रूषन्तं गुरून्क्वापि कामैर्भोगैः सपर्यया ॥३०॥**

---

1. M. Ma. °न्तं शिष्यवर्त्मसु 2. B.G.J. °मासीनं

**श्रीध० जुह्वन्तमिति।** वितानाग्नीन् आहवनीयादीनग्नीन् पञ्चभिर्मखैः महायज्ञैः यजन्तम् ॥२१-३०॥

**वीर०** अविदुषा अजानतेव भगवता पृष्टश्च, प्रश्नमेवाह-**कदेत्यादिना** कुर्वित्यन्तेन। इति शब्दः कुर्वित्यनन्तरं योज्यः, इति पृष्टश्चेत्यन्वयः। आयात इति च्छेदः। अपूर्णैः आगन्तुक पूर्तिरहितैः स्वत एव परिपूर्णैः अवाप्तसमस्तकामैरिति यावत्, तैरप्यस्मदादिभिः पूर्णानां युष्माकं किंक्रियते, निरपेक्षत्वात्किमपि न क्रियत एवेति भावः ॥२१॥

यद्यप्येवमथापि हे ब्रह्मन् ! ब्रूहि ममैतज्जन्म शोभनं कुरु, सफलं कुर्वित्यर्थः। भागवतकैङ्कर्यमकुर्वतः शरीरमशुभमिति भावः। सत्त्विति - सतु नारदो विस्मितः तष्णीमुत्थायान्यदपि गृहमाजगाम ॥२२॥

तत्रापि गृहे गोविन्दं आचष्ट ददर्श, कथम्भूतम्? लालयन्तम् उपच्छन्दयन्तम्, तत इति - मज्जनाय स्नानाय कृतः उद्यमो यत्नो येन तथाभूतम् ॥२३॥

जुह्वन्तमित्यादि द्वितीयान्तानां क्वचिदित्यादिः, ददर्शेत्यन्तः, वितानाग्नीन् यज्ञियान् आहवनीयाद्यग्नीन् पञ्चभिर्मखैः महायज्ञैः, अवशेषितं परिवेषणावशेषितम् ॥२४॥

क्वचिद्ब्रह्म स्वात्मानं जपन्तम् अवलोकयन्तमित्यर्थः। ब्रह्म प्रणवं वा, यद्वा ब्रह्म वेदं जपन्तं 'वेदमेव जपेन्नित्यम् इति शास्त्रात्, क्वचित् वाग्यतं मौनीभूतम्, एकस्मिन् क्वचित् असिचर्मभ्यां खड्गखेटाभ्यां सह असिवर्त्मसु खड्गभ्रामणगतिषु चरन्तं गदाग्रजं कृष्णं क्वचिच्छयानमिति, वन्दिभिः स्तुतिपाठकैः स्तूयमानं च ॥२५, २६॥

क्वचिदुद्धवादिभिः मन्त्रयन्त्रं वारमुख्याभिर्गणिका श्रेष्ठाभिरबलाभिः स्त्रीभिः, परिवृतम् ॥२७॥

सुष्ठ्वलङ्कृताः गाः धेनूः ददतं प्रयच्छन्तं मङ्गलानि मङ्गलस्तुतीश्च शृण्वन्तम् ॥२८॥

कदाचित्क्वचिद्गृहे प्रियया सह हास्यकथया हसन्तम् ॥२९॥

प्रकृतेः "भूमिरापोनलो वायुः" (भ.गी. 7-4) इत्यादि श्लोकद्वयोक्तप्रकृतिद्वयात् परं विलक्षणं परमपुरुषभूतं स्वात्मानं ध्यायन्तं अनुभवन्तं सपर्यया पूजया च गुरून् शुश्रूषन्तं परिचरन्तम् ॥३०॥

---

1- -1 K.T.W. Omit

**विज०** अविदुषेव पूर्वं गृहे नारदागमनमजानतेव हरिणा भवान् कदाऽऽयात इत्यसौ नारदः पृष्टः ॥२१-२३

क्वापि गृहे ब्राह्मणदत्तावशेषितमन्नम् ॥२४॥

असिचर्मभ्यां शिष्यवर्त्मसु चरन्तं शिष्यान् शिक्षयन्तम् ॥२५, २६॥

वारमुख्याभिरबलभिरावृतं वेष्टितम् ॥२७॥

ददतमिति पाठः। ददन्तामिति पाठे दद दान इत्यस्य धातोः शत्रादेशः ॥२८-३०॥

**कुर्वन्तं विग्रहं कैश्चित्सन्धिं चान्यत्र केशवम् ।**
**कुत्रापि सह रामेण चिन्तयन्तं सतां शिवम् ॥३१॥**

**पुत्राणां दुहितॄणां च काले विध्युपया[1]पनम् ।**
**दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः ॥३२॥**

**प्रस्थापनोपानयनैरपत्यानां महोत्सवान् ।**
**वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥३३॥**

**यजन्तं सकलान्देवान्क्व[2]चित्क्रतुभिरूर्जितैः ।**
**पूर्तयन्तं क्वचिद्धर्मं कूपारा[3]मालयादिभिः ॥३४॥**

**चरन्तं मृगयां क्वापि हयमारुह्य सैन्धवम् ।**
**घ्नन्तं [4]तीर्थे पशून्मेध्यान्परीतं यदुपुङ्गवैः ॥३५॥**

---

. M. Ma. °नायनम् 2. B.G.J. °क्वापि क° 3. B.G.J. °ममठा° 4. B.G.J. Ml. V. ततः

**श्रीध० पुत्राणामिति**। काले तत्तत्समये विधिना उपयापनं प्रापणं विवाहमित्यर्थः। कल्पयन्तं घटयन्तम्। विभूतिभिः विभवैः ॥ ३१, ३२ ॥

**प्रस्थापनेति**। प्रस्थापनं दुहितृ जामात्रादीनां स्वगृहात्तद्गृहं प्रति नयनम्। उपानयनं तत्तद्गृहात्पुनरानयनम्। तैर्महोत्सावान्कल्पयन्तम्। योगेश्वरेशस्य तेषामपत्यानां महोत्सवान्वीक्ष्य लोकाः सर्वे विसिस्मिरे विस्मयं चक्रुः। तथाभूतान् कल्पयन्तम् ॥ ३३-३५ ॥

**वीर०** कैश्चिद्विग्रहं विरोधं कुर्वन्तम् अन्यत्र गृहे सन्धिं कुर्वन्तं केशवं सतां साधूनां शिवं योगक्षेमं चिन्तयन्तम् ॥ ३१ ॥

**पुत्राणामिति**। काले तत्तत्समये पुत्राणां तत्सदृशैर्दारैः दुहितॄणां तु तत्सदृशैर्वरैश्च विधिना शास्त्रोक्तेन उपयापनं प्रापणं विवाहमित्यर्थः। तद्विभवैः कल्पयन्तं घटयन्तम् ॥ ३२ ॥

**प्रस्थापनेति**। प्रस्थापनं दुहितृस्नुषाजामात्रादीनां स्वगृहात्तद्गृहं प्रति नयनं तद्गृहात् पुनरानयन मुपानयनं तैः अपत्यानां पुत्राणां दुहितॄणां च महोत्सवान् कल्पयन्तम्, तान्विशिनष्टि - योगेश्वरेशस्य भगवतः येषाम् अपत्यादीनां महोत्सवान् वीक्ष्य लोकास्सर्वे विसिस्मिरे विस्मयं चक्रुः। तथाभूतान् उत्सवादीन् कल्पयन्तमिति सम्बन्धः ॥ ३३ ॥

स्वकलान् स्वांशभूतान् देवान् इन्द्रादीन् ऊर्जितैः बहुदक्षिणैः क्रतुभिः यजन्तं कूपादिनिर्माणैः धर्मं पूर्तयन्तं पूर्तं स्मार्तं धर्मं कुर्वन्तमित्यर्थः। पूर्त शब्दात् 'तत्करोति' इति णिजन्तात् छता "सविशेषणानां वृत्तिर्न" इत्यादि निषेधस्य विशेष्यविषयत्वादत्र पूर्तस्य धर्मं प्रति विशेषणत्वात् सापेक्षस्यापि नामधातुवृत्तिरवगन्तव्या ॥ ३४ ॥

सैन्धवं सिन्धुदेशोद्भवं हयमश्वमारुह्य मृगयां चरन्तं मेध्यान् यागार्हान् पशून् विशसन्तं क्वचित् यदुश्रेष्ठैः परिवृतम् ॥ ३५ ॥

**विज०** काले प्राप्ते विध्युक्त प्रकारेण उपानयनं उपनयनं स्वगृहं प्रत्यानयनं ब्राह्मणी का(क)रणं कल्पयन्तं पुत्राणां दारैः सह दुहितॄणां वरैस्सह योगं कल्पयन्तम् ॥ ३१, ३२ ॥

प्रस्थापनं परगृहं प्रति दुहितृ प्रेषणम् उपनयनं स्वगृहं प्रत्यानयनं येषामिति षष्ठी द्वितीयार्थे। लोकाः यानिकर्माणि वीक्ष्य विसिस्मिरे तानि कुर्वन्तं कर्मणामाचरणं वीक्ष्येति वा ॥ ३३ ॥

कूपादिभिः पूर्तयन्तं पूर्ताख्यधर्ममाचरन्तम् ॥ ३४ ॥

सैन्धवं सिन्धु देशभवं, तीर्थे शास्त्रे विहितान्पात्रे प्राप्ते वा यज्ञे वा ॥ ३५ ॥

अव्यक्तलिङ्गं[1-] प्रकृतिष्वन्तः[-1]पुर चरादिषु[2] ।
क्वचिच्चरन्तं योगेशं[3] तत्तद्भाव बुभुत्सया ॥ ३६ ॥

अथोवाच हृषीकेशं नारदः प्रहसन्निव ।
योगमायोदयं[4] वीक्ष्य मानुषीमीयुषो[5] रतिम् ॥ ३७ ॥

[6-] नारद उवाच [-6]

विदाम योगमायां[7] ते दुर्दर्शामपि[8] योगिनाम् ।
योगेश्वरात्मन्निर्भातां[9] भवत्पादनिषेवया ॥३८॥

अनुजानीहि मां देव लोकांस्ते यशसाऽऽप्लुतान् ।
पर्यटामि तवोद्गायँ ल्लीलां भुवनपावनी[10] ॥३९॥

श्रीभगवानुवाच

ब्रह्मन्धर्मस्य वक्ताहं कर्ता[11] तदनुमोदिता[12] ।
तच्छिक्षयँल्लोक[13- -13] मिममास्थितः पुत्र । मा खिदः ॥४०॥

---

1- -1 M. Ma. लिङ्गप्रकृतिमन्तः 2. B.G.J. गृहा° 3. Ml. V. देहेषु 4. M. Ma °या बलं 5. B.G.J.K.Ml. T.V.W. गतिम् 6- -6 B.G.J.Ml.V. Omit 7. B.G.J. °यास्ते 8. B.G.J. मायि° 9. B.G.J. °ताः 10. B.G.J.K.M.Ma नीम् 11. M.Ma °म° 12. M.Ma तः 13- -13 M.Ma शिक्षयैस्तं लोक

**श्रीध० अव्यक्तलिङ्गमिति** । अव्यक्तलिङ्गं वेषान्तरेण च्छन्नम् ॥ ३६, ३७ ॥

**विदाम इति** । हे योगेश्वर! आत्मन् आत्मनि मम मनसि तव स्वरूपे या निर्भाताः प्रतीतास्तव योगमायाः केवलं विदाम विद्मः न तु त्वत्पारमार्थ्यमिति भावः ॥३८॥

त्वन्मानुष्यनाट्येन मुह्यामि अतो मां प्रस्थापयेत्याह - अनुजानीहीति ॥३९॥

**ब्रह्मन्निति** । तत्तस्माल्लोकं शिक्षयन् इमं धर्म मास्थितो न तु तत्त्वतः । हे पुत्र । मा खिदः मोहं मा प्राप्नुहीति ॥४०॥

**वीर०** प्रकृतिषु अमात्यादिषु अन्तःपुर चरादिषु तत्तदभिप्रायं बोद्धुमिच्छया अव्यक्तं वेषान्तरेण छन्नं लिङ्गं स्वासाधारण चिह्नं यस्य तं चरन्तं ददर्श ॥ ३६ ॥

**अथेति**। मानुषीं गतिं चेष्टां तनुं वा ईयुषः प्राप्तवतः परिगृहीतवत इति यावत्, तस्य भगवतः योगमायोदयम् आश्चर्यशक्तिवैभवमवलोक्य प्रहसन्निव प्राह, अचिन्त्यविविध विचित्रशक्तावस्मिन् नैतच्चित्रमितीवशब्दाभिप्रायः ॥ ३७ ॥

उक्तिमेवाह - **विदाम** इति द्वाभ्याम् । हे योगेश्वर! योगिनां दुर्दर्शामपि ते तव योगमायाम् आश्चर्यशक्तिं भवत्पादनिषेवाप्रभावेन आत्मन् आत्मनि मनसि निर्भातां नितरां भातां विदामः जानीमः ॥३८॥

किन्तु हे देव ! मामनुजानीहि आज्ञापय, तव यशसा व्याप्तान् लोकान् भुवनपावनीं तव लीलामुद्गायन् परितश्चरामि ॥३९॥

इत्थमुक्तः प्राह भगवान् - **ब्रह्मन्निति**। हे ब्रह्मन्! वक्ता उपदेष्टा तद्धर्मोपदेश तदनुष्ठान तदनुमोदनादिकं शिक्षयन् शिक्षयितुं जनान् प्रतीति शेषः। इमं लोकं मनुष्य देहमास्थितः परिगृहीतवानस्मि। प्राकृतचेष्टामनुवर्ते इति भावः। अतो हे पुत्र ! माखिदः स्वयमीश्वरोप्यधुनाप्राकृतो बभूवेत्येवं विधं मोहं न प्राप्नुहीत्यर्थः ॥ ४० ॥

**विज०** अव्यक्त लिङ्गप्रकृतिम् अस्पष्टलक्षण स्वभावं, तेषां तेषां भावानां पदार्थानां बुभुत्सया स्वभाव जिज्ञासया ॥ ३६ ॥

मानुषीं रतिं मनुष्यक्रीडाम् ॥ ३७ ॥

आत्मनि हृदये निर्भातस्य प्रकाशितस्य भवतः पादयोर्निषेवया ॥३८॥

आप्लुतानिति पाठे यशसा तीर्थेन स्नातानीत्यर्थः ॥३९॥

लोकानुकारि चरितदर्शनेन नारदस्य अन्यथाज्ञानं निवारयन्निति तत्त्वमुपदिशति - ब्रह्मन्निति। इमं लोकमास्थितः अस्मिन्लोके स्थितः तं धर्मकर्तारम् अनुमोदकः अनुज्ञाता ॥ ४० ॥

**श्रीशुक उवाच**

**इत्याचरन्तं सद्धर्मा[1-]नादिष्टा[-1] गृहमेधिनाम् ।**
**त[2]मेव सर्वदेहेषु सन्तमेकं ददर्श ह ! ॥ ४१ ॥**

**कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम् ।**
**मुहुर्दृष्ट्वा [3]मुनिरभूद्विस्मितो जातकौतुकः ॥ ४२ ॥**

**इत्यर्थकामधर्मेषु कृष्णेना[4]वहितात्मना ।**

**सम्यक् सभाजितः प्रीतस्तमेवानुस्मरन्ययौ ॥ ४३ ॥**

**एवं मनुष्यपदवी मनुवर्तमानो नारायणोऽखिलभवाय गृहीतशक्तिः ।**

**रेमेऽङ्ग[5] । षोडश सहस्र वराङ्गनानां सव्रीडसौहृदनिरीक्षण हासजुष्टः ॥ ४४ ॥**

**यानीह विश्वविलयोद्भव वृत्तिहेतुः कर्माण्यनन्य विषयाणि हरिश्चकार ।**

**[6]यस्तानि गायति शृणोत्यनुमोदते वा भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥ ४५ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां

श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां

दशमस्कन्धे उत्तरार्धे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

1--1 B.G.J. °न्पावनान्गृह ; T.W. न्प्रदिष्टान्गृह ; M.Ma न्प्रक्रमृष्टान्गृह 2. B.G.J. M.Ma गे° 3. B.G.J.K.M.Ma ऋषिः 4. B.G.J. K.MI. T.V.W. °न श्रद्धि° 5. M. Ma च 6. B.G.J.K.M.Ma.T.W. यस्त्वङ्ग

**श्रीध० इतीति** । इत्येवमनुगृहीतः तमेकमेव सन्तं ददर्शेति ॥ ४१ ॥

**कृष्णस्येति** । मुहुर्मुहुर्दृष्ट्वा जातकौतुको मुनिर्विस्मितोऽभूदिति ॥ ४२ ॥

**इतीति** । श्रद्धितः श्रद्धया युक्त आत्मा यस्य तेन ॥ ४३ ॥

नारददृष्टां श्रीकृष्णलीलां निगमयति **एवमिति** । अखिलस्य भवाय उद्भवाय गृहीताः शक्तयो नानामूर्तयो येन सः । सव्रीडं च तत्सौहृदं च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः ॥ ४४ ॥

**यानीति** । अनन्यविषयान्यसाधारणानि । अपवर्गमार्गे मोक्षप्रदे ॥ ४५ ॥

**इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे**

**श्रीधरस्वामि विरचितायां भावार्थदीपिकायां**

**व्याख्यायां एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥**

**वीर०** कदाचित् मोहसम्भावनामपि निवर्तयितुं भगवता प्रदर्शितं सार्वात्म्यं ददर्श, विस्मितश्च बभूव मुनिरित्याह - **इतीति** द्वाभ्याम्। गृहमेधिनामादिष्टान् विहितान् धर्मानेवमाचरन्तं तदैव पुनस्सर्वदेहेषु एकरूपेण आत्मतया सन्तं वर्तमानं ददर्श ॥४१॥

**कृष्णस्येति**। अनन्तवीर्यस्य अपरिच्छिन्न कल्याणगुणस्य कृष्णस्याश्चर्यशक्तेर्माहात्म्यं वैभवम् उत्सुकस्सन् मुहुर्मुहुः दृष्ट्वा ऋषिर्नारदो विस्मितो बभूव ॥४२॥

**इतीति**। अर्थादिषु श्रद्धितः लोकशिक्षार्थं सञ्जात श्रद्धः आत्मा मनो यस्य तेन कृष्णेन सभाजितो बहुमतः प्रीतश्च तं कृष्णमेवानुस्मरन् ययौ ॥४३॥

नारदाय दर्शितं योगमायोदयं निगमयति **एवमिति**। स्वयं नारायणस्सन् अखिलानां भवायाभ्युदयाय गृहीता उपात्ता शक्तिः दिव्यतनुः येन सः मनुष्यचेष्टामनु वर्तमानः अङ्ग! हे राजन्! सव्रीडं च तत्सौहृदं च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः ॥४४॥

उक्तविध भगवच्चेष्टित गानादिफलमाह - **यानीति**। विश्वस्य विलयः प्रलयः उद्भवः उत्पत्तिः वृत्तिः स्थितिः आसां हेतुः हरिः यानि ईदृशेष्ववतारेषु इह लोके वा अनन्यसाधारणानि कर्माणि चकार, तानि अङ्ग हे राजन्! यः पुमान् गायति, तस्यापवर्गमार्गे मोक्षप्रापके, 'अमृतस्यैष सेतुः' (मुण्ड उ.2-2-5) इति श्रुतेर्मार्गशब्दः प्रापकपरः, भगवति भक्तिर्भवेत् ॥४५॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां एकोनसप्ततितमोऽध्यायः ॥६९॥

**विज०** उपसंहरति **इतीति**। इतिशब्द आदिवचनः ॥४१, ४२॥

इत्यर्थधर्मकामेषु अवहितात्मना कृष्णेन ॥४३, ४४॥

साक्षान्मोक्षहेतुत्वात् भगवच्चरितमिदं बुभूषुभिरभ्यसनीयं आश्वसनीयं न तु विटवृत्तवदुपेक्षणीय"मिति भावेनाह - **यानीति**। अङ्ग ! विष्णुरात ! विश्वविलयोद्भव वृत्तिषु हेतुः हरिः यानि अनन्यविषयाणि कर्माणि चकार यस्तु तानि गायति शृणोति अनुजानीति वा, स तस्य पुंसोपवर्गमार्गे भक्तिर्भवति हि यस्मात् तस्मादवश्यं मुमुक्षुणा सेव्यानीति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

दशमस्कन्धे उत्तरार्धे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

(विजयध्वजरीत्या सप्तसप्ततितमोऽध्यायः)



# सप्ततितमोऽध्यायः

## (विजयध्वजरीत्या अष्टसप्ततितमोऽध्यायः)

### श्रीशुक उवाच

अथोषस्युपवृत्तायां कुक्कुटान् कूजतोऽशपन् ।
गृहीतकण्ठ्यः पतिभिः माधव्यो विरहातुराः ॥१॥

वयांस्यरूरवन् कृष्णं बोधयन्तीव वन्दिनः ।
गायत्स्वलिष्व[1-]निद्राणि[-1] मन्दारवनवायुभिः ॥२॥

मुहूर्तं तं तु वैदर्भी नामृष्य[2]दतिशोभनम् ।
परिरम्भण विश्लेषात् प्रियबाह्वन्तरं गता ॥३॥

ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः ।
दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥४॥

एकं [3]स्वयं ज्योति र[4]नन्यमव्ययं स्वसंस्थया नित्य[5]निवृत्तकल्मषम् ।
ब्रह्माख्यमस्यो[6]द्भवनादि हेतुभिः [7]स्वशक्तिभि र्लक्षितभावनिर्वृतिम् ॥५

1- -1 K.T.W. °ध्वनिद्रेषु ; M.Ma °ध्वभद्रेषु 2. M.Ma.T.W. °पि 3. M.Ma परं 4. K.M.Ma मद्वयं 5. B.G.J.K.M.Ma.T.W. °रस्त 5. B.G.J.K. °नाश
6. M.Ma °लक्षणैः

## श्रीधरस्वामि विरचिता भावर्थदीपिका

ततस्तु सप्ततितमे कृष्णस्याह्निककर्मणि। दूतनारदयो कार्ये [1]मन्त्रि मन्त्र विचारणम् ॥

जगन्मङ्गलचारित्र माह्निकं जगदीशितुः। नारदेन क्वचित्किञ्चित् दृष्टमाह यथाक्रमम् ॥

**अथेति**। "इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना" (भाग० 10-69-43) इति प्रस्तुतस्य श्रीकृष्णस्याह्निकस्याधिकारे अथशब्दः उपवृत्तायां आसन्नायां पतिभिः श्रीकृष्णैः माधव्यो माधवस्य भार्याः वयांसीति। वन्दिन इव श्रीकृष्णं बोधयन्ति सन्ति वयांसि पक्षिणः अरूरवन् अतिशयेनाकूजन् मन्दारवनवायुभिः गायत्सु अलिषु अनिद्राणि [2-]निद्रारहितानि[-2] वयांसि ॥१, २॥

**मुहूर्तमिति**। वैदर्भीत्युपलक्षणं [3-] अन्यासामपि [-3] परिरम्भण विश्लेषात् तं [4] मुहूर्तं पर्यालोच्य ॥ ३, ४ ॥

**एकमिति**। एकं अखण्डं तत्र हेतुः अनन्यं निरुपाधिं अतएव अव्ययं नित्यं स्वयं ज्योतिः तत्र हेतुः नित्यं निवृत्तं कल्मषं अविद्या यस्मात्तं उपलक्षणमाह अस्येति। विश्वस्य लक्षितः भावश्चासौ निर्वृतिश्च। भावसत्ता निर्वृतिरानन्दः तथाहि गुणक्षोभात्पूर्वं सत्तामात्रं यः, स देवसौम्येदमग्र आसीत् (छान्दो.उ. 6-2-1) इत्यादि श्रुतेः। स एवानन्दश्च "विज्ञानमानन्दम्" (बृह.उ. 3-9-28) इत्यादि श्रुतेः तं सदानन्दमित्यर्थः ॥ ५ ॥

---

1. B.J. कार्य 2- -2 Ml. V. Omit 3- -3 B.J. Omit 4. B.J. Omit मुहूर्तं 5. B.J. °ष्टे हे°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ भगवतो दिनचर्यात्मकं चेष्टित मनुवर्णयन् मगधविरुध्दराजसंदेशाहर्तृ संवेदित वृत्तान्त युधिष्टिराभिप्रायाभिज्ञ नारद निवेदित तद्वृत्तान्तान्यनरनिश्चिर्चीपाप्रयुक्तं उध्दवोद्देश्यकं भगवत्प्रश्नमाह अथेत्यादिना, अथ ननु हे राजन्! यद्वाऽत्राथशब्दो भगवद्दिनचर्याप्रस्तावद्योतकः अथ भगवद्दिनचर्या प्रारभ्यत इत्यर्थः। उषसि प्रभातवेलायां उपवृत्तायां आमन्नायां सत्यां पतिभिः कृष्णैः गृहीताः कण्ठाः यासां ताः माधव्यः श्रीकृष्णस्य स्त्रियः विरहेण भाविना आतुराः कूजतः शब्दायमानान् कुक्कुटानशपन् ॥ १ ॥

**वयांसीति**। वन्दिन इव श्रीकृष्णं बोधयन्ति सन्ति वयांसि पक्षिणः मन्दारवनवायुभिः अनिद्रेष्वलिषु गायत्सु सत्सु अरूरवन् पुनः पुनरकूजन् ॥ २ ॥

**मुहूर्तमिति**। प्रियस्य बाह्वोरन्तरं गता वैदर्भीत्यन्यासामप्युपलक्षणं परिरम्भ विश्लेषाध्देतोः तं मुहूर्तमतिशोभनमपि नामृष्यन्नसेहे असमीचीनममन्यतेत्यर्थः ॥ ३ ॥

**ब्राह्म** इति। वारि शुध्दं जलं उपस्पृश्य आचम्य प्रसन्नानि करणानीन्द्रियाणि यस्य सः। तमसः प्रकृतेः परं विलक्षणमात्मानं दध्यौ ध्यातवान् स्वात्मावलोकनपरो बभूवेत्यर्थः ॥ ४ ॥

[1-] कोऽसौ तमसः पर आत्मा? तं विशिनष्टि - एकमिति। एकं समाभ्यधिकरहितं जीवस्तु विपरीत इति भावः। [-1] स्वयंज्योतिः स्वयंप्रकाशस्वरूपं अनन्यं न विद्यत अन्यदशरीरभूतं वस्तु यस्य तं अद्वयं जात्यादि कल्पना रहितं स्वामिन्संस्था सम्यगविकृतत्वेनावस्थितिस्तया, नित्यं निरस्तं प्रतिक्षिप्तं कल्मषं पुण्यपापात्मकं हेयं यस्य तं ब्रह्मेत्याख्या

"बृहति बृंहयती" इति निरुक्ता यस्य तं अस्य जगतः उत्पत्ति नाश हेतुभिः स्वशक्तिभिः उद्भवनाशग्रहणं स्थितेरप्युपलक्षणम्। शक्तिरपृथक्सिध्दविशेषणं ततश्च उत्पत्तिकारणत्व[2] लयकारणत्व रूपैः धर्मैरित्यर्थः। भावस्सत्ता सा च मान सम्बन्धार्हत्वरूपा भावशब्दश्चात्र धर्मिपरः। लक्षितो भावः सत्ताविशिष्टं स्वरूपं निर्वृतिरानन्दात्मकं यस्य तथाभूतं अत्रास्येत्यादिना भावेत्यन्तेन प्रकृतेः परस्यात्मनो लक्षणमभिप्रेतं जगज्जन्मादिकारणत्वं हि ब्रह्मणो लक्षणं निर्वृतिपदेनानन्दवाचिना "सत्यं ज्ञान मनन्तं विज्ञानमानन्दम्" (ब्रुह.उ. 3-9-28) इति स्वरूपशोधक वाक्यार्थः स्मारितः। अत्र कोऽसौ प्रकृतेः पर आत्मेत्यतो ब्रह्माख्य मित्युक्तं, ब्रह्मशब्दस्यानेकार्थसाधारण्या त्किन्तद्ब्रह्मेत्यपेक्षायां अस्येत्यादिना जगत्कारणत्वं लक्षितमितिकारणत्वं चिदचिद्विशिष्टगतमिति विशेष्यभूत ब्रह्मस्वरूप जिज्ञासायां निर्वृतिपदं प्रयुक्तं जगत्कारणत्वस्य हिरण्यगर्भादिरिव सुकृत विशेषप्रयुक्तत्व शङ्काव्युदासाय स्वसंस्थया नित्य निरस्त कल्मष मित्युक्तम्। कारणत्वप्रयुक्त विकाराश्रयत्व शङ्काव्युदासायाव्यय मिति। अधिष्टान्त्रन्तर शङ्काव्युदासायैकमिति कारणत्व प्रयुक्त कार्यानन्यत्वं वक्तुं अनन्य मित्युक्तमिति द्रष्टव्यं सच्छब्दापरपर्याय भावशब्देनोक्तार्थे वेदान्तानां प्रमापकत्वं सूचितम् ॥५॥

---

1- -1 T.W. Omit 2. B.K. add स्थितिकारणत्व

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

राज्ञां दैनन्दिन नित्यनियम प्रकारं कथयत्यस्मिन् अध्याये। तत्रादौ माधवीनां ग्राम्यधर्म लौल्यातिशयं कथयति**अथेत्यादिना** ॥१॥

वयांसि कोकिलादीनि वन्दिनः कृष्णं बोधयन्तीवोपतस्थुः नित्योद्बुध्दत्वादिवेति। मन्दारवनवायुभिः पारिजातवनवायुभिः सह ॥२॥

तं मुहूर्तोपलक्षितकालं प्रियस्य कृष्णस्य बाह्वन्तरं वृक्षस्स्थलम् ॥३॥

नित्यप्रसन्नान्तः करणः आत्मानं स्वमेव ॥४॥

इतरवस्तुभ्यः आत्मानं व्यावर्तयति **एकमिति**। एकं मुख्यं स्वरूपभेदशून्यं वा। आदित्यादि ज्योतिभ्यः परं विलक्षणं परंज्योतिरूपं सम्पद्येति श्रुतिः। अनन्यं अन्याधीनस्वभावरहितं अन्यः स्वतन्त्रो यस्मात् स तथा तं वा।

अद्वयं असदृशं स्वसंस्थया स्व व्यवस्थया स्वमहिम्ना स्वाकारेण वा। नित्यनिरस्तदोषं किं तस्य नामधेयमत्राह- ब्रह्माख्यमिति। स्वलक्षणैः स्वरूपलक्षणैः व्यावर्तक धर्मैः अस्य जगतः उद्भवनादि हेतुभिः मृष्ट्यादि हेतुभिः लक्षिता भाव निर्वृतिःस्वरूपानन्दो यस्य स तथा तम्। 'यदेष आकाश आनन्दो न स्यात्' (तैत्ति. उ. 2-7) इति श्रुतेः ॥५॥

**अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी ।**
**चकार सन्ध्योपगमादिसत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ॥६॥**

**उपस्थायार्कमुद्यन्तं तर्पयित्वात्मनः कलाः ।**
**देवान् ऋषीन् पितॄन् वृध्दान् विप्रानभ्यर्च्य चात्मवान् ॥७॥**

**धेनूनां[1] रुक्मशृङ्गाणां साध्वीनां मौक्तिकस्रजाम् ।**
**पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम् ॥८॥**

**ददौ रौप्य खुराग्राणां क्षौमाजिनतिलैस्सह ।**
**अलङ्कृतेभ्यो विप्रेभ्यो [2-]द्वन्द्व द्वन्द्व[-2] दिने दिने ॥९॥**

**गोविप्र देवतावृध्दान् गुरून्भूतानि सर्वशः ।**
**नमस्कृत्यात्मसम्भूती[3] मङ्गलानि समस्पृशत् ॥१०॥**

---

1. B.G.J.M.Ma °ङ्गी 2- -2 G.J.M.Ma बद्वं बद्वं ;B. वध्दं ;K.T.W. पद्मं पद्मं 3. B.G.J.K.T.W. °त्या

**श्रीध० अथेति**। आप्लुतः स्नातः सन्ध्यायाः उपगमः उपासनं आदिर्यथाभवति तथा क्रियाकलापं चकार काण्वत्वादुदयात्पूर्वमेव हुतानलः ब्रह्मगायत्रीं जजाप ॥६॥

**उपस्थायेति**। कलाः अंशान् देवान् ऋषीन् पितॄंश्च तर्पयित्वा ॥७॥

**धेनुनामिति**। गृष्टीनां प्रथम प्रसूतानाम् ॥८॥

**ददाविति**। [1-]महासंख्यायुक्त सङ्ख्याभिधानम्। द्वन्द्वशो यत्र ब्राह्मणा गा विभेजिर इत्युक्ते[-1] द्वन्द्वमिति। "हिरण्येन परिवृतान् कृष्णान् शुक्लदतो मृगान् मष्करे भरतोऽददाच्छतं द्वन्द्वानि सप्त च" (ऐत ब्रा 8-23-3a) इति श्रुत्युक्तानि सप्तोत्तर शतं द्वन्द्वान्येकीकृत्य पुराणे चतुर्दश लक्षत्वेन गणितानि - यथोक्तं - भरतमेवाधिकृत्य नवमस्कन्धे

"मृगान् शुक्लदतः कृष्णान्सुवर्णेन परिष्कृतान्, अदात्कर्मणि मष्णारेनियुतानि चतुर्दश" (भाग 9-20-28) इति। ततश्चेयं द्वन्द्वसंख्या श्लोकेन सङ्गृह्यते। चतुर्दशानां लक्षाणां सप्ताधिक शतांशकः द्वन्द्वं चतुरशीत्यग्र सहस्राणि त्रयोदशेति। दिने दिने [2-]प्रतिदिनं[-2] प्रतिगृहं चेति, बध्वं, बध्वमिति च पाठान्तरम् ॥९॥

**गोविप्रेति**। आत्मसम्भूतीः स्वविभूतीः मङ्गलानि कपिलादीनि ॥१०॥

---

1- -1 B.J. Omit 2- -2 B.J. Omit

**वीर० अथेति**। अथ सत्तमो भगवान् अम्भसि आप्लुतः स्नातः वाससी परिधाय क्रियाकलापं चकारेति सम्बन्धः कोऽसौ क्रियाकलापं चकारेति सम्बन्धः कोऽसौ क्रियाकलाप इत्यतस्तं प्रपञ्चयति सन्ध्येत्यादिना यत्सन्ध्योपगमादि क्रियाकलापमित्यर्थः सन्ध्योपगमः सन्ध्योपासनं आदि शब्दसङ्गृह्णीतानाह हुतानल इत्यादिना। हुतः अनलः आहवनीयो येन सः, वाग्यतः वाचं यच्छतीति तथा मौनी भूत्वेत्यर्थः। ब्रह्म गायत्रीम् ॥६॥

उपस्थायेत्यादि श्लोकत्रयमेकान्वयम्। आत्मनः स्वस्य कलाः अंशभूतान् देवादीन् तर्पयित्वा वृध्दान् कुलवृध्दान् विप्रांश्च आत्मवान् श्रध्दायुक्तस्सन् अभ्यर्च्य दिने दिने अलङ्कृतेभ्यो विप्रेभ्यः क्षौमकृष्णाजिन तिलैः सह धेनूनां पद्मं पद्मं ददौ। पद्ममिति महासंख्यायुक्त संघाभिधानं कथम्भूतानां रुक्मं स्वर्णालङ्कारः शृङ्गयोः यासां मौक्तिकानां स्रजो यासां बहुक्षीराणां गृष्टीनां प्रथमप्रसूतानां शोभनो वत्सो यासां शोभनं वासो यासां, तासां रौप्यं रजतालङ्कारः खुराग्रेषु यासां तासाम् ॥७-९॥

**गोविप्रेति**। गवादीनां द्वन्द्वः तत्र वृध्दाः कुलवृध्दाः तानात्मनःस्वस्यसम्भूतीः विभूति भूतान् नमस्कृत्य मङ्गलानि कपिलादीनि मङ्गलद्रव्याणि समस्पृशत् ॥१०॥

**विज० सन्ध्योपगमादि** सन्ध्योपासनादिकं क्रियाकलापं चकार। **ब्रह्म** जजाप। नियतस्वाध्यायाध्ययनं कृतवान् गायत्रीं वा जप्तवान् ॥६॥

स आत्मनः कलाः स्वसन्निधानविशेषोपेतान् आत्मवान् स्वाधीनप्रयत्नः स्वाधीनमना वा ॥७॥

साध्वीनां पादबन्धनादि क्रियानपेक्षाणां गृष्टीनां प्रथम प्रसूतानाम्। ॥८॥

बद्वं बद्वं द्वयं द्वयं एकैकस्मै विप्राय ॥९॥

गोविप्रदेवताः वयोवृध्दांश्च गुरुभूतान्यश्वत्थादीनि नमस्कृत्य एतत्सर्वं कीदृश मत्राह आत्मेति। आत्मनः सम्भूतिं सन्निधेः प्रतिमां मङ्गलानि तिलादीनि ॥१०॥

**आत्मानं भूषयामास नरलोक विभूषणम् ।**
**वासोभिर्भूषणैः स्वीयैः दिव्यस्रग नुलेपनैः ॥११॥**

**अवेक्ष्याऽऽज्यं तथाऽऽदर्शं गोवृषद्विज देवताः ।**
**कामांश्च सर्ववर्णानां पौरान्तःपुर [1]वासिनाम् ।**
**[2-]प्रदाप्य प्रकृतीः कामैः[-2] प्रतोष्य प्रत्यनन्दत ॥१२॥**

**संविभज्याग्रतो विप्रान् स्रक्ताम्बूलानुलेपनैः ।**
**सुहृदः प्रकृतीर्दारान् [3-]प्रायुङ्क च ततः[-3] स्वयम् ॥१३॥**

**तावत्सूत उपानीय स्यन्दनं परमाद्भुतम् ।**
**सुग्रीवाद्यै र्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥१४॥**

**गृहीत्वा पाणिना पाणिं [4-]सारथे रथमारुहत्[-4]।**
**सात्यक्युद्धव संयुक्तः पूर्वादिमिव भास्करः ॥१५॥**

---

1. B.G.J.K.T.W. चारिणाम् 2- -2 M.Ma प्रादात् कामान् पृथक् कामैः ; Ml.V. प्रादाप्य प्राकृतैः कामैः 3- -3 B.G.J.K.Ml.T.V.W. °नुपायुङ्क्त ततः 4- -4 B.G.J.Ml.V. सारथेस्तमथारुहत् ; K.T.W. सारथे रथमाविशत्

**श्रीध० आत्मानमिति।** नरलोकस्य विभूषणरूपमात्मानं स्वीयैः पीताम्बर कौस्तुभादिभिः ॥११॥

**अवेक्ष्येति।** कामानभिलषितानर्थान् ॥१२॥

**संविभज्येति।** विप्रान् स्रगादिभिः संविभज्य तेभ्यस्तानि दत्वेत्यर्थः। उपायुङ्क्त भोगार्थमग्रहीत् ॥१३, १४॥

**गृहीत्वेति।** पाणिं कृताञ्जलिं गृहीत्वा ॥१५॥

**वीर० आत्मानमिति**। नरलोकस्य भूषणरूपमात्मानं कौस्तुभपीताम्बरादिभिः भूषयामास ॥ ११ ॥

कामानभिलषितार्थान् प्रदाप्य प्रकृतीः अमात्यादीन् प्रतोष्य तोषयित्वा प्रतिनन्दितवान् ॥ १२ ॥

**संविभज्येति**। अग्रतः पुरतः उपवेशितानिति शेषः विप्रान् स्रगादिभिः संविभज्य सम्यग्विभागेन प्रीणयित्वा आज्यादीन् अवलोक्य तत्रादर्शो दर्पणं सुहृदो मित्राणि दारान् पत्नीश्च उपायुङ्क्त यथायोग्य मन्ववर्ततेत्यर्थः ॥ १३ ॥

**तावदिति**। सुग्रीवाद्यैः आदिशब्देन मेघपुष्पबलाहकसङ्ग्रहः तैरश्वैर्युक्तं स्यन्दनं रथमानीय प्रणम्य अग्रतः अवतस्थे[1] ॥ १४ ॥

गृहीत्वेति। सारथेः पाणिं स्वपाणिना गृहीत्वा पूर्वाद्रि मुदयाद्रिं भास्करस्सूर्य इव आरुरोह ॥ १५ ॥

---

1. B. तस्थौ

**विज०** नरलोकस्य मुक्तामुक्तस्य भूषणं अलङ्कारभूतम् ॥ ११ ॥

आदर्शं दर्पणं गवादींश्च प्रेक्ष्य देवताः प्रतिष्ठिताः कामिनामर्थिनां कामान् काम्यान् पदार्थान् किं बहुना सर्वान्कामैः पृथक् पृथक् प्रतोष्य सन्तोपं जनयित्वा स्वयमपि प्रत्यनन्दत सन्तुष्टोऽभूदित्यन्वयः ॥ १२ ॥

द्रव्यसंविभागक्रममाह - संविभज्येति। विप्रदीनुद्दिश्य स्रगादिभिः तृतीया च द्वितीयार्थे प्रायुङ्क्त स्वयं स्वीचकार ॥ १३ ॥

तावत्तदा ॥ १४, १५ ॥

**ईक्षितो[1]ऽन्तःपुरस्त्रीणां स व्रीड प्रेम वीक्षितैः ।**
**कृच्छाद्विसृष्टो निरगाञ्ज्ञातहासो[2] हरन्मनः ॥ १६ ॥**

**★ एवं ससर्वदाराणां गृहेभ्यो भगवान्विभुः ।**
**नानारूपो विनिर्गत्य एकरूपस्सभां ययौ ॥ १७ ॥**

**सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः ।**
**प्राविशद्यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः ॥ १८ ॥**

**अथोपविष्टः[3] परमासने विभु र्बभौ स्वभासा ककुभोऽवभासयन् ।**
**वृतो नृसिंहै र्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥ १९ ॥**

तत्रोपमन्त्रिणो[4] राजन्नानाहास्यरसै र्विभुम् ।
उपतस्थुर्नटाचार्याः नर्तक्यस्ताण्डवैः[5] पृथक् ॥२०॥

1. B.G.J.K.Ml.T.V.W. °क्षि° 2. K.Ml.T.V.V.W. सोऽह ★ This verse is found only in Ml.v edns. and it is commented by Sridhara Swami 3. B.G.J.K.M.Ma.T.W. तत्रो° 4. M.Ma तत्राऽथम° 5. M.Ma समम्

**श्रीध० ईक्षित** इति। स व्रीडप्रेमवीक्षितैः ईक्षितः क्षणं स्थितः ताभिरेव वीक्षितैः कृच्छ्रात् विसृष्टो निरगादिति ॥१६॥

**एवमिति**। एवं सर्वगृहेभ्यः पृथक् पृथक् निर्गत्य अनन्तरं एक एव सन् ॥१७॥

**सुधर्मेति**। सुधर्मां प्राविशत् यन्निविष्टानां यत्र प्रविष्टानाम् ॥१८॥

**अथेति**। नृसिंहैः नृषुश्रेष्ठैः नृसिंह इति पाठे कृष्ण एव ॥१९॥

**तत्रेति**। उपमन्त्रिणः परिहासकाः पृथक् पृथक् स्वस्वसमुदायैः ॥२०॥

**वीर० ईक्षित** इति। व्रीडा प्रेमभ्यां युक्तैः वीक्षितैः ईक्ष्यमाणः ताभिस्तैरेव वीक्षितैः कृच्छ्रात्कथञ्चिद्विसृष्टस्तासां मनो हरन् सञ्जातः हासौ यस्य तथाभूतो निर्जगाम ॥१६, १७॥

**सुधर्मामिति**। तां विशिनष्टि यद्यत्र सभायामुपविष्टानां षडूर्मयः अशनाया पिपासाशोकमोहजरामृत्यवो न सन्ति तथा भूतामित्यर्थः ॥१८॥

**तत्रेति**। तत्र सुधर्मायां स्वभासा स्वदीप्त्या ककुभो दिशः भासयन्, नृसिंहैः नरश्रेष्ठैः यदुभिः परिवृतः बभौ यथा दिवि आकाशे नक्षत्रगणैश्चन्द्रो भाति तद्वत् ॥१९॥

**तत्रेति**। तत्र तदा हे राजन्, उपमन्त्रिणः परिहासकाः हास्यरसैः विभुं श्रीकृष्णमुपतस्थुः तथा पृथक् स्व स्व समुदाये र्नटाचार्यास्ताण्डवादिभिः ॥२०॥

**विज० स्त्रीणां मनः** ॥१६, १७॥

**यन्निविष्टानां यत्र सभायामुपविष्टानां अशनपानादि षडूर्मयो न सन्ति न बाधन्ते** ॥१८॥

**नृसिंहैः पुरुषश्रेष्ठैः** ॥१९॥

नानाविधैः हास्यैः हसनविषयैः रसैः रागजनकवचनैः ॥ २० ॥

मृदङ्गवीणामुरजवेणु तालदर स्वनैः ।
ननृतुर्जगुस्तुष्टुवुश्च सूत मागध वन्दिनः ॥ २१ ॥

तत्रस्थाः[1] ब्राह्मणाः केचिदासीना ब्रह्मवादिनः ।
पूर्वेषां पुण्य यशसां राज्ञां चाकथयन्कथाः ॥ २२ ॥

तत्रैकः पुरुषो राजन्नागतोऽ पूर्वदर्शनः ।
विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥ २३ ॥

स नमस्कृत्य कृष्णाय परेशाय कृताञ्जलिः ।
राज्ञामावेदय दुःखं जरासन्धनिरोधजम् ॥ २४ ॥

येतु[2] दिग्विजये तस्य सन्नतिं न युयुर्नृपाः ।
प्रसह्य रुध्दास्ते नासन्नयुते द्वे गिरिव्रजे ॥ २५ ॥

---

1. B.G.J.MI.V. तत्राहुः 2. B.G.J.K.MI.T.V.W. च

**श्रीध० मृदङ्गेति** । मृदङ्गादयः प्रसिध्दाः दरः शङ्खः सूतादयः तुष्टुवुः ॥ २१ ॥

**तत्रेति** । ब्राह्मणाः ब्रह्म वेदं आहुः मन्त्रान् व्याचख्युरित्यर्थः वादिनः वचनचतुराः[1] ॥ २२, २३ ॥

**स** इति । स पुरुषः जरासन्धेन यो निरोधः तत्प्रभवं राज्ञां दुःखमावेदयत् ॥ २४ ॥

**य** इति । गिरिव्रजे तत्संज्ञके दुर्गे रुध्दाः आसन् तेषां च दुःखमावेदयदित्यन्वयः ॥ २५ ॥

---

1. B. वदन ; J. वादन

**वीर०** मृदङ्गादयः प्रसिध्दाः दरश्शङ्खः तेषां स्वनैः ननृतुः जगुश्च सूतादयस्तुष्टुवुः तत्र मागधाः वंशावली पाठकाः ॥ २१ ॥

तत्रस्थाः सभायां स्थिताः पुण्यं यशो येषां तेषां पूर्वेषां राज्ञां कथाः कथयामासुः ॥ २२ ॥

एवमाह्निक मनुवर्णितम्। अथ जरासन्धनिरुध्द राजसंदेशहरागमनं प्रस्तौति - **तत्रेति**। इत्थं नीयमानदिनानां एकस्मिन् दिने। हे राजन्! अपूर्वदर्शनः न पूर्वं दर्शनं यस्य सः [2]यः कश्चित् पुरुषः आगतः, प्रतिहारैः द्वारपालैर्भगवते विज्ञापितः ततः प्रवेशितश्च ॥ २३ ॥

**स** इति। आगतः कृताञ्जलिः बध्दोऽञ्जलिर्येन सः जरासन्धेन, यो निरोधः तत्प्रभवं राज्ञां दुःखं, आवेदयत् ॥ २४ ॥

ये चेति तस्य जरासन्धस्य दिग्विजये ये नृपाः सन्नतिं नम्रतां न प्रापुः ते द्वे अयुते नृपाः गिरिव्रजसंज्ञिके, दुर्गे तेन जरासन्धेन बलात् निरुध्दा आसन् तेषां राज्ञामिति पूर्वेण सम्बन्धः ॥ २५ ॥

---

1. B.K. add एकोऽसहायः 2. B.K. Omit यः

**विज०** नटादयो ननृतुः, सूतादयो जगुः ॥ २१ ॥

गानानन्तरं कः प्रसङ्ग इत्यत्राह - **तत्रस्था** इति। छा गतिनिवृत्तिवाचिना शयित्वमुपतिष्ठत्वं वा सूच्यते। अत्र तयोः को विवक्ष्यते इत्यत उक्तं आसीना इति ॥ २२ ॥

तत्र तस्यां अवस्थायाम् ॥ २३ ॥

जरासन्धेन कृतोपरोधो निरोधः तस्माज्ज्ञातम् ॥ २४ ॥

गिरिव्रजे नगरे ॥ २५ ॥

**[1-]राजान ऊचुः[-1]**

**कृष्ण कृष्णाप्रमेयात्मन्प्रपन्नभय भञ्जन ।**
**वयं त्वां शरणं यामो भवभीताः [2]पृथग्धियः ॥ २६ ॥**

**लोको विकर्म निरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।**
**यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ २७ ॥**

**[3-]कालो भवान्[-3] जगदिदं कलयाऽवतीर्ण स्सद्रक्षणाय खलनिग्रहणाय [4]चाद्यः ।**
**कश्चित्त्वदीयमतियातिनिदेशमीश किं वा जनस्स्वकृतमृच्छति तन्न विद्मः ॥२८ ॥**

**स्वप्रायितं नृपसुखं परतन्त्रमीश शश्वद्भयेन मृतकेन धुरं वहामः ।**
**हित्वा यदात्मनि[5] सुखं[6] तदनीहलभ्यं क्लिश्यामहेऽतिकृपणास्तव माययेह ॥२९॥**

**तन्नो भवान् प्रणतशोक हराङ्घ्रियुग्मो बध्दान्वियुङ्क्ष्व मगधाह्वय कर्मपाशात् ।**
**यो भूभुजोऽयुतमतङ्गज वीर्यमेको बिभ्रद्रुरोध भवने मृगराडिवाऽवीः[7] ॥३०॥**

---

1- -1 B.G.J. Omit. 2. K.MI.V. °धग्दृशः 3- -3 B.G.J. लोके भवान् जगदिनः ; MI.V. लोके भवान् भगवतः ; K.T.W. लोके त्वमीश जगतः 4. B.G.J.MI.V. द्याऽन्यः 5. B.G.J.K.T.W. त° 6. B.G.J.K.MI.T.V.W. त्व° 7. MI.V. वाऽजान् ।

**श्रीध०** कृष्णाकृष्णेति षट् श्लोकैः राज्ञां विज्ञप्तिः तत्र प्रथमेन शरणाश्रयणं त्रिभिर्भयानुवादः द्वाभ्यां प्रार्थनमिति कृष्णेति पृथक् दर्शिनः ॥२६॥

लोकस्य भव भयं विवृण्वन्तो नमन्ति लोक इति विकर्म निषिध्दं काम्यं च तस्मिन्नितरां रतः तस्मात् स्वे कुशले धर्मे भवतः अर्चने त्वया उदिते उक्ते[1] पाञ्चरात्रे सामान्यतश्च गीतासु — 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्'(भ. गी. 9-27) इत्यादि। प्रमत्तः अनवहितः यावदयं लोकस्तावदेवास्य लोकस्य यः सद्यो जीविताशां भिनत्ति तस्मै तुभ्यं अनिमिषाय कालात्मने नम इति ॥२७॥

सेयं लोकस्य गतिः वयं तु त्वद्भक्ताः अतोऽस्माकं कुत एतद्दुःखमापन्नमित्याश्चर्येणाहुः लोक इति। भो ईश ईश्वरं सद्रक्षणार्थ मवतीर्णोऽसि चेत् तथाप्यस्माकं दुःखं स्यात् चेत् तर्हि किमन्यः कश्चिज्जरासन्धादि स्त्वदाज्ञामतिलङ्घयति। किञ्च त्वया रक्ष्यमाणोऽपि जनः स्वकर्मजं दुःखं प्राप्नोत्येवेति न विद्मः न चैतदुभयमपि युक्तमिति भावः ॥२८॥

किं दुःखं तदाहुः स्वप्रायितमिति स्वप्रवज्ञातं नृपसुखं[3] नृपोचितं सुखं यतः परतन्त्रं विषयसाध्यं किञ्च सम्प्रति शश्वद्भयं यस्मिन् तेन मृततुल्येनशरीरेण धुरं पुत्रदारादिचिन्तारूपभरं केवलं वहामः अहो कष्टं नः ये वयमितः पूर्वमेव निष्कामास्सन्तस्त्वां नाश्रिता इत्याहुः हित्वेति तत् त्वत्तः यत् अनीहैः निष्कामैः लभ्यं आत्मनि स्वतस्सिध्दं सुखं तत् हित्वा क्लिश्यामः ॥२९॥

त्वन्मायाकृतं कर्मबन्धं त्वमेव निवर्तयेति प्रार्थयन्ते - **तदिति**। वियुङ्क्ष्व मोचय। मगधो जरासन्धः तत्संज्ञिकात् कर्म पाशात् ननु भवद्भिरेव विक्रम्य ततो निर्गम्यतामिति चेदत आहुः - य इति। य[4] एक एव अयुतमतङ्गजानां वीर्यं बिभ्रत्सन् स्वभवने भूभुजोऽस्मान् रुरोध मृगराट्[5] सिंहः[6-] अजान् मेषानिव[-6] ॥३०॥

---

1- -1 B.G.J. Omit. उक्ते 2- -2. MI.V. Omit 3. B.J. चिन्तां के° 4. B.J. Omit. य 5. B.J. Omit. मृगराट् 6- -6 B.J. मेषीरिव ।

**वीर०** तेषां विज्ञप्तिमेवाह षड्भिः तावच्चरण्य त्वोपयुक्त गुणविशिष्टं सम्बोधयन्त श्शरणं व्रजन्ति **कृष्णकृष्णेति**। कृषिर्भूवाचकश्शब्दः (भारत 5-68-5) इत्यादिना निरुक्तेन कृष्ण शब्देन निम्नोन्नतानादरेण सर्वलोकानन्दकरत्वम्, अत एव वैषम्य नैर्घृण्यादिराहित्यं च विवक्षितं अप्रमेयात्मन्नपरिच्छेद्य स्वरूप अनेनास्मदन्तरात्मतया अस्मद्दुःखं जानास्येवेति विवक्षितम्। अत एव सर्वज्ञत्वं च। प्रपन्न भयभञ्जनेत्यनेन वात्सल्यं विवक्षितं त्वां शरणं रक्षणोपायं यामः व्रजामः, अध्यवस्यामः यातिरत्र गत्यर्थः। प्रावण्यस्य गतिपूर्वकत्वात् गत्यर्थानां बुद्ध्यर्थत्वात्। कार्पण्यद्योतनायात्मनो विशिंषन्ति भवभीताः भवशब्दोत्र सांसरिकमरणदुःखपरः भवाद्भीनाः पृथक्दृशः पृथग्दर्शिनः भिन्नमतयः अज्ञास्त द्भयनिवर्तनोपायानभिज्ञा इति यावत् ॥२६॥

प्रपन्नभयभञ्जनेत्यनेन अप्रपन्नजनमरणभयाभञ्जनत्वं सूचितम्। तदेव विवृण्वन्तः प्रणमन्ति-लोक इति। तृतीये स्कन्धे ब्रह्मस्तुतौ पठितोप्ययं श्लोकविजति साम्यादर्थसौष्ठ वाच्चात्राऽपि पठ्यते। यो लोको जनः विकर्मणि विविधे कर्मणि वैषयिक सुखार्थे कर्मणीति यावत् निरतः त्वदुदिते पञ्चरात्र गीतादि मुखेन भवतोपदिष्टे भगवदाराधनात्मके कुशले श्रेयस्साधने। स्वानुरूपे च शरणवरणादि रूपधर्मे यावत् प्रमत्तः अनवहितस्तावत्तस्य यो जीविताशां सद्यश्छिनत्ति तस्मै अनिमिषाय कालात्मने तुभ्यं नमोस्तु ॥२७॥

नह्येतावता लोकहिताचरणैक शीलस्य तव वैषम्य मस्तीत्याहुः लोक इति। भोजगत ईश्वर त्वं सतां रक्षणाय खलानां दुष्टानां विग्रहाय च कलया अंशेन बलभद्रेण सहावतीर्णः जगतः आद्यः आदौ भवः कारणभूत इति वा सम्बन्धः खलनिग्रहेण विना सद्रक्षणासम्भवात्तस्यापि तादर्थ्यात्केवल हितैककारित्वमिति भावः यद्वा खलानां निग्रहस्यापि तेषमन्ततो हितत्वे पर्यवसानात्सोपि हितमेवेति भावः तर्ह्येवं भूते सति मयि कुतः कश्चिद्दुख्यतीत्यत्र कारणद्वयं सम्भावयन्तोऽन्यन्नविद्म इत्याहुः हे ईश कश्चिज्जनस्त्वदीयं आज्ञां निदेशमतियाति अतिक्रामति किं वा स्वकृतं स्वकृतपापफलं प्राप्नोति तत् उभयव्यतिरिक्तं कारणान्तरं न विद्मः अन्यतरन्निश्चेतुं न शक्नुम[1] इति वा कर्मानुगुणमीश्वरो नियच्छतीत्यविरोधः ॥२८॥

प्रकृतं स्वदुःखं निवेदयिष्यन्तस्तावदधुनैव न क्लिश्यामः किन्तु सदापीत्यभिप्रयन्त आहुः **स्वप्नायितमिति**। हे ईश नृपसुखं यन्नृपाणां सुखं तत् स्वप्नायितं स्वाप्नसुखतुल्यं क्षणिकमतितुच्छं चेत्यर्थः। तत्र हेतुत्वेन विशिंषन्ति परतन्त्रमिति कर्मायत्तमित्यर्थः। अतोस्माकं बन्धनात्पूर्वमपि न सुखमिति भावः ननु कल्याणतरनृपदेह सम्बन्ध एव सुखरूप इत्यत आहुः शश्वदिति शश्वत्सदाभयममित्रेभ्यो यस्य तेन मृतकेन शव तुल्येन देहेन धुरं वहामः मृतकतुल्यशरीराख्य भारं वहाम इत्यर्थः मृतकेनेति कर्मणः कारणत्व विवक्षया तृतीया यद्वा लोके मृतकेनोह्यमानेन या धूर्भारः तादृशीं धुरं भारं वहाम इत्यर्थः। नहि शवं वहतां तत्सम्बन्धः सुखरूपः किन्तु भारापादकतया दुःखरूपयेव तथा नपदेहे

सम्बन्धोपीति भावः अतो हे ईश त्वत् त्वत्तः त्वदनुग्रहादित्यर्थः यत् अनीहैः निष्कामैः लभ्यं आत्मनि त्वयि विषये सुखं तत् हित्वा अत एव नितरां कृपणास्तव माययामोहिता इति शेषः इहलोके क्लिश्यामहे ॥२९॥

प्रकृतमात्मदुःखं निवेदयन्तस्तन्निराकरणं प्रार्थयन्ते। **तन्न** इति। प्रणतानां शोकहरं अङ्घ्रियुग्मं यस्य तथाभूतेति सम्बोधनं तानुक्तविधानधुना बध्दांश्च नोऽस्मान् मगधाह्वयः जरासन्धव्याजरूपो यः कर्मपाशः तस्माद्वियुङ्क्ष्व वियोजय भवद्भिरेव विक्रम्य ततो निष्क्रम्यतामित्यतो मागधं विशिंषन्ति य इति यः अयुत संख्यानां मतङ्गजानां वीर्यं बलमेक एव बिभ्राणः भूभुजोस्मान् सिंहः अवीः मेषीरिव भवने रुरोध निरुद्धवान् तथाभूत मागधाह्वय कर्म पाशादिति सम्बन्धः न वयं निर्गन्तुं शक्नुम इतिभावः ॥३०॥

---

1. B. क्षमा

**विज०** पृथग्धियः यथार्थज्ञानशून्याः ॥२६॥

अयतार्थज्ञानी किं करोति किञ्च तस्य फलमिति तत्राह-लोक इति। उक्तार्थोऽयम् ॥२७॥

भगवानत्र किमर्थमवतीर्ण इति तत्राह **काल** इति। चशब्दः एवार्थे समुच्चये वा। सतां रक्षणाय खलानां दुष्टानां निग्रहाय इदं जगत् अस्मिन् जगति कलयावतीर्णो भगवानिति किं वदन्ती एतद्वयं विनान्यत् कार्यं किं न किमपि कुतः कालः तत्तत् काले तत्तत्कार्यसाधन समर्थत्वात् कः खलः को वा सन्निति विशिनष्टि- कश्चिदिति। हे ईश। कश्चिज्जनः त्वदीयं निदेशमतियाति अतिक्रामति। सः खलः किं सुकृतमृच्छति, किं स्वित् त्वदीयं निदेशमतियाति लङ्घयति स असन्किं सुकृत मृच्छतीति वयं न विद्मः एकः सुखच्छेदकं लोकं एकः सुखकरं ऋच्छतीति भवान्वेत्तीति वाक्यार्थः। "अति स्यादधिकार्योक्तौ प्रशंसायामतिक्रमे" (वैज. को. 8-7-15) इति ॥२८॥

स्वर्गादि सुखस्य निर्विषयत्वेन राज्य सुखात्परं न किमपि इति केषाञ्चित् प्रवादस्तत्राह **स्वप्नायितमिति**। स्वप्नायितं स्वप्नवत् क्षणिकं तदपि न स्वाधीनमित्याह परतन्त्रमिति। तत्र तन्नित्यमित्याशयश्च तन्मरणतयोपेतेन मृतकेन शवकल्पेन शरीरेण राज्यधुरं वहाम इत्यस्यान्यत्किं सुखमस्तीति तर्हि तध्दानौ बह्वायसात्क्लेशः स्यादिति तत्राह हित्वेति। यदनीह लभ्यं निवृत्तिमार्गस्थैः साध्यमात्मनि सुखं तद्धित्वा कृपणा वयं क्लिश्यामहे एवं विधं ज्ञानमस्तिचेत् किमिति क्लेश इत्यत उक्तं तवेति ॥२९॥

किमिदानीमावश्यकं तद्वद किं बहुसिध्दानुवादेनेति तत्राह-**तन्न** इति। वियुङ्क्ष्व वियोजय अयुतमतङ्गज वीर्यं अयुत गजपराक्रमं बिभ्रत् ॥३०॥

यो वै त्वया द्विनवकृत्व उदात्त चक्र भग्नो मृधे खलु भवन्तमनन्तवीर्यम् ।
जित्वा नृलोक निरतं सकृदूढदर्पो युष्मत्प्रजा [1-]रुजति नोऽजित[-1] [2]तद्विदेहि ॥ ३१ ॥

[3-]दूत उवाच[-3]

इति मागध संरुद्धा भवद्दर्शन काङ्क्षिणः ।
प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ ३२ ॥

श्रीशुक उवाच

राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः ।
बिभ्रत्पिङ्ग जटाभारं प्रादुरासीद्यथा रविः ॥ ३३ ॥

तं दृष्ट्वा भगवान् कृष्णः सर्वलोकेश्वरेश्वरः ।
ववन्द उत्थितश्शीर्ष्णा स सभ्यस्सानुगो मुदा ॥ ३४

सभाजयित्वा विधिवत्कृतासन परिग्रहम् ।
बभाषे [4]सूनृतैर्वाक्यै श्श्रद्धया तर्पयन्मुनिम् ॥ ३५ ॥

1- -1 M.Ma क्षिपतिचाऽशुच 2. K.T.W. शं विदेहि 3- -3 B.K. M.Ma. Ml. T.V.W. Omit ★ Here K.T.W. reads an extra verse as follows:- प्रियस्य नस्य कृष्णस्य गायन् कर्मणि जन्म च । कृष्णं सङ्घांश्च लोकांश्च द्रावयन् रमयन् भृशम् ॥ ❖ The same verse appears in M. Ma as follows गायन् गिरन् मधुरया प्रिय कर्माणि जन्म च। द्रावयन्नघ संङ्घाश्च लोकान्निरमयन् भृशम् ॥ 4. M. Ma मधुरै॰

**श्रीध०** किञ्च युष्मदीया वयमिति अस्मानधिकं बाधत इत्याहुः - **य** इति हे उदात्त चक्र उद्यत सुदर्शन यो वै द्विनवकृत्वः अष्टादश वारान् त्वया सहमृधे वर्तमाने तत्र सप्तदशकृत्त्वः त्वया खलु भग्नः पराजितः पश्चादनन्त वीर्यमपि नृलोकनिरतं नरशरीरविनोदं भगवन्तं भवन्तं सकृज्जित्वा ऊढदर्पः प्राप्तगर्वः युष्मत्प्रजाः नः अस्मान् रुजति पीडयति, तत् तत्र यत् युक्तं कार्यं तद्विधेहि [1-]जरासन्धपीडां निवारयेत्यभिप्रायः[-1] ॥ ३१ ॥

दूत आह - **इतीति** ॥ ३२-३५ ।

1- -1 B.J. **इत्यर्थः** ।

**वीर०** किञ्च भवदीया वयमित्यस्मान् भृशं बाधत इत्याहुः **यो वा** इति। भो उदात्त चक्र। उद्यतसुदर्शन। द्विनवकृत्वः अष्टादशवारं त्वया सह मृधे युध्दे प्रवृत्ते सति तत्र सप्तदशकत्वो भग्नः पराजितः खलु पश्चादनन्तं वीर्यं यस्य तमपि नृलोकनिरतं मनुष्यचेष्टामनुवर्तमान मित्यर्थः। हेतुगर्भमिदम्। अतः त्वां सकृज्जित्वा प्राप्तदर्पः युष्मत्प्रजाः भवदीयान्नोऽस्मान् रुजति पीडयति, अतः शं सुखं विधेहि कुरु ॥ ३१ ॥

**इतीति**। श्लोको दूतवचनम्। दीनानां तेषां राज्ञां शं विधीयतां क्रियताम् ॥ ३२ ॥

अथ नारदागमनादिकं प्रस्तौति राजदूत इत्यादिना। राज्ञां दूते ब्रुवति सति परमा द्युतिर्यस्य सः विभ्र द्विभ्राणः प्रियस्य भगवतः कर्माणि जन्म चगायन् तं कृष्णं संघान् सभ्यसंघांश्च प्रावयन् आर्द्रचित्तान् कुर्वन् भृशमितरलोकान् रमयंश्च आविरासीदिति सम्बन्धः ॥ ३३ ॥

**तमिति**। तं नारदं मृदा हर्षेण ववन्दे ॥ ३४ ॥

**सभाजयित्वेति**। यथाविधि सभाजयित्वा पूजयित्वा कृत आसनपरिग्रहो येन तं मुनिं श्रध्दया मधुरैः वाक्यैश्च तर्पयन् बभाषे ॥ ३५ ॥

**विज०** उदात्तं उन्नतं चक्रं सैन्यं यस्य स उदात्तचक्रः, आशु च आश्वेव तस्य प्रतिक्रियाम् ॥ ३१-३५ ॥

**अपिस्विदद्य लोकानां त्रयाणामकुतोभयम् ।**
**ननु भूयान्भगवतो लोकान्पर्यटतो गुणः ॥ ३६ ॥**

**नहि तेऽविदितं किञ्चित् लोकेष्वीश्वर कर्तृषु ।**
**अथ पृच्छामहे युष्मान् पाण्डवानां चिकीर्षितम् ॥ ३७ ॥**

**नारद उवाच**

**दृष्टा मया ते [1]बहुलादुरत्यया माया विभो विश्वसृजश्च मायिनः ।**
**भूतेषु [2]भूमं श्चरतस्स्वशक्तिभिः वह्नेरिव च्छन्नरुचो [3]न मेऽद्भुतम् ॥ ३८ ॥**

**तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः ।**
**[4-]यद्विद्यमानात्म[-4]तयाऽव[5]सीयते तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३९ ॥**

**जीवस्य [6]यस्संसरतो विमोक्षणं न [7]जानतोऽनर्थ वहाच्छरीरतः ।**
**लीलावतारैः स्वयशः प्रदीपकं [8]प्राज्वालयत्त्वां तमहं[-8] प्रपद्ये ॥ ४० ॥**

1. B.G.J.K.M.Ma.T.W. °शो 2. M.Ma शश्वद्य° 3- -3 M. Ma योऽविद्ययानात्म 4. B.G.J. MI.V. °वभासते 5. M.Ma यत्स° 6. M. Ma जायतेऽ° 7- -7 M. Ma प्रज्वालयेः त्वं तदहं

**श्रीध० अपीति**। भूयान् महान् गुणो लाभो [1-]यदस्माकं[-1] सर्वलोक वृत्तान्त ज्ञानमिति ॥ ३६ ॥

**नेति**। ईश्वरः कर्ता येषां तेषु ॥ ३७ ॥

एवमविदुषेव भगवता सर्वज्ञेन जरासन्धवधार्थमेव पाण्डव चिकीर्पितं पृष्टो नारदो मायेयमिति ज्ञात्वाऽऽह त्रिभिः **दृष्टा** इति। विश्वसृजश्च ब्रह्मणोपि मायिनो मोहकस्य ते स्वशक्तिभिः विद्यादिर्भूतेष्वन्तर्यामितया चरतो वर्तमानस्य यद्यहं भूतेषु वर्ते तर्हि भूतानि मां किं न पश्यन्ति तत्राह - वह्नेरिव **छन्नरुच** इति स्वशक्तिभिरेव छन्ना रुक् प्रकाशो यस्य तस्य अतस्तवेदं प्रश्नादि न मेऽद्भुतम् ॥ ३८ ॥

**तवेति** इदं जगत् कथंभूतं असदेव यत्तव मायया विद्यमानात्मतया अवभासते तज्जगत्सृजतः किन्तु केवलं ते तुभ्यं नमः तदेव शक्यमित्याह **तस्मै नम** इति कुतः स्वेन रूपेण सर्वतो विलक्षणात्मने अचिन्त्याय इत्यर्थः ॥ ३९ ॥

नन्वेवं भूतस्य किं माया चेष्टितैरित्यत आह **जीवस्येति**। अविद्या तमसा आवृतत्त्वेन अनर्थप्रापकात् शरीरात्संसरतः। तेनैव तमसा तस्माच्छरीराद्विमोक्षणोपायं अजानतः प्राज्वालयत् प्रदीपितवान्। तं त्वां यशःश्रवणादिभिः जीवस्य मोक्षार्थमित्यर्थः ॥ ४० ॥

---

1- -1 B.J. अयमस्माकं

**वीर० तदेवाह-अपिस्विदिति द्वाभ्याम्**। अधुना लोकानां अकुतो भयं नकुतश्चिदपि भयं तत्रापि अपिस्वित् अभयं कच्चिदितीष्टप्रश्नः। ननु हे ब्रह्मन्! लोकान्पर्यटतो भगवत स्त्वत्तः अस्माकमयं भूयान् महान् गुणः लाभः यत्सर्व लोक वृत्तान्तज्ञानमिति वाक्यशेषः ॥ ३६ ॥

**नन्विति**। ईश्वर कर्तृषु स्वकर्तृकेषु लोकेषु किञ्चिदपि तवाविदितं न, किन्तु सर्वं विदितमवेत्यर्थः। **अथातः युष्मान् प्रति पृच्छामहे ॥ ३७ ॥**

इत्थं सर्वज्ञेनाप्यविदुपेव जरासन्धवधार्थमेव पाण्डवचिकीर्षितं पृष्टो नारदः केवलमिदं जनव्यामोहनमिति ज्ञात्वा आह - **दृष्टेति** त्रिभिः। हे विभो! हे भूमन्! स्वशक्तितः सर्वज्ञत्वादि स्वशक्तिभिरेव सहभूतेष्वन्तरात्मतया चरतस्तव। अनेन पाण्डवादि चिकीर्षितं तव विदितमेवेत्यभिप्रेतम्। विश्वसृजो ब्रह्मणोऽपि मायिनः व्यामोहकस्य तव पाण्डवानां चिकीर्षितं पृच्छाम इत्येतत् दुरतिक्रमणीया माया मया दृष्टा व्यामोहनमात्रमेतदिति निश्चितमित्यर्थः। बहुशो दुरत्ययेत्यनेन त्वत्प्रपन्नैः स्वत्ययैवेति सूचितम् ।यद्वा बहुशो दृष्टेति सम्बन्धः। यथा मह्यं योगमायोदयः प्रदर्शितः तद्वदयं प्रश्नोऽपीति भावः। ननु भूतेषु चरामि तैः किं न दृश्य इत्यतो विशिनष्टि - भस्मना वह्नेरिति। वह्नेः च्छन्नाः गूढाः स्वप्रकाशो यस्य तवेति सम्बन्धः अतस्तवेदं प्रश्नादिकं मम नाद्भुतम् इत्यर्थः ॥३८॥

पाण्डव वृत्तान्त प्रश्न व्याजेन मागध जिघांसैवाभि प्रेतेत्यपि न निश्चेतुं शक्नुम इत्यभिप्रयन्नाह-**तवेति**। ईहित मभिप्रेतं साधु [1-]यथावद्वे[-1]दितुं कोवाऽर्हति नकोपीत्यर्थः। तत्र हेतुत्वेन तं विशिनष्टि - स्वमायया स्वसङ्कल्पेन इदं जगत्सृजतः नियच्छतोऽन्तरात्मतया प्रशासितुश्च तवेति सम्बन्धः। त्वत्सृज्यस्त्वन्नियाम्यश्च अयं जनः कथं वक्तुमर्हतीति भावः। किन्तु यद्विद्यमानात्मतया यस्मिन् त्वयि विद्यमान आत्मा भावो अभिप्राय इति यावत्, तत्त्वेन अवसीयते निश्चीयते मयेति शेषः। यस्य तवायमेवाभिप्राय इति मया निश्चीयत इत्यर्थः। स्वेन स्वसाधारणस्वभावेन सर्वस्माद्विलक्षण आत्मा स्वरूपं यस्य तस्मै तुभ्यं नमः केवलं नमस्करोमि नत्वीहितं निश्चेतुं शक्नोमीतिभावः ॥३९॥

यद्यप्येवम्, अथापि त्वदवतारः केवलं साधुपरित्राणाय दुष्कृद्विनाशाय च इत्येतत्तु निश्चिनोमीत्यभिप्रयन् प्रपद्यते जीवस्येति। यो भवान् संसरतः अनर्थवहात् दुःखावहाच्छरीरान्मोक्षणं मोक्षणोपाय मजानतश्च जीवस्य स्वयश एव प्रदीपस्तं लीलावतारैः प्राज्वालयन् सन्दीपितवान्, तं त्वामहं शरणं प्रपद्ये मुक्त्युपाय मजानतः संसरतो जीवस्य यथाऽन्ध तमसावृतघटपटादी न जानतः तज्ज्ञानोपाय भूत प्रदीप प्रज्वलनं तद्वत् शृण्वतोऽनुस्मरतः कथयतश्च मुक्त्युपायभूतं यशो विस्तृतवानित्यर्थः ॥ ४० ॥

---

1- -1 B यथा तथा तद्वे°

**विज०** अद्य त्रयाणां लोकानां अकुतोभयं अपिस्वित् कुतोपि भयं नास्ति हि। लोक कुशलाकुशल जिज्ञासया पर्यटतो भवतो महान् गुणो भवतीत्याह-नन्विति ॥ ३६ ॥

पक्षिवत्पर्यटताऽज्ञेन मया किं प्रयोजनमत्राह-न हीति। ईश्वरः कर्ता येषां ते तथा तेषु अथ तस्मात् ॥३७॥

मायामाहात्म्यानि मायिनः नित्याव्याहतमाहात्म्यस्य दारुषु च्छन्नरुचः वेद्मे रुच इव तवरुचोत्यद्भुता अचिन्त्याः ॥३८॥

वह्नेः रुचो मथनादिना व्यज्यन्ते, न तथा तव रुच इति भावेनाह - **तवेति**। कुतो निर्वेदनमिति तत्राह - य इति। यो भवानविद्ययाऽज्ञानेनात्मतया अस्वामितया अवसीयते निश्चीयते शरीरिभिरिति शेषः इति यदतो वेदनं दुःशकमित्यर्थः तर्हि तत्सत्यं किं नेत्याह - स्वेति। स्वतो विलक्षण स्वरूपाय तस्मात्स्वामित्वमेव सत्यमिति। तत्र अज्ञानमेव कारणमित्यर्थः। स्वरूपतो विरुद्ध लक्षण स्वामिने कदात्यनुपहत स्वामिन इत्यर्थः इति वा ॥३९॥

अज्ञानं मां कदापि न स्पृशेत् प्रत्युत ज्ञानमेव नित्यं प्रज्वलितं भूयादिति प्रार्थयते जीवस्येति। अज्ञानतः संसरतो जीवस्यानर्थवहाच्छरीरतो विमोक्षणं न जायत इति यत् तस्मात् एतद्देह हानाय लीलावतारैः त्वं वयशः प्रदीपकं ज्ञानं प्रज्वालयेस्तदर्थमहं शरणं प्रपद्ये इत्यन्वयः। अनेन लीलावतार विषया ज्ञानं दूरीकृत्य तत्त्वज्ञानमेव विकसितं कुरु इत्युक्तं भवति ॥४०॥

**अथाप्याश्रावये ब्रह्मन् नरलोक[1] विडम्बनम्।**
**राज्ञः पैतृष्वसे यस्य भक्तस्य च चिकीर्षितम् ॥४१॥**

**यक्ष्यते[2] त्वां मखेन्द्रेण राजसूयेन पाण्डवः।**
**[3-]नृपतिः पारमेष्ट्येऽ[-3]प्सु तद्भवाननुमोदताम् ॥४२॥**

**[4-]तस्मिन् देवक्रतुवरे भवन्तं वै सुरादयः[-4]।**
**दिदृक्षवस्समेष्यन्ति राजानश्च यशस्विनः ॥४३॥**

**श्रवणात्कीर्तनाद्ध्यानात्पूयन्ते[5]ऽन्त्यावसायिनः ।**
**[6]तव ब्रह्म मयस्येश किमु तेक्षाभिमर्शिनः ॥४४॥**

**यस्यामलं दिवि यशः प्रथितं रसायां**
**भूमौ च ते [7-]भुवनमङ्गलदिग्वितानम् ।**
**मन्दाकिनीति दिवि भोगवतीति चाधो**
**गङ्गेति चेह चरणा[-7]म्बु पुनाति विश्वम् ॥४५॥**

---

1. M.Ma देव 2. B.G.J.K.T.W. °ति 3- -3 B.G.J.Ml.V. पारमेष्ट्यकामो नृपति ; M.Ma नृपतिः पारमेष्ट्येन 4- -4 K.T.W Omit 5. B.G.J. K.T.W. °ऽन्तेव° ; Ml. V. °ऽ न्ताव° 6. Ml.V. तत्र 7- -7 M.Ma अमल यशोऽथ दिशान्वितानम्। मन्दाकिनी च तव पादरजो वहोर्मिः श्रीमत्पदास्पद गताऽ–

**श्रीध० अथेति**। आश्रवये श्रावयिष्यामि नरलोकविडम्बनं ब्रह्मत्वां ब्रह्मन्निति पाठेऽपि हे ब्रह्मन् परमात्मन् नरलोकानुकारिणं त्वां श्रावयिष्यामीति ॥ ४१, ४२ ॥

न चात्रैवानुमोदनं कार्यं किन्तु तत्रागन्तव्यमित्याशयेनाह - **तस्मिन्निति** ॥ ४३ ॥

तत्रागताश्च सर्वे त्वद्दर्शनादिना पूता भविष्यन्तीत्याह - **श्रवणादिति**। अन्तावसायिनः श्वपचा अपि ब्रह्ममयस्य वेदमूर्तेः ईक्षा च अभिमर्शश्च स्पर्शनं ते विद्येते येषां ते ॥ ४४ ॥

कैमुत्यमतिशयेनाह - यस्येति। हे भुवनानां मङ्गलरूप दिवि पाताले भूमौ च प्रथितम्। यस्य यशः विश्वं पुनाति कथम्भूतं प्रथितं दिग्वितानन्दिशां भुवनानां वितानवदलङ्करणं तथा चरणाम्बु च प्रथितं पुनाति। कथं तत्प्रथितं दिवि मन्दाकिनीति अथश्च भोगवतीति इह च भूमौ गङ्गेति तस्य तव आगमनात्सर्वं पवित्रं मङ्गलं च भविष्यतीति भावः ॥ ४५ ॥

**वीर० अथापीति**। यद्यप्येवमथापि नरलोकं विडम्बयत्यनुवर्तत इति तथा तं त्वां प्रति राज्ञो युधिष्ठिरस्य चिकीर्षितं श्रावये ॥ ४१ ॥

किं तदित्यत आह - **यक्ष्यतीति**। पाण्डवो युधिष्ठिरः राजसूयाख्येन मुखश्रेष्ठेन त्वा माराधयिष्यति ततदभिप्रेतं भवाननुमोदतां त्वया निर्वर्त्यतामित्यर्थः अतः तत्र गम्यतामिति भावः, तद्व्याजेन शिशुपालादि वधोऽपि भविष्यतीत्यभिप्रयन्नाह - दिदृक्षव इति। यशश्विनः प्रसिद्धा राजानश्चैद्यादयो दिदृक्षवो राजसूयमिति शेषः। समेष्यन्ति आगमिष्यन्ति ॥ ४२, ४३ ॥

तत किमिति आह - श्रवणादिति। अन्तेवसायिनः चण्डालादयोऽपि साक्षात् परब्रह्म भूतस्य तव नामश्रवणादि भिरपि काम क्रोध भयादि कृतैः पूयन्ते किमुत अक्ष्णा अभिमृशन्ति विषयीकुर्वन्तीति तथा ते शिशुपालादयः पूयन्त इति किमु वक्तव्यम्। त्वां पश्यन्तो हठाच्च मुक्ता भवन्तीति भावः ॥ ४४ ॥

कैमुत्यनयेन भङ्ग्यन्तरेणाह- **यस्येति**। हे भुवनानां मङ्गलरूप! दिवि पाताले भूमौ च प्रथितं प्रख्यातं यस्य तव यशो विश्वं पुनाति। कथं प्रथितं दिग्वितानं दिशां वितानं [1]उल्लोचवदलङ्करणं तथा चरणाम्बु [2-]पुनाति प्रथितं कथं[-2] प्रथितम्? दिवि मन्दाकिनीति, अधः पाताले भोगवतीति इहलोके गङ्गेति च ॥ ४५ ॥

---

1. K. चः तद्वद° 2- -2 B.Omits

**विज०** यतः त्वत्प्रसादादस्मदादेर्विज्ञानं तत्र किंचिदपि विज्ञाप्यं न पश्यामि, अथापि तथापि अशेष पुरुषार्थ प्राप्तौ भगवद्भक्तेः मुख्य हेतुत्वेऽपि नर देवानां विडम्बनं यज्ञकरणम् ॥४१॥

पारमेष्ठ्येन उत्तमकल्पेन ब्रह्मपदप्राप्ति हेतुना वा ॥४२, ४३॥

अन्त्यावसायिनः अन्त्यजातयोऽपि ईक्षा दर्शनमभिमर्शनं स्पर्शनादि लक्षणं चैषां इतीक्षाभिमर्शिनः ॥४४॥

उक्तिमेव स्फोरयति - **यस्येति**। हे अमल यशः। मङ्गलकर्तन। यस्य तवाथ कल्याणमत एवामलं निर्दोषं यशः विश्वं पुनाति। ननु मितत्वे यशसो विश्वपुनानत्वं कथमित्यत उक्तं दिवीत्यादि घटान्तर दीपवत् अस्पष्टस्यापि कथं इत्यत उक्तम् - दिशां वितानमिति। दिशामन्तेषु विशेषेण तानाविस्तारो यस्य तत्तथा। तथापि न चोरवदित्याह - प्रथितमिति। अथ जन्मप्रभृति श्रीमत्पादलक्षणास्पदं गता तव पादरजो वहोर्मिर्मंदाकिनी च विश्व पुनाति अतः तव माहात्मयं किं वक्ष्यामीत्यतो नमो नम इत्युपरमामीति वाक्यार्थः ॥४५॥

**श्रीशुक उवाच**

**★ तत्र [1-]त्येष्वात्मपक्षेषु[-1] वि[2]गृह्णत्सु जिगीषया ।**
**वाचः पेशैः स्मयन् भृत्यमुद्धवं प्राह केशवः ॥४६॥**

**[3-]श्रीभगवानुवाच[-3]**

**त्वं हि न परमं चक्षुस्सुहृन्मन्त्रार्थ तत्त्ववित् ।**
**[4]अथात्र ब्रूह्यनुष्ठेयं [5]श्रद्दया करवाम तत् ॥४७॥**

**[6-]श्रीशुक उवाच[-6]**

**इत्युपामन्त्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् ।**
**[7]निदेशं शिरसाऽऽधाय उद्धवः प्रत्यभाषत ॥४८॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादश साहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे सप्ततितमोऽध्यायः ॥७०॥

---

★ इत आरभ्य त्रयः श्लोकाः M. Ma प्रकाशेषु न दृश्यन्ते। 1- -1 B.G.J. तेष्वात्मपक्षेष्व ; Ml. V. तेष्वात्मनः पक्षेष्व. 2. B. °ण° 3- -3 K. Ml. T.V.W. Omit 4. K. अतो° ; B.J. तथा° 5. B.G.J.K.T.W. श्रद्धमः 6- -6 B.G.J. Ml.V. Omit 7. Ml. V. सन्देशं

**श्रीध० तत्रेति**। तत्रैवं नारदेनोक्त तेषु तत्र वर्तमानेष्वात्मीय पक्षेषु यादवेषु जरासन्धस्य जिगीषया अगृह्णत्सु अननुमन्यमानेषु सत्सु वाचः पेशैः पेशल वाग्भिरित्यर्थः ॥४६॥

**त्वमिति**। चक्षुष्ट्वे हेतुः - मन्त्रार्थानां मन्त्र साध्यानां अर्थानां तत्त्ववित् परिपाकवेदिता ॥४७, ४८॥

इति श्रमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां सप्ततितमोऽध्यायः ॥७०॥

**वीर० तत्रत्येष्विति**। इत्थं श्रुत राजवृत्तान्त युधिष्ठिर [1-]वृत्तान्तेषु[-1] सभास्येष्वात्मपक्षेषु यदुषु जिगीषया प्रगृणत्सु मागधजिगीषा मुत्पादयितुं प्रगृणत्सु तावन्मागधं प्रत्येव गन्तव्यमित्येवं वदत्सु सत्स्वित्यर्थः। वाचः पेशैः मृदुवचोभिः उध्दवं प्राह ॥४६॥

तदेवाह-**त्वं हीति**। **हि** यस्मात् त्वं नोऽस्माकं चक्षुस्तत्स्थानीय इत्यर्थः। सुहृत् मन्त्रार्थानामालोचन साध्यानां अर्थानां तत्त्वं याथात्म्यम् वेत्तीति तथा च अतोऽत्राऽधुना यदनुष्ठेयं कर्तव्यं यत् तद्ब्रूहि तत् भवदुपदिष्टं कर्तव्यमर्थं श्रद्दध्मः विश्वसिमः करवाम च ॥४७॥

**इतीति**। इत्थं सर्वज्ञेनापि भर्त्रा भगवता मुग्धवदज्ञेनेव। उपामन्त्रितः मन्त्रार्थं प्रचोदितः उद्धवः सन्देशमाज्ञां शिरसा आधाय ऊद्ध्वा प्रत्यभाषत प्रत्युत्तरं ददावित्यर्थः ॥४८॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां सप्ततितमोऽध्यायः ॥७०॥

---

1--1 K. मन्त्रेषु

# एक सप्ततितमोऽध्यायः

## (विजयध्वजरीत्या एकोनाशीतितमोऽध्यायः)

श्रीशुक उवाच

इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् ।
सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ॥ १ ॥

उद्धव उवाच

यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया ।
कार्यं पैतृष्वसे[1] यस्य रक्षा च शरणैषिणाम् ॥ २ ॥

यष्टव्यं राजसूयेन [2-]दिक् चक्र[-2] जयिना विभो ।
★ पूर्वं गन्तव्यमस्माभिः इन्द्रप्रस्थ मितः प्रभो ॥
तत्रैव तदनु ज्ञात स्तदर्थं जहि मागधम् ।
[3]ततो जरा[4-]सन्ध वध[-4] उभयार्थो मतो हि[5] नः ॥ ३ ॥

अस्माकं च महानर्थो ह्यनेनैव[6] भविष्यति ।
यशश्च तव गोविन्द राज्ञो बन्धाद्वि[7]मुञ्चतः[8] ॥ ४ ॥

स वै दुर्विषहो राजा नागायुतसमो बले ।
बलिनामपि चान्येषां [9-]भीमं समबलं[-9] विना ॥ ५ ॥

---

1. B.J. °स्रे 2- -2 K.T.W. दिशश्च ★ These Two half verses begining with पूर्वं and ending with मागधम् are found only in KTW editions

3. B.G.J.M.Ma.T.W. अतो 4- -4 B.G.J.K.T.W. सुतजयः सुतवधः ;M.Ma. 5. B.G.J. मम ;K.M.Ma.T.W. हि मे । 6. B.G.J.K.M.Ma.T.W. °ह्येतेनैव

7. B.G.J. बध्दाद्वि°, 8. M.Ma ०च्यतः 9- -9 K.T.W. भीममुग्र°, M.Ma भीमसेन°

## श्रीधरस्वामि विरचिता भावार्थदीपिका

अथैक सप्ततितमे ह्युद्धवस्य तु मन्त्रतः। इन्द्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः ॥

राजसूयमिषं कृत्वा भीमदुर्योधनादिषु। कलिमुत्पाद्य तद्वारा भूभार महरत्प्रभुः ॥

**इतीति**। देवर्षेर्मतं राजसूय गमनं सभ्यानां मतं राज रक्षा। कृष्णस्य तु उभयम् ॥ १ ॥

**यदिति**। यक्ष्यतः यागं करिष्यतः पैतृष्वसेयस्य पितृष्वसुः पुत्रस्य साचिव्यं साहाय्यं तच्च कार्यं तथा शरणार्थिनां राज्ञां रक्षा च कार्या ॥ २ ॥

तत्र प्रथम राजसूयार्थं गन्तव्यं ततो राज रक्षा च कर्तव्येत्याह अष्टभिः श्लोकैः **यष्टव्यमिति**। ततः दिग्विजयहेतोः उभयार्थः राजसूयार्थः शरणागतराजरक्षणार्थश्च ॥ ३, ४ ॥

अत्युत्सुकतया सद्य एव जरासन्धं हन्तुमिच्छतो यादवानालक्ष्याह - **स** इति। अन्येषां ततो बलिनामपि यद्यपि सम बल एव भीमः तथापि तं विना भीमादेव तस्य मृत्युर्विहित इति भावः ॥ ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

न,आत्मपक्षवत् भगवदभिप्रायानभिज्ञः प्राह। किन्तु तदभिप्रायं जानन्नेव प्रत्यभाषतेत्याह - **इतीति**। तावत्सभ्यानां मतम्। जरासन्ध वधार्थमेव[1] गन्तव्यमित्येवंविधमभिमतं ज्ञात्वा ततः कृष्णस्य मतं राजसूय याजनार्थमेव गन्तव्यमित्येवं मतं ज्ञात्वा प्राह - तत्र हेतुत्वेन विशिनष्टि महती श्रेष्ठा सूक्ष्मा मतिर्यस्य सः ॥ १ ॥

उक्तिमेवाह **यदित्यादिना**। ऋषिणा नारदेन यदुक्तं यागं करिष्यतः पैतृष्वसेयस्य पितृष्वसुः पुत्रस्य साचिव्यं साहाय्यं कर्तव्यमिति तदपि कार्यं कर्तव्यमेव तथा शरणार्थिनां राज्ञां च रक्षा कर्तव्या ॥ २ ॥

तत्र तावत् राजसूयार्थं गन्तव्यं ततो राजरक्षा कर्तव्येत्याह **यष्टव्यमित्याद्यष्टभिः**। दिशश्च जयिना चशब्देन यक्ष्यमाणेन चेत्यस्य सङ्ग्रहः तेन युधिष्ठिरेण कर्त्रा राजसूयेन यष्टव्यं तावत् तत्साचिव्यमेव कार्यमिति भावः। दिशश्च जयिनेत्यनेन राजसूयस्य दिग्विजयपूर्वकत्वं तद्दशायामेव राज रक्षा च कृता भवतीत्युभयमभिप्रेतम्। पूर्वं प्रथम-मस्माभिः इतो द्वारकातः इन्द्रप्रस्थं प्रति गन्तव्यम्। दिशश्च जयिनेत्यनेनाभिप्रेतं विशदयति तत्रैवेति। तत्र इन्द्रप्रस्थे युधिष्ठिरेणानुज्ञात एव तदर्थं युधिष्ठिरप्रयोजनाय मागधं जहि घातय ततो दिग्विजय हेतोः जरासुतजयः उभयार्थः राजसूयार्थः शरणागत रक्षार्थश्चेति मया मतः बुद्धः ॥ ३ ॥

अनेनैव राजसूयार्थ गमनेनैव महान् सर्वोपि सिपाधयिषतोऽर्थो भविष्यति। हे गोविन्द! राज्ञो नृपान् बन्धात् विमुञ्चतः विमोचयतः तव यशश्च भविष्यति ॥ ४ ॥

अत्युत्सुकतया प्रथममेव जरासन्धेन सह युयुत्सून् यदून् आलक्ष्याह - **स वा** इति। स वै जरासुतः गजानां अयुतेन तुल्यं बलं यस्य सः, उग्रं बलं यस्य तं भीमं विना अन्येषामपि बलिनां दुःखेनापि सोढुमशक्यः भीमादेव तस्य मृत्युर्विहित इति भावः ॥ ५ ॥

---

1. B. जयार्थ

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

एकान्तभक्तानां भक्त्यतिशयजननाय हरेः बन्धुकृत्याचरण लक्षण माहात्म्यं कथयति। तत्रादौ कृष्णकटाक्ष सूचित तत्कार्य विशेष उध्दवः स्वां नीतिं वक्ति **इतीति** ॥१ ॥

तद्भवाननुमोदतामिति देवर्षिणा यदुक्तं तस्यायमभिप्रायः हे देव! त्वया यक्ष्यतः यागं करिष्यतः पैतृष्वसे यस्य युधिष्ठिरस्य साचिव्यं साहाय्यं कार्यं कर्तव्यमिति किं च शरणैषिणां राज्ञां रक्षा च कार्या ॥ २ ॥

कार्यद्वयसाधनोपायं वक्ति **यष्टव्यमिति**। तेन राज्ञा राजसूयेन यज्ञेन यष्टव्यं न ऋष्यादिनेव यागमात्रेण तथापीत्थं कृतेन भाव्यमित्याह दिक् चक्रेति। दिग्मण्डलं जितवता तन्नामृत्वा जरासन्धः करं न ददातीति यदतो जरासुतवध उभयेषामर्थः प्रयोजनम् ॥ ३ ॥

युधिष्ठिर कार्यं सिद्धवत् कृत्वा स्वकार्यमभिष्टौति **अस्माकमिति**। एतेन जरासन्धवधेन विमुच्यतः विमोचयतः ॥ ४ ॥

दुर्बलैःदुर्विषहोऽस्तु बलिनां सुविषह इत्यत उक्तं बलिनामिति। तर्हीदं दुःखसाध्यं नेत्याह भीमसेनेति ॥ ५ ॥

**द्वैरथे स[1] तु जेतव्यो न[2] शताक्षौहिणी युतः[3]।**
**ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ॥ ६ ॥**

**ब्रह्मवेषधरो गत्वा[4] तं भिक्षेत वृकोदरः ।**
**हनिष्यति न सन्देहो द्वैरथे[5] तव सन्निधौ ॥ ७ ॥**

निमित्तं[6] परमीशस्य विश्वसर्ग निरोधयोः ।
हिरण्य गर्भश्शर्वश्च कालस्यारूपिण[7] स्तव ॥८॥

गायन्ति ते विशद कर्मगृहेषु देव्यो राज्ञां स्वशत्रुवधमात्म विमोक्षणं च ।
गोप्यश्च कुञ्जरपते र्जनकात्मजायाः पित्रोश्च लब्ध शरणा मुनयो वयञ्च ॥९॥

जरासन्धवधः कृष्ण भूर्यर्थायोपकल्पते ।
प्रायः पाक[8]विपाकेन तव चाभिमतः क्रतुः ॥१०॥

---

1. K.T.W. न तु, 2. B.G.J. मा शता° ; K.T.W. न तथा 3. K.T.W. शतैः । 4. M.Ma भूत्वा 5. K.T.W. °थं 6. M. Ma °त मात्रमी° 7. M. Ma °ख्या°
8. K.T.W. कर्म ; M.Ma काल

**श्रीध०** ननु स्वबलसाम्येऽपि सेना बलं तस्याधिकमिति चेदत आह **द्वैरथ** इति । द्वैरथे द्वन्द्व युद्धे शतेनाक्षौहिणीभिर्युतो हि न जेतव्य इत्यर्थः । नन्वसौ स्वसैन्यमेव युद्धाय नियुञ्जीत कुतस्तेन द्वैरथमिति तत्राह-**ब्रह्मण्य** इति । न **प्रत्याख्याति** न निराकरोति ॥६॥

**ब्रह्मेति** । भिक्षेत द्वन्द्वयुद्धं याचतां तथापि समबलत्वात् साम्यमेव स्यादत आह - तव सन्निधाविति ॥७॥

ननु अकिञ्चित्कुर्वतो मम सन्निधानात् किं स्यात् अत आह - **निमित्तमिति** । अयमर्थः यथा तव अरूपस्य कालात्मनः विश्वसर्गे निमित्तं केवलं हिरण्यगर्भः तथा शर्वश्च तन्निरोधे तदा त्वमेव सन्निधिमात्रेण हन्ता भीमसेनो निमित्तमात्रमिति ॥८॥

अतोऽनेनोपायेन त्वया शीघ्रं हन्तव्य इत्याशयेनाह - **गायन्तीति** । जरासन्ध निरुद्धानां[1] राज्ञां देव्यः पत्न्यः । ते विशदं कर्म स्वगृहेषु बालक लालनादौ गायन्ति । किं तत्कर्म? स्वशत्रोः जरासन्धस्य वधं, आत्मनां पतीनां विमोक्षणं च । वत्स! मा रोदीः श्रीकृष्ण एवं करिष्यातीति अत्र दृष्टान्ता गोप्यश्चेत्यादयः । यथा गोप्यः शङ्खचूडवधं स्वमोक्षं च गायन्ति अवतारान्तरगतं च कुञ्जरपतेः नक्रात् । जनकात्मजायाः रावणात्, पित्रोश्च कंस गृहात् मोक्षं, अत एवम्भूतानां तासां कृपया त्वया तथैव कर्तव्यमिति भावः ॥९॥

किञ्च **जरासन्ध वध** इति । भूर्यर्थायेति । ततः शिशुपालवधादयोऽपि सुखसाध्या भविष्यन्तीति भावः । एतच्च सर्वं भविष्यत्येवेति सम्भावयन्नाह - प्राय इति । पच्यत इति पाकः कर्म तस्य विपाकः फलं तेन राज्ञां

पुण्यविपाकेन। पापविपाकेनेति पाठान्तरे जरासन्धादीनां पापविपाकेनेति। तेनायं क्रतुस्तवाभिप्रेतः तत्र गते त्वयि सर्वं भविष्यतीत्यर्थः ॥ १० ॥

---

1. B.J. धृतानां

**वीर०** किञ्च **द्वैरथेनेति**। द्वैरथेन द्वन्द्वयुद्धेनैव स जेतव्यः, न तथा अक्षौहिणीनां शतैरपि, नन्वपरिमित सैन्यपरिवृतेन सह भीमस्य कथं द्वन्द्वयुद्धं भविष्यतीत्यत आह - **ब्रह्मण्य इति**। सन्त्वित्यनुषज्जते, स जरासन्धः ब्रह्मण्यः। अतो विप्रैः याचितो न प्रत्याख्याति ॥ ६ ॥

ततः किमत आह - ब्रह्मवेषधरः वृकोदरः भीमः विप्रवेषं दधत् गत्वा तं जरासुतं भिक्षेत, द्वन्द्वयुद्धमिति शेषः। ततोऽपि किमत आह हनिष्यतीति। द्वैरथं द्वन्द्वयोधिनं मागधं हनिष्यति सोप्यतिबलस्तं कथं [1] हनिष्यतीत्यत उक्तं तव सन्निधाविति। तव सान्निध्यप्रभावा[2]द्धनिष्यति [3] इति भावः ॥ ७ ॥

नन्वकिञ्चित् कुर्वतो मम सन्निधिना किं स्यादत आह - **निमित्तमिति विश्वस्य** सर्ग निरोधयोः उत्पत्तिप्रलययोः त्वं परं निमित्तं आदिकारणं अतो भीमरूपेण त्वमेव हनिष्यसीति भावः। यद्यहं परं निमित्तं किं तर्ह्यवान्तरं निमित्तमत आह हिरण्यगर्भ इति। कालस्य कालशरीरकस्य अरूपिणः प्राकृतरूप रहितस्य सर्वस्रष्टुः सर्व संहर्तुश्च तव हिरण्यगर्भः। शर्वश्च तवेत्यंशांशि भावसम्बन्धे षष्टी। विश्वसर्ग निरोधयोः, अवान्तरकारणमिति शेषः ॥ ८ ॥

कोऽसौ तद्वधादस्माकं लाभः तत्राह **गायन्तीति**। राज्ञां मगधरुद्धानां देव्यः पत्न्यः स्वगृहेषु बालकलालनादौ स्वशत्रोः जरासन्धस्य वधं आत्मनां आत्मवज्जीवन हेतुभूतानां पतीनां विमोक्षणं च इत्येवं विधं तव विशदं निर्मलं कर्म चेष्टितं गायन्ति गास्यन्ति। तत्र दृष्टन्त माह - गोप्यश्चेति। अस्य यथेत्यादिभिः यथा गोप्यः शङ्खचूडवधं स्वमोक्षणं च गायन्ति। यथा च अवतारान्तरगतं नक्रात्कुञ्जरपतेर्गजेन्द्रस्य विमोक्षणं, यथा वा रावणात् जनकात्मजायाः विमोक्षणं, "यथा च पित्रोः देवकीवसुदेवयोः कंसाद्विमोक्षणं", लब्धशरणाः प्रपन्नाः मुनयः अस्मदादयश्च गायन्ति तद्वदित्यर्थः ॥ ९ ॥

किञ्च **जरासन्धवध** इति। हे कृष्ण! भूर्यर्थाय अनेक प्रयोजनाय कल्पते ततः चैद्यादयोऽपि सुखसाध्या भविष्यन्तीति भावः, ततश्च राजसूयार्थ गमनेनैव सर्वं सम्पत्स्यत इत्यभिप्रयन्नाह - प्राय इत्यादि। कर्मविपाकेन, इत्यस्य राज्ञामित्यादिः विपच्यत इति विपाकः फलं प्रायशो जरासन्धनिरुद्धानां राज्ञां कर्मणः पुण्यस्य फलेन हेतुना। क्रतुः राजसूयस्तव च। चशब्दाद्युधिष्ठिरस्याप्यभिमतः, अतस्तावत् तत्रैव गन्तव्यमिति भावः ॥ १० ॥

---

1. B.K. add भीम एव 2. B.K. "वादेव हनि" 3. B.K. add न तु स्वबलप्रभावात् इति भावः।

**विज०** **द्वैरथे द्वन्द्वयुद्धे** तत्रोपायमाह **ब्रह्मण्य** इति ॥ ६ ॥

"तीक्ष्णश्चैव प्रचण्डश्च वृको नामानलो मतः। स पाण्डवस्य जठरे तेन भीमो वृकोदरः" इति हनन निश्चये को हेतुरित्यत उक्तं तवेति। त्वया सह गन्तव्यं तदर्थमित्यर्थः ॥ ७ ॥

तत्कृत इति तत्राह **निमित्तमात्रमिति**। काल इत्याख्या रूपं संज्ञारूपमस्यास्तीति कालाख्यरूपी तस्य ॥ ८ ॥

हे कृष्ण! तत्रेदं कर्म लोकक्षेम करमिति भावेनाह **गायन्तीति**। राज्ञां देव्यः महिष्यः चशब्दाद्देव्यः गृहेषु ते तव इदं कर्म गायन्ति। इदमिति किं तत्राह स्वशत्र्विति। आत्मनः स्वामिनो निरोधात् मोक्षणं कथं गायन्ति इत्यतो लुप्तोपमामाह **गोप्य** इति। चशब्दो यथा वचनः गोप्यः यथा कुञ्जरपतेः गजेन्द्रस्य नक्राद्विमोक्षणं नक्राख्यवधञ्च। यद्वा कुवलयापीडस्य आत्मविमोक्षणं शरीरवियोगलक्षणं मरणं, चाणूरादिस्वशत्रुवधं च जनकात्मजायाः सीतायाः रावण बन्धाद्विमोक्षणं रावणाख्य शत्रुवधञ्च, मुनयो वाल्मीक्यादयः वयं च तथा पित्रोः देवकी वसुदेवयोः कंसविहित श्रृङ्खलायाः विमोक्षणं, कंसाख्य शत्रुवधं गायामस्तथेत्यर्थः। देव्यो देवस्त्रियो गृहेषु विमानेषु स्थित्वा मोक्षणमित्यादि वा ॥ ९ ॥

किं बहुनोक्तेनायं जरासन्धवधो अनेक प्रयोजनोपेत इत्याह - **जरासन्धेति**। भूभारहरणार्थ त्वेनावतीर्णत्वात् तत्र कालान्तरे दुर्योधनादि भारावरोपण हेतुत्वेनाभिमतः क्रतुरित्याह प्राय इति ॥ १० ॥

**श्रीशुक उवाच**

**इत्युद्धववचो राजन् सर्वतो भद्रमच्युतम्[1]।**
**देवर्षिर्यदुवृद्धाश्च कृष्णश्च[2] प्रत्यपूजयन् ॥ ११ ॥**

**अथादिशत्प्रयाणाय भगवान् देवकीसुतः ।**
**भृत्यान् दारुकजैत्रादीन् अनुज्ञाप्य गुरून् विभुः ॥ १२ ॥**

**[3-]निर्गमय्या-[-3]वरोधान् [4-]स्वान्[-4] ससुतान् सपरिच्छदान् ।**
**सङ्कर्षण मनुज्ञाप्य यदुराजं च शत्रुहन्[5]।**
**सूतोपनीतं स्वरथं आरुहद्[6]गरुडध्वजः[7] ॥ १३ ॥**

**[8]पुरो रथद्विपभटसादि नायकैः करालया परिवृत आत्मसेनया ।**
**मृदङ्ग भेर्यानकशङ्खगोमुखैः, [9-]प्रघोष घोषित्[-9] ककुभो निराक्रमत् ॥ १४ ॥**

प्रियाश्च[10] काञ्चन[10] शिबिकाभिरच्युतं, सहात्मजाः पतिमनु सुव्रता ययुः ।
वराम्बराभरण विलेपनस्रजस्सुसंवृता नृभिरसि चर्मपाणिभिः ॥१५॥

1. K.M.Ma.T.W. °तः 2. K.M.Ma.T.W. रामश्च 3- -3 M.Ma स निर्गम्या° 4- -4 M.Ma °त् स्यात्, 5. M. Ma शत्रुहा, 6. K.T.W. आरोह° 7. B.G.J.K.M.Ma.T.W. °जम्. 8. B.G.J.K.M.Ma.T.W. ननो 9- -9 M.Ma मङ्घुष्टया वै ; B.J. प्रघोष घोषित् ; G. प्रघोष घोषितः ; T.W. प्रघोष घोषाः 10- -10 B.G.J.MI.V. नृवाजि काञ्चन ; K.T.W. स्ववाजि काञ्चन

**श्रीध० इतीति**। अच्युतं उपपत्त्या दृढं, यदुवृध्दा इत्यनेन अनिरुध्दादयस्तथा नापूजयन्निति सूचितम् ॥११॥

**अथेति**। अनुज्ञाप्य अनुज्ञां प्रार्थ्य, गुरून् वसुदेवादीन् ॥१२॥

**निर्गमय्येति**। अवरोधान् दारान् निर्गमय्य प्रयाणं कारयित्वा ॥१३॥

**पुर इति**। भटाः पदातयः, सादिनः अश्वारोहाः, रथादि नायकैः करालया तीव्रया आत्मसेनया परिवृतो निराक्रमत् निर्गात् पुरस्सकाशात[1] मृदङ्गादिभिः वाद्यैः प्रघोषेण घोषितायाः ककुभः ॥१४॥

**नृवाजीति**। नरयानैः अश्वैः काञ्चनशिबिकाभिश्च अच्युतं पतिमनुययुः। सुव्रताः पतिव्रताः वराण्यम्बरादीनि यासां ताः ॥१५॥

1. B.J. कुतस्स°

**वीर० इतीति**। सर्वतः भद्रं शुभावहं उद्धवस्य वचः श्रुत्वा अच्युतादयस्सर्वे प्रत्यपूजयन् अन्वमोदन्त ॥११॥

**अथेति**। दारुकः जैत्र एवादिः येषां तान् भृत्यान् आदिशत् आज्ञापयामास। गुरून् वसुदेवादीन् प्रति अनुज्ञाप्य अनुज्ञां प्रार्थ्य निर्गमय्येत्युत्तरेण सम्बन्धः ॥१२॥

**निर्गमय्येति**। सुतैस्सहितान् परिच्छदैः परिकरैः सहितान् स्वान् अवरोधान् दारान् निर्गमय्य पुराद्बहिः गमयित्वा, हे शत्रृहन्! सूतेनोपनीतमानीतम् रथमारुरोह ॥१३॥

**तत इति**। द्विपाः गजाः, भटाः पदातयः, सादिनः अश्वारूढाः तेषां नायकैः करालया परभयङ्करया स्वस्य सेनया परिवृतः मृदङ्गादिभिः वाद्यैः यः प्रघोषः तेन घोषिताः ककुभः कुर्वन्नित्यध्याहारः। निराक्रमत् निष्क्रान्तवान्। प्रघोष घोषीति पाठे दिशः मृदङ्गादिभिः यो घोषः तेन घोषयन् ॥१४॥

**स्ववाजीति**। सुव्रताः पतिव्रताः वैदर्भ्यादयः पतिमच्युतं यान्तं स्वस्ववाजिकाञ्चनशिबिकादिभिः अनुययुः। कथम्भूताः? असि चर्मणी खड्गखेटौ पाण्योरेषां तैः नृभिः भृत्यैः संवृताः वराः श्रेष्ठाः अम्बरादयो यासां ताः ॥१५॥

**विज०** सर्वतो भद्रं सर्वप्रकारेण भद्रम् ॥११-१३॥

ततः किमभूदिति तत्राह-**तत** इति। ककुभः दिशः संघुष्टया संघोषयन्त्या ॥१४॥

प्रियाश्चाच्युतं पतिं अनुययुः। वस्त्रैः सुसंवृताः असि चर्मपाणिभिः नृभिः परिवृताः ॥१५॥

**नरोष्ट्र गोमहिषखराश्वतर्य नः करेणुभिः परिजनवारयोषितः।**
**स्वलङ्कृताः कटकुटि[1]कम्बलाम्बरा द्युपस्करा ययुरधियुज्य सर्वशः[2] ॥१६॥**

**बलं बृहध्वज पट छत्र चामरैः बरायुधाभरण किरीट वर्मभिः।**
**दिवांशुभिस्तुमुलरवं बभौ खेर्यथार्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥१७॥**

**अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि निरगाद्विहायसा[3]।**
**[4]निशम्य तद्व्यवसितमाहृतार्हणो मुकुन्द सन्दर्शन निर्वृतेन्द्रियः ॥१८॥**

**राजदूतमुवाचेदं भगवान् [5-]प्रीणयन् गिरा[-5]।**
**मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥१९॥**

**इत्युक्तः प्रस्थितो[6] दूतो यथावदवदन्नृपान्।**
**तेऽपि सन्दर्शनं शौरेः प्रत्यैक्षन्त[7] मुमुक्षवः ॥२०॥**

---

1. M.Ma पट 2. B.G.J. °तः॥ 3. B.G.J. MI.V. विदधद्वि ; M.Ma निदधद्वि 4. MI.V. निशाम्य, 5- -5 K.T.W. देवकी सुतः ; M.Ma प्रेमयागिरा 6. K.T.W. प्रहितः 7. B.G.J. MI.V. °क्षन् यन्मु°

**श्रीध०** **नरेति**। नरोष्ट्रादिभिः यानैः अश्वतरी गर्दभाभ्यां अश्वाज्जाता, अनः शकटं, करेणुर्गजी, परिजन-योषितो वारयोषितश्च कटकुटयः उशीरादि तृण निर्मित गृहाः कम्बलाम्बरादयश्च। उपस्कराः कुड्यादिरूपा यासां ताः, अधियुज्य बलीवर्दादिषु तानुपस्करान् दृढं सन्नह्य ॥१६॥

**बलमिति**। खेरंशुभिश्च तद्बलं दिवा बभौ। **कथम्भूतम्?** तुमुलरवं आकुलस्वनं क्षुभितैः तिमिङ्गलैः ऊर्मिभिः ॥१७॥

**अथो इति**। मुनिर्नारदो विहायसा, ययाविति शेषः ॥१८॥

**राजेति**। मा भैष्टेति बहुत्वं राजाभिप्रायेण ॥१९॥

**इतीति**। प्रत्यैक्षन् प्रत्यैक्षन्त। यत् यस्मात् मुमुक्षवः ॥२०॥

**वीर० नरेति**। तथा परिजनयोषितः वारयोषितश्च कटकुड्यादयः उपस्कराः कुटीशिबिरादि साधनभूताः यासां ताः। अधियुज्य बलीवर्दादिषु उपस्करान् दृढं सन्नह्य नरादिभिः यानैः ययुरिति सम्बन्धः, तत्र नरो नरवाह्यं, यानं गर्दभ्यां, अश्वाङ्गाना अश्वतरी, अनश्शकटं, करेणुर्गजी, कटकुटयः उशीरादि तृणनिर्मिताः गृहाः ॥१६॥

**बलमिति**। तद्बलं ध्वजादिभिः दिवा बभाविति सम्बन्धः। कथम्भूतम्? तुमुलो रवस्स्वनो यस्मिन् तत् यथा रवेः सूर्यस्यांशुभिः क्षुभिता तिमिङ्गिलादयः तैः ये महान्तः ऊर्मयः तैः अर्णवो भाति तद्वत् ॥१७॥

**अथो इति**। यदुपतिना कृष्णेन सभाजितो बहुमतो मुनिर्नारदः तं हृदि प्रणम्य मनसा प्रणम्येत्यर्थः। तस्य कृष्णस्य व्यवसितं वचो निशम्य आहृतं समर्पितमर्हणं यस्य मुकुन्दस्य सन्दर्शनेन निर्वृतानि सुखितानि इन्द्रियाणि यस्य सः। विहायसा आकाशमार्गेण निरगाद्ययौ ॥१८॥

**राजेति**। भगवान् राजदूतं उवाच। उक्तिमेवाह मा भैष्टेति ॥१९॥

**इतीति**। प्रहितः प्रेषितः नृपान् प्रति यथावत् भगवदुक्तं सर्वं अवदत् उवाच। तेऽपि नृपा अपि शौरेः दर्शनं प्रतीक्षितवन्तः। कथम्भूताः? मुमुक्षवः मागधबन्धनादिति शेषः ॥२०॥

**विज०** ततो बहिः नरोष्ट्रादिभिः परिवृताः परिजनयुत वारयोषितश्च पटकुटयः वस्त्रनिर्मितमन्दिराणि पटकुटि कम्बलाम्बराणि आदिर्येषां ते तथा। ते च उपस्कराः परिकरा येषां ते तथा। अधियुज्य संयुज्य आरोप्य वा ॥१६॥

रवेः अंशुभिः दिवा दिनं यथा भाति बृहध्वज पटादे रुदाहरणमिदं, क्षुभिततिमिङ्गिलोर्मिभिः अर्णवो यथेति। नरोष्ट्रादेर्निदर्शनम् ॥१७॥

हरेर्व्यवसितं निश्चितं निशम्यागात् ॥१८॥

प्रेम स्नेहं यातीति प्रेमया सोमपाशब्दवद्रूपं नेयम् ॥१९, २०॥

आनर्त सौवीरकुरून्[1] तीर्त्वा विनशनं हरिः ।
गिरीन्नदीरतीयाय पुर ग्राम व्रजाकरान् ॥२१॥

ततो दृषद्वतीं[2] तीर्त्वा मुकुन्दोऽथ सरस्वतीम् ।
[3]पञ्चालानथ मत्स्यांश्च शक्रप्रस्थमुपागमत्[4] ॥२२॥

तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ।
अजातशत्रुर्निरगात्सोपाध्यायस्सुहृद्वृतः ॥२३॥

गीत वादित्र घोषेण ब्रह्मघोषेण भूयसा ।
[5-]अभ्ययात्स[-5] हृषीकेशं प्राणाः प्राणमिवागतम् ॥२४॥

दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पाण्डवः ।
चिराद्दृष्टं प्रियतमं सस्वजे[6] स पुनः पुनः ॥२५॥

---

1. B.G.J.K. मरून् 2. K.T.W. वृ° 3. M.Ma.Ml.V. पा° 4. B.G.J.M.Ma °मथा° 5- -5 K.T.W. प्रत्ययात्स° ; M.Ma अभ्यगात्म° 6. B.G.J. °जेऽथ ; M.Ma.Ml.T.V.W. °जे स्म ।

**श्रीध० आनर्तेति**। आनर्तादयो मार्गस्थ देशाः तान् तीर्त्वा अतिक्रम्य विनशनं कुरुक्षेत्रं गिरीन्[1] रैवतकादीन्[2] अतीयाय अतिक्रम्य ययौ ॥२१॥

**तत** इति। शक्रप्रस्थं इन्द्रप्रस्थम् ॥२२, २३॥

**गीतेति**। प्राणाः इन्द्रियाणि प्राणं मुख्यं प्राणमिव ॥२४॥

**दृष्ट्वेति**। सस्वजे परिरेभे ॥२५॥

---

1. B.J. Omit गिरीन् 2. B.J. Omit रैवतकादीन्

**वीर० आनर्तेति**। आनर्तादयो मार्गस्था देशाः। तान् तीर्त्वा अतिक्रम्य विनशनं कुरुक्षेत्रमतीयाय अतिचक्राम ॥२१॥

[1]दृषद्वतीं नदीं तथा सरस्वतीं च तीर्त्वा मत्स्यांश्च देशानतिक्रम्य शक्रप्रस्थमिन्द्रप्रस्थमुप समीपं जगाम। तत्र पुरं प्राकारयुक्तं ग्रामस्तद्रहितः व्रजः अभीराणामावासः आकरः खनिः मत्स्यांश्चेत्यनन्तर मनुषक्तस्य तीर्त्वेत्यस्यातिक्रम्य इत्यर्थः योग्यत्वात् ॥२२॥

**तमिति।** नृणां दुर्लभं दर्शनं यस्य तं कृष्णमागतं श्रुत्वा अजातशत्रु र्युधिष्ठिरः निरगात्, पुरादिति शेषः ॥२३॥

**गीतेति।** वादित्राणि वाद्यानि तद्घोषेण ब्रह्मघोषेण च स युधिष्ठिरः कृष्णमभ्यगात्[2] प्राणः इन्द्रियगणः आगतं प्राणं पञ्चवृत्तिप्राणमिवेत्याभिमुख्ये दृष्टान्तः ॥२४॥

**दृष्ट्वेति।** कृष्णे यः स्नेहः तेन विक्लिन्नं आर्द्रं हृदयं यस्य सः सस्वजे ॥२५॥

---

1. K.T.W. वृ° 2. B.K. add अभिमुखं जगाम।

**विज०** विनशनं कुरुक्षेत्रं आकरं रत्नाद्युत्पत्ति स्थानम् ॥२१॥

दृषद्वतीं चक्रनदीम् ॥२२-२५॥

**दोर्भ्यां परिष्वज्य रमामलालयं[1] मुकुन्दगात्रं नृपतिर्हताशुभः।**
**लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृत लोक विभ्रमः ॥२६॥**

**तं मातुलेयं परिरभ्य निर्वृतो भीमस्स्मयन् प्रेमजला[2]कुलेन्द्रियः।**
**यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥२७॥**

**★ युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम्।**
**अर्जुनेन परिष्वक्तो यमाभ्यां[3] चाभिवादितः ॥२८॥**

**ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः।**
**मानितो[4] मानयामास कुरुसृंजय केकयान् ॥२९॥**

**सूतमागध गन्धर्वा वन्दिनश्चोपमन्त्रिणः।**
**मृदङ्गशङ्ख[5]पटह वीणा पणव वेणुभिः।**
**ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः ॥३०॥**

---

1. M.Ma °लयालयं 2. B.G.J. °वा° ★ This half verse is not found in B.G.J. M.Ma edns. 3. B.G.J. °भ्यामभिवादितः ; Ml.v. °भ्यामभिवन्दितः

4. M-Ma °नो 5. B.G.J. गोमुखैः

**श्रीध० दोर्भ्यामिति**। रमायाः अमलं निर्दोषं आलयं विस्मृतो [1-]लोक विभ्रमः[-1] लोक [2]व्यवहारो येन सः ॥२६. २७॥

**युधिष्ठिरस्येति**। अर्जुनेन समत्त्वात् परिष्वक्त एव केवलं यमाभ्यां नकुलसहदेवाभ्यां अभिवन्दितः नमस्कृतश्चेति ॥२८-३०॥

1- -1 B.J. Omit. 2. Ml. V. व्यापारो

**वीर० [1-]दोर्भ्यामिति**। रमायाः अमलं निर्दोषं [-1]आलयं मुकुन्दस्य गात्रं भुजाभ्यामालिङ्ग्य हतमशुभं यस्य सः। परां निर्वृतिमानन्दं प्राप। तदेव वक्तुं विशिनष्टि अश्रूण्यानन्दजानि लोचनयोर्यस्य । हृष्यन्ती उदञ्चित रोमा तनुर्यस्य। विस्मितः लोकविभ्रमो लोकव्यवहारो येन सः ॥२६॥

**तमिति**। मातुलस्यापत्यं कृष्णं परिरभ्य प्रेमजलैः आनन्दाश्रुभिः आकुले व्याप्ते पिहिते इन्द्रिये लोचने यस्य सः। बभूवेति शेषः। यमौ नकुलसहदेवौ, किरीटी अर्जुनश्च मुदा हर्षेण प्रवृद्धानि बाष्पाणि आनन्दाश्रूणि येषां ते। परिरेभिरे परिष्वक्तवन्तः ॥२७॥

अर्जुनेन केवलं परिष्वक्त एव समवयस्कत्वात् यमाभ्यां त्वभिवादितश्च। भगवान्ब्राह्मणेभ्यो वयोवृद्धेभ्यो। युधिष्ठिरादिभ्यः यथायोग्यं नमस्कृत्य स्वयं बहुमतः, कुर्वादीन् बह्वमन्यत ॥२८, २९॥

**सूतेति**। सूतादयो ब्राह्मणाश्च मृदङ्गादिभिः तुष्टुवुः ननृतुः, जगुश्च। तत्र सूता मागधाः, ब्रह्मणाश्च उपमन्त्रिणश्च तुष्टुवुः। इतरे ननृतुर्जगुश्च। उपमन्त्रिणः परिहासकाः ॥३०॥

1- -1 W. Omits

**विज०** रमा श्रीरलयाभूः तयोरालयं श्रीधराश्रयमित्यर्थः। विस्मृतः लोके विद्यमानः विविधभ्रमो येन स तथा ॥२६।

प्रेमजलेन आनन्दाश्रु जलेनऽऽकुले नेत्रेन्द्रिये यस्य स तथा ॥२७, २८॥

उप समीपे समेत्य मन्त्रणशीलाः ॥२९, ३०॥

**एवं सुहृद्भिः पर्यस्तः पुण्यश्लोक शिखामणिः ।**
**संस्तूयमानो भगवान् विवेशालङ्कृतं पुरम् ॥३१॥**

संसिक्त वर्त्म करिणां मदगन्धतोयैः चित्रध्वजैः कनकतोरण पूर्णकुम्भैः ।
मृष्टात्मभिर्नर[1]दुकूल विभूषण स्त्रक् गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥

उद्दीप्तदीपबलिभिः प्रतिसद्म जाल निर्यातधूप रुचिरं विलसत्पताकम् ।
मूर्धन्य हेम कलशी रजतोरुशृङ्गैः जुष्टं ददर्श भवनैः कुरु राजधाम ॥ ३३ ॥

प्राप्तं निशम्य नरलोचन पानपात्रम् औत्सुक्य विश्लथित केशदुकूलबन्धाः ।
सद्यो विसृज्य गृहकर्म [2]पतींश्च तल्पे द्रष्टुं ययुर्युवतयश्च नरेन्द्रमार्गे ॥ ३४ ॥

तस्मिन् सुसङ्कुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहादिरूढाः ।
नार्यो विकीर्य कुसुमैर्मनसोपगूह्य सुस्वागतं विदधु[3]रुत्स्मय वीक्षितेन ॥ ३५ ॥

---

1. M.Ma °र्वर 2. M.Ma पतीन् स्व° 3. M.Ma रुच्छ्रित

**श्रीध० संसिक्तेति**। चित्रध्वजादिभिः विराजमानम् ॥ ३१, ३२ ॥

**उद्दीप्तेति**। प्रतिसद्म उद्दीप्तैः दीपैः बलिभिः पुष्पादिप्रकरैश्च, जुष्टं जालेभ्यो गवाक्षेभ्यो निर्यातैर्धूपैः रुचिरं विलसन्त्यः पताकाः यस्मिन् तत्, मूर्धन्याः मूर्ध्नि भवाः हेमकलशाः येषां तैः। रजतमयानि रूप्यमयानि, उरूणि स्थूलानि शृङ्गाणि कलशाधस्तनभूमिकाः येषां तैः, भवनैर्जुष्टं कुरुराजस्य धाम पुरं ददर्श ॥ ३३ ॥

**प्राप्तमिति**। नराणां लोचनानि तेषां पानस्य [1]सादर वीक्षणस्य पात्रविषयं किं पुनर्नारीणामित्यर्थः। [2-]औत्सुक्येन इष्टार्थोद्युक्तत्त्वेन विश्लथिताः स्रस्ताः केशदुकूलबन्धा यासां [-2]ताः ॥ ३४ ॥

**तस्मिन्निति**। सुष्ठु स्वागतं तत्प्रश्नादिकं प्रियं उत्स्मय वीक्षितेनैव विदधुः ॥ ३५ ॥

---

1. MI.V. add सारसौन्दर्य 2- -2 B.J. Omit

**वीर० एवमिति**। पर्यस्तः परिवृत्तः पुण्यश्लोकश्रेष्ठः पुरं इन्द्रप्रस्थं विवेश ॥ ३१ ॥

तद्विशिनष्टि-**संसिक्त वर्त्मेति** द्वयेन। करिणां मदगन्धजलैः संसिक्तानि वर्त्मानि पुरवीथयो यस्मिन् तत्। कनकतोरणैः पूर्णकुम्भैश्च मृष्टः स्नापितः आत्मा शरीरं यैः, नवाः दुकूलादयो येषां तैः, नृभिः पुम्भिः तथा भूताभिः युवतिभिः स्त्रीभिश्च विराजमानम् ॥ ३२ ॥

किञ्च **उद्दीप्तेति**। प्रतिगृहमुद्दीप्तैः दीपैः बलिभिः पुष्पादिभिश्च जुष्टं जालेभ्यो गवाक्षेभ्यो निर्यातैः धूपैः रुचिरं विलसन्त्यः पताकाः यस्मिन् तत्। मूर्धन्याः मूर्धनि भवस्ते हेमकलशाः येषां तैः रजतमयान्युरूणि स्थूलानि श्रृङ्गाणि कलधौतस्तम्भ भूमिकाः येषां तैश्च गृहैः जुष्टं, एवम्भूतं कुरुराजधाम इन्द्रप्रस्थपुरं ददर्श ॥ ३३ ॥

**प्राप्तमिति**। नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयं किं पुनर्नारीणामित्यर्थः, तं कृष्णं प्राप्तमागतं श्रृत्वा युवतयः पौरस्त्रियः सद्य एव गृह व्यापारं तल्पे पर्यङ्के पतींश्च विसृज्य औसुक्या द्विश्लथिताः। केशानां दुकूलानां च बन्धाः ग्रन्थयो यासां ताः, द्रष्टुं नरेन्द्रमार्गं राजवीथीं ययुः ॥ ३४ ॥

**तस्मिन्निति**। गृहेषु प्रासादेष्वधिरूढाः युवतयः इभादिभिः चतुर्भिस्सेनाङ्गैस्सुसङ्कुले सङ्कीर्णे तस्मिन्नरेन्द्रमार्गे सभार्यं श्रीकृष्णमुपलभ्य दृष्ट्वा कुसुमैः विकीर्य मनसा उपगूह्यालिङ्ग्य स्मययुक्तवीक्षितेनैव सुस्वागतं स्वागत प्रश्नं विदधुश्चक्रुः तासामुत्स्मयवीक्षितं स्वागतप्रश्नं विदधदिवासेत्यर्थः ॥ ३५ ॥

**विज०** पर्यस्तः परिवृतः ॥ ३१, ३२ ॥

चन्दनाम्बु संसिक्त वर्त्म कुरुराजधाम ददर्शेत्यन्वयः। प्रतिसद्म प्रतिगृहम् ॥ ३३, ३४ ॥

उच्छ्रित वीक्षितेन सम निरीक्षणेन ॥ ३५ ॥

**ऊचुस्त्रियः पथि निरीक्ष्य मुकुन्दपत्नीः तारा यथोडुपसहाः किमकार्यमूभिः ।**
**यच्चुक्षुषां पुरुषमौलिरुदारहास लीलावलोक कलयोत्सवमातनोति[1] ॥ ३६ ॥**

**तत्र तत्रोपसङ्गम्य पौरा मङ्गलपाणयः ।**
**चक्रुस्सपर्यां कृष्णाय श्रेणीमुख्या[2] हतैनसः ॥ ३७ ॥**

**अन्तः पुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः ।**
**संसम्भ्रमैरभ्युपेतः प्राविशद्राजमन्दिरम् ॥ ३८ ॥**

**पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ।**
**प्रीतात्मोत्थाय पर्यङ्कात्सस्नुषा परिषस्वजे ॥ ३९ ॥**

**गोविन्दं गृहमानीय देव देवेश मादृतः ।**
**पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ॥ ४० ॥**

1. MI.V. °लया सुख° 2. K. MI. V. °णि°

**श्रीध० ऊचुरिति**। उडुपसहाः चन्द्रसहचरा इत्यर्थः। अमूभिः किं पुण्यमकारीति ॥ ३६ ॥

**तत्रेति**। श्रेण्यः एकशिल्पोपजीविनां संघाः तेषु मुख्याश्च ॥ ३७ ॥

**अन्तः पुरेति**। अभ्युपेतः अभिगमनेन सत्कृतः ॥ ३८ ॥

**पृथेति**। सस्नुषा द्रौपदी सहिता ॥ ३९ ॥

**गोविन्दमिति**। कृत्यं प्रकारविशेषं प्रमोदेन उपहतः अभिभूतः ॥ ४० ॥

**वीर० ऊचुरिति**। उडुपेन चन्द्रेण सहिताः ताराः इव स्थिताः कृष्णपत्नीः पथि[1] निरीक्ष्य स्त्रियः प्रोचुः उक्तिमेवाह-किमित्यादिना। अमूभिः कृष्णपत्नीभिः किमकारि किं सुकृतमाचरितं, तत्र हेतुत्वेन विशिंषन्ति यद्यासां चक्षुषां पुरुषमौलिः पुरुषोत्तमः उदारो गम्भीरो यो हासस्तद्युक्तो लीलया अवलोकस्तस्य कलया लेशेनैव सुखं वितनोति तथाभूताभिरमूभिरिति सम्बन्धः ॥ ३६ ॥

**तत्र तत्रेति**। उपसङ्गम्य समीपमागत्य पौराः श्रेणयः एकशिल्पोपजीविनां सङ्घास्तेषु मुख्याश्च मङ्गलानि गन्धपुष्पताम्बूलादि शुभद्रव्याणि पाण्यो येषां ते कृष्णाय पूजां चक्रुः अतो हतं निरस्तमेनः पापं येषां तथाभूताः, बभूवुरिति शेषः ॥ ३७ ॥

**अन्तरिति**। सम्भ्रमेण सहितैः अत एव फुल्ले विकसिते लोचने येषां तैः। अन्तःपुरजनैः अभ्युपेतः अभिसङ्गतः राजमन्दिरं प्रविवेश ॥ ३८ ॥

**पृथेति**। पृथा कुन्ती भ्रात्रेयं भ्रातृपुत्रं श्रीकृष्ण मवलोक्य प्रीतः आत्मा मनो यस्यास्सा पर्यङ्कात् उत्थाय स्नुषया द्रौपद्या सह; परिषस्वजे आलिङ्गितवती ॥ ३९ ॥

**गोविन्दमिति**। देवानां देवो ब्रह्मा तस्याऽपीशं गोविन्दं गृहं प्रत्यानीय नृपो युधिष्ठिरः प्रमोदेन उपहतः अभिभूतः परवशेति यावत्। पूजायां कृत्यं क्रमविशेषं नाविदत् ॥ ४० ॥

---

1. T.W. Omit पथि

**विज०** उडुपसहाः उडुपेन चन्द्रेण सहिताः ताराः अमूभिः किं शुभमकारि ॥ ३६ ॥

श्रेणी मुख्याः नगरप्रधानाः ॥ ३७, ३८ ॥

भ्रात्रेऽयं भ्रातुः पुत्रम् ॥३९, ४०॥

पितृष्वसुर्गुरुस्त्रीणां कृष्णाश्चक्रेऽभिवादनम् ।
स्वयं च कृष्णया राजन् भगिन्या चाभिवादितः[1] ॥४१॥

श्वश्र्वा सञ्चोदिता कृष्णा कृष्णपत्नीस्सुवर्चशः[2] ।
आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा ॥४२॥

कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं सतीम् ।
अन्याश्चाभ्यागतास्तास्ता वासस्स्रङ्मण्डनादिभिः ॥४३॥

सुखं निवासयामास धर्मराजो जनार्दनम् ।
ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥४४॥

तर्पयित्वा खाण्डवेन वह्निं फल्गुनसंयुतः ।
मोचयित्वा मयं येन राज्ञे दिव्यासभा[3]ऽऽहृता ॥४५॥

उवास कतिचिन्मासान् राज्ञः प्रियचिकीर्षया ।
विहरन् रथमारुह्य फल्गुनेन बलैर्वृतः[4] ॥४६॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे एकसप्ततितमोऽध्यायः ॥७१॥

---

1. B.G.J. वन्दितः 2. B.G.J.K.T.W. °श्च सर्वशः 3. B.G.J. °भा कृता 4. B.G.J. M.Ma भटै° ; K. रथै°

**श्रीध० पितृष्वसुरिति**। गुरुस्त्रीणां च । कृष्णाया द्रौपद्या, भगिन्या सुभद्रया ॥४१॥

**श्वश्रेति**। आनर्च अर्चितवती ॥४२॥

**कालिन्दीमिति**। अन्याश्च याः कृष्णपत्न्योऽभ्यागताः ता अपि ॥४३॥

**सुखमिति**। प्रत्यहं नवं नवं यथा भवति तथा सुखं निवासयामास ॥४४॥

कथम्भूतम्? **तर्पयित्वेति**। यः प्रेम्णा नित्यं फल्गुनेन संयुतः अत एव तस्य सहायेन खाण्डवेन वह्निं तर्पयित्वा तत्र च [1-]मयं मोचयित्वा तं [-1]मयं प्रयुज्य युधिष्ठिराय दिव्या सभा कृता तं श्रीकृष्णं अनेन राज्ञः कृष्णोपकारानुस्मरणं, सभाया दिव्यत्वाद्यथा मनोरथं सर्वावकाश सम्पादनं च दर्शितमिति ॥ ४५, ४६ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

1- -1 B. Omits

**वीर० पितृष्वसुरिति**। श्रीकृष्णो भगवान् पितृष्वसुः पृथायाः गुरुस्त्रीणां च अभिवादनं चक्रे स्वयं कृष्णया द्रौपद्या भगिन्या सुभद्रया च अभिवादितश्च ॥ ४१ ॥

**श्वश्र्वेति**। शश्र्वा श्वशुरस्य स्त्रिया पृथया सञ्चोदिता कृष्णा द्रौपदी कृष्णस्य पत्नीः सर्वप्रकारैः आनर्च पूजितवती। कृष्णपत्नीरेव निर्दिशति रुक्मिणी मित्यादिना। शैब्यां लक्ष्मणां अन्याश्चेति एता अन्याश्चागताः स्त्रियः वस्त्रादिभिः आनर्चेति सम्बन्धः मण्डनमलङ्कारः ॥ ४२, ४३ ॥

**सुखमिति**। प्रत्यहं नवं नवं यथाभवति तथा सुखं निवासयामास ॥ ४४ ॥

कथम्भूतम्? यः प्रेम्णा नित्यं फल्गुनेन अर्जुनेन संयुतः अत एव तस्य साहाय्येन खाण्डवेनाग्निं प्रीणयित्वा तत्र मयं मोचयित्वा तं मयं प्रयुज्य राज्ञे युधिष्ठिराय। दिव्या सभा आहृता आनीता येन तथाभूतं जनार्दनमिति सम्बन्धः ॥ ४५ ॥

**उवासेति**। मासान्, अत्यन्त संयोगे द्वितीया। राज्ञो युधिष्ठरस्य प्रियं कर्तुमिच्छया फल्गुनेन सह रथमारुह्य रथैः परिवृतो विहरन्कतिचित् मासान् उवास उषितवान् ॥ ४६ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघव विदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां एकसप्ततितमोऽध्यायः ॥ ७१ ॥

**विज०** भगिन्या सुभद्रया च ॥ ४१ ॥

श्वश्र्वा पृथया ॥ ४२-४५ ॥

येन मयेन दिव्या सभा राज्ञा आहूता भगवदाज्ञया निर्माय दत्ता ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
विजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे उत्तरार्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥
(विजयध्वजरीत्या एकोनाशीतितमोऽध्यायः)



# द्विसप्ततितमोऽध्यायः

(विजयध्वजरीत्या अशीतितमोऽध्यायः)

## दिग्विजय जरासन्धवधादि कथा

### श्रीशुक उवाच

एकदा तु सभा मध्ये आस्थितो मुनिभिर्वृतः ।
ब्राह्मणैः क्षत्रियैर्वैश्यै र्भ्रातृभिश्च [1-]युधिष्ठिरः[-1] ॥ १ ॥

आचार्यैः कुलवृद्धैश्च ज्ञातिसम्बन्[2]धबान्धवैः ।
शृण्वतामेव चैतेषामाभाष्ये[3]द मुवाच ह ॥ २ ॥

### युधिष्ठिर उवाच

क्रतुराजेन गोविन्द राजसूयेन पावनीः ।
यक्ष्ये विभूतीर्भवतस्तत्सम्पादय नः प्रभो ॥ ३ ॥

त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रन[4]शने [5]सुधियो गृणन्ति ।
विन्दन्ति ते कमलनाभ भवापवर्ग माशासते यदि त आशिष ईश नान्ये ॥ ४ ॥

तद्देवदेव भवतश्चरणारविन्द सेवानुभावमिह पश्यतु लोक एषः ।
ये त्वां भजन्ति न भजन्त्युत [6]चोभयेषां निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम् ॥ ५ ॥

---

1- -1 M.Ma समन्वितः 2. B.G.J. M.Ml. V. °न्धि 3. Ml. V. °न° 4. K.T.W. °शमने 5. B.G.J. शुचयो 6. B.G.J.M.Ma वो°

## श्रीधरस्वामि विरचिता भावार्थदीपिका

ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते। दुर्जयं मागधं बुदध्वा भीमेनाघातयद्धरिः ॥

**एकदेति**। आस्थितः, आसनमिति शेषः ॥ १ ॥

**आचार्यैरिति**। शृण्वतामेवेति। यत्प्रसन्नः कृष्णः करोति न तदन्यः कश्चिदपि कर्तुं समर्थ इति निश्चित्य सर्वानेवताननादृत्य कृष्णमुवाचेत्यर्थः। आभाष्य भो भो कृष्ण। भक्तवत्सल! इत्येवं सम्बोध्य ॥ २ ॥

**क्रतुराजेनेति**। विभूतीरंशान् ॥ ३ ॥

एष चक्रवर्तिनां मनोरथः कथं त्वया क्रियत इति चेदत आह- **त्वत्पादुके** इति। परि ये चरन्तीति यच्छब्दव्यवधानमार्षम्। ये परिचरन्ति देहेन। ध्यायन्ति मनसा। अभद्रस्य नशने नाशके। गृणन्ति वाचा। ते भवस्यापवर्गं मोक्षं विन्दन्ति। यद्याशासते तर्ह्याशिषोऽपि त एव विन्दन्ति नान्ये चक्रवर्तिनोऽपि ॥ ४ ॥

भगवतो भक्तपक्षपातमाविष्कुर्वन्[1]नाह **तद्देवदेवेति**। तत्तस्मात् पश्यतु साक्षात्। एवं निश्चितेऽपि ये कर्मादिप्रधानाः। केचित्कुरुसृञ्जयाः भगवद्भक्तिं न बहुमन्यन्ते, तेषां मोहनिवृत्तये ये त्वां भजन्ति यदि[2] वा न भजन्ति तेषा मुभयेषां निष्ठा स्थितिं प्रदर्शय प्रकटयेति[3] ॥ ५ ॥

---

1. B.G. 'ष्कारय' 2. MI. V. ये 3. B.G.J. Omit प्रकटयेति

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ जरासन्धवधात्मकं भगवतः चेष्टितं वक्तुं प्रस्तौति - **एकदेति**। तृतीयान्तानां वृत इत्यनेनान्वयः। एतेषां मुनिप्रभृतीनां शृण्वतां सतां एवं आभाष्य सम्बोध्य, कृष्णमिति शेषः। इदं वक्ष्यमाणमुवाच ॥ १,२ ॥

तदेवाह - **क्रतुराजेनेत्यादि**[1] चतुर्भिः। पावनीस्तव विभूतीः विभूतिभूतान्देवान् यक्ष्ये आराधयिष्यामि, तत् मदभिप्रेतं यजनं नोऽस्माकं सम्पादय निर्वर्तय ॥ ३ ॥

नन्वयं चक्रवर्तिनां मनोरथः कथं त्वया क्रियत इत्यत आह - **त्वत्पादुके** इति। अभद्रं शमयतीति तथा ते तव पादुके ये जनाः परिचरन्ति देहेन, ध्यायन्ति मनसा, गृणन्ति वाचा ते शुचयः परिशुद्धान्तःकरणाः भवस्यापवर्गं नाशं[2] मोक्षमिति यावत्, विन्दन्ति, हे ईश! हे कमलनाभ! ते यद्याशिषः कामानाशंसते, तर्हि ता अपि विन्दन्ति, अन्ये परिचर्यादिरहिताश्चक्रवर्तिनोऽपि[3] न विन्दन्तीत्यर्थः। अतो भक्तपक्षपातिनस्तव चरणारविन्दं समाश्रितानां नः सर्वमनोरथपूर्तिस्सुकरैवेति भावः ॥ ४ ॥

एतदेव निदर्शयेत्याह-**तदिति**। तत्तस्मात् देवानामपि देव एष लोकस्तव भवतः[4] चरणारविन्दसेवाप्रभावं पश्यतु, भवतश्चरणारविन्दसेवाप्रभावं दृष्ट्वा त्वत्पादुके इत्यादिनोक्तमर्थं निश्चिनोत्वित्यर्थः। तन्निश्चेतुं भक्तानामभक्तानां च स्थितिं लोकस्य दर्शयेत्याह - ये इति। कुरूणां सृञ्जयानां च मध्ये ये अस्मादादयस्त्वां न भजन्ति, तेषामुभयेषां निष्ठां स्थितिं प्रदर्शय अभ्युदय तदभावौ दर्शयेत्यर्थः ॥ ५ ॥

---

1. K.T.W. °दिना 2. B. नाशकं 3. B. Omits अपि 4. B.T.W. Omit भवतः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

राजसूय यज्ञार्थाय पाण्डवानां दिशां जयो जरासन्धवधश्च श्रीनारायणप्रसादायत्त इति तन्माहत्म्यत्वेन प्रतिपादयत्यस्मिन्नध्याये। तत्रादौ युधिष्ठिरः आगतं श्रीकृष्णं स्वचिकीर्षितं विज्ञापयति **एकदेति** ॥ १ ॥

आभाष्य अभिमुखीकृत्य एतेषां सर्वेषां श्रोत्रादीन्द्रियतृप्तिजनकं इदं वक्ष्यमाणं वचनमुवाच । हेत्यनेन कर्तव्यतां सूचयति ॥ २ ॥

पावनीः शुद्धिकरीः भवतः विभूतीः सन्निधान विशेषस्थानेन्द्रादिदेवताः यष्टुकामः ॥ ३ ॥

तत्कार्यं भवदनुग्रहे[1]नैतद्दुस्साधनमित्याह - **त्वत्पादुकेति**। अभद्रनशने अशुभ विध्वंसनसमर्थे परिचरन्ति नित्यं पूजयन्ति। "व्यवहिताश्च" (अष्टा° 1-4-82) इति छन्दसि व्यवधानेप्युपसर्गाणां क्रियायोगः सिद्धः "प्रद्यान्वस्य महतो महनि" इत्यादौ, अनेन भागवतस्य वेदतुल्यत्वेनाध्येयत्वादौ तात्पर्यं दर्शयति। भवापवर्गं संसारत्यागं विन्दन्ति। ननु तर्हि नानेनाभीष्ट सिद्धिरिति तत्राह आशासत इति। यदि ते सेवकाः आशासते आशिष ऐहिकसिद्धीः कामयन्ते तर्हि ता अपि विन्दन्ति। अन्ये अनुपासकाः नोभयं विन्दन्तीति भयं, विन्दन्तीति शेषः ॥ ४ ॥

यतो भवच्चरण सेवाफलमनुभवसिद्धम्, अतो लोकोपि प्रत्यक्षप्रमाणोऽस्य माहात्म्यं दृग्विषयं करोत्वित्याह **तदिति**। अपि कृष्णात्वमपि भजदभजतामुभयेषामपि जयलक्षणोत्कर्षं व्यवस्थापय इत्याह - ये त्वामिति। 'निष्ठोत्कर्षे व्यवस्थायां नाशेऽन्ते व्रतयज्ञयोः' (वैज. को. 6-2-21) इति यादवः। "अनुभावः प्रभावे स्यात्" (वैज. को. 8-1-8) इति ॥ ५ ॥

---

1. B. °हेणैन°

न ब्रह्मणः स्वपरभेदमतिस्तवस्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः ।
संसेवतां सुरतरोरिव ते प्रसादः सेवाऽनुरूपमुदयो[1] न विपर्ययोऽत्र ॥ ६ ॥

श्रीभगवानुवाच

सम्यग्व्यवसितं राजन् भवता शत्रुकर्शन ।
कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति[2] ॥ ७ ॥

ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो ।
सर्वेषाम[3]पि भूतानामीप्सितः क्रतुराडयम् ॥ ८ ॥

[4]विजित्य नृपतीन्सर्वान्कृत्वा च जगतीं वशे ।
संभृत्य सर्वसम्भारानाहरस्व महाक्रतुम् ॥ ९ ॥

एते ते भ्रातरो राजँल्लोकपालांशसम्भवाः ।
[5-]जितोऽस्म्यात्मवता ते[-5]ऽहं दुर्जयो योऽकृतात्मभिः ॥ १० ॥

---

1. M. Ma. Ml.V. रूप उ° 2. K.T.W. चरि° 3. M. Ma °मेव 4. K.T.W. निर्जित्य 5- -5 M. Ma वशेऽस्मि तव तानाऽहं

**श्रीध०** ननु रागादिरहिते मयि कथमिदं वैषम्यं स्यात्तत्राह - **नेति**। स्वः पर इति भेदमतिस्तव न स्यादेव। कुतः? ब्रह्मणो निरुपाधेः। किञ्च सर्वस्यात्मनोऽतः समदृशः। किञ्च स्वसुखानुभूतेः। अतो रागाद्यभावादिति भावः। तथापि संसेवमानानामेव त्वत्प्रसादो नान्येषाम्। तत्रापि सेवाऽनुरूपमुदयः फलं न त्वत्र विपर्ययोऽन्यथाभावः। यथा कल्पद्रुमस्य यागादिराहित्येऽपि सेवकेष्वेव फलजनकत्वं नान्येषु ॥ ६ ॥

सत्यं मद्भक्तानामेव कैवल्यादि नान्येषामित्यनुमोदमान आह - **सम्यगिति**। शत्रुकर्शनेति सम्बोधयन्, सर्वराजविजयशक्तिं सम्भावयति[1] अनुभविष्यति द्रक्ष्यति[2]। सर्वलोकव्याप्ता भविष्यतीत्यर्थः ॥ ७, ८ ॥

किमत्र मयाऽन्येन वा सम्पादनीयं, तव तु सुकर एव राजसूय इत्याह- **विजित्येति**। जगतीं सर्वां पृथ्वीम्। सम्भारान् यज्ञोपस्करान् सम्भृत्य सम्पाद्य आहरस्व आहर[3] अनुतिष्ठेत्यर्थः ॥ ९ ॥

ननु नृपतिविजयादि **कथं** शक्यं **स्यादत** आह-**एत इति**। किञ्च आत्मवता जितेन्द्रियेण **ते त्वयाऽहं** च जितोऽस्मि वशीकृतोऽस्मि अकृतात्मभिरजितेन्द्रियैः ॥ १० ॥

---

1. B.J. सञ्चारयति 2. MI. V. Omit द्रक्ष्यति 3. B.J. Omit आहर

**वीर०** ननु वैषम्यनैर्घृण्यादिरहितं मां किमिति विषमकृत्ये चोदयसीत्यत आह-**नेति**। ब्रह्मणः हेयप्रत्यनीककल्याण गुणगणपरिपूर्णस्य तव स्वः पर इति च भेदमतिः न स्यात् यद्यपि नास्त्येव, तत्र हेतुत्वेन विशिनष्टि - **सर्वात्मनः** सर्वेषामन्तरात्मनः स्वशरीरेष्वेव केषुचिदवयवेषु स्वीयमतिः केषुचित्परकीयमतिः न दृष्टेति भावः। अत एव समदृशः समा दृक् स्वशरीरेषु सर्वेष्वात्मीयत्वबुद्धिर्यस्य तस्य किञ्च वैषम्यनिमित्तं रागद्वेषादिकं तदपि तव नास्तीत्यभिप्रयन् विशिनष्टि - **स्वसुखानुभूतेरिति**। स्वसुखस्य स्वासाधारणापरिच्छिन्नानन्दस्यानुभूतिः अनुभवो यस्य तस्य केवलं स्वानन्दजुषो न तु रागादिजुष इत्यर्थः। तथापि संसेवमानानामेव विषयभूतानां तव प्रसादोऽनुग्रहः, तत्रापि सेवानुरूपमेव उदयः फलं यथा, सुरतरोः कल्पद्रुमस्य संसेवमानेष्वेव फलप्रदत्वं, न ह्येतावताऽत्र कल्पतरौ विपर्ययो वैषम्यमस्ति, तद्वत् ॥ ६ ॥

एवमुक्तस्तद्वचोऽनुमोदमानः प्राह श्रीभगवान् - **सम्यगिति** पञ्चभिः[1]। हे राजन् ! हे शत्रुकर्शन! सम्यग्व्यवसितं निश्चितम्, कुतः? एवं व्यवसितविधानेन कल्याणी तव कीर्तिः लोकाननुचरिष्यति व्याप्ता भविष्यतीत्यर्थः ॥ ७ ॥

**ऋषीणामिति**। पितृणां देवानां च सुहृदां नोऽस्माकं किं बहुना सर्वेषामपि भूतानामयं क्रतुश्रेष्ठ ईप्सितः इष्टः ॥ ८ ॥

**निर्जित्येति**। जगतीं सर्वां पृथ्वीं वशे कृत्वा स्वाधीनां कृत्वेत्यर्थः। सर्वान् सम्भारान् यागार्थपदार्थान् सम्भृत्य सम्पाद्य महाक्रतुं राजसूयं आहरस्व अनुतिष्ठस्वेत्यर्थः ॥ ९ ॥

कथमहं जेतुं प्रभुरित्यत आह - **एते** इति। एते ते तव भ्रातरो भीमादयः लोकपालानां वाय्विन्द्रादीनां अंशसम्भवाः, अत एभिस्सर्वे नृपास्सुजया एवेति भावः। किञ्च अकृतात्मभिः अजितेन्द्रियैः दुःखेनापि जेतुं वशीकर्तुमशक्योऽहं आत्मवता मद्भक्तिप्रवणचित्तवता ते[2] त्वया जितोऽस्मि वशीकृतोऽस्मि। अतः किं तव दुस्साधमिति भावः ॥ २० ॥

---

1. T.W. Omit पञ्चभिः 2. B. Omits ते

**विज०** सर्वसमस्य हरेः वैषम्यं मयाऽऽपाद्यत इति बिभ्यदिव परिहरति - **नेति**। ब्रह्मणः पूर्णस्य सर्वात्मनः सर्वस्वामिनः ननु परा पूर्वेषां संख्या वृणक्तीत्यादि कथमित्यत्राह - समदृश इति। यथा वस्तुदर्शिनः स्वरूपसुखस्यानुभूतिरनुभवः पूर्णानन्दोऽहमिति यस्य स तथा तस्य अयमपि स्वपरबुद्ध्यभावे हेतुः, नन्वसुराणां दुःखोदयः सुराणां सुखोदयः इत्ययं विशेषः कस्मादत्राह संसेवयेति। उदयतीत्युदयः। अतोऽत्र जगतिविपर्ययो न विषमो नोदेति ॥६॥

येन व्यवसितेन क्रतुराजेन अनुभविष्यति स त्वयाऽनुवर्त्यते ॥७॥

न केवलं तवाभीष्टोऽयमृष्यादीनां सर्वेषामपि हृदयङ्गम इत्याह - **ऋषीणामिति** ॥८॥

तत्रेत्थंभावमाह - **विजित्येति**। सर्वसम्भारान् संभृत्य सम्पाद्य आहरस्व कुरुष्व ॥९॥

साम्प्रतं सर्वजयो दुश्शको नेति भावेनाह - **एत** इति। लोकपालांशैः सम्भवो येषां ते तथा, योऽहं अकृतात्मभिः अनुत्पादितमत्प्रसादैः ॥१०॥

**न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ।**
**विभूतिभिर्वा[1]ऽभिभवेद्देवोऽपि किमु पार्थिवाः[2] ॥११॥**

**श्रीशुक उवाच**

**निशम्य भगवद्गीतं प्रीतः[3] फुल्लमुखाम्बुजः ।**
**भ्रातॄन्दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान् ॥१२॥**

**सहदेवं दक्षिणस्यामादिशत्सहसृञ्जयैः ।**
**दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम् ।**
**प्राच्यां वृकोदरं मत्स्यैः[4] केकयैः सह मद्रकैः ॥१३॥**

**ते विजित्य नृपान्वीरान्[5] आजह्रु[6-]र्दिग्भ्य ओजसा[-6] ।**
**अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥१४॥**

**श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः ।**
**आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥१५॥**

---

1. M. Ma विभवैर्दे° 2. B.G.J. °यः । 3.M.Ma प्रीत्युत्फु° 4. M. Ma राजन् 5. B.G.J. °रा आ° 6- -6 M. Ma °र्दिव्य मञ्जसा

**श्रीध०** आस्तां तावदेवम्भूतस्य तव परैरभिभवशङ्का [1-]अकिञ्चनमपि[-1] मत्परं कोऽपि नाभिभवितुं प्रभवतीत्याह - **न कश्चिदिति**। तेजसा प्रभावेण। विभूतिभिः सैन्यादिसामग्रीभिः ॥११॥

**निशम्येति**। आयुङ्क्त नियुक्तवान्। विष्णोस्तेजसोपबृंहितान् संवर्धितान्। तेजोपबृंहितानिति सन्धिरार्षः ॥१२॥

**सहदेवमिति**। नकुलादीनां मत्स्यादिभिः सहायैर्यथासंख्येन सम्बन्धः ॥१३॥

**त इति**। कथम्भूताय? यक्ष्यते यागं करिष्यते ॥१४॥

**श्रुत्वेति**। आद्यो हरिः श्रीकृष्णः ॥१५॥

---

1. MI. V. किञ्च कमपि

**वीर०** आस्तां तावदेवम्भूतस्य [1]तव परैरभिभवशङ्का, यतोऽकिञ्चनमपि मत्परं कोऽपि नाभिभवितुं प्रभुरित्याह - **न कश्चिदिति**। मत्परं अहमेव परो यस्य तं मय्यासक्तचित्तमित्यर्थः। देवोऽपि तेजआदिभिः नाभिभवेत्, किमुत पार्थिवा नाभिभवेयुरिति,तत्र तेजः प्रभावः, श्रीः सम्पत्, विभूतयः सैन्यादिसमृद्धयः ॥११॥

**निशम्येति**। प्रीतः अत एव फुल्लं विकसितं मुखाम्बुजं यस्य सः। युधिष्ठिरः दिग्विजये निमित्ते विष्णोस्तेजसा उपबृंहितान् वर्धितान् भ्रातॄन् भीमादीन् प्रायुङ्क्त ॥१२॥

**सहदेवमिति**। सृञ्जयैस्सह दक्षिणस्यां [2]दिश्यादिशत् आज्ञापयामास, सव्यसाचिनमर्जुनं वृकोदरं भीमं मत्स्यादि-भिस्सह ॥१३॥

**त इति**। हे नृप ! यक्ष्यते यागं करिष्यमाणायाजातशत्रवे धर्मराजाय ते भ्रातरः भूरि बहु द्रविणं वित्तमाजह्रुः आहृत्य समर्पयामासुः ॥१४॥

**श्रुत्वेति**। जरासन्धमजितं श्रुत्वा नृपतेर्युधिष्ठिरस्य ध्यायत श्चिन्तयतस्ततः हरिः श्रीकृष्णो यमुपायमुद्धवो 'बलिनामपि चान्येषां भीमं समबलं विना' (भाग° 10-71-5) इति प्राह तमेवोपायं प्राह[3] ॥१५॥

---

1. T.W. Omit तव 2. K.T.W. दिश्याज्ञा° 3. B. आह

**विज०** भवतो दुर्जयत्वेन किमस्माकमिति तत्राह - **नेति**। मत्परं मद्भक्तं विभूतिभिः उपस्करसम्पद्भिः ॥११॥

विष्णोस्तेजसा प्रभावेण उपबृंहितान् परिपूरितान् ॥१२, १३॥

यक्ष्यते यष्टुकामाय ॥१४॥

अत्र दिग्विजये जरासन्धो जितो मारितो वेति तत्प्रसङ्गो नाकर्णित इति राज्ञो हार्दां शङ्कां परिहरन्निव दिग्विजयात् प्रागेव तद्वधो वृत्त इति नात्र प्रसक्त इति वृत्तं तद्धननमनुवदति - **श्रुत्वेति**। ननु दिशां जयादनन्तरं तद्वधः किं न स्यात् यथास्थितमन्यथानूद्यते किमर्थमिति चेन्न, निर्णयग्रन्थविरोधात्। ननु पूर्वापराभावे किं प्रमाणम्? किं प्रयोजनमिति चेदुच्यते "पूर्वाः कथाः परं ब्रूयुः पराः पूर्वं तथैव च। मोहनार्थाय दुष्टानां सर्वव्यत्यास इष्यते"॥ (शब्दनिर्णये) इत्यादिवाक्यं, किञ्च "जरासन्धं निहत्यैव पाण्डवैस्तु दिशो जिताः" (मात्स्ये) इत्यादि स्पष्टवचनम्। भगवत एव जरासन्धमजितं श्रुत्वा तज्जयः कथमिति ध्यायतो युधिष्ठिरस्य उद्धवोऽयमुपायमुवाच तमाह हरिरित्यन्वयः ॥१५॥

**भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिङ्गधरास्त्रयः[1] ॥**
**जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥१६॥**

**ते गत्वाऽऽतिथ्यवेलायां गृहेषु गृहमेधिनम् ।**
**ब्रह्मण्यं समयाचन्त[2] राजन्या ब्रह्मलिङ्गिनः ॥१७॥**

**राजन्विद्ध्यतिथीन् अस्मानर्थिनो[3] गृहमागतान्[4] ।**
**तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे ॥१८॥**

**किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः ।**
**[5] किमदेयं वदान्यानां कः परः समदर्शिनाम् ॥१९॥**

**योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ।**
**[6]नाचिनोति स्वयंकल्प[7]ः स वाच्यः शोच्य एव स[8]ः ॥२०॥**

1. K. M. Ma. Ml. V. °स्ततः 2. B.G.J. °चेरत्रा° 3. B.G.J. प्राप्ता 4. B.G.J. Ml.T.V.W. दूर 5. B.G.J.M.Ma किं न 6. K. Ml. T. V. W. न° 7. B.G.J. M. Ma °ल्पः 8. K.T.W. हि ॥

**श्रीध० भीमसेन** इति। ब्रह्मलिङ्गधरा ब्राह्मणलिङ्गधारिणः। यतो यत्र बृहद्रथसुतो जरासन्धः ॥१६॥

**ते** इति। गृहेषु वर्तमानं [1-]समयाचन्त सम्यग्याचितवन्तः, प्रार्थयामासुः इत्यर्थः[-1] ॥१७, १८॥

नन्विदं कामयामह इति विशेषो निर्दिश्यताम्, अन्यथा यस्य [2]स्वयंकल्पः पुत्रादेर्वियोगो दुस्सहः स कथं देयः,तथा राजमण्डनं किरीटाद्यदेयं यत्तद्भिक्षुभ्यः कथं देयं,तथातिरम्यं रत्नाभरणादि पुत्रादियोग्यं कथं परस्मै देयमिति चेदत आहुः - **किं दुर्मर्षमित्यादि**। [3]अत्र दृष्टान्तत्वेनार्थान्तरमाहुः - किमकार्यमिति। यथाऽसाधूनामकार्यं नास्ति तथा तितिक्षूणां दुर्मर्षं दुस्सहं नास्ति। वदान्यानामप्युदाराणामदेयं [4-]दातुमयोग्यं[-4] नास्ति। समदर्शिनां [5-]शत्रुमित्रादीन् समं पश्यतां[-5] परश्च नास्ति। अतः किं विशेषनिर्देशेनेत्यर्थः ॥१९॥

किञ्च अर्थिने धीरेण मुद्गलादिवत्प्राणा अपि न वञ्चनीया इत्याशयेनाहुः - **योऽनित्येनेति**। [6]नाऽचिनोति न सम्पादयति स वाच्यः स निन्द्यः ॥२०॥

1- -1 B.J. चेरन्। सम्यगयाचन्तेत्यर्थः। 2. B. Ml.V. Omit स्वयंकल्पः 3. B.J. अथ 4- -4 B.J. Omit 5- -5 B.J. Omit 6. B.J. न चि°

**वीर० भीमसेन** इति। ब्रह्मरूपधरा विप्रवेषधराः [1]त्रयः इन्द्रप्रस्थाद्गिरिव्रजं जग्मुः। हे तात! यतो यत्र बृहद्रथसुतो जरासन्ध आस्ते, तद्गिरिव्रजमिति सम्बन्धः ॥१६॥

**तमिति**। ब्रह्मलिङ्गिनः विप्रवेषिणः राजन्याः भीमादयो गृहेषु वर्तमानं तं जरासन्ध मयाचन्त ॥१७॥

याच्ञाप्रकारमेवाह - **राजन्निति** [2]चतुर्भिः। गृहं प्रत्यागतानस्मानर्थिनो विद्धि जानीहि, तत् नः अस्मभ्यं प्रयच्छ देहि, किं तत्? यद्वयं कामयामहे ते तुभ्यं भद्रं मङ्गलम् अस्तु ॥१८॥

ननु यत्कामयामह इति सामान्यतो निर्दिष्टं, न विशेषतः, तद्यदि दुस्सहमदेयं चेत् तत्कथं कामयध्वमित्यत

आहुः- **किमिति**। दुर्मर्षं दुस्सहं किं, न किमपीत्यर्थः। किमकार्यमसाधुभिः, कः परः समदर्शिनामिति च दृष्टान्तार्थम्। यथा असाधूनामकार्यं नास्ति, तथा तितिक्षूणां दुर्मर्षं नास्ति, यथा समदर्शिनां सर्वं ब्रह्मात्मकं पश्यतां परोऽन्यः, अब्रह्मात्मकस्वतन्त्रपदार्थो नास्ति, तथा अत्युदाराणामदेयं नास्तीत्यर्थः। किं विशेषनिर्देशेनेति भावः। वदान्यानां अर्थिने देहोऽपि देय एव इत्यभिप्रेतम् ॥१९॥

तदेव सहेतुकं व्यञ्जयन्तो विपर्यये निन्द्यतामाहुः - **य** इति। सतामिति कर्तरि षष्ठी। सद्भिः गेयं ध्रुवं शाश्वतं यशो यस्स्वयं समर्थस्सन् न चिनोति न सम्पादयति, स वाच्यः निन्द्य एव। अत एव शोच्यः, अहो किमस्य दौर्भाग्यमिति कृपालुभिश्शोच्य इत्यर्थः ॥२०॥

---

1. B.K. ततः 2. T.w. Omit चतुर्भिः

**विज०** हेति सूचितमितिहासं स्पष्टयति - **भीमसेन** इत्यादिना। ब्रह्मलिङ्गधराः ब्राह्मणलक्षणानि बिभ्राणाः यतो यत्र ॥१६॥

आतिथ्यवेलायां आतिथ्यपूजासमये आदित्ये दिनमध्यं गाहमान इत्यर्थः ॥१७, १८॥

दुर्मर्षं दुस्सहं, परः शत्रुः 'परोऽरि परमात्मनोः' इति ॥१९॥

अचिनोति सञ्चिनोति उपार्जितं करोति वाच्यो निन्द्यः ॥२०॥

**हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः ।**
**व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥२१॥**

**श्रीशुक उवाच**

**स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याऽहतैरपि ।**
**राजन्यबन्धून्विज्ञाय दृष्टपूर्वानचिन्तयत् ॥२२॥**

**राजन्यबन्धवो ह्येते ब्रह्मलिङ्गानि बिभ्रति ।**
**ददामि भिक्षितं[1] तेभ्य आत्मानमपि दुस्त्यजम् ॥२३॥**

बलेर्नु[2] श्रूयते कीर्तिर्विततता दिक्ष्वकल्मषा ।
ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥ २४ ॥
श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे ।
जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् ॥ २५ ॥

1. Ml. V. कामितं 2. K.T.W. °र्न

**श्रीध० हरिश्चन्द्र** इति। विश्वामित्रा[1]र्थानृण्याय हरिश्चन्द्रो भार्यात्मजादि सर्वं विक्रीय स्वयं चाण्डालतां प्राप्तोऽप्यनिर्विण्णः सहायोध्यावासिभिर्जनैः स्वर्गं गतः। रन्तिदेवः सकुटुम्बोऽष्टचत्वारिंशदहान्यलब्धो[2]दकोऽपि कथञ्चिल्लब्धान्नोदकाद्यर्थिभ्यो दत्वा ब्रह्मलोकं गतः। उञ्छवृत्तिः मुद्गलः षण्मासं सीदत्कुटुम्बोऽप्यातिथ्यदानेन ब्रह्मलोकं गतः। शिबिः शरणागतकपोत रक्षणाय स्वमांसं श्येनाय दत्वा दिवं गतः। बलिः सर्वस्वं ब्राह्मणवेषधारिणे [3]वामनाय हरये दत्वा तमेव आत्मसाच्चकार। कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्वा विमानेन दिवं गतः। व्याधस्तयोः सत्त्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्नि[4]निर्दग्ध देहो निष्कल्मषो दिवमारुरोह। एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं लोकं गता इति ॥ २१ ॥

**स्वैरैरिति**। ज्याहतैर्ज्याघातकिणाङ्कितैः दृष्टपूर्वान् द्रैपदी स्वयंवरादिषु ॥ २२, २३ ॥

**बलेरिति**। इन्द्रस्य श्रियं जिहीर्षता विप्रव्याजेन विष्णुना भ्रंशितस्यापि बलेः। नु अहो। नेति पाठे न श्रूयते किं, अपि तु श्रूयत इति ॥ २४ ॥

**श्रियमिति**। तं श्लाघते - विष्णवे इति। शुक्रेण वार्यमाणोऽपि। अत एव विष्णुरिति जानन्नपि ॥ २५ ॥

1. Ml.V. °त्राऽऽनृ 2. B. °ब्धान्नोद° 3. B. J. Omit वामनाय 4. B.J. Omit नि

**वीर०** अनित्यशरीरेण नित्ययशस्सम्पादनं किं क्वचित्प्रसिद्धम्? तत्राहुः - **हरिश्चन्द्र** इति। विश्वामित्रानृण्याय हरिश्चन्द्रो भार्यात्मजादि सर्वं विक्रीय स्वयं चण्डालतां प्राप्तोऽपि अनिर्विण्णः सह अयोध्यावासिभिर्जनैः स्वर्गं गतः। रन्तिदेवस्सकुटुम्बोऽष्टचत्वारिंशदहान्यलब्धान्नोदकोऽपि कथञ्चिल्लब्धान्नोदकादि अर्थिभ्यो दत्वा ब्रह्मलोकं गतः, उञ्छवृत्तिः मुद्गलष्षण्मासं सीदत्कुटुम्बोऽप्यातिथ्यदानेन ब्रह्मलोकं गतः। शिबिः शरणागतकपोतरक्षणार्थं स्वमांसं

श्येनाय दत्वा दिवं गतः, बलिः विप्रवेषाय विष्णवे सर्वस्वं दत्वा तमेवात्मसाच्चकार। कपोतश्चातिथये व्याधाय कपोत्या सह आत्ममांसं दत्वा विमानेन दिवं गतः। व्याधस्तयोस्सत्त्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्नि निर्दग्धदेहो निष्कल्मषो दिवमारुरोह, एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं यशस्सञ्चितवन्तः ॥ २१ ॥

**स्वैरिति**। इत्थमुक्त जरासुतः ज्याहतैः ज्याघातकिणाङ्कितैः प्रकोष्ठैः स्वैर्लिङ्गैः आकृतिभिश्च तान् अर्थिनः राजन्यबन्धून् विज्ञाय अनुमाय दृष्टपूर्वान् पूर्वं द्रौपदीस्वयंवरादिषु दृष्टान्विज्ञाय अचिन्तयत् ॥ २२ ॥

चिन्ताप्रकारमेवाह - **राजन्यबन्धव** इति चतुर्भिः। ब्रह्मलिङ्गानि विप्रवेषान् बिभ्रति दधति तथापि एतेभ्यः दुस्त्यजमात्मानं देहमपि भिक्षितं याचितं ददामि ॥ २३ ॥

**बलेरिति**। इन्द्रस्येन्द्रार्थं श्रियं हर्तुमिच्छता विप्रव्याजेन विष्णुनैश्वर्याद्भ्रंशितस्य त्याजितस्यापि बले वैरोचनस्य कीर्तिर्निर्दुष्टा दिक्षु व्याप्ता च न श्रूयते किम् सा अधुनाऽपि श्रूयत एवेत्यर्थः। तं श्लाघते - विष्णव इति। जानन्नपि वार्यमाणोऽपि, शुक्रेणेति शेषः। दैत्यराट् बलिः महीं प्रादात्[1] ददौ ॥ २४, २५ ॥

---

1. T.W. Omit प्रादात्

**विज०** अध्रुवेण शरीरेण ॥ २१-२३ ॥

श्रूयते किं श्रूयते? एवं हीति योज्यं, इन्द्रस्य श्रियं बलाज्जिहीर्षता हर्तुकामेन विष्णुना ऐश्वर्याद्भ्रंशितस्य ॥ २४ ॥

वार्यमाणः, शुक्रेणेति शेषः ॥ २५ ॥

**जीवता ब्राह्मणार्थाय कोन्वर्थः क्षत्रबन्धुना ।**
**देहेन पतमानेन नेहता विपुलं[1] यशः ॥ २६ ॥**

**इत्युदारमतिः प्राह कृष्णार्जुन वृकोदरान् ।**
**हे विप्रा! व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥ २७ ॥**

**श्रीभगवानुवाच**

**युद्धं नो देहि राजेन्द्र [2]द्वन्द्वशो[2] यदि मन्यसे ।**
**युद्धार्थिनो वयं प्राप्ता राजन्या [3]नान्नकाङ्क्षिणः ॥ २८ ॥**

**असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् ।**
**अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥२९॥**

**एवमावेदितो राजा जहासोच्चैः स्म मागधः ।**
**आह चामर्षितो मन्दा युद्धं तर्हि ददामि वः ॥३०॥**

---

1. K. विमलं 2- -2 MI.V. द्वन्द्वं त्वं 3. MI.V. नान्य°

**श्रीध० जीवतेति**। पतमानेन पतता क्षत्रबन्धुना देहेन ब्राह्मणार्थाय विपुलं यशो नेहता नेहमानेनासम्पादयता को नु अर्थः। न कोऽपीत्यर्थः ॥२६॥

इतीति। एवं निश्चित्याह - हे विप्रा इति ॥२७, २८॥

राजन्यतामेव प्रपञ्चयति - **असाविति** ॥२९, ३०॥

**वीर० जीवतेति**। पतमानेन विनङ्क्ष्यता क्षत्रबन्धुना देहेन ब्राह्मणार्थाय विमलं, विपुलमिति पाठान्तरम्। यशः कीर्तिं नेहता नेहमानेन असम्पादयता को न्वर्थः किं प्रयोजनं, न किमपीत्यर्थः ॥२६॥

**इतीति**। उक्तिमेवाह - हे विप्रा इति। वः युष्मभ्यम् आत्मनो मम शिरोऽपि ददामि ॥२७॥

इत्थमुक्तः प्राह श्रीभगवान् **युद्धमिति**। द्वन्द्वशो युद्धं द्वन्द्वयुद्धं देहि यदि मन्यसे इच्छसि तर्हि देहीति **सम्बन्धः**। वयं राजन्याः युद्धार्थिनः न त्वन्नकाङ्क्षिणो ब्राह्मणाः इत्यर्थः ॥२८॥

**असाविति**। असौ पार्थः पृथायाः पुत्रः [1]वृकोदरः भीमः तस्य वृकोदरस्य [2]भ्राता, (अयं अर्जुनः) अनयोः भीमार्जुनयोः मातुलस्यापत्यं मां कृष्णं तव रिपुं जानीहि ॥२९॥

**एवमिति**। उच्चैर्जहास, अमर्षितः क्रुद्धः प्राह च, उक्तिमेवाह - मन्दा इत्यादिना। हे मन्दाः! यदि यद्धं वाञ्छथ तर्हीत्यर्थः। वो युष्मभ्यं [3]ददामि ॥३०॥

---

1. B. Omits वृकोदरः 2. K.T.W. Omit भ्राता 3. K.T.W. Omit ददामि

**विज० यः क्षत्रबन्धुः** पतमानेन देहेन विपुलं यशो नेहता नेहते नापादयति तेन ब्राह्मणार्थाय जीवता क्षत्रबन्धुना कोऽन्यर्थो भवति, न कोपीति विचिन्त्य ॥२६, २७॥

द्वन्द्वशो युद्धं द्वन्द्वयुद्धम् ॥२८॥

वीप्सां त्रीन्प्रति स्पष्टयन् निर्दिशति - **असाविति** ॥२९, ३०॥

**न त्वया भीरुणा योत्स्ये युधि विक्लबचेतसा ।**
**मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥ ३१ ॥**

**अयं तु वयसाऽतुल्यो नातिसत्त्वो न मे समः ।**
**अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥ ३२ ॥**

**इत्युक्त्वा भीमसेनाय प्रदाय[1] महतीं गदाम् ।**
**द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः ॥ ३३ ॥**

**ततः [2-]समे खले[-2] वीरौ संयुक्ता[3]वितरेतरौ[4] ।**
**जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥ ३४ ॥**

**मण्डलानि विचित्राणि सव्यं दक्षिणमेव च ।**
**चरतोः शुशुभे युद्धं नटयो[5]रिव रङ्गिणोः ॥ ३५ ॥**

---

1. B.G.J. MI.V. प्रादाय ; M. Ma दत्वा स 2- -2 K.T.W. समे स्थले ; M.Ma समबलौ 3. M.Ma संसक्ता 4. K.T.W. °रम् । 5. K. गज°

**श्रीध० नेति** । यतो मद्भिया[1] समुद्रं शरणं गतः ॥ ३१ ॥

**अयमिति** । वयसाप्यतुल्यो नातिसत्त्वो नातिबलश्च न च देहेन मया समोऽतोऽर्जुनो योद्धा न भवेत् । भीमस्तु भवेत् । यतो मम तुल्यबलः इति ॥ ३२ ॥

**इतीति** । प्रादाय दत्त्वेत्यर्थः ॥ ३३ ॥

**तत इति** । समे खले युद्धाङ्गणे ॥ ३४ ॥

**मण्डलानीति** । मण्डलानि गदायुद्धगति भेदान् । सव्यं दक्षिणं च यथा भवति तथा । रङ्गिणो रङ्ग गतयोर्नटयोरिवेति निर्भयत्वे उपमा ॥ ३५ ॥

---

1. MI. V. मद्भयात्

**वीर०** त्वया सह न योत्स्ये, तत्र हेतुत्वेन विशिनष्टि - भीरुणा युधि युद्धे विक्लबम् अधृष्टं चेतो यस्य तेन, एतदेव स्मारयति - मधुरामिति ॥ ३१ ॥

**अयं त्विति** । अयं वयसा अतुल्य इति च्छेदः । अयमर्जुनस्तु वयसा न तुल्यः, किन्त्ववमः[1] नातिसत्त्वः अनतिबलश्च, अतो न मम समः, अतश्च योद्धा न भवेत्, भीमस्तु मम तुल्यबलः तेनैव सह योत्स्य इति भावः ॥ ३२ ॥

**इतीति** । महतीं गुर्वीं गदां प्रदाय दत्वा पुराद्बहिर्निर्जगाम ॥ ३३ ॥

**तत इति** । समे निम्नौन्नत्यरहिते स्थले युध्दाङ्गणे संयुक्तावायत्तौ[2] वीरौ मागधभीमसेनौ रणे दुष्टो मदो ययोस्तौ जघ्नतुः ॥ ३४ ॥

सव्यं दक्षिणं च यथा भवति तथा मण्डलानि गदायुद्ध गतिभेदाननुचरतोः[3] युद्धं शुशुभे, रङ्गिणोः रङ्गगतयोः गजयोरिवेति, नटयोरिति पाठे निर्भयत्वे दृष्टान्तः ॥ ३५ ॥

---

1. B. ॰न्त्वपटुः 2. B. ॰क्तौ वी॰ 3. T.W. Omit गति

**विज०** अतुल्यः नातिसत्वः न प्रशस्तपराक्रमः ॥ ३१-३४ ॥

रङ्गिणोः रङ्गगतयोः मण्डलं वल्गतोर्वा ॥ ३५ ॥

**ततश्चटचटाशब्दो वज्र निष्पेषसन्निभः ।**
**गदयोः क्षिप्तयो राजन्दन्तयोरिव दन्तिनोः ॥ ३६ ॥**

**ते वै[1] गदे भुजबलेन[2] निपात्यमाने अन्योन्यतोंस[3] कटिपाद करोरुजत्रून् ।**
**चूर्णी बभूवतुरुपेत्य यथार्कशाखे संयुध्यतो द्विरदयोरिव दीप्तमन्व्योः[4] ॥ ३७ ॥**

**इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयः[5]सदृशै[6]रपिष्टाम् ।**
**शब्दस्तयोः प्रहरतोरिभयोरिवासी न्निर्घात वज्र परुषस्तलताडनोत्थः ॥३८ ॥**

**तयोरेवं प्रहरतोः समशिक्षाबलौजसोः ।**
**निर्विशेषमभूद्युद्धमक्षीण बलयो[7]र्नृप ॥३९ ॥**

**शत्रोर्जन्ममृती विद्वाञ्जीवितं च जराकृतम् ।**
**पार्थमाप्याययन्स्वेन तेजसाऽचिन्तयद्धरिः ॥ ४० ॥**

---

1.B.G.J.M.Ma °जवेन 2. K. निहन्य° 3. M.Ma °योः सकटि° 4. M.Ma °सन्ध्योः । 5. B.G.J.M.Ma स्पर्शे 6.M.Ma °र्व्यपि° 7. B.G.J.M.Ma जय°

★ These following two verses are found only in B.G.J. Edns. between 39 and 40 slokas. "एवं तयोर्महाराज युध्यतोः सप्तविंशतिः । दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः" ॥ "एकदा मातुलेयं वै प्राह राजन् वृकोदरः । न शक्तोऽहं जरासन्धं निर्जेतुं युधि माधव" ।

**श्रीध० तत** इति । चटचटेति गदयोः परस्पराघातशब्दानुकारणम् । वज्रस्य निष्पेषः पातस्तत्सदृशः । युध्यतोर्दन्तिनोः[1] दन्ताघात शब्द इव शुशुभे ॥ ३६ ॥

**ते** इति । असंकट्यादीनुपेत्य । दीप्तो मन्युः ययोस्तयोः द्विरदयोः गजयोरर्क शाखाभ्यां समं युध्यतोस्ते यथा चूर्णीभवतस्तद्वत् ॥ ३७ ॥

**इत्थमिति** । अपिष्टां चूर्णी चक्रतुः ॥ ३८ ॥

**तयोरिति** । शिक्षा अभ्यासः, बलं सत्त्वम्, ओजः प्रभावः, समानि तानि ययोस्तयोः ॥ ३९ ॥

**शत्रोरिति** । जन्म शकलरूपं, मृतिः पुनः शकलीभावः ते विद्वान् जानन् । जरा नाम राक्षसी तत्कृतम् । अचिन्तयत् कथमसौ शकलीभवेदिति ॥ ४० ॥

---

1. Ml.v. °ध्यमानयो र्द°

**वीर० ततश्चेति** । चटचटेति गदयोः परस्पराघातशब्दानुकरणम्, वज्रस्याशनेः निष्पेषः निष्पातः तत्सदृशः, युध्यतोः दन्तिनोः गदयोः दन्ताघातशब्द इव शुशुभे ॥ ३६ ॥

**ते वा** इति । अन्योन्यतः परस्परं भुजबलेन निहन्यमाने ते गदे अंसादीनुपेत्य चूर्णीबभूवतुः, तत्र अंसः स्कन्धः, दीप्तो मन्युः ययोस्तयोः गजयोरर्कशाखाभ्यां संयुध्यतोस्ते यथा चूर्णीभवतः, तद्वत् ॥ ३७ ॥

**इत्थमिति** । अयस्सदृशैः कृष्णायसवन्निष्ठुरैः मुष्टिभिः गदयोरपिष्टां चूर्णीचक्रतुः गदयोरिति कर्मणश्शेषत्वविवक्षया षष्ठी, प्रहरतोरित्यत्र करणस्य कर्तृत्व विवक्षायां लटश्शत्रादेशः, "उगितश्च" (अष्टा 4-1-4)इति ङीप् अभाव आर्षः

प्रहरतोर्भीममागधयोः ये गदे तयोरिति, गजयोरिव मुष्टिभिः प्रहरतयोस्तयोः भीममागधयोः करतलताडनादुत्थ उत्पन्नश्शब्दः निर्घातवज्रपरुषः वज्रनिर्घातवत्पुरुष आसीत्। निर्घातशब्दस्य पूर्वनिपात आर्षः ॥३८॥

**तयोरिति**। शिक्षा अभ्यासः बलं सत्त्वम् ओजः प्रभावः समान्येतानि ययोः तयोः अक्षीण बलयोः युद्धं निर्विशेषं निरुपममासीत् ॥३९॥

**शत्रोरिति**। हरिः शत्रोः जरासन्धस्य जन्म शकलरूपं मृतिः पुनश्शकलीभावः ते, जरा नाम राक्षसी तत्कृतं जीवितं च विद्वान् जानन् स्वेन तेजसा पार्थं भीममाप्याययन् उपबृंहयन् अचिन्तयत् कथमसौ शकलीभवेदिति ॥४०॥

**विज०** अन्योन्ययोः परस्परसङ्गतयोः सकटिपादकरोरुजत्रून्प्रति निपात्यमाने अर्कस्य गुल्मस्य शाखे दीप्तसन्ध्योः प्रकाशितसन्धिस्थानयोः ॥३६, ३७॥

अयस्स्पर्शैः स्वमुष्टिभिः व्यपिष्टां विपेषतुः जघ्नतुरित्यर्थः। प्रहृतयोः सतोः निर्घातवज्रवन्निष्ठुरः ॥३८, ३९॥

जरया राक्षस्या कृतशरीरशकलसन्धानात् जन्म तद्विघटनान्मरणं च जानन् ॥४०॥

**सञ्चिन्त्यारिवधोपायं भीमस्यामोघदर्शनः।**
**दर्शयामास विटपं पाटयन्निव संज्ञया ॥४१॥**

**तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः।**
**गृहीत्वा पादयोः शत्रुं पातयामस भूतले ॥४२॥**

**एकं पादं पदाक्रम्य दोर्भ्यामन्यं प्रगृह्य सः।**
**गुदतः पाटयामास शाखामिव महागजः[1] ॥४३॥**

**एकपादोरु वृषण कटिपृष्ठस्तनांसके।**
**एकबाह्वक्षि भ्रूकर्णे शकले ददृशुः प्रजाः ॥४४॥**

**हाहाकारो महानासीन्निहते मगधेश्वरे।**
**पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ॥**
**★ कृष्णेन च परिरब्धो विरुजोऽभूद्वृकोदरः ॥४५॥**

**सहदेवं तत्तनयं भगवान्भूतभावनः ।**

**अभ्यषिञ्चदमेयात्मा मगधानां[2] पतिं प्रभुः ॥**

**मोचयामास[3] राजन्यान्संरुद्धा मागधेन ये[4] ॥ ४६ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां

श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां

दशमस्कन्धे उत्तरार्धे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

1. M.Ma T.W. °तन्नजः । ★ This half verse is not found in G.J.M.Ma MI.V. Edns. It is commented by veera raghava only. 2. M.Ma माग° 3. M.Ma. MI.V °क्ष° 4. MI.V. सः

**श्रीध० सञ्चिन्त्येति** । विटपं शाखाम् । करेण विटपं गृहीत्वा हरिर्भीमस्य यथाहं विटपं पाटयामि तथा त्वमेनं विपाटयेति संज्ञया सङ्केतेनारिवधोपायं दर्शयामासेत्यर्थः ॥ ४१ - ४३ ॥

**एकपादेति** । एकैकः पादादिः ययोः ते शकले ॥ ४४, ४५ ॥

दुर्वृत्तत्वादसौ हतोः, न तु राज्याभिलाषेणेति दर्शयन्नाह - **सहदेवमिति** ॥ ४६ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

**वीर० सञ्चिन्त्येति** । विटपं शाखान् करे गृहीत्वा हरिर्भीमस्य यथा विटपं पाटयामि, तथा त्वमेनं पाटयेति संज्ञया सङ्केतेन अरिवधोपायं दर्शयामासेत्यर्थः ॥ ४१ ॥

**तदिति** । तत्साङ्केत्यं विदित्वा [1-]शत्रुं जरासन्धम्[-1] ॥ ४२ ॥

**एकमिति** । पदा पादेन आक्रम्य दृढमवष्टभ्य अन्यं पादं दोर्भ्यां हस्ताभ्यां प्रगृह्य महागजश्शाखामिव गुदत आरभ्य पाटयामास विदारयामास ॥ ४३ ॥

**एकेति** । एकैकः पादादिर्ययोः तयोस्ते शकले ददृशुः ॥ ४४ ॥

**हाहाकार** इति। मगधेश्वरे निहते सति [1] [2] जयाच्युतौ भीमं परिरभ्यालिङ्ग्य पूजयामासतुः बहुमन्येताम्, श्रीकृष्णेन परिरब्धः आलिङ्गितः हेतुगर्भमिदम्। विरुजः विगतग्लानिः बभूव ॥४५॥

दुर्वृत्तत्वादसौ मागधो हतः, न राज्याभिलाषणेति दर्शयन्नाह - **सहदेवमिति**। अमेयात्मा अपरिच्छेद्य स्वरूपस्वभावः भूतानि लोकान् भावयति अभ्युदयतीति तथा हेतुगर्भमिदम्। अतस्तत्तनयं जरासन्धतनयं सहदेवाख्यं मगधानां देशानां पतिमभ्यषिञ्चत् तेषामधिपतिं चकारेत्यर्थः। ततो मागधेन [3] ये [4] संरुद्धास्तान् राजन्यान्मोचयामास ॥४६॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्री वीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां द्विसप्ततितमोऽध्यायः ॥७२॥

---

1- -1 T.W. Omit 2. T.W. add वि 3. T.W. Omit ये 4. B. सन्निरु° ; T.W. निरु°

**विज०** भीमस्यारिवधोपायं संज्ञया दर्शयामास। केयं संज्ञयेत्याह - **विटपमिति** ॥४१-४६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

दशमस्कन्धे उत्तरार्धे द्विसप्ततितमोऽध्यायः ॥७२॥



# त्रिसप्ततितमोऽध्यायः

## (विजयध्वजरीत्या एकाशीतितमोऽध्यायः)

### श्रीशुक उवाच

अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः ।
[1-]ते निर्गता[-1] गिरिद्रोण्यां मलिना[2] मलवाससः ॥ १ ॥

क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ।
ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥ २ ॥

श्रीवत्साङ्कं चतुर्बाहुं [3-]पद्मगर्भारुणेक्षणम्[-3] ।
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ ३ ॥

पद्महस्तं गदाशङ्ख रथाङ्गैरुपलक्षितम् ।
किरीटहारकटककटिसूत्राङ्गदा[4]न्वितम् ॥ ४ ॥

भ्राजद्वरमणिग्रीवं नि[5]वीतं वनमालया ।
पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ ५ ॥

जिघ्रन्त इव नासाभ्यां [6-]रम्भन्त इव[-6] बाहुभिः ।
प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥ ६ ॥

---

1--1 M, Ma विनिर्गता 2.M, Ma °नो 3--3 k,M, Ma ,T,W पत्रनिभेक्षणम् ;Ml, V पत्रायतेक्षणम् 4.B,G,J °चि° 5.Ml, V वीतश्च 6--6 M, Ma ईहन्त इव चेतसा

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ततस्त्रिसप्ततितमे मोचयित्वा नृपान्हरिः। राजार्हभोगैः स्वान्देशान् प्रस्थाप्य पुनरागमत् ॥

अत्युग्रबद्धजरासन्धवधात्तद्बद्धभूपतीन्। विमोक्ष्यकृपया कृष्णो निजरूपमदर्शयत् ॥

**अयुत** इति। ये निर्जिता जरासन्धेन निरुद्धाश्च गिरिद्रोण्यां ते ततो निर्गतास्सन्तो घनश्यामं ददृशुरित्युत्तरेणान्वयः ॥ १ ॥

**क्षुधिति**। क्षुधा क्षामाः कृशाः संरोधेन परिकर्शिताः क्लेशिताः ॥ २ - ४॥

**भ्राजदिति** भ्राजन् भ्राजमानो वरमणिः कौस्तुभो यया सा ग्रीवा यस्य तं, [1]निवीतं कण्ठलम्बितया व्याप्तं, **पिबन्त** इव इत्यादीनां हरेः पादयोः प्रणेमुरित्युत्तरेणान्वयः ॥ ५ ॥

जिघ्रन्त इति । रम्भन्तः परिरम्भमाणा इव ॥ ६ ॥

1. B,J वीतं

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

न केवलं मोचयामास, अपि च तैः [1]संस्तुतस्तान् बहुमानयामास चेत्याह -त्रिसप्ततितमेन अयुते इत्यादिना। द्वे **अयुते** अष्टौ शतानि च ये राजन्या युद्धे जरासन्धेन [2-]लीलया अनायासेन[-2] निर्जिताः गिरिद्रोण्यां सन्निरुद्धाश्च ते ततो निर्गतास्सन्तः घन इव श्यामं श्रीकृष्णं ददृशुरित्युत्तरेणान्वयः। कथम्भूताः? मलिनाः अभ्यङ्गोन्मर्दनस्नानाद्यभावात् [3]मलानि मलिनानि वासांसि येषां ते ॥ १ ॥

क्षुधा क्षामाः कृशाः शुष्काणि वदनानि येषां ते संरोधेन परिकर्शिताः क्लेशिताः ॥ २ ॥

कथम्भूतम्? श्रीवत्सोऽङ्कश्चिह्नं यस्य, चारु सुन्दरं प्रसन्नञ्च वदनं यस्य, स्फुरती मकराकारे कुण्डले यस्य, पद्मं रेखात्मकं हस्ते यस्य तं, तथा गदादिभिः उपलक्षिते [4-]स्वासाधारणैः धृतपद्मादिभिः चतुर्भिः बाहुभिः उपलक्षितं यथा किरिटादिभिराचितं युक्तम्[-4] ॥ ३, ४ ॥

भ्राजमानो वरमणिः कौस्तुभो ग्रीवायां यस्य तं, वनमालया निवीतं कण्ठलम्बितया व्याप्तम् ॥ ५ ॥

पिबन्त इवेत्यादीनां हरेः पादयोः प्रणेमुरित्युत्तरेणान्वयः। चेतसा रम्भन्त इव परिरम्भमाण इव, हरन्त इवेति पाठान्तरम्। इत्थं तेषां भगवति प्रेमातिशयः प्रदर्शितः ॥ ६ ॥

1. K.T.W. Omit सं 2- -2 T.W. Omit 3. T.W. मलानि 4- -4 K.T.W. Omit

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

जरासन्धरोधादिलक्षणतपसा प्रसन्नो भगवान् यज्ज्ञानसाध्यं स्वरूपं दर्शितवान् तदुपासकानां भक्त्यतिशय जननार्थं कृतमिति कृत्वा तन्माहात्म्यं कथयति अस्मिन्नध्याये। तत्रादौ तत्संख्यां निर्दिशति - अयुतेति। गिरिद्रोण्यां निरुद्धाः ततो विनिर्गताः ॥ १-४ ॥

निवीतं पर्यासितम् ॥ ५ ॥

चेतसा आलिङ्गनार्थमीहन्तः चेष्टमाना इव ॥ ६ ॥

**कृष्णसन्दर्शनाह्लादध्वस्तसंरोधनक्लमाः[1]।**
**प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ॥ ७ ॥**

**राजान ऊचुः**

**नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ।**
**प्रपन्नान् पाहि नः कृष्ण निर्विण्णान् घोरसंसृतेः ॥ ८ ॥**
**नैनं[2] नाथाभ्यसूयामो[3] मागधं मधुसूदन ।**
**अनुग्रहो यद्भवतो[4] राज्ञां राज्यच्युतिर्विभो[5] ॥ ९ ॥**
**राज्यैश्वर्यमदोन्नद्धो[6] न श्रेयो विन्दते नृपः ।**
**त्वन्मायामोहितोऽनित्या[7] मन्यते[8] सम्पदोऽचलाः[9] ॥ १० ॥**

---

1. K श्रमाः। 2. M,Ma नैव 3. B G.J. °न्व° 4. K.T.W. °ता 5.K.T.W. °तिः प्रभो 6. M,Ma °द्धा° 7. M.Ma °ताःनि° 8. M,Ma °न्ते° 9. M,Ma °दश्चलाः

**श्रीध० कृष्णेति**। कृष्णसन्दर्शनाह्लादेन ध्वस्तः संरोधनक्लमो येषां ते ॥७॥

**नमस्ते** इति।संरोधाद्रक्षितान् अस्मान्। घोरायाः संसृतेरपि पाहि मोचय ॥८॥

ननु भवन्तो जरासन्धासूयाविष्टा इहामुत्र भोगासक्ताश्च कथं संसृतेर्मोचनीया इत्याशङ्क्य सम्प्रति न वयं तथाभूता इत्याहुः - **नैनमित्यष्टभिः**। हे नाथ! वयमेनं नान्वसूयामः,[1]अमुं दोषदृष्ट्या न पश्यामः कुत इत्यत आहुः अनुग्रह इति, यद्यस्मात् ॥९॥

एतदेव व्यतिरेकेणोपपादयन्ति - **राज्यैश्वर्येति**। राज्यैश्वर्याभ्यां मदस्तेन उन्नद्धः उच्छृङ्खलो नित्या अचलाश्च सम्पदः मन्यते। यद्वा, अनित्यास्सतीरचलाः शाश्वतीर्मन्यते ॥ १० ॥

1. B. J अन्वनु

**वीर०** कृष्णसन्दर्शनाद्य आह्लादः तेन ध्वस्तः संरोधनज[1]श्श्रमो येषां ते नृपा बद्धाञ्जलयः प्रशशंसुः तुष्टुवुः ॥ ७ ॥

प्रशंसामेवाह- **नमस्त** इत्यादिभिः नवभिः। देवानां देवो ब्रह्मा, तस्यापीश, अनेन परत्वमुक्तम्। प्रपन्नार्ति हरेत्यनेन वात्सल्यम्। हे अव्यय, विकाररहितेत्यनेन रागद्वेषादिराहित्यं, समत्वं सर्वभूत सुहृत्त्वञ्च। कृष्णेत्यनेन भक्तानां सुखापादनायावतीर्णत्वम्। प्रपन्नान्[2]नः पाहीत्यनेन गोप्तृत्ववरणम्। ननु भवन्तो बन्धाद्विमोचिताः सुख्यन्तु, किमर्थमधुना मां प्रपद्यन्ते, इत्यत आत्मनो विशिंषन्ति, घोरसंसृतेः [3-]घोरायाः संसृ[-3]तेः निर्विण्णाः, अतस्संसृतेरपि भवान् पातु इत्येतदर्थं प्रपन्ना इत्यर्थः ॥ ८ ॥

ननु भवन्तो जरासन्धासूयाविष्टाः विषयभोगलालसाश्च कथं संसृतेर्निर्विण्णाः, इत्याशङ्क्य अधुना न वयं तथाभूता इत्याहुः - **नैन**मित्यष्टभिः। हे नाथ! हे मधुसूदन! एनं मागधं नाभ्यसूयामः, अस्मिन्दोषान्नाविष्कुर्मः, किन्तु गुणानेवेति भावः। कुत इत्याहुः- अनुग्रह इति। हे विभो! यत् यस्मात् राज्ञामस्माकं राज्याच्च्युतिः [4]भ्रंशः भवताऽनुग्रहः जरासन्धमुखेन भवता कारितोऽनुग्रह एव इत्यर्थः ॥ ९ ॥

कथं राज्यच्युतेरनुग्रहरूपता इत्यत आहुः - **राज्येति**। राज्यैश्वर्याभ्यां यो मदः, तेन उन्नद्धः उच्छृङ्खलः श्रेयो न विन्दते न लभते। किन्तु तव मायया मोहितः अनित्याश्चला अपि सम्पदः भोग्यभोगोपकरणादिसमृद्धीः अचलाः शाश्वतीः मन्यते। एवं मन्यमानोऽन्ततः स्थावरतां [5]यातीति भावः ॥ १० ॥

1. B omits जः 2. K,T,N omit नः 3- -3. K,T,W omit 4. B. omits भ्रंशः 5. K,T,W ए°

**विज०** राज्यच्युतिः कथमनुग्रहोऽभूदित्यत्राह - **राज्येति**। कुतो न विन्दते इति तत्राह - त्वन्मायामोहिता इति। चलाः क्षणिकाः सम्पदः, नित्याश्शश्वद्रूपा मन्यन्ते, यत्तस्मात् ॥ ७-१० ॥

**मृगतृष्णां यथा बाला मन्यन्त उदकाशयम् ।**
**एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते॥ ११ ॥**

**वयं पुरा श्रीमदनष्टदृष्टयो[1] जिगीषयाऽस्या[2] इतरेतरस्पृधः ।**
**घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं [3-]पुरस्त्वाऽविगणय्य[-3] दुर्मदाः ॥ १२ ॥**

**त एव कृष्णाऽद्य गभीररंहसा दुरन्तवीर्येण विचालिताः श्रियः ।**
**कालेन तन्वा भवतोऽनुकम्पया विनष्टदर्पाश्चरणौ स्मराम[4] ते ॥ १३ ॥**

**[5]अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत् पतता रुजां[6] भुवा ।**
**उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥ १४ ॥**

**तं नस्समादिशोपायं[7] येन ते चरणाब्जयोः ।**
**स्मृतिर्यथा न विरमेदपि संसरतामिह ॥ १५ ॥**

**कृष्णाय वासुदेवाय हरये परमात्मने ।**
**प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ १६ ॥**

---

1. M, Ma, Ml, V बुद्ध° 2. M, Ma °हीर्ष° 3- -3 M, Ma मृत्युं परन्त्वामगणय्य ; K, T, W पुरस्तादविगणय्य 4. K. नमाम ते ; M, Ma स्मराम हे 5. K, T, W अतो 6. M, Ma रजो 7. Ml, V °स्त्व°

**श्रीध०** किञ्च अवस्तुवस्तुतया पश्यन्तीत्याहुः **मृगतृष्णामिति**। वैकारिकीं सृष्ट्यादि[1] विकारापन्नां अयुक्ता अविवेकिनः ॥ ११ ॥

राज्यस्य योगवियोगयोरनर्थावहत्वमस्मास्वेव[2] दृष्टमित्याहुः- **वयमिति** द्वाभ्याम्। श्रीमदेन नष्टा दृष्टिर्येषां[3] ते अस्याः पृथिव्याः इतरेतरस्पृधः परस्परं स्पर्धमानाः पुरःपुरतः त्वा त्वां मृत्युमविगणय्य पुरा ये दुर्मदा वयम् ॥ १२॥

**त** इति। हे कृष्ण ! त एव वयमद्य विनष्टदर्पाः ते चरणौ स्मरामः स्मर्तुमाशास्महे। कथम्भूताः ? भवतः तन्वा मूर्त्या कालेन श्रियो विचलिता विभ्रंशिताः, अतो राज्यच्युतिः भवदनुग्रह एवेत्यर्थः ॥ १३ ॥

**अथो** इति। अत एव अथोऽनन्तरं [4-]मृगतृष्णिकया रूपितं सदृशं[-4] राज्यं शश्वत्पतता प्रतिक्षणं क्षीयमाणेन तथा रुजां रोगाणां भुवा जन्मक्षेत्रेण देहेनोपासितव्यं सेव्यं न स्पृहयामहे, प्रेत्य परलोके च क्रियाफलं स्वर्गादिभोगमुपासितव्यं[5] न स्पृहयामहे। कथम्भूतम् ? कर्णयोः रोचनं रुचिजनकमात्रं तत्र गतस्य स्पर्धाद्यनपगमेन सुखाभावादित्यर्थः ॥ १४ ॥

यद्येवम्भूता यूयं तर्हि मम चरणौ स्मरत, ततोऽनायासेन मुक्तिर्भविष्यतीति, किं मदपेक्षयेति चेदत आहुः - **तं न** इति। त्वच्चरणस्मृतिरपि त्वत्प्रसादफलमेवेत्यर्थः ॥ १५, १६ ॥

---

1.MI, V शब्दादि° 2. B, J °रनर्थार्थाव° 3. MI, V बुर्दाध 4- -4 B, J मृगतृष्णिसदृशं 5. MI, V भोज्य

**वीर०** त्वन्मायामोहितः शाश्वतीर्[1]मन्यत इत्येतदेव सदृष्टान्तमुपपादयन्ति -**मृगतृष्णामिति** मृगतृष्णा मरीचिका। तामुदकाशयं जलाशयं नदीतटाकादिरूपं मन्यन्ते। तथाऽयुक्ताः अविवेकिनो नृपाः वैकारिकीं मायां [2-]स्रक्चन्दनादि[-2] [3-]शब्दादिविकारात्मिकां[-3] प्रकृतिं वस्तु चक्षते। प्रकृतिपरिणाम[4]रूपभोग्यं [5]नित्यं मन्यन्त इत्यर्थः। अतथाभूतायाः तथात्वावभासे दृष्टान्तः ॥ ११ ॥

तदेवं राज्यादियोगवियोगात् अनर्थावहत्वमुक्तं, तदेतदस्मास्वेव दृष्टमित्याहुः - **वयमिति** द्वाभ्याम्। अस्या भूमेः जिगीषया परस्परं स्पर्धमानाः अतिनिर्घृणाः नितरां निष्कृपाः वयं पुरस्तात् पुरोवर्तिनमित्यर्थः। मृत्युमविगणय्य प्रजाः घ्नन्तः पुरा ये दुर्मदाः ॥ १२ ॥

ते वयमद्य हे कृष्ण ! गम्भीरं रंहः वेगो यस्य दुरन्तमपारं वीर्यं प्रभावो यस्य तेन भवतः तन्वा शरीरभूतेन कालेन विचलिता भ्रंशिता श्रीर्येषां ते तथाभूताः भवतोऽनुकम्पया हेतुभूतया विनष्टो दर्पो येषां ते तव चरणौ निरतिशय पुरुषार्थभूतौ नमाम नतिपूर्वकं शरणः प्राप्ताः स्मेत्यर्थः ॥ १३ ॥

**अत** इति। राज्यादियोगायोगयोः एवंविधत्वात् शश्वत्सदा रुजां रोगाणां भुवा उत्पत्तिस्थानभूतेन पतता पतिष्य[6]माणेन देहेन [7-]मृगतृष्णारूपितं[-7] मृगतृष्णात्वेन निरूपितं, तत्तुल्यमित्यर्थः। राज्यं नोपासितव्यं न सेवितव्यम्। अनेन आत्मनामैहिकविषयविरागः आविष्कृतः। तथा हे विभो ! कर्णयोः श्रोत्रयोरेव रोचनं प्रीत्यावहम् "अपामसोमममृता अभूमः स एवैनं भूतिं गमयति" (अथ.शिखा ३-२) इत्याद्यर्थवादैः श्रुतिसुखमात्रावहं न त्वनुभवदशायां पतनभयशङ्कास्पदत्वेन दुःखमिश्रत्वादिति भावः। प्रेत्य लोकान्तरं प्राप्य, अनुभूयेति शेषः। क्रियायाः श्रौतस्मार्तरूपायाः फलं स्वर्गादिरूपं न स्पृहयामहे ॥ १४ ॥

तर्हि किं स्पृहयध्वे ? इत्यत्र तदाविष्कुर्वन्तः तदनुगृहाणेति विज्ञापयन्ति तदिति। तत्तस्मात्सकलविषयविरक्त त्वात् नोऽस्माकं तम् इति च्छेदे तम् उपायं समादिश देहि। कोऽसौ ? येनोपायेन अस्माकमिह प्रकृतिमण्डले संसारतामपि यथा तव चरणाब्जयोर्विषयभूतयोः स्मृतिः न विरमेत्, न विच्छिन्ना भवति तथा अनुगृहाणेत्यर्थः ॥ १५ ॥

एवं स्वाभिप्रायमाविष्कृत्य तन्निष्पत्तिनिदानभगवत्प्रसादनोपायोऽञ्जलिरेवेत्येभिप्रयन्तः मन्त्रविशेषेण नमस्कुर्वन्ति - **कृष्णायेति**। प्रणतानां प्रणतिमात्रं कुर्वतां क्लेशं नाशयतीति तथा, तस्मै ॥ १६ ॥

---

1. K. अनित्या 2- -2 K,T,W omit 3--3 K omits 4.B omits रूपं 5. B omits नित्यं 6. K,T,W °ष्यता 7- -7 K,T,W omit

**विज०** एतमर्थं निदर्शयति - मृगतृष्णामिति। मृगतृष्णां अम्बरप्रदेशसंसृष्टदिवाकरकरनिकरं दृष्ट्वा उदकाशयं जलाधारं जलपूरमित्यर्थः। एवमयुक्ताः मनोयोगाकुशलाः अज्ञाः वैकारिकीं विकारोपेतां अनित्यां मायां 'गो अश्वमहिमेत्याचक्षते' इति श्रुतेर्महिमानं सम्पल्लक्षणं वस्तु प्रतिहतिरहितं नित्यं चक्षते पश्यन्ति ॥ ११ ॥

अस्याः जगत्याः ये वयं पुरःस्थितं मृत्युं त्वामगणय्य स्थिताः ॥ १२ ॥

ते च वयं कालेन श्रियो विचलिता अभूम। तत्तस्मात् भवतोऽनुकम्पया चरणौ स्मरामहे ॥ १३ ॥

रजोभुवा रजोगुणोत्पन्नेन शश्वत्पतता देहेन राज्यं नोपासितव्यमिति स्पृहयामहे। प्रेत्य यत्क्रियाफलं स्वर्गादिकं तदपि न कामयामहे । कीदृशं कर्णरोचनं श्रवणसुखजनकमापातरमणीयमित्यर्थः ॥ १४ ॥

येनोपायेन ॥ १५-१६ ॥

**श्रीशुक उवाच**

**संस्तूयमानो भगवान् राजभिर्मुक्तबन्धनैः ।**
**तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥ १७ ॥**

**श्रीभगवानुवाच**

**अद्य प्रभृति [1-] वो भूपाः [-1] मय्यात्मन्यखिलेश्वरे।**
**सुदृढा जायते भक्तिर्बाढ[2]माशंसितं तथा ॥ १८ ॥**

**दिष्ट्या व्यवसितं भूपा भवन्त [3]ऋतभाषिणः ।**
**श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥ १९ ॥**

**हैहयो नहुषो वेनो रावणो नरकोऽपरे ।**
**श्रीमदाद्भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः ॥ २० ॥**

**[4-] भवन्त एतद्वि[-4]ज्ञाय देहाद्युत्पाद्यमन्तवत् ।**
**मां [5]यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ ॥ २१ ॥**

सन्तन्वन्तः प्रजातन्तून् सुखं दुःखं भवाभवौ ।
प्राप्तं प्राप्तञ्च सेवन्तो मच्चित्ता विचरिष्यथ ॥ २२ ॥

1--1 M, Ma भूपालाः 2. B माशा° 3. K, T, W भूत° 4--4 M, Ma सञ्चिन्तयत वि° 5. MI, V भ°

**श्रीध० संस्तूयमानेति**। श्लक्ष्णया मञ्जुलया ॥ १७ ॥

**अद्येति** यथा भवद्भिराशंसितं तथा बाढं निश्चितं वो मयि भक्तिः जायते जायतामित्यर्थः ॥ १८ ॥

**दिष्ट्येति**। हे भूपाः ! मद्भजनमेव कर्तव्यमिति भवद्भिर्व्यवसितं सङ्कल्पितं दिष्ट्या भद्रं भवद्भिरुक्तञ्च सत्यमेवेत्याह-भवन्त इति। श्रीश्च ऐश्वर्यञ्च ताभ्यां मदस्तेन उन्नाहमुन्नहनम् उद्बन्धनं स्वैराचारमित्यर्थः। पश्ये पश्यामि ॥ १९ ॥

तदेवाह - **हैहय** इति। हैहयः कार्तवीर्यश्चक्रवर्ती नरेश्वरः पितुः कामधेनुहरणात् परशुरामेण सपुत्रो हतः। नहुषः देवेन्द्रतां प्राप्तः उन्मत्तः शचीसङ्गाय ब्राह्मणान् शिबिकां वाहयन् तैरेव ततो भ्रंशितोऽजगरत्वमवाप। वेनोऽप्युन्मत्तो ब्राह्मणानधिक्षिपन् तैरेव हुङ्कृतैर्हतः। रावणो राक्षसेश्वरःसीतामभिलषन् राघवेण हतः। नरको दैत्येश्वरोऽदितिकुण्डलाद्याहरणात् मयैव हतः। अपरेऽपि श्रीमदात् स्थानाद्भ्रंशिताः ॥ २० ॥

**भवन्त** इति। यदुत्पाद्यं देहादि तदन्तवत्। एवं विज्ञाय युक्ताः अप्रमत्ताः रक्षथ रक्षतेत्यर्थः ॥ २१ ॥

**सन्तन्वन्त** इति। प्रजातन्तून् पुत्रादिसन्ततीः प्राप्तं प्राप्तं समत्वेन सेवमानाः ॥ २२ ॥

1. B, J omit उन्नहनं 2. MI, V हुङ्कारैः

**वीर० संस्तूयमान** इति। मुक्तं बन्धनं मागधकृतं यैः येषां वा तैः राजभिः संस्तुतः करुणः करुणायुक्तः अत एव शरण्यः श्लक्ष्णया मृद्ध्या गिरा तान् राज्ञः प्राह ॥ १७ ॥

तदेवाह - **अद्येति** [1-]षड्भिः[-1]। आत्मनि अन्तःप्रविश्य धारके अखिलानामीश्वरे प्रशासितरि मयि वो युष्माकं अद्य प्रभृति सुदृढा भक्तिर्जायते भविष्यति। कथं यथा बाढं साधु यथा तथा आशंसितं समीहितं तथा सुदृढेति सम्बन्धः ॥ १८ ॥

तन्निश्चितमभिनन्दति- **दिष्ट्येति**। हे भूपाः। भूतं यथास्थितं तात्त्विकमिति यावत्, तद्भाषन्त इति तथा। तैर्भवद्भिः व्यवसितं निश्चितं तद्दिष्ट्या आनन्दस्सम्यगिति यावत्। तदेवोपपादयति[2] श्रियैश्वर्याभ्यां यो मदोन्नाहः मदेनोद्बन्धनं उद्वृत्तिः तं नृणामुन्मादनं पश्ये पश्यामीत्यर्थः[3] ॥ १९ ॥

तदेवाह - **हैहय** इति। हैहयः कार्तवीर्यः। नहुषः नरेश्वरश्चक्रवर्ती। एते श्रीमदाद्धेतोः स्थानात् राज्यात् भ्रंशिताः तावत् हैहयः पितुः कामधेनुहरणात् परशुरामेण सपुत्रो हतः। तथा नहुषो देवेन्द्रतां प्राप्तः उद्वृत्तः शचीसङ्गाय ब्राह्मणान् शिबिकां वाहयन् तैरेव ततो भ्रंशितः अजगरत्वमवाप। वेनोप्युन्मत्तो ब्राह्मणानधिक्षिपन् तैरेव हुङ्कृतैर्हतः। रावणो राक्षसेश्वरःसीतामभिलषन् राघवेण सङ्ग्रामे[4] हतः। नरकोऽपि[5] दैत्यश्च अदितेः कुण्डलाद्याहरणात् मयैव हतः। एवमपरेऽपि श्रीमदात् स्थानाद्भ्रंशिता इत्यर्थः ॥ २० ॥

अतो भवन्तो यदुत्पाद्यं देहादि तदन्तवत् विज्ञाय युक्ताः अवहितचेतसः यज्ञैः मामाराधयन्तः धर्मेण प्रजाः रक्षथ रक्षन्तु इत्यर्थः। मध्यमपुरुष आर्षः ॥ २१ ॥

**सन्तन्वन्त** इति। प्रजातन्तून् पुत्रपौत्रादिसन्ततीः सन्तन्वन्तो विस्तारयन्तः भवः उत्पत्तिः, अभवः भवेतरः, तदन्यार्थोऽत्र नञ् मरणमित्यर्थः। सुखादिकं प्राप्तं प्राप्तं समत्वेन सेवन्तः[6] सेवमानाः मयि विषयभूते चित्तं येषां ते विचरिष्यथ, कालं नयतेत्यर्थः ॥ २२ ॥

---

1--1 K,T,W °त्यादिना 2. K,T,W °तुमाह 3 K,T,W omit इत्यर्थः 4. K,T,W omit संग्रामे 5. K,T,W omit अपि 6. B omits सेवन्तः

**विज०** बाढमभिमतमाशंसितम् आकाङ्क्षितञ्च जायते। 'बाढन्त्वभिमते भृशे' इति च ॥ १८ ॥

भवतां व्यवसितं दिष्ट्या मङ्गलं, तत्र हेतुः भवन्त इति। ऋतभाषिणः ब्रह्मवादिनः यथार्थवादिनो वा। अनुभावयति श्रियेति यूयं श्रियैश्वर्यमदानाम् उन्नाहमभिवृद्धिम्, उन्मादनं बुद्धिभ्रंशकरं पश्यत ॥ १९ ॥

कान् पश्याम इति तत्राह - **हैहयेति**। ध्वंसिताः भ्रंशिताः ॥ २० ॥

शिक्षयति - सञ्चिन्तयतेति। उत्पाद्यम् उत्पत्तियोग्यम् अन्तवन्नाशवत् ॥ २१ ॥

भवाभवौ मङ्गलामङ्गले ॥ २२ ॥

**उदासीनाश्च देहादावात्मारामा धृतव्रताः[1] ।**
**मय्यावेश्य मनस्सम्यक् मामन्ते ब्रह्म यास्यथ ॥ २३ ॥**

**श्रीशुक उवाच**

**इत्यादिश्य नृपान् कृष्णो भगवान् भुवनेश्वरः ।**
**तेषां न्ययुङ्क्त पुरुषान् स्त्रियो मज्जनकर्मणि ॥ २४ ॥**

**सपर्यां कारयामास सहदेवेन भारत ।**
**नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥ २५ ॥**

1. K, T, W "ढ"

**श्रीध० उदासीना** इति । मां ब्रह्म यास्यथ ॥ २३ ॥

**इतीति**। स्त्रियश्च स्त्रीश्च[1] तेषां मज्जनकर्मणि अभ्यङ्गस्नानादौ न्ययुङ्क्त ॥ २४,२५ ॥

1. B,J omit स्त्रीश्च

**वीर०** देहादावित्यादिशब्देन तदनुबन्धिनां सङ्ग्रहः। उदासीना अहम्भ्रमतारहिताः इत्यर्थः[1]। आत्मारामाः स्वात्मपरमात्म याथात्म्यावलोकनपराः मयि सम्यक् मन आवेश्य अन्ते प्रारब्धावसाने ब्रह्म परब्रह्मभूतं मां यास्यथ प्राप्स्यथ[2] ॥ २३ ॥

इति इत्थम् आदिश्य अनुशिष्य तेषां नृपाणां मज्जनकर्मणि अभ्यङ्गस्नानादौ निमित्ते पुरुषान् स्त्रियः स्त्रीश्च न्ययुङ्क्त ॥२४॥

**सपर्यामिति**। हे भारत। सहदेवेन जरासन्धसुतेन प्रयोज्यकर्त्रा नरदेवानामर्हैः वस्त्रादिभिस्साधनैः सपर्यां कारयामास ॥ २५ ॥

1. B omits इत्यर्थः 2. T, W omit प्राप्स्यथ

**विज०** आत्मारामत्वं विवृणोति - मयीति॥ २३ - २५ ॥

**भोजयित्वा वरान्नेन सुस्नातान् समलङ्कृतान् ।**
**भोगैश्च विविधैर्युक्तांस्ताम्बूलाद्यैर्नृपोचितैः ॥ २६ ॥**

**ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः ।**
**विरेजुर्मोचिताः क्लेशात्[1] प्रावृडन्ते यथा ग्रहाः ॥ २७ ॥**

**रथान् सदश्वानारोप्य मणिकाञ्चनभूषितान् ।**
**प्रीणय्य[2] सूनृतैर्वाक्यैः स्वदेशान् प्रत्ययापयत् ॥ २८ ॥**

1. Ml, V कृच्छ्रात् 2. K, T, W °णीय

**श्रीध० भोजयित्वेति**। सुस्नातान् सम्यगलङ्कृतान् भोगैश्च युक्तान् वरेणान्नेन भोजयित्वा पुनस्तेषां सपर्यां सह देवेन कारयामास [1]इति पूर्वेणान्वयः[-1] ॥ २६ ॥

**त इति**। ग्रहाश्चन्द्रादयो यथा ॥ २७ ॥

**रथानिति** । प्रीणय्य[2] नन्दयित्वा[3] ॥ २८ ॥

1- -1 B, J omit 2. Ml, V प्रीणीय 3. Ml, V प्रीणयित्वा

**वीर० भोजयित्वेति**। वरान्नेन श्रेष्ठान्नेन भुजि कर्मणोऽन्नस्य तत्कारणत्वविवक्षायां तृतीया। ततः पुनः ताम्बूलाद्यैर्विविधैर्भोगैर्युक्तान् कारयामासेत्यनुषङ्गः[1] ॥ २६ ॥

**त इति**। ते राजानस्सहदेवेन पूजिताः कृष्णेन क्लेशान्मोचिताः विरेजुः, यथा प्रावृडन्ते शरदि ग्रहाश्चन्द्रादयः तद्वत् ॥ २७ ॥

**रथानिति**। सन्तः समीचीना अश्वाः येषान्तान् रथानारोप्य रथेषु उपवेश्य सूनृतैः मधुरैर्वाक्यैः। प्रीणीय हर्षयित्वा स्वस्वदेशान् प्रत्ययापयत् प्रस्थापयमास ॥ २८ ॥

1. K,T, W °त्यर्थः।

**विज०** भोगैःस्रक्चन्दनादिलक्षणैः धनैर्वा ॥ २६ ॥

ग्रहा आदित्यादयः ॥ २७ ॥

प्रीणय्य प्रीतिं जनयित्वा ॥ २८ ॥

**त एवं मोचिताः कृच्छ्रात् कृष्णेन सुमहात्मना ।**
**ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥ २९ ॥**

**जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ।**
**यथान्वशासद् भगवांस्तथा चक्रुरतन्द्रिताः ॥ ३० ॥**

**जरासन्धं घातयित्वा भीमसेनेन केशवः ।**
**पार्थाभ्यां संयुतः प्रायात् सहदेवेन पूजितः ॥ ३१ ॥**

**श्रीध० जगदुरिति।** जगदुः ऊचुः ॥ २९ - ३१ ॥

**वीर० त इति ।** कृच्छ्रात् क्लेशान्मोचिताः तमेव श्रीकृष्णमेव । जगत्पतेः कृष्णस्य कृतानि चेष्टितानि च ध्यायन्तः जग्मुः ययुः ॥ २९ ॥

**जगदुरिति।** नृपाः महापुरुषस्य श्रीकृष्णस्य चेष्टितं , प्रकृतिभ्योऽमात्यादिभ्यो जगदुः ऊचुः । यथा भगवान् अन्वशासत् अनुशिक्षितवान् तथा निरवद्याश्चक्रुः ॥ ३० ॥

**जरासन्धमिति।** भीमसेनेन प्रयोज्यकर्त्रा घातयित्वा सहदेवेन जरासन्धसुतेन पूजितः पार्थाभ्यां भीमार्जुनाभ्यां च संयुतः प्रायाद्ययौ ॥ ३१ ॥

**विज०** कृतानि कार्याणि ॥ २९ ॥

प्रकृतिभ्यः विश्वस्तभृत्येभ्यः ॥ ३०, ३१ ॥

**[1-]गत्वा ते खाण्डवप्रस्थं[-1] शङ्खान्दध्मुर्जितारयः ।**
**हर्षयन्तः स्वसुहृदो दुर्हृदाञ्चासुखावहाः ॥ ३२ ॥**

**तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थनिवासिनः ।**
**मेनिरे मागधं शान्तं राजा चाप्तमनोरथः ॥ ३३ ॥**

**अभिवन्द्या[2]ऽथ राजानं भीमार्जुनजनार्दनाः ।**
**सर्वमाश्रावयाञ्चक्रुरात्मना यदनुष्ठितम् ॥ ३४ ॥**

**निशम्य धर्मराजस्तु[3] केशवेनानुकम्पितः ।**
**आनन्दाश्रुकला[4] मुञ्चन् प्रेम्णा नोवाच किञ्चन ॥ ३५ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

दशमस्कन्धे उत्तरार्धे कृष्णाद्यागमने त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

1- -1 K,T,W ते गत्वाऽखण्डल° 2. M, Ma, T, W °वाद्या° 3. B, G, J °स्तत् 4. B, G, J कलं ; M, Ma, T, W कणान्

**श्रीध० गत्वेति**। खाण्डवप्रस्थमिन्द्रप्रस्थम् ॥ ३२ ॥

**तदिति**। शान्तं मृतम्। आप्तमनोरथो बभूव ॥ ३३ - ३५ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

**वीर०**- त इति । ते कृष्ण भीमार्जुनाः आखण्डलप्रस्थम् इन्द्रप्रस्थम् गत्वा शङ्खान् दध्मुः[1] ध्वनयामासुः। तत्र हेतुः जितोऽरिः शत्रुर्यैस्ते दुर्हृदाम् अमित्राणां असुखं दुःखमावहन्तीति तथा, सुहृदो मित्राणि हर्षयन्तश्च ॥ ३२ ॥

**तदिति** । तच्छङ्खध्वननं श्रुत्वा मागधं शान्तं हतं मेनिरे अमन्यन्त । राजा युधिष्ठिरस्तु आप्तः मनोरथो येन तथाभूतश्चाऽऽसीत् ॥ ३३ ॥

अपि च **अभिवन्द्येति**। आत्मना आत्मभिः यदनुष्ठितं कृतं तत्सर्वमाश्रावयामासुः ॥ ३४ ॥

**निशम्येति**। आनन्दाश्रूणां[2] कलाः बिन्दून् मुञ्चन् किञ्चिदपि नोवाच, तूष्णीमासेत्यर्थः ॥ ३५ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

1. B omits दध्मुः 2. K, T, W °श्रुकलाः

**विज०** खाण्डवप्रस्थम् इन्द्रप्रस्थम्। दुर्हृदां शत्रूणाम् ॥ ३२ ॥

शान्तं मृतम्। प्राप्तमनोरथः, अभूदिति शेषः ॥ ३३ - ३५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे उत्तरार्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
(विजयध्वजरीत्या एकाशीतितमोऽध्यायः)

# चतुस्सप्ततितमोऽध्यायः

## (विजयध्वजरीत्या द्व्यशीतितमोऽध्यायः)

### श्रीशुक उवाच

एवं युधिष्ठिरो राजा जरासन्धवधं[1] विभोः ।
कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥ १ ॥

### युधिष्ठिर उवाच

[2-] ये स्युस्त्रैलोक्यगुरवस्सर्वे[-2] लोकास्सहे[3]श्वराः ।
वहन्ति दुर्लभं लब्ध्वा शिरसैवाऽनुशासनम् ॥ २ ॥

स भवानरविन्दाक्ष[4-] दीनानामीश[-4]मानिनाम् ।
धत्तेऽनुशासनम् भूमन् तदत्यन्तविडम्बनम् ॥ ३ ॥

न ह्येकस्याऽद्वितीयस्य ब्रह्मणः परमा[5]त्मनः ।
कर्मभिर्वर्धते तेजो ह्रसते वा[6] यथा रवेः ॥ ४ ॥

न च[7] तेऽजितभक्तानां ममाऽहमिति माधव ।
त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥ ५ ॥

### [8-]श्रीशुक उवाच[-8]

इत्युक्त्वा य[9]ज्ञिये काले वव्रे युक्तान् स ऋत्विजः ।
कृष्णानुमोदितः पार्थो ब्राह्मणान् ब्रह्मवादिनः ॥ ६ ॥

---

1. K.T.W. धं प्रभोः । ; M.Ma. °धात् प्रभो। 2- -2M.Ma यस्य त्रिलोक गुरवः सर्वं 3. B.G.J.M.Ma °कमहे° 4- -4 B.G.J. °क्षो दीनानामीशः; K. °क्ष जनानामीशः; Ml.V. °क्ष दीनानामिह 5. K. मेष्ठिनः। 6. B.G.J..Ml.T.V.W. च 7. B.G.J. वै 8- -8 M. Ma omit 9. M.Ma. याज्ञिये

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्युक्सप्ततितमे राजसूयक्रियाद्विजैः। अग्रपूजाप्रसङ्गेन चैद्यघातादि वर्ण्यते ॥

राजसूयमुखे हत्वा जरासन्धं तदन्ते[1]। चैद्यं तदन्ते कुर्वन्तं बीजं कलिमिवाऽवपत् ॥

[2-]कुरूणामन्तार्थं कुरूणामन्तो यस्मात् असौ कुर्वन्तः तं कलिं इत्यर्थः। **एवमिति**। कृष्णस्य चानुभावमिति चकारात्तस्य स्वाज्ञानुविधायित्वाज्ञाऽऽलक्ष्येत्यर्थः[-2] ॥ १ ॥

तदाह - **ये स्युरिति**। ये त्रैलोक्यस्यापि गुरवः स्युः सनकादयः सर्वे च लोकाः[3] लोकपालाश्च ते शिरसैव तवाऽनुशासनं वहन्ति दुर्लभं लब्ध्वेति भाग्ये नैतल्लब्धमिति बहुमानेनेत्यर्थः ॥ २ ॥

**स** इति। सभवान्परमेश्वरोऽस्माकमनुशासनं धत्ते तदत्यन्तविडम्बनमननुरूपमनुकरणं,स्वतेजोहानि प्रसङ्गात्[4-] इति तात्पर्यार्थः[-4] ॥ ३ ॥

अथवा तव पूर्णस्य आज्ञापनाज्ञाधारणाभ्यां न तेजसे हानिवृद्धी। अतः कृपया सर्वं सङ्गच्छत इत्याह - **नेति**। एकस्य अद्वितीयस्य समानासमानरहितस्य ब्रह्मणस्तवोभयं माया परमात्मन इति सर्वजीवनियन्तुस्तव नियाम्यत्वं सुतरां न वास्तवम्, अतः परानुग्रहार्थैः एतैः कर्मभिः तव तेजो न वर्धते न च ह्रसति[5], रवेः इव उदयास्तमयादि कर्मभिरित्यर्थः। तथा च श्रुतिः - "न कर्मणा वर्धते नो कनीयान्" (इतिहास उ.-२०) **इति** ॥ ४ ॥

नन्वेवमप्यहं परमेश्वरो [6-]सर्वस्याज्ञापकः[-6] ममेदं नीचं कर्मायोग्यमिति मनसि कथं न भवेदत आह - **न चेति**। हे अजित! तव भक्तानामेव तावदियं नानाधीर्भेदमतिः नास्ति यथा पशूनामज्ञानां वैकृता शरीरविषया, तव तु नास्तीति किम्पुनर्वक्तव्यमित्यर्थः ॥ ५ ॥

**इतीति**। यज्ञिये यज्ञोचिते वसन्तादिकाले युक्तानभियुक्तान् स युधिष्ठिरः ऋत्विजो होतृप्रमुखान् वव्रे वृतवान् ॥६॥

---

1. B.J. °न्तं° 2- -2 B.J.omit 3. B.J. omit लोकाः 4- -4 B.J.ङ्गादित्यर्थः। 5. Ml.V. °ते 6. B.J. omit.

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ राजसूययाजन शिशुपालवधात्मकं भगवच्चेष्टितमनुवर्णयति चतुस्सप्ततितमेन - **एवमिति**। युधिष्ठिरो राजा तं तं जरासन्धघातनात्मकं कृष्णस्यानुभावं प्रभावञ्च श्रुत्वा तं श्रीकृष्णमब्रवीत् ॥ १ ॥

उक्तिमेवाह **य** इति चतुर्भिः। ये त्रैलोक्यस्याऽपि गुरवः स्युः सनकादयः, ये च सर्वे लोकाः जनास्तत्पालाश्च[1] ते यस्यानुशासनं दुर्लभं लब्ध्वा भाग्यैरेव तल्लब्धमिति बहुमानेनेत्यर्थः। शिरसा वहन्ति ॥ २ ॥

स भवान् हे अरविन्दाक्ष! ईशमात्मानं मन्यन्त इति तथा तेषां जनानामनुशासनं धत्ते करोतीति यत्तदत्यन्तविडम्बनं मनुष्यचेष्टाभिनयमात्रमन्यथा सर्वनियन्तुः सङ्कल्पमात्रक्लृप्तजगदुत्पत्तिस्थितिलयस्य तवैतत् साक्षाच्छत्रुविजयादिरूपं कर्म न घटत इति भावः ॥ ३ ॥

ननु प्रभावातिशयार्थमेवाऽहमपीतरवत्तवानुशासनं दधे इत्यत आह - **न हीति**। एकस्याविभक्तनामरूपचिदचिद्विशिष्ट-तया जगदुपादानकारणभूतस्याऽद्वितीयस्य निमित्तकारणस्य च ब्रह्मणस्तदुभयकारणत्वोपयुक्तस्वाभाविकसार्वज्ञ्य सर्वशक्तित्वादि कल्याणगुणबृहत्वशालिनः एवं लीलाविभूतिनायकत्वमुक्तम्। परमे नित्यविभूत्याख्ये तिष्ठतीति तथा। तस्य तव कर्मभिः प्राकृतशत्रुजयादिरूपैस्तेजःप्रभावो न वर्धते नाऽपि ह्रसते च, यथा रवेरुदयस्तमयादिकर्मभिर्न वर्धते न क्षीयते च' तद्वत् ॥४॥

उक्तमेव सहेतुकं कैमुत्यनयाभिप्रायेणाऽऽह **न चेति**। हे माधव! हे अजित! ते तव भक्तानामेव पशूनामिव पशुतुल्यानां देहाभिमानिनामिव ममाऽऽहमिति त्वं तवेति च नानाधीः स्वदेहपरदेह तत्सम्बन्धिषु अनात्मभूतेषु अनात्मीयेषु आत्माभिमानात्मीयत्वाभिमानरूप नानाधी र्न चास्ति कुतः तद्धेतुक तेजोवृद्धि ह्रासौ किं पुनस्तव तौ न स्त इतीति भावः ॥ ५ ॥

**इतीति**। यज्ञिये यज्ञार्हे वसन्तादिरूपकाले सपार्थो युधिष्ठिरः कृष्णेनाऽनुमोदितः युक्तानभियुक्तान् ब्रह्मवादिनः ब्राह्मणान् ऋत्विजो वृतवान् ॥ ६ ॥

---

1.B.T.W. "त्परश्च

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

श्रोतृमनोहरं क्षमाजनकं वीरवीर्यवर्धनं हरेः समवृत्तिनिदर्शनं शिशुपालवधं निगदत्यस्मिन्नध्याये। तत्रादौ युधिष्ठिरो भगवन्तं स्तुत्वा तदनुज्ञया राजसूयप्रारम्भणं वक्ति एवमित्यादिना ॥ १ ॥

यस्य तव त्रिलोकगुरवः ब्रह्मादयः ॥ २ ॥

ईशमानिनाम् ईश्वरोऽहमहं भोगीत्याद्यभिमानवतां दीनानामात्मतत्त्वज्ञानाभावात् कोष्ठगत्या कृपणानां अनुशासनं दुर्मार्गप्रवृत्तित्यागेन सन्मार्गवर्तनम् ॥ ३ ॥

प्रेक्षावत इव हरेः अनुशासनादि प्रवृत्तिः स्वप्रयोजनोद्देशपूर्विका इत्यकृतार्थत्वप्रसङ्ग इति तत्राह-न हीति। तेजःप्रभाव लक्षणा प्रभा। कर्मभिः शुभाशुभलक्षणैः। "न कर्मणा वर्धता नो कनीयान्" (इतिहास उ.२०) इति श्रुतेः। एकस्यापि समाधिकसद्भावे तौ किं न स्यातामिति तत्राऽऽह अद्वितीयस्येति। अस्याऽपि परिच्छिन्नत्वे कथमिति मन्दाशङ्कां परिहरति- ब्रह्मण इति। बहिस्तस्थाऽस्तु अन्तःपरिच्छिन्न इति तत्राह - परमात्मन इति। आत्मनो जीवात्मपरत्वेन पूर्णत्वेन नीयमानस्य परमात्मन इत्यर्थः। रवेः प्रभा मन्दोष्णत्वादि विशेषः कालोपाधिको न स्वाभाविक इति भवत्येत्र निदर्शनं, हरेस्तूक्तविशेषणसामर्थ्यात्सोऽपि नेत्यवगमयितव्यम् ॥ ४ ॥

हरेरद्वितीयत्वं किम्पुनर्न्यायेनाऽऽह - **न चेति**। हे अजित! माधव! लक्ष्मीपते! ते तव भक्तानां पुत्रादौ ममेति देहादावहमिति देहान्तरे त्वमिति तदीयक्षेत्रादौ तवेति नानाधीर्नास्ति। चशब्दस्सर्वत्रेश्वरसत्तां पश्यतामित्यस्मिन्नर्थे वर्तते। कीदृशी नानाधीः? यथा पशूनां संस्कारहितानां बुद्धिर्वैकृता विविधप्रकारा। स्वार्थे तद्धितः ॥ ५ ॥

याज्ञिये यज्ञकारणयोग्ये युक्तान्कल्पोक्तन्यायवेदिनः ॥ ६ ॥

**द्वैपायनो भरद्वाजः सुमन्तुर्गौतमोऽसितः ।**
**वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥ ७ ॥**

**विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ।**
**पैलः पराशरो गर्गो[1] वैशम्पायन एव च ॥ ८ ॥**

**[2]अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः ।**
**वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः ॥ ९ ॥**

**उपहूतास्तथा[3] चान्ये भीष्मद्रोणकृपादयः ।**
**धृतराष्ट्रस्सहसुतो विदुरश्च महामतिः ॥ १० ॥**

**ब्राह्मणाः क्षत्रियाः वैश्याः शूद्रा यज्ञदिदृक्षवः ।**
**तत्रेयुस्सर्वराजानो राज्ञां प्रकृतयो नृप ! ॥ ११ ॥**

**ततस्ते देवयजनं ब्राह्मणास्स्वर्णलाङ्गलैः ।**
**कृष्ट्वा तत्र यथान्यायं[5] दीक्षयाञ्चक्रिरे नृपम् ॥ १२ ॥**

---

1. K.T.W. अगस्त्यो 2. M.I.V. दुर्वासाः 3. K.T.W. थैवान्ये 4. B.G.J. ऽऽम्नायं ; M.I.V. ऽऽम्नातं

**श्रीध०** तानाह **द्वैपायन** इति त्रिभिः ॥ ७,८ ॥

अथर्वा इति। अकृतव्रणान्तानेतानृत्विगुपद्रष्टादिभेदेन वव्रे ॥ ९ ॥

**उपहूता** इति । अन्ये चोपहूता यज्ञदिदृक्षवः [1]सर्वे च तत्रेयुरित्यन्वयः ॥ १०,११ ॥

तत इति। देवयजनं यज्ञभूमिं कृष्ट्वा कर्षणादिभिस्संशोध्य दीक्षयाञ्चक्रिरे दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥

---

1. B I omit सर्वे च

**वीर०** तानेव निर्दिशति - द्वैपायन इति त्रिभिः। अकृतव्रणान्तान् एतान् ऋत्विगुपद्रष्टादिभेदेन वव्रे इति सम्बन्धः॥ ७-९॥

**उपहूता** इति। अन्ये च द्रोणादयः उपहूतास्सन्तो यज्ञं द्रष्टुमिच्छवः तत्रेयुः आजग्मुरित्यन्वयः ॥ १०,११ ॥

तत इति। देवयजनं देवा इज्यन्तेऽस्मिन्निति तद्यज्ञभूमिं स्वर्णमयैर्लाङ्गलैः कृष्ट्वा कर्षणादिभिस्संशोध्य नृपं युधिष्ठिरं दीक्षयाञ्चक्रिरे दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥

---

1--1 B.omits

**विज०** उपहूता मुनयः यथान्ये अनुपहूता अपि तत्राऽऽजग्मुः तत्र द्रोणादयोऽप्युपहूताः ॥ ७-११ ॥

यत्र यज्ञकरणमभीष्टतमं तद्देवयजनं स्वर्णलाङ्गलैः [1]सुवर्णमयहलैः कृष्ट्वोल्लिख्य संशोध्य शालां कृत्वा तत्र यथान्यायं नृपं दीक्षयाक्रुरित्यन्वयः ॥ १२ ॥

---

1.M.Ma. add सुवर्णलाङ्गलैः

**हैमाः किलोपकरणा वरुणस्य यथापुरा ।**
**इन्द्रादयो लोकपाला [1]विरिञ्चभवसंयुताः ॥ १३ ॥**
**[2]सगणास्सिद्धगन्धर्वविद्याधरमहोरगाः ।**
**मुनयो यक्षरक्षांसि [3]खगकिन्नरचारणाः ॥ १४ ॥**

राजानश्च समाहूता राजपत्न्यश्च सर्वशः ।
राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै ॥ १५ ॥

मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ।
अयाजयन् महाराजं याजका देववर्चसः ॥
राजसूयेन विधिवत्प्राचेतसमिवा˜मराः ॥ १६ ॥

[4]सौत्येऽहन्यवनीपालो याजकान्सदसस्पतीन् ।
अपूजयन् महाभागान्यथावत् [5]सुसमाहितः ॥ १७ ॥

सदस्य[6]ग्र[7]्याहणार्हं वै विमृशन्तस्सभासदः ।
ना˜ध्यगच्छन्ननैकान्त्या त्सहदेवस्तदाऽब्रवीत् ॥ १८ ॥

---

1.K.T.W. °ञ्च 2.B.G.J. "र्वा वि° 3. M.Ma. खगाः 4. B.J.Ml.V. सुत्ये°; M.Ma. सूत्ये 5.T.W. सुमहार्हणैः 6. B.G.J. स्या" 7. M.Ma.Ml.V. "ग्रा"

**श्रीध० हैमा** इति। उपकरणा उपस्काराः। वरुणस्य राजसूये यथा आसन्निति शेषः। किञ्च इन्द्रादयो देवगणाः ॥ १३,१४ ॥

**राजानश्चेति**। ये च राजादयः समाहूतास्तत्र समीयुः स्म, ते सर्वे श्रीकृष्णभक्तस्य पाण्डुसुतस्य राज्ञः [1]युधिष्ठिरस्य राजसूयमविस्मितास्सन्तः सूपपन्नं सुसम्पन्नं मेनिरे इत्यन्वयः याजकाः ऋत्विजः ॥ १५,१६ ॥

**सौत्येति**। सुत्येऽहनि सोमाभिषवदिने ॥ १७ ॥

**सदसीति**। [2]अग्र्यार्हणमग्रपूजा, तस्यार्हं योग्यम् अनैकान्त्यात् योग्यानां बहुत्वेन एकस्यानिश्चयात् ॥ १८ ॥

---

1.Ml.V.omit युधिष्ठिरस्य 2. Ml.V °ग्रा

**वीर०** स पुरा पूर्वकाले यथा वरुणस्य तद्वदस्यापि उपकरणा [1]हैमाः हेममया आसन्निति शेषः। तृतीयान्तपाठे हैमैर्यज्ञःप्रावर्ततेति शेषः। [2-]विरिञ्चिभवाभ्यां[-2] [3-]ब्रह्मरुद्राभ्यां संयुतां[-3] इन्द्रादयो देवगणाः ॥ १३ ॥

ये च समाहूताः राजानः तेषां पत्न्यश्च समीयुः [4]स्म ॥ १४ ॥

ते सर्वे कृष्णभक्तस्यपाण्डुसुतस्य राज्ञः राजसूयं [5-]अविस्मितास्सन्तः [-5]सूपपन्नं सुसम्पन्नं मेनिरे इत्यन्वयः। अयाजयन्निति। देवानामिव

वर्चो येषां ते याजका ऋत्विजः। [6] अमराः देवाः प्रचेतसं वरुणमिव महाराजं युधिष्ठिरं यथाविधि राजसूयेनाऽयाजयन् ॥ १५,१६ ॥

**सौत्य** इति। सौत्येऽहनि सोमाभिषवदिने अवनीपालो युधिष्ठिरः अपूजयत् पूजयितुमुद्युक्तवानित्यर्थः ॥ १७ ॥

**सदसीति**। सदसि सभायाम् अग्र्याहणार्हं अग्रपूजार्हं विमृशन्नपि नाध्यगच्छत् न निश्चितवान्। कुतः अनैकान्त्यात् योग्यानां बहुत्वेन एकस्याप्यविशेषात्। एवं सति तदा सहदेवो माद्रीसुतः। सभासदः सभ्यानब्रवीत् ॥ १८ ॥

---

1. B.omits हैमाः 2- -2 B. omits 3- -3 K.T.W. omit 4. B.omits स्म 5- -5 B.omits 6. B.omits अमराः

**विज०** वरुणस्य यज्ञे वरुणम् अनूक्तं समाहृत्य तात्पर्यात्पुनरुक्तं करोति इन्द्रादय इति ॥ १३-१५ ॥

प्रचेतसं वरुणम् ॥ १६ ॥

सुत्ये सोमाभिषवसम्बन्धिनि अहनि पशुसंज्ञपनदिवसे वा ॥ १७ ॥

अग्र्याहणार्हमग्रपूजास्वीकारयोग्यं विमृशन्तः विचारयन्तः अनैकान्त्यात् नानाबुद्धित्वात् सर्वेषां गुणानामेकत्वा नियमाद्वा ॥ १८ ॥

**[1-] सहदेव उवाच [-1]**

**अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान् सात्वतां पतिः ।**
**एष वै देवतास्सर्वा देशकालधनादयः ॥ १९ ॥**

**यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ।**
**अग्निराहुतयो मन्त्राः सांख्यं योगश्च यत्परः ॥ २० ॥**

**एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ।**
**आत्मनात्माश्रयः सभ्याः सृजत्यवति हन्त्यजः ॥ २१ ॥**

**विविधानीहकर्माणि जनयन् [2] यदपेक्षया ।**
**ईहते यदयं [3] सर्वः श्रेयो धर्मादिलक्षणम् ॥ २२ ॥**

**तस्मात्कृष्णाय महते दीयतां परमार्हणम् ।**
**एवञ्चेत्सर्वभूतानामात्मनश्चार्हणं भवेत् ॥ २३ ॥**
**सर्वभूतात्मभूताय कृष्णायाऽनन्यदर्शिने ।**
**देयं [1]दान्ताय पूर्णाय दत्तस्याऽऽनन्त्यमिच्छता ॥ २४ ॥**

---

1--1 B.G.J.M.Ma.Ml.T.V.W. omit 2. B.G.J. यदेवक्षया ; M.Ma. ह्यनपेक्षया 3. K.M.Ma.T.W. सर्व° 4. B.G.J.K.M.Ma. शान्ताय

**श्रीध० यदात्मकमिति**। सांख्यं ज्ञानं योग उपासना ॥ १९,२० ॥

ननु सांख्यं केवलपरं योगः सविशेषणपरः कथमुभयो रेकपरत्वं तत्राह - **एक इति**। एक एवाद्वितीयोऽसावतः सांख्यस्यैतत्परत्वं युक्तम्। विशेषणभूतस्य सर्वप्रपञ्चस्य तन्मयत्वात्सविशेषणविषयस्य योगस्यापि युक्तमद्वितीयपरत्वमित्याह-ऐतदात्म्यमिति। एष श्रीकृष्ण आत्मा यस्य तदेतदात्मा तस्य भावः ऐतदात्म्यम्। भवि[1]तव्ये च भाव निर्देशः "ऐतदात्म्यमिदं सर्वम्" (छान्दो.उ.6-8-7)इति श्रुतेः। अत्र हेतुः आत्मनेति। हे सभ्याः! आत्माश्रयोऽन्यनिरपेक्षः स्वयमजः इदं जगत्सृजत्यवति [2]रक्षति हन्ति [3]संहरति चेति ॥ २१ ॥

किञ्च **विविधानीति**। यस्या[2]पेक्षयाऽनुग्रहेण विविधानि कर्माणि तपोयोगादीनि जनयन् कुर्वन् यद्यस्मात् अयं सर्वेऽपि जनो यदधीनानीत्यर्थः ॥ २२,२३ ॥

ननु आत्मना क्रियमाणं अर्हणं आत्मनः कथं स्यात् तत्राह - **सर्वेति**। सर्वभूतानामात्मभूताय अनन्यदर्शने निरस्त भेदमतये ॥ २४ ॥

---

1. B.J. °तयव 2. B.J.omit रक्षति 3. B.J. omit संहरति 4. B.J. °वे° 5--5 B.omits

**वीर० तदेवाह अर्हतीति**। श्रैष्ठ्यं श्रेष्ठस्य उचितमर्हणमिति। तत्र हेतुत्वेन विशिनष्टि सात्त्वतां ब्रह्मविदां पूर्वोक्तद्वैपायनादीनां पतिः स्वामी। किञ्च, 'एष वै सर्वा देवताः' इत्यादि। एष भगवान् इ[1]ज्याः सर्वदेवताःशरीरात्मभावनिबन्धनमिदं सामानाधिकरण्यं - "स आत्मा अङ्गान्यन्यादेवताः" (तैत्ति.उ.1-5-1) इति श्रुतेरिति भावः। देशः 'समे यजेत' इत्युक्तविधः। कालो वसन्तादिः। धनानि यज्ञोपयुक्तानि। आदिशब्दो यजमानर्त्विगादि सङ्ग्राहकः ॥ १९ ॥

**यदिति**। देशादयो धनान्ता इत्येतद्विश्वं सर्वं यदात्मकं यो भगवान् आत्मा यस्य तथाभूतम्। क्रतवश्च साङ्ख्यं प्रत्यागात्मयाथात्म्यानुचिन्तनं, योगः परमात्मोपासना, तत्सर्वं स भगवान् परो निर्वाहको यस्य तथाभूतम् ॥ २० ॥

किमम्बहुनेत्याह - **एकेति**। इदं चिदचिदात्मकं जगत् ऐतदात्म्यम् - एष भगवानात्मा अन्तरात्मा यस्य तथाभूतम्। स्वार्थे ष्यञ्। 'एक एवाऽद्वितीयोऽसौ' आसीदिति शेषः। "सदेवेदमग्र आसीत्"। (छान्दो.उ.6-2-1),एकमेवाद्वितीयम् ( छान्दो.उ.6-2-1) इतिवदयं निर्देशः। अविभक्तनामरूपचिदचिद्विशिष्टपरः एकशब्दः निमित्तान्तरव्युदासार्थः। अद्वितीय शब्दः एक इत्यनेन कार्यावस्थयोः एवम्भूतोऽसावात्मा स्वयमाश्रयः आधारो यस्य सः। आत्मनोपकरणभूतेन सर्वान्समष्टि व्यष्टिपदार्थान् सृजत्यवति रक्षति हन्ति संहरति। एवमप्यजः स्वशरीरभूतचिदचिद्गतोत्पत्यादिविकाररहितः। "ब्रह्मवनं ब्रह्म सवृक्ष आसीत्" (तैत्ति.ब्रा.2-8-9-6) इति श्रुत्यर्थोऽत्रानुसन्धेयः ॥ २१ ॥

एवम्भूतश्चेदसौ किमित्यस्मदादिवत् चेष्टते? अत आह - **विविधानीति**। यदपेक्षया यस्य लोकापेक्षया [2-] अनुजिघृक्षया [-2] धर्मादिलक्षणं धर्मादिरूपम् आदिशब्दः काममोक्षसङ्ग्राहकः सर्वं श्रेयो जनयन्। लक्षणहेत्वोः इति शत्रादेशः। सम्पादयितुमित्यर्थः। विविधानि कर्माणि ईहते चेष्टते यत् यस्मात् एवं तस्मादित्युत्तरेण सम्बन्धः ॥ २२ ॥

**तस्मादिति**। महते सर्वेत्कृष्टाय कृष्णाय दीयतां क्रियतां एवञ्चेत्कृष्णाय दीयते चेत्, सर्वभूतानामात्मानो दातुश्चार्हणं बहुमानं कृतं भवेत्, सर्वान्तरात्मत्वादिति भावः ॥ २३ ॥

एतदेव व्यञ्जयन् पुनर्हेतुतया विशिंषन्नाह - **सर्वभूतेति**। सर्वभूतानामन्तरात्मभूताय अत एवानन्यदर्शिने अन्यत् स्वस्मात्पृथग्भूतं पश्यतीति अन्यदर्शी, ततो नञ् समासः तस्मै सर्वशरीरकायेत्यर्थः। इतरेत्वन्यदर्शिनः। न हि तेषामन्यतमाय दत्तमितरेभ्यो दत्तं भवतीति भावः। शान्ताय रागद्वेषादिरहिताय। इतरे त्वशान्ताः, न हि तेषां [3] दत्तमन्यतमाय दत्तमितरे सहन्त इति भावः। पूर्णाय स्वभावतोऽवाप्तसमस्तकामाय, नित्यसन्तोषिणे इति यावत्। न हि असन्तोषिणे दत्त मनन्तं भवतीति भावः। अतो दत्तस्य दानस्याऽऽनन्त्यं फलानन्त्यं इच्छता कामयमानेन उक्तविधाय कृष्णायैव देयम् ॥ २४ ॥

---

1. K.omits इज्याः 2- -2 K.T.W. omit 3. K.T.W. omit दत्तं

**विज०** अच्युतः गुणतः स्वरूपतो वा न क्षीणः श्रैष्ठ्यं गुणज्येष्ठयोग्याग्रपूजनं "गुणाः श्रुताः सुविरुद्धाश्च देवे सन्ति" इत्यादि श्रुतिवाक्यं हिना सूचयति। सात्वतः तन्त्रप्रणेतारः एतेषां पतिः स्वामी गतिश्च। इदञ्चाग्रपूजायोग्यत्वे लिङ्गम्। "इन्द्रो वै सर्वेषां श्रेष्ठः", "अग्निर्वै देवानां मुखम्" इत्यादेः इन्द्रादिषु सत्स्वस्य कथं सम्भवो भवतीति तत्राऽऽह एष वा इति। "यो देवानाम्" इति श्रुतिं वा इत्यनेन गृह्णाति अचेतनमपि तदधीन सत्ताकमित्याह देशेति ॥ १९ ॥

किम्बहुना, सर्वमपि तद्व्याप्तमित्याह **यदात्मकमिति**। तात्पर्यात्पुनरुक्तं करोति क्रतव इति। साङ्ख्यं यथार्थज्ञानं योगः कर्मलक्षणः यः परो विषयो यस्य स तथा ॥ २० ॥

उपसंहरति **एक** इति। एतदात्माधीनं हे सभ्याः! ऐतदात्म्य विवरणमात्मेति, उक्तार्थसमर्थनं सृजतीत्यादि ॥ २१ ॥

फलहेतुत्वाच्चाऽयमेवाऽत्र योग्यतम इत्याह- यदयमिति ॥ २२ ॥

एतत्तृप्तौ सर्वं तृप्तं स्यादिति भावेनाह एवञ्चेति। स्वस्मादन्यस्य स्वातन्त्रं न पश्यतीति अनन्यदर्शी तस्मै देवैस्सह वर्तत इति सहदेवो देवव्रतोऽपि ग्राह्यः भारते तद्वचनादग्रपूजादानाद्युक्तेः ॥ २३,२४ ॥

**श्रीशुक उवाच**

**इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित् ।**
**तच्छ्रुत्वा तुष्टुवुस्सर्वे साधु साध्विति सत्तमाः ॥ २५ ॥**

**श्रुत्वा[2] द्विजेरितं राजा ज्ञात्वा[3] हार्दं सभासदाम् ।**
**समार्हयद्[4]धृषीकेशं प्रीतः प्रणयविह्वलः ॥ २६ ॥**

**तत्पादाववनिज्याऽपश्शिरसा लोकपावनीः**
**सभार्यस्सानुजामात्यः सकुटुम्बोऽवहन्मुदा ॥ २७ ॥**

**वासोभिः पीतकौशेयैः भूषणैश्च महाधनैः ।**
**[5]अर्हयित्वाऽश्रुपूर्णाक्षो नाऽशकत्समवेक्षितुम् ॥ २८ ॥**

**इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः[6] ।**
**नमो जयेति नेमुस्तं निपेतुः[7] पुष्पवृष्टयः ॥ २९ ॥**

**इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ।**
**उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी[8] संश्रावयन्भगवते परुषाण्यभीतः ॥ ३० ॥**

---

1- -1.B.G.J.K.Ml.T.V.W. omit 2. M.Ma. °ऽनु° 3. K.T.W. जात 4. K °मार्च° 5. Ml.V. भूषयित्वा° 6. Ml.V. नृपाः 7. M.Ma. खात्पेतुः 8. M.Ma. °मर्षात्

**श्रीध० इतीति**। श्रीकृष्णानुभाववित् सहदेव इत्युक्त्वा तूष्णीमभूत् ॥ २५ ॥

**श्रुत्वेति**। द्विजेरितं साधुसाध्विति घोषं श्रुत्वा , हार्दमभिप्रायम् ॥ २६-३० ॥

**वीर०** कृष्णप्रभाववित् सहदेवस्तूष्णीं बभूव। तत्सहदेवोक्तं श्रुत्वा सर्वे सत्तमा द्वैपायनादयः साधु साध्विति तुष्टुवुः ॥ २५ ॥

**श्रुत्वेति**। द्विजेरितं साधु साध्विति घोषं श्रुत्वा सभासदां सभ्यानां जातं हार्दमभिप्रायं, ज्ञात्वा चेति शेषः। यद्वा, जातमभिव्यक्तं हार्दमभिप्रायो यस्मात्तद्द्विजेरितं श्रुत्वेत्यर्थः। राजा युधिष्ठिरः प्रीतः प्रीतियुक्तः प्रणयेन स्नेहेन विह्वलः परवशः समार्चयत् ॥ २६ ॥

अर्चनप्रकारमेवाऽऽह द्वाभ्याम् - **तत्पादाविति**। तस्य भगवतः पादाववनिज्य प्रक्षाल्य लोकान्पावयन्ति पुनन्तीति तथा, ता अपः भार्यादिसहितः शिरसा वहन् ॥ २७ ॥

पीतैः कौशेयैश्च वासोभिर्महाधनैर्बहुमूल्यैरनर्घ्यैरिति यावत्। भूषणैश्चार्हयित्वा अश्रुभिरानन्दाश्रुभिः, पूर्णे अक्षिणी यस्य सः तं भगवन्तमवेक्षितुं ना॑लं न प्रबभूव ॥ २८ ॥

**इत्थमिति**। इत्येवं सभाजितं सम्पूजितं भगवन्तमवलोक्य नमो जयेति, वदन्त इति शेषः। तं श्रीकृष्णं नेमुः नमश्चक्रुः ॥ २९ ॥

इत्थमेवम्भूतं श्रीकृष्णस्य गुणवर्णनं श्रुत्वा दमघोषसुतः शिशुपालः जातो मन्युर्यस्य सः स्वासनादुत्थाय बाहुमुत्क्षिप्य उद्धृत्य अमर्षी क्रुद्धोऽभीतश्च भगवते परुषाणि वचांसि संश्रावयन् संश्रावयितुं इदं वक्ष्यमाणमाह इत्यर्थः ॥ ३० ॥

**विज०** सत्तमाः सतां श्रेष्ठाः ॥ २५-३० ॥

**ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ।**
**वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥ ३१ ॥**

**यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् ।**
**सदसस्पतयस्सर्वे कृष्णो यत्सम्मतोऽर्हणे ॥ ३२ ॥**

**तपोविद्याव्रतधरान् ज्ञानविध्वस्तकल्मषान् ।**
**परमर्षीन् ब्रह्मनिष्ठान् लोकपालैश्च पूजितान् ॥ ३३ ॥**

**[1]सदसस्पतीनतिक्रम्य [2]गोपोऽयं कुलपांसनः ।**
**यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ ३४ ॥**

**वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ।**
**स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३५ ॥**
**ययातिनैषां हि[3] कुलं शप्तं सद्भिर्बहिष्कृतम्[4] ।**
**वृथा पानरतं[5] मत्तं[6] सपर्यां कथमर्हति ॥ ३६ ॥**

---

1. B.G.J. °दस्प° 2. K.M.Ma.Ml.T.V.W. गोपालः 3. K.T.W. च 4. M.Ma. °र्विगर्हितम्। 5. K.T.W. °प° 6. B.G.J.K.Ml.V. शश्वत् ; T.W. मत्तः

**श्रीध० यूयमिति**। हे सदसस्पतयः, यूयं सर्वे बालस्य भाषितं मा मङ्ध्वं[1] मा जानीत, मा गृह्णीत, किं तत्? यद्यतः कृष्णोऽर्हणे अग्रपूजायां[2] सम्मतस्तत् ॥ ३१ - ३३ ॥

**सदसस्पतीनिति**। अस्यैव वास्तवोऽर्थः पूर्ववदुन्नेयः, गोपाल इति वेदपृथिव्यादि पालक इत्यर्थः। कुत्सितं वेदविपरीतं लपन्तीति कुलपाः पाषण्डाः तान् अंसते समाघातयतीति कुलपांसनः[3] तथा सः अकाकः कञ्च अकञ्च काके सुखदुःखे ते न विद्येते यस्य सोऽकाकः आप्तकाम इत्यर्थः। स यथा आप्तकामो देवयोग्यं केवलं पुरोडाशमात्रं नार्हति, अपि तु सर्वस्वमपि तथाऽयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हति, किन्तु स्वात्मसमर्पणमप्यर्हतीत्यर्थः[4] ॥ ३४ ॥

**वर्णेति**। वर्णाश्रमकुलेभ्योऽपेतो ब्रह्मत्त्वात्। "अनाम गोत्रम्" इति श्रुतेः। अत एवाऽनधिकारित्वात्। सर्वैर्धर्मै र्बहिष्कृतः स्वैरवर्ती परमेश्वरत्वात्, अत एव निर्गुणस्तम आदिरहितः। एवम्भूतो जीवानां योग्यं तुच्छं सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३५ ॥

**ययातिनेति**। अपि च कथं वर्णनीयो मादृशैः एषां यदूनां महिमा यस्मादेषां कुलं ययातिना शप्तमपि किं सद्भिर्बहिष्कृतमपि तु शिरसा धृतम् ,किञ्च अस्मदादि कुलवत् किं वृथा पानरतम्, अपि तु अतिनियताचारमित्यर्थः। अहो यदूनामेव तावदीदृशं माहात्म्यम्, यदुकुलवृद्धस्य ययातेश्शापो न प्राभूदित्यादि[5]। अयन्तु साक्षादीश्वरोऽतः सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३६ ॥

---

1. B.J. मन्यध्वं 2.Ml.V. omit अग्रपूजायां 3. B.J. omit कुलपांसनः 4. B.J. आत्म 5. Ml.V. प्रादुर्भूयादि"

**वीर० तदेवाऽऽह ईश (इत्यादि) सप्तभिः**। ईशः ब्रह्मादीनामपि प्रभुः कालो दुरत्ययः दुरतिक्रमणीयः इत्येवं विधा श्रुतिः किंवदन्ती सत्यवत् यथार्था। कुतः? यत् यस्मात् वृद्धानामपि बुद्धिः बालस्य सहदेवस्य वाक्यैः भिद्यते विपरीता क्रियते इत्यर्थः ॥ ३१ ॥

**यूयमिति**। हे सदसस्पतयः! बालभाषितं मा मङ्ध्वम् मा गृह्णीत। किन्तत् यदर्हणे कृष्णसम्मत इति तत् ॥ ३२ ॥

**तप** इत्यादि। तपोऽनशनादि, विद्या शास्त्रजन्यं ज्ञानं, व्रतं कृच्छ्रादि, एतानि धरन्तीति तथा तान्, ज्ञानं परमात्मोपासनात्मकं, तेन विध्वस्तं कल्मषं पापं येषां तान्, ब्रह्मणि, परस्मिन् निष्ठा येषां तान् साक्षात्कृतब्रह्मस्वरूपान् इति यावत्[1]। एवम्भूतान् परमर्षीनतिक्रम्य अनादृत्य कुलाधमोऽसौ गोपालः काकः पुरोडाशमिव सपर्यां प्रति कथमर्हति ? ॥ ३३, ३४ ॥

किञ्च। **वर्णेति**। वर्णादिभ्योऽपेतः भ्रष्टः सर्वस्माद्वर्णादिप्रयुक्तधर्मात् बहिष्कृतश्च स्वैरं स्वच्छन्दं[2] वर्तत इति तथा गुणैः निरवद्यैर्हीनो रहितः ॥ ३५ ॥

**ययातिनेति** । एषां यदूनां कुलं ययातिना तत्कूटस्थेन शप्तं सद्भिः कुलीनैः बहिष्कृतश्च शश्वत् सदा वृथा पापे रतं तत्परम् ॥ ३६ ॥

---

1. B. इत्यर्थः 2. B. स्वेच्छं

विज० "ईशः कालो दुरत्ययः" इति श्रुतिः। सत्यवती अबाधितार्था। तदुपपादयति वृद्धानामिति ॥ ३१ ॥

मामन्ध्वम् । हे सर्वे सदसस्पतयः। किं बालभाषितं तदाह - कृष्ण इति ॥ ३२,३३ ॥

अतिव्रज्यातिक्रम्य कुलकर्मणि एते इत्याह - गोप इति ॥ ३४ ॥

एतदेव विवृणोति **वर्णेति** ॥ ३५ ॥

यदोर्वंशे जातत्वात् कथं कुलाभाव इति । तत्राऽऽह - **ययातिनेति** ॥ ३६ ॥

**ब्रह्मर्षिसेवितान् देशान् हित्वा[1] तत्ब्रह्मवर्चसम्[2] ।**
**समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः। ॥ ३७ ॥***

**एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः ।**
**नोवाच किञ्चिद्भगवान् यथा सिंहश्शिवारुतम् ॥ ३८ ॥**

**भगवन्निन्दनं श्रुत्वा दुस्सहं[3] तत्सभासदः ।**
**कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥ ३९ ॥**

**निन्दां भगवतः श्रुण्वन् तत्परस्य जनस्य वा ।**
**ततो नापैति यस्सोऽपि यात्यधस्सुकृताच्च्युतः ॥ ४० ॥**

**ततः पाण्डुसुताः क्रुद्धा मत्स्याः[5] केकयसृञ्जयाः ।**
**उदायुधास्समुत्तस्थुः शिशुपालजिघांसवः ॥ ४१ ॥**

**ततश्चैद्यस्त्वसम्भ्रान्तो जगृहे खड्गचर्मणी ।**
**भर्त्सयन् कृष्णपक्षीयान् राज्ञस्सदसि भारत! ॥ ४२ ॥**

---

1. B.G.J.M.Ma.Ml.V. °त्वैतेऽन्न° 2. M.Ma. सः। *Ml.V. add श्रीशुक उवाच 3.K.T.W. ते स° 4. M.Ma. च 5. B.G.J.M.Ma.Ml.V. मत्स्यकै°

**श्रीध० ब्रह्मर्षिरिति।** किञ्च ये राजानो। दुष्टानुच्चाटयन्ति, तदर्थं कीकटादि देशानप्याश्रयन्ति, एते तु ब्रह्मर्षिसेवितानेव देशानाश्रित्य अब्रह्मवर्चसं समुद्रं दुर्गमपि हित्वा हापयित्वेत्यर्थः। बाधन्ते, तथा याः दस्यवः प्रजाः ताश्च अयमर्थः- वेदतदर्थाभियोगो ब्रह्मवर्चसं, तदविरुद्धमब्रह्मवर्चसं समुद्रं, मुद्राऽत्र[1] लिङ्गं तत्सहितं समुद्रं वेदविरुद्धलिङ्गधारिणं पाषण्डमित्यर्थः। तल्लिङ्गं त्याजयित्वा बाधन्ते दण्डयन्ति। कथम्भूतम् दुर्गम्? धर्मवत्प्रतीतेरधर्मतया दुर्ज्ञेयमित्यर्थः। तथा दस्यवो दस्यूनपि प्रजावेषेण वर्तमानान् दण्डयन्ति। अतो यदुभ्योऽन्यः को नाम धार्मिकोऽस्तीति पारुष्यं[2] तत्वार्थमेव ॥ ३७ ॥

**एवमिति।** शिवा फेरुः तस्या रुतं श्रुत्वा यथा सिंहो न किञ्चिद्ब्रूते, तद्वत् ॥ ३८-४२ ॥

---

1. Ml.V. omit अत्र 2. B.J. °ष्यन्तूक्तार्थ

**वीर०** ब्रह्मर्षिसेवितार्यावर्तादीन् देशान् हित्वा तपोब्रह्मवर्चसञ्च त्यक्त्वा समुद्रं तन्मध्यस्थं दुर्गं निषिद्धञ्च देशमाश्रित्य दस्युवत् दुष्टसत्त्ववत् प्रजाः जनान् बाधन्ते ॥ ३७ ॥

**एवमिति।** नष्टं मङ्गलं यस्य सः, हेतुगर्भमिदम्। एवमादीन्यभद्राणि परुषाणि बभाषे। भगवांस्तु यथा सिंहः शिवा-रुतं, शिवा फेरुः तस्याः रुतं ध्वनिं[1] श्रुत्वा तूष्णीमासीत्तथा किञ्चिदपि नोवाच, तूष्णीं बभूवेत्यर्थः ॥ ३८ ॥

**भगवन्निन्दनमिति।** कर्णौ पिधायऽऽच्छाद्य रुषा चेदिपं चैद्यं शिशुपालं शपन्तो जग्मुः ॥ ३९ ॥

कुतो विनिर्जग्मुरिति, अत्र अनिर्गमने प्रत्यवायमाह - **निन्दामिति।** तत्परस्य भगवत्परस्य च जनस्य निन्दां श्रुत्वा यो जनः पुमान् ततो नापैति न निर्गच्छति, सोऽपि श्रोताऽपि, अपि शब्दान्निन्दकोऽपि कादपि सुकृतात् च्युतः भ्रष्टः अधः नरके पततीत्यर्थः ॥ ४० ॥

ततः सभासदां निर्गमनानन्तरं मत्स्यादयश्च उत्थाय क्रुद्धाः[2] शिशुपालं हन्तुमिच्छवः उदायुधाः उद्धृतान्यायुधानि यैस्ते, उत्तस्थुः ॥ ४१ ॥

**तत** इति। असम्भ्रान्तोऽवहितः। हे भारत! कृष्णपक्षीयान्राज्ञो भूपान् भर्त्सयन् खड्गखेटौ जग्राह ॥ ४२ ॥

---

1. B. शब्दं 2. T.W. omit क्रुद्धाः

**विज०** अब्रह्मवर्चसः गायत्रीजपसम्बन्धतेजोरहिताः ब्रह्म वेदः तत्सम्बन्धवचोयुक्तान् देशान्वा। समुद्रमित्यादिना दाशसाम्यमापादयति ॥ ३७ ॥

शिवारुतम् सृगालशब्दितम् ॥ ३८,३९ ॥

कुतो निर्गमनमिति तत्राऽऽह - **निन्दामिति** ॥ ४० -४२ ॥

**तावदुत्थाय भगवान् स्वान्निवार्य[1] स्वयं रुषा ।**
**शिरः क्षुरान्तचक्रेण जहाराऽऽपततो रिपोः ॥ ४३ ॥**

**शब्दः कोलाहलोऽप्यासीच्छिशुपाले[2] हते महान् ।**
**[3]तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ ४४ ॥**

**चैद्यदेहोत्थितं[4] ज्योतिर्वासुदेवमुपाविशत् ।**
**पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥ ४५ ॥**

**जन्मत्रयानुगुणितवैरसंरब्धया धिया ।**
**ध्यायंस्तन्मयतां यातो[5] भावो हि भवकारणम् ॥ ४६ ॥**

**ऋत्विग्भ्यस्स सदस्येभ्यो दक्षिणां विपुलामदात् ।**
**सर्वान्संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥ ४७ ॥**

**साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः[6] ।**
**[7-]उवास कतिचिन्मासान् सुहृद्भिरभियाचितः[-7] ॥ ४८ ॥**

---

1. M.Ma.T.W. ता° 2. K.Ml.V. °लो ह्या° 3. M.Ma.. तत्राततायि° 4. M.Ma. °हस्थि° 5. Ml.V. नीतः 6. K.T.W. °गी° 7- -7. M.Ma. हत्वा च चेदिपं तत्र विजहार यथा सुखम् ॥

**श्रीध० तावदिति**। तावदुत्थायेत्यस्य अयं अभिप्रायः, एष मत्पार्षदो मत्तुल्यबलः सर्वानेतान्हन्यात्। अतो मयैव शीघ्रं हन्तव्य इति तत्क्षणमेव उत्थाय शिरो जहारेति ॥ ४३-४५ ॥

नन्वेवं निन्दकस्य कथं वासुदेवे प्रवेशः? तत्राह - **जन्मत्रयेति**। जन्मत्रयेऽनुगुणितमनुवर्तिनं यद्वैरं तेन संरब्धयाऽऽविष्टया तन्मयतां तत्स्वरूपतां यातः पुनः पार्षदो बभूवेत्यर्थः। अत्र हेतुः भावो हीति। भावो भावना अनुध्यानं भवस्य ध्येयाकारजन्मनः कारणं पेशस्कारिध्यानेन कीटादौ तथा दृष्टत्वादित्यर्थः ॥ ४६-४८ ॥

**वीर० तावदिति**। तावत् तत्क्षण मेव उत्थाय स्वान् [1] स्वकीयान्निवार्य रुषा क्षुरस्येवान्तो धारा यस्य तेन चक्रेणाऽऽपततो रिपोः शिरो जहार चिच्छेद ॥ ४३ ॥

**शब्द** इति। शिशुपाले हते सति महानुच्चैः कोलाहलः कलकलशब्दः आसीत्। तस्य चैद्यस्याऽनुयायायिनोऽनुवर्तिनो भूपाः जीवितेच्छवः दुद्रुवुः ॥ ४४ ॥

**चैद्येति**। सर्वभूतानां पश्यतां सतां खात् आकाशात् च्युता उल्का भुवीव चैद्यस्य देहादुत्थितं तेजो जीवात्मकं वासुदेवं श्रीकृष्णम् उपाविशत् तावत् प्रविश्य ततः तत् साधर्म्य[2]मवाप इत्यर्थः ॥ ४५ ॥

तदेव व्यञ्जयन् कथं तन्निन्दकस्य तत्साधर्म्य प्राप्तिरिति शङ्काञ्च निराकुर्वन्नाह - **जन्मत्रय** इति। जन्मत्रयेनानुगुणितमनुवर्तितं यद्वैरं तेन संरब्धया आविष्टया धिया ध्यायंस्तन्मयतां तत्प्रचुरतां तत्साधर्म्यमिति यावत्। यातः प्राप्तःपार्षदो बभूवेत्यर्थः। हि यस्मात् भावः चित्तवृत्तिः भवकारणं शुभाशुभ जन्मनोः निदानम्। अतः शुभाश्रयविषयो भावः शुभभव कारणं बभूवेत्यर्थः ॥ ४६ ॥

**ऋत्विग्भ्य** इति। एकराट् युधिष्ठिरः, सदसि भवाः सदस्याः तैः सहितेभ्यः [3-]ऋत्विग्भ्यः[-3] विपुलां महतीं दक्षिणां ददौ। ततो विधिवदवभृथं नाम स्नानं चक्रे ॥ ४७ ॥

**साधयित्वेति**। राज्ञो युधिष्ठिरस्य क्रतुं राजसूयं साधयित्वा सुहृद्भिः पृथादिभिः याचितः प्रार्थितः कतिचिन्मासानुवास उषितवान्। मासानित्यत्यन्तसंयोगे द्वितीया ॥ ४८ ॥

---

1. K.T.W. स्वपक्षीयान्नि° 2. K.T.W. °माप 3- -3 T.W. omit

**विज०** स्ववचनं सत्यं कर्तुं तावत्ततः पूर्वमेव कृष्णः क्षुरान्तचक्रेण क्षुरधारसुदर्शनेन रिपोः शिरो जहार इत्यन्वयः ॥ ४३, ४४

ज्योतिर्जयचैतन्यात्मकं खादाकाशात् च्युतोल्का भुवीव ॥ ४५ ॥

जन्मत्रयेऽनुगुणितेन संवर्धितेन वैरेण शत्रुभावेन विशिष्टेन इतरेण ज्ञानेन संरब्धया समुद्रिक्तया धिया ध्यायं स्तन्मयतां द्वेषमयतां असुरो भगवत्प्रधानतां जयो यातः तथा हि भावो भक्तिर्भावकारणं माङ्गल्यकारणं भवति ॥ ४६॥

भगवतेऽग्रपूजासमर्पणेन युधिष्ठिरः कृतकृत्यः, किमुत ऋत्विगादिभ्योऽपि यथाविहितदक्षिणामददिति तत्राऽऽह - ऋत्विग्भ्य इत्यादिना। एकराट् चक्रवर्ती ॥ ४७ ,४८ ॥

* ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः ।
ययौ सभार्यस्सामात्यः स्वपुरं देवकीसुतः ॥ ४९ ॥

◌ वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ।
वैकुण्ठवासिनोर्जन्म विप्रशापात् पुनः पुनः ॥ ५० ॥

राजासूयावभृथ्येन स्नातो राजा युधिष्ठिरः ।
ब्रह्मक्षत्रसभामध्ये शुशुभे [1]सुरराडिव ॥ ५१ ॥

राज्ञा सभाजितास्सर्वे सुरमानवखेचराः ।
कृष्णं क्रतुञ्च शंसन्तः स्वधामानि मुदा ययुः ॥ ५२ ॥

★ दुर्योधनमृते पापं कलिं कुरुकुलामयम् ।
यो न सेहे श्रियं स्फीतां दृष्ट्वा पाण्डुसुतस्य ताम् ॥ ५३ ॥

य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम् ।
[2]राजमोक्षं वितानञ्च सर्वपापैः प्रमुच्यते ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

---

* This verse is not found in M.Ma. Edns. only. ◌ अयं श्लोकः M.Ma. प्रकाशेषु 'भवकारणम्' इति श्लोकादनन्तरं दृश्यते । 1. Ml.V. देव° ★अयं श्लोकः M.Ma. प्रकाशेषु न दृश्यते। 2. K.T.W. °शां

**श्रीध० ब्रह्मेति**। सुरा मानवाः खेचराः प्रमथाश्च ॥ ४९-५२ ॥

**दुर्योधनमिति**। पापं धर्मद्विषम्। अत्र हेतुः कलिं कलेरंशं अत एव कुरुकुलस्याऽऽमयं व्याधिवत्[1] नाशकम् ॥ ५३

**य इति** । वितानं यज्ञश्च ॥ ५४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

1. MI.V. धि॰ ना॰

**वीर० तत** इति। ईश्वरो भगवान् स्वगमनमनिच्छन्तमपि [1-]राजानं युधिष्ठिरमनुज्ञाप्य राजानं प्रत्यनुज्ञां प्राप्येत्यर्थः[-1]। स्वपुरं द्वारकां प्रति ययौ ॥ ४९ ॥

जन्मत्रयानुगुणितवैरविस्तरबभुत्सुमालक्ष्याऽऽह - **वर्णितमिति**। वैकुण्ठवासिनोः जयविजययोः विप्राणां सनकादीनां शापाद्धेतोः पुनः पुनः जन्म तद्विषयं यदुपाख्यानं तन्मया तुभ्यं बहुविस्तरं यथा तथा वर्णितम् ॥ ५० ॥

**राजसूयेति**। राजसूयसम्बन्धिना अवभृथेन स्नातः सुरराडिन्द्र इव शुशुभे ॥ ५१ ॥

**राज्ञेति**। राज्ञा युधिष्ठिरेण सम्पूजिताः सर्वे सुरा मानवाः खेचरा अमराश्च शंसन्तः स्तुवन्तः मुदा हर्षेण स्वधामानि स्वस्थानानि [2]प्रति ययुः ॥ ५२ ॥

किं सर्वे मुदा ययुः ? नेत्याह - **दुर्योधनमिति**। दुर्योधनमेकं विना सर्वे मुदा ययुः। तत्र हेतुत्वेन [3]तं विशिनष्टि पापः अत एव कलिं धर्मद्विषं कुरुकुलस्याऽऽमयं रोगवन्नाशनिदानम्। किञ्च [4]यो दुर्योधनः समृद्धां पाण्डुसुतस्य श्रियं सम्पदं दृष्ट्वा न सेहे न सोढवान् ॥ ५३ ॥

उपवर्णितोपाख्यानकीर्तनफलमाह - **य इति**। राज्ञां जरासन्धबन्धीकृतानां मोक्षणं ततस्त्याजनं, वितानं यज्ञं च य कीर्तयेदनुवर्णयेत्सः सर्वैः पापैः प्रमुच्यते ॥ ५४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

1- -1 K.T.W. omit 2. K.T.W. omit प्रति 3. K.T.W. omit तं 4. B. omits यो

**विज०** तयोरुपाख्यानं वैकुण्ठवासिनोर्जयविजययोः विप्रशापात् पुनः पुनः जन्म ॥ ५० ॥

राजसूयावभृथविहितकर्मणा ब्रह्मणां विप्राणां क्षत्राणां मण्डलेश्वराणां सभामध्ये स्वराडिन्द्रः ॥ ५१-५३ ॥

बन्धुभूत शिशुपालवधलक्षणं हरेः कर्म न पुण्यसाधनं, किन्तुतद्विपरीतकारणमिति मन्दाशङ्कां परिहरन् फलमाह- इदमिति ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां

दशमस्कन्धे उत्तरार्धे चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

(विजयध्वजरीत्या द्व्यशीतितमोऽध्यायः)



# पञ्चसप्ततितमोऽध्यायः

## (विजयध्वजरीत्या त्र्यशीतितमोध्यायः)

### राजोवाच

अजातशत्रोस्तं दृष्ट्वा राजसूय महोदयम् ।
सर्वे मुमुदिरे [1-]ब्रह्मन् नृ देवा ये[-1] समागताः ॥ १ ॥

दुर्योधनं वर्जयित्वा राजान[2]मृषयस्सुराः ।
इति श्रुतं नो भग[3]वन्नत्र कारणमुच्यताम् ॥ २ ॥

### [4-]श्रीशुक उवाच

पितामहस्य ते यज्ञे राजसूये महात्मनः ।
बान्धवाः परिचर्यायां तस्यासन् प्रेमबन्धनाः ॥ ३ ॥

भीमो महानसाध्यक्षो धनाध्यक्षस्सुयोधनः ।
सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥ ४ ॥

[5]सतां शुश्रूषणे जिष्णुः कृष्णाः पादावने जने ।
परिवेषणे द्रुपदजः कर्णो दाने महामनाः ॥ ५ ॥

---

1- -1 M, Ma देवा ये च 2. B, G, J °नः सर्षयः° ; M, Ma °नः ऋषय° 3. B, G, J, K, M, MA , T, W °वस्त° 4- -4 B, G, J ऋषिरुवाच 5. B, G, J. गुरु

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चयुक्सप्ततितमे यज्ञावभृथसम्भ्रमः। सुयोधनस्य चाक्षान्त्या मानभङ्गो दृशि भ्रमात् ॥

दुर्योधनस्य एकस्यैव दुःखे कारणं प्रष्टुमुक्तमनुवदति **अजातशत्रोरिति** ॥ १ ॥

**दुर्योधनमिति**। इति श्रुतं त्वन्मुखादेवेत्यर्थः ॥ २ ॥

दुर्योधनस्य असहनकारणत्वेन यागमहोत्सवमेव पुनः सिंहावलोकनेन निरूपयति - **पितामहस्येत्यादिना** 'एकदान्तःपुरे तस्ये' त्यतः प्राक्तनेन ग्रन्थेन, प्रेमबन्धनाः प्रेमयन्त्रिताः ॥ ३ ॥

**भीम** इति। पूजायां सम्मानने[1] द्रव्यसाधने नानावस्तुसम्पादने ॥ ४ ॥

**सतामिति**। गुरूणां[2] शुश्रूषणे चन्दनाऽऽलेपनादौ ॥ ५ ॥

---

1. MI, V सम्माने 2. MI, V omit **गुरूणां**

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"दुर्योधनमृते पापम्" (भाग. 10-74-53) इत्यस्यैव विस्तरबुभुत्सया प्रष्टुमुक्तमनुवदति राजा **अजातशत्रोरिति** द्वाभ्याम्। राजसूयस्य[1] महोदयं महोत्सवं दृष्ट्वा मुमुदिरे सन्तुतुषुरिति नोऽस्माभिः श्रुतम् त्वन्मुखादेवेत्यर्थः। हे भगवन्! तत्र दुर्योधनसन्तोषे कारणमुच्यताम् ॥ १,२ ॥

तद्वक्तुं प्रस्तौति - **पितामहस्येति**। ते तव पितामहस्य महात्मनो राज्ञो युधिष्ठिरस्य राजसूये तस्य राज्ञो बान्धवाः प्रेमबन्धनाः प्रेमयन्त्रिताः परिचर्यायामासन् परिचेरुरित्यर्थः ॥ ३ ॥

तदेव प्रपञ्चयति - **भीम** इति। महानसाध्यक्षः पाकशालाध्यक्षो बभूव। सुयोधनो दुर्योधनः[2] धनाध्यक्ष आस, पूजायां सम्मानने सहदेवः[3], द्रव्यसाधने नानावस्तुसम्पादने [4]नकुलोऽभवदित्यर्थः[-4] ॥ ४ ॥

जिष्णुरर्जुनः सतां शुश्रूषणे चन्दनलेपनादौ, कृष्णपादावनेजने पादप्रक्षालने, द्रुपदजः धृष्टद्युम्नः परिवेषणे भक्ष्यभोज्यादि विनियोगे कर्णस्तु दाने निरूपितः इति वचनपरिणामेन उत्तरत्र सम्बन्धः ॥ ५ ॥

---

. T, W. °य महोत्सवं 2. B omits **दुर्योधनः** 3. T, W omit **सहदेवः** 4- -4 T, W omit

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

अनेनान्तरातीताध्यायोक्तमेव प्रश्नपूर्वकं विस्तृत्य कथयति **अजातशत्रोरित्यादिना** ॥ १ -५ ॥

युयुधानो विकर्णश्च हार्दिक्य[1] विदुरादयः ।
बाह्लीकपुत्रा भूर्याद्या ये च सन्तर्दनादयः ॥ ६ ॥

निरूपिता महायज्ञे नानाकर्म[2-]सु ते तदा[-2] ।
प्रवर्तन्ते स्म राजेन्द्र! राज्ञः प्रियचिकीर्षवः[3] ॥ ७ ॥

ऋत्विक्सदस्य बहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृत समर्हण[4] दक्षिणाभिः ।
चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥ ८॥

मृदङ्ग शङ्ख[5-]पणवास्तूर्याश्छानक[-5] गो मुखाः ।
वादित्राणि विचित्राणि नेदु[6-]रावभृथो[-6]त्सवे ॥ ९ ॥

नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ।
वीणा वेणुतलोन्नादस्तेषां सदिवमस्पृशत् ॥ १० ॥

---

1. B,G,J,M,Ma °क्यो 2- -2 M, Ma विशारदाः 3. M, Ma °या 4. M, Ma महार्हण 5- -5 B, G, J °व धुन्धुर्यानक° ; K, T, W °व दुन्दुभ्यानक° ; M, Ma °व स तूर्यानक° 6- -6 M, Ma °रारान्महो°

**श्रीध०** **निरूपिता** इति। निरूपिताः नियुक्तास्सन्तः नानाकर्मसु प्रवर्तन्ते स्म ॥ ६,७ ॥

**ऋत्विगिति**। ऋत्विजश्च सदस्याश्च सभासदः बहुविदश्च ऋत्विजश्च तेषु स्विष्टेषु सम्यक् पूजितेषु सूनृतम् प्रियवाक्। समर्हणमलङ्कारादि दक्षिणाश्च प्रसिद्धाः[1] ताभिः द्युनद्यां गङ्गायाम् ॥ ८ -१० ॥

---

1. MI . V . omit प्रसिद्धाः

**वीर०** युयुधानस्सत्यकिः तत्प्रभृतयः महायज्ञे नानाकर्मसु निरूपितास्सन्तः राज्ञो युधिष्ठिरस्य प्रियं कर्तुमिच्छवः यथा नियोगं प्रवर्तन्ते स्म प्रावर्तन्त ॥ ६, ७ ॥

**ऋत्विगिति**। ऋत्विजश्च सदस्याश्च बहुविदश्च तेषु सुहृत्तमेषु च सूनृतादिभिः स्विष्टेषु, सम्यक् पूजितेषु सत्सु तत्र सूनृतं प्रियवाक्यं, अर्हणमलङ्कारादि, सात्वतपतेः श्रीकृष्णस्य चरणं प्रविष्टे सति च द्युनद्यां गङ्गायां अवभृथस्नपनं चक्रुः ॥ ८ ॥

तदेव प्रपञ्चयितुं तावद्गङ्गां प्रति गमनारम्भं प्रस्तौति - **मृदङ्गेति**। अवभृथे अवभृथसम्बन्धिनि उत्सवे मृदङ्गादयः। अन्यानि वादित्राणि वाद्यानि च विचित्राणि नेदुः दध्वनुः ॥ ९ ॥

**नर्तक्य** इति । तेषां च तासां च तेषां "पुमान्स्त्रियां इत्येक शेषः"। गायकानां नर्तकीनां चेत्यर्थः। वीणादीनां नादः, यद्वा तेषां मृदङ्गादीनां वीणादीनां च स प्रसिद्धो नादः दिवमन्तरिक्षमस्पृशत् व्याप्तवान्[1] ॥ १० ॥

1. T, W व्याप्तम् ।

**विज०** ऋत्विजश्च सदस्याश्च बहुविदश्च ते तथा तेषु सुहृत्तमेषु स्विष्टेषु सुष्ठु पूजितेषु सत्सु ततः कालव्यवधानमन्तरेण ॥ ६-८॥

आराद्दूरे समीपे च ॥ ९, १० ॥

**चित्रध्वजपताकाग्रै[1]रिभेन्द्रस्यन्दनार्व[2]भिः ।**
**स्वलङ्कृतैर्भटैः भूपाः निर्ययू रुक्ममालिनः ॥ ११ ॥**

**यदुसृञ्जयका[3]म्भोजकुरुकेकयकोसलाः ।**
**कम्पयन्तो भुवं सैन्यैर्यजमान पुरस्सरा[4]ः ॥ १२ ॥**

**सदस्यार्त्त्वग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ।**
**देवर्षि पितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥**

**स्वलङ्कृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः ।**
**विलिम्प[5]न्त्योऽभिषिञ्च[6]न्त्यो विजह्रुर्विविधै रसैः ॥ १४ ॥**

**तैलगोरस गन्धोदहरिद्रासान्द्रकुङ्कुमैः ।**
**पुम्भिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ॥ १५ ॥**

1. M, Ma °ग्रै° 2. M, Ma °दि° 3. B, G, J, M, Ma °म्बो° 4. M, Ma °रैः 5. K.T.M.Ma W. °न्तो 6. K.T.M, Ma.W °न्तो

**श्रीध० चित्रेति**। चित्राणि ध्वजपताकाग्राणि येषु तैः इभेन्द्रैः स्यन्दनैः अर्वभिः अश्वैर्भटैश्च एवं चतुरङ्ग[1]सैन्यैः निर्ययुः ॥ ११ ॥

**यदुसृञ्जयेति**। यजमानो युधिष्ठिरः पुरस्सरो येषां ते ॥ १२ ॥

**सदस्येति**। सदस्या ऋत्विजः अन्ये च द्विजश्रेष्ठाः निर्ययुः ॥ १३ ॥

**स्वलङ्कृता** इति। किञ्च गन्धादिभिः स्वलङ्कृताः नरा नार्यश्च रसैः[2] मिथो विजह्रुः ॥ १४ ॥

रसानेवाह-**तैलेति**। किञ्च सान्द्रकुङ्कुमादिभिः पुम्भिर्लिप्तास्तान् प्रलिम्पन्त्यो वारयोषितश्च विजह्रुः ॥ १५ ॥

---

1. B, J °ञ्च : 2. B, J omit रसैः

**वीर० चित्रेति**। रुक्ममालाः स्वर्णमालाः एषां सन्तीति तथा, व्रीह्यादित्वात् मत्वर्थीय इनिः। ते भूपाः चित्राः ध्वजादयो येषां तैः इभेन्द्रादिभिः स्वलङ्कृतैः भटैश्च सह निर्जग्मुः ॥ ११ ॥

**यद्विति**। यजमानो युधिष्ठिरः पुरस्सरः पुरो यायी येषां ते यद्वादयः सैन्यैः भुवं कम्पयन्तो निर्ययुरिति पूर्वेण सम्बन्धः ॥ १२ ॥

**सदस्येति**। सदस्यादयो भूयसा ब्रह्मघोषेण निर्ययुः तदा देवादयः पुष्पवर्षिणः तुष्टुवुश्च ॥१३ ॥

किञ्च गन्धादिभिः स्वलङ्कृताः नराः नार्यश्च विविधैः रसै विलिम्पन्तोऽभिषिञ्चन्तश्च मिथो विजह्रुः ॥ १४ ॥

रसानेवाह - **तैलेति**। पुम्भिः कर्तृभिः तैलादिभिः लिप्ताः वारयोषितः पुनस्तै र्विलिम्पन्त्यः विजह्रुः गोरसो दधिक्षीरादिः गन्धोदिकं चन्दनोदकम् ॥ १५ ॥

**विज०** रसैश्च हरिद्रादिरागजलैः ॥ ११ -१४ ॥

एतदेवाह - **तैलेत्यादिना** ॥ १५ ॥

**गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ।**
**ता मातुलेय सखिभिः परिसिच्यमान[1] स्सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥**

**ता देवरानुत सखीन् सिषिचुर्दृतीभिः क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ।**
**औत्सुक्यमुक्तकबर[2]च्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरै[3]र्विहारैः ॥ १७ ॥**

**स सम्राड्[4]रथमारूढः सदश्वं रुक्ममालिनम् ।**
**व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥ १८ ॥**

**पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः ।**
**आचान्तं स्नापयाञ्चक्रुर्गङ्गायां सह कृष्णया ॥ १९ ॥**
**[5]देवदुन्दुभयोर्नेदुः नरदुन्दुभिभिस्सह ।**
**मुमुचुः पुष्पवर्षाणि देवर्षि पितृमानवाः ॥ २० ॥**

---

1. Ml, V किल 2. B, G, J राङ्क्य° 3. M, Ma स्समेताः 4. Ml, V °रुह्य° 5.M, Ma दिवि

**श्रीध० गुप्ता** इति। नृभिर्गुप्ताः रथादियानैः नृदेव्यः राजपत्न्यो निरगमन् [1]निर्गताः , एतदुपलब्धुं विमानवरैः देव्यो यथा, तद्वत् मातुलेयैस्सखिभिश्च परितः सिच्यमानाः सव्रीडेन हासेन विकसन्ति वदनानि यासां ताः ॥ १६ ॥

**ता** इति। देवरान् पतिभ्रातॄन् उत सखीन् सखीनपि दृतीभिः उदकनोदनचर्मयन्त्रैः सेचन पात्रैश्च, मलधियां कामिनाम् ॥ १७ ॥

**स** इति। क्रियाभिः [2]अङ्गक्रियाभिः क्रतुराट् सशरीरो राजसूय इव ॥ १८ ॥

**पत्नीति**। पत्नीसंयाजा[3]ः यागविशेषा[4]ः अवभृथसम्बन्धि आवभृथ्यं च तैश्चरित्वा तान्यनुष्ठायेत्यर्थः ॥ १९, २०॥

---

1. B, J. निरगुः 2. Ml, V अङ्गेष्टिभिः 3. B, J. °जः 4. B, J. °षः

**वीर० गुप्ता** इति। दिवि यथा विमानश्रेष्ठैः देव्यो [1]देवपत्न्यः देवस्त्रियः तथा नृदेव्यः राज्ञां स्त्रियः नृभिः भटैः गुप्ताः रथादि यानैः एतदवभृथस्नपनमुपलब्धुं द्रष्टुं निरगमन् निर्जग्मुः ताः नृदेव्यः मातुलेयैः सखिभिश्च सिच्यमानाः सव्रीडेन हासेन विकसन्ति वदनानि यासां ताः विरेजुः ॥ १६ ॥

**ता इति**। ताः नृदेव्यः दृतीभिः उदकनोदनचर्मयन्त्रैः। देवरान् पतिभ्रातॄन् उत सखीन् सखीनपि सिषिचुः। स्वयं च तैः सिक्ताः क्लिष्टानि सिक्तानि अम्बराणि यासां ताः, अत एव विवृतं व्यक्तं गात्रं शरीरम्। कुचौ ऊरू मध्यप्रदेशश्च यासां ताः, औत्सुक्यात् तत् प्रयुक्त जलक्रीडातिशयात् मुक्तेभ्यः श्लथेभ्यः कबरेभ्यः [2-]केशबन्धेभ्यः[-2] च्यवमानानि गलन्ति माल्यानि पुष्पाणि यासां ताः, रुचिरैः विहारैः मलधियां कामिनां क्षोभं चित्तचाञ्चल्यं कामोद्रेकमिति यावत् दधुश्चक्रुः ॥ १७ ॥

**स** इति। सन्तस्समीचीनाः अश्वाः यस्य रुक्ममाला अस्य सन्तीति तथा तं रथमारूढः सम्राड्युधिष्ठिरः क्रियाभिः अङ्गक्रियाभिः प्रयाजादिभिः क्रतुराट् राजसूय इव स्वपत्नीभिः व्यरोचत रराज ॥ १८ ॥

**पत्नीति**। पत्नीसंयाजाः यागविशेषाः अवभृथस्य सम्बन्धि आवभृथ्यं तच्च कर्म चरित्वा अनुष्ठाय ते[3] ऋत्विजः तं सम्राजमाचान्तं कृताचमनं कृष्णया द्रौपद्या च सहितं स्नापयाञ्चक्रुः ॥ १९ ॥

**देवदुन्दुभय इति**। नराणां दुन्दुभिभिः समं सह देवानां दुन्दुभयो नेदुः, देवादयः पुष्पवर्षाणि मुमुचुः॥ २० ॥

---

1. K.T. W omit देवपत्न्यः 2- -2 B omits 3. K.T.W omit ते

**विज०** नृदेव्यः राज्ञ्यः एतदुपालब्धुं चक्षुर्विषयं स्थलं निरगमन् इत्यन्वयः। देव्यः देवस्त्रियः मातुलेयैः सखिभिश्च ॥ १६॥

दृतीभिः जलसेचनपात्रैः मलधियां विषयाविष्टानां रुचिरैः भूषणैः समेताः ॥ १७, १८ ॥

पत्नी संयाजावभृथ्याख्येष्टिभिः चरित्वा कृत्वा ॥ १९, २० ॥

**सस्नुस्तत्र ततस्सर्वे वर्णाश्रमयुता जनाः[1] ।**
*** महापातक्यपि यतस्सद्यो मुच्येत किल्बिषात् ॥ २१ ॥**

**अथ राजाऽहते क्षौमे परिधाय स्वलङ्कृतः ।**
**ऋत्विक्सदस्य विप्रादीनानर्चाभरणाम्बरैः ॥ २२ ॥**

**[2-]बन्धुज्ञाति नृपान् मित्रसुहृदो[-2]ऽन्यांश्च सर्वशः ।**
**अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥ २३ ॥**

**सर्वे जनास्सुररुचो मणिकुण्डलस्रगुष्णीषकञ्चुकदुकूलमहार्घ[3]हाराः ।**
**नार्यश्च कुण्डलयुगालकबृन्दजुष्टवक्त्रश्रियःकनकमेखलया विरेजुः॥ २४॥**

**अथर्त्विजो महाशीलाः[4] सदस्या ब्रह्मवादिनः ।**
**[5]विप्रक्षत्रियविट्छूद्रा राजानो ये समागताः ॥ २५ ॥**

---

1. B. G. J. नराः * This half verse is not found in M . Ma. Edns. 2- -2 K.M.Ma. T. W. बन्धून् ज्ञातीन् नृपान् मित्रान् 3. B. G. J. M. Ma. °र्घ्य°

4. M. Ma. °शिक्षाः :Ml. V. °त्मानः 5. B. G. J. ब्रह्म°

**श्रीध० अथेति**। अहते नूतने आनर्च अर्चितवान् ॥ २१-२३ ॥

**सर्व** इति। सुराणामिव रुक् कान्तिः येषां ते, मणिकुण्डलैः सहिताः स्रग्भूषादयो येषां ते, कुण्डलयुगेन अलकबृन्देन च जुष्टा वक्त्रश्रीः यासां ताः ॥ २४-२५ ॥

**वीर० सस्नुरिति**। ततः स्नापनानन्तरं चातुर्वर्ण्यं चातुराश्रम्य व्यवस्थयाऽवस्थितास्सर्वे जनाःसस्नुः स्नानं चक्रुः। तत्र कारणमाह- महापातकीति। यतः स्नानात् महा पातक्यापि किल्बिषात् ब्रह्महत्यादिपातकात् मुच्येत किंपुनरितरे पातकिनस्ततो मुच्येरन्निति कैमुत्यनयद्योतनार्थोऽपिशब्दः पापनिवृत्तये सस्नुरिति भावः ॥ २१॥

**अथेति**। राजा युधिष्ठिरः अहते नूतने क्षौमे दुकूले परिधायाभरणादिभिः ऋत्विगादीन् आनर्च अर्चितवान् ॥ २२॥

बन्धूनिति। मित्रानिति पुंस्त्वमार्षम्। तत् नृपानित्यस्य विशेषणम्। अभीक्ष्णं पुनः पुनः पूजयामास। तत्र हेतुत्वेन विशिनष्टि नारायणः परो यस्य स सर्वस्य नारायणात्मकत्व बुद्धियुक्त इत्यर्थः ॥ २३॥

**सर्व** इति। सर्वे जनाः नराः सुराणामिव ऋक्कान्तिर्येषां ते मणिकुण्डलादीनां द्वन्द्वः ततो मत्वर्थीयोऽच् मणि कुण्डलाभ्यां सहिताः स्रगादयो येषामिति वा तथा भूताः विरेजुः। नार्यस्तु कुण्डलयुगेनालकबृन्देन च जुष्टा वक्त्रस्य श्रीर्यासां तथाभूताः कनकमेखलयोपलक्षिताश्च विरेजुः ॥ २४ ॥

**अथेति**। महच्छीलं सुस्वभावः सद्वृत्तिर्वा येषां ते ऋत्विगादयः पूजितास्सन्तः, हे नृप! तमनुज्ञाप्य तदनुज्ञामु पादायेत्यर्थः। स्वधामानि स्वगृहाणि ययुः ॥ २५ ॥

**विज०** अहते अधौते ॥ २१- २५ ॥

**देवर्षि पितृभूतानि लोकपालास्सहानुगाः ।**
**पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्मुदा[1] ॥ २६ ॥**

**हरिदासस्य राजर्षे राजसूयमहोदयम् ।**
**नैवातृप्यन् प्रशंसन्तः पिबन् मर्त्योऽमृतं यथा ॥ २७ ॥**

**ततो युधिष्ठिरो राजा सुहृत्सम्बन्धिबान्धवान् ।**
**प्रेम्णा निवार[2]यामास कृष्णं च त्यागकातरः ॥ २८ ॥**

**भगवानपि तत्राब्दं[3] न्यवात्सीत्तत्प्रियङ्करः ।**
**प्रस्थाप्य यदुवीरान्[4]स्वान् साम्बादींश्च[5] कुशस्थलीम् ॥ २९ ॥**

**इत्थं धर्मसुतो राजा मनोरथ महार्णवम् ।**
**[6]सुदुस्तरं समुत्तीर्य कृष्णेनासीद्गतज्वरः ॥ ३० ॥**

---

1. B, G, J, K, T, W °नृप। 2. B, G, J, M, Ma, Ml, V °स° 3. B, G, J, K, M, Ma T, W, °ङ्क 4. B, G, J, M, Ma, Ml, T, V, W. °रांश्च 5. K, T, W, °दीन्वै 6. M, Ma सुसमृद्धं

**श्रीध० इत्थमिति।** गतज्वरः निश्चिन्तः आसीत् ॥ २६ - ३० ॥

**वीर० हरिदासस्येति।** राजसूयमहोत्सवं प्रशंसन्तो नातृप्यन् यथा मर्त्यःअमृतं पिबन्नतृप्यति तद्वत् ॥२६,२७॥

**तत** इति। सुहृदश्च सम्बन्धिनो ज्ञातींश्च बान्धवांश्च जिगमिषून् प्रेम्णा निवारयामास त्यागाद्विश्लेषात् कातरः प्रेम्णा च कृष्णं वारयामास ॥ २८ ॥

**भगवानिति।** तस्य युधिष्ठिरस्य प्रियङ्करः प्रियं चिकीर्षुरिति यावत् कुशस्थलीं द्वारकां प्रति साम्बादीन् यदुवीरान् प्रस्थाप्य प्रयाप्य स्वयं तत्रैव अन्यानि कतिचिद्दिनानि अवात्सीत् उषितवान् ॥ २९ ॥

**इत्थमिति।** सुदुस्तरं मनोरथं राजसूयचिकीर्षारूपं महार्णवं कृष्णेन कर्णधारस्थानीयेन समुत्तीर्य गतज्वरो निश्चिन्त आसीत् ॥ ३० ॥

**विज० देवर्षिरिति** ॥ २६ - ३० ॥

**एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ।**
**अतप्यद्राजसूयस्य महत्त्वं[1] चाच्युतात्मनः ॥ ३१ ॥**

**यस्मिन् नरेन्द्रदितिजेन्द्र सुरेन्द्रलक्ष्म्यः[2] नानाविभान्ति किल विश्वसृजोपक्लृप्ताः।**
**ताभिः[3]पतीन् द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥ ३२ ॥**

यस्मिंस्तदा मधुपतेर्महिषी[4] सहस्रं श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ।
मध्ये सुचारुकुचकुङ्कुमशोणहारं श्रीमन्मुखं च[5] चलकुण्डल कुन्तलाढ्यम् ॥३३ ॥
सभायां मयक्लृप्तायां[6] क्वापि धर्मसुतोऽधिराट्[7] वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥३४ ॥
आसीनः काञ्चने साक्षादासने मघवानिव ।
पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च वन्दिभिः ॥ ३५ ॥

---

1. B.G.J. M. Ma °हि° 2. B.G.J Ml.V °क्ष्मीर्नां° 3. K.M.Ma.T.W °तिं 4. M. Ma °रिपो° 5. B.G.J प्रचल ; K.T.W चपल 6. Ml.V. °विद्यायां 7.K.M. Ma. Ml.V. विराट् ।

**श्रीध० एकदेति**। अच्युते श्रीकृष्णे[1] आत्मा मनः[2] यस्य तस्य ॥ ३१॥

**यस्मिन्निति**। नरेन्द्रादीनां लक्ष्मीः लक्ष्म्यः विभूतयः, विश्वसृजा मयेन उपक्लृप्ताः विरचिताः ताभिस्सह, कुरुराट् दुर्योधनः अतप्यत् ॥ ३२॥

**यस्मिन्निति**। महिषी सहस्रमिति बहुत्वोपलक्षणं, क्वणद्भिः अङ्घ्रिभिः शोभा यस्य, मध्ये सुचारु चारुमध्यमित्यर्थः। कुचकुङ्कुमैः शोणा हाराः यस्य तत्। श्रीमन्ति मुखानि यस्य तत्, चलैः कुण्डलैः कुन्तलैश्च, आढ्यं सम्पन्नं, अशोभतेति शेषः ॥ ३३॥

**सभायामिति**। क्वापि कदाचित् स[3] विरेज इति शेषः। स्वस्य चक्षुषा हिताहितज्ञापकेन॥ ३४,३५॥

---

1. B.J.omit श्रीकृष्णे 2. B.J.omit मनः 3. Ml.V.omit सः

**वीर० एकदेति**। अच्युते भगवती आत्मा मनो यस्य तस्य युधिष्ठिरस्यान्तःपुरे, श्रियं सम्पदं राजसूयस्य महत्वं च अवलोक्य[1] दुर्योधनो अतप्यत् ॥ ३१॥

श्रियमेव प्रपञ्चयन् तत्परितापमाह- **यस्मिन्निति द्वाभ्याम्**। यस्मिन्नन्तःपुरे विश्वसृजा विश्वकर्मणा उपकल्प्ताः रचिताः नानाविधाः नरेन्द्रादीनां लक्ष्म्यः भोग्यभोगेपकरणभोगस्थानादिलक्ष्म्यः भान्ति, द्रुपदराजसुता द्रौपदी ताभिः लक्ष्मीभिः पतिमुपतस्थे[2] पर्यचरत् यस्यां द्रुपदराजसुतायां विषक्तं आसक्तं हृदयं यस्य सः, कुरुराट् दुर्योधनः अतप्यत् ॥ ३२॥

**यस्मिन्निति**। तदा दुर्योधनपरितापकाले यस्मिन्नन्तःपुरे यदुपतेः कृष्णस्य महिषीसहस्रं पत्नीसहस्रं, परितापावहत्वेनासेति शेषः। सहस्रमिति बहुत्वोपलक्षणम्। कथम्भूतम्? श्रोणीभरेण नितम्बभरेण शनकैः क्वणद्भिः चरणाभरणध्वननपूर्वकं चलद्भिः अङ्घ्रिभिः शोभा यस्य तत् मध्ये सुचारु चारुमध्यमित्यर्थः। कुचकुङ्कुमैः शोणाः [3]हाराः यस्य तत्, श्रीमन्ति [4]शोभायुक्तानि यस्य तत्। चपलैः कुण्डलैः कुन्तलैश्च आढ्यं सम्पन्नम् ॥३३॥

**सभायामिति**। क्वापि कदाचित् मयेन दत्तायां, मयविद्यायामिति पाठे विद्याप्रभावरचितायामित्यर्थः। स्वचक्षुषा हिताहितज्ञापकेन कृष्णेन परिवृतो, रेजे इति शेषः ॥ ३४॥

किञ्च **आसीन** इति। पारमेष्ठ्यश्रिया चतुर्मुखसम्पत्सदृशा श्रिया जुष्टः सेवितः इन्द्र इव आसीनः उपविष्टवान् ॥ ३५ ॥

1. B, आलोक्य 2. B पतीन् युधिष्ठिरादीन् 3. B adds रक्ताः 4. T, W omit शोभायुक्तानि

**विज०** यस्मिन् पुरे विश्वसृजा कृष्णेन तस्मिन् ताभिः श्रीभिः सह द्रुपदराजसुता पतिमुपतस्थ इत्यन्वयः ॥ ३१-३३ ॥

स्वचक्षुषा स्वदृष्टिभूतेन ॥ ३४, ३५ ॥

**☆ उपास्यमानो विप्रेन्द्रैः नानादेश समागतैः ।**
**दोधूयमानो धवलैर्वालव्यजनसङ्कुलैः ॥**
**रराज राजशार्दूलो दिवि देवपतिर्यथा ॥ ३६ ॥ ★**

**तत्र दुर्योधनो [2]मानी सहितो भ्रातृभिर्[3]नृप ।**
**किरीटमाली न्यविशदसिहस्तः क्षिपन् [4]रुषा ॥ ३७ ॥**

**[5]स्थलेऽप्यगृह्णाद्वस्त्रान्तं [6-]जलं मत्वा स्थलेऽपतत् ।**
**जले च स्थलवत् भ्रान्त्या मयमायाविमोहित[-6]ः ॥ ३८ ॥**

**❖ आगच्छन्नेवमुर्वीशः पुरः पुष्करिणीं क्वचित् ।**
**विलोक्य स्फटिकां भूमिं मन्वानो न्यपतज्जले ॥ ३९ ॥**

**जहास भीमस्तं दृष्ट्वा स्त्रियो [7-]नृपतयोऽपरे[-7] ।**
**निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः ॥ ४० ॥**

☆ **अजातशत्रुराकर्ण्य वस्त्रस्त्रग्भूषणादिकम् ।**
**संप्रेष्याज्ञापयामास साम्ना योगेश्वरेण च ॥ ४१ ॥**

**तदनादृत्य सत्कारं व्रीडावनतकन्धरः ।**
**जाज्वल्यमानहृदयो न जगाम तदन्तिकम् ॥ ४२ ॥**

**सव्रीडितोऽवाग्वदनो रुषा ज्वलन् निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ।**
**हाहेति शब्दः सुमहानभूत्[8]सतामजातशत्रुर्विमना इवाभवत् ॥**
◆ **बभूव तूष्णीं भगवान् भुवो भरं [9-]समुज्जिहीर्षु[-9]र्भ्रमति स्म यद्दृशा ॥ ४३ ॥**

❁ **एतत्तेऽभिहितं राजन् [10-]यत् पृष्टोऽह[-10]मिह त्वया ।**
**[11]सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥ ४४ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

0 These three half verses are found only in M, Ma editions *अत्र विजयध्वजरीत्या त्र्यशीतितमोऽध्यायः समाप्तः 1. अत्र विजयध्वजरीत्या चतुरशीतितमोऽध्यायः प्रारभ्यते। * Here M, Ma add श्रीशुक उवाच 2. M, Ma राजा 3. M, Ma °प्रियैः 4. K नृपान् 5. B, G, J, K, Ml, T, V, W °ध्य° 6- -6 M, Ma हरिनीलोपलाचिते। स्थलं पुष्करिणीं मत्वा सर्वे तं जहसुर्जनाः ॥ ▲ This additional verse is found in M.Ma edns only 7- -7 M, Ma भूपाश्च केचन ✣ These two additional verses are found in M, Ma edns only 8. K, M, Ma, T, W °भूत्तदा अजा° ❁ This half verse is not found in T, W editions 9- -9 M, Ma जिहीर्षुरात्मेहितमात्मनि स्मरन्। ; Ml, V जिहीर्षुरेष भ्रमति स्म यद्दृशा। ❖ This verse is not found in M, Ma edns 10- -10 Ml.V. पृष्टोऽहमिति यत् 11. K, T, W दुर्यो°

**श्रीध० तत्रेति**। मानी साहङ्कारः किरीटं च माला च विद्येते यस्य सः, न्यविशत् विवेश क्षिपन् द्वास्थादीन् अपक्षिपन् ॥३६ ,३७॥

**स्थल** इति। तत्र [1]शुद्धान्ते स्थले वस्त्रान्तमभ्यगृह्णात् आकुञ्चितवान्। कुतः ? तस्मिन् स्थल एव भ्रान्त्या जलं मत्वा जले च अपतत् , कुतः स्थलवद्भ्रान्त्या ॥ ३८ - ४२ ॥

**स इति**। भुवो भरं भारं जिहीर्षुरिति अद्य सम्पादितेन कलहबीजेन कुरूणां संहारं करिष्यामीति मत्वा[2] किञ्च यस्य दृशा दृष्टिमात्रेण दुर्योधनो भ्रमति स्म भ्रान्तिं प्राप मयमया तु निमित्तमात्रं सः भूभारहरणबीजं दुर्योधनस्य भ्रमं भीमादि हास्येन तस्य पराभवं च विधाय तूष्णीमासीदित्यर्थः ॥ ४३ , ४४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

1 . B . J . omit शुद्धान्ते 2 . Ml . V omit मत्वा

**वीर० तत्रेति**। किरीटमाले अस्य स्त इति तथा मानी साहङ्कारः असिः खड्गो हस्ते यस्य सः। भ्रातृभिः दुश्शासनादिभिः परीतः[1] परिवृतः नृपान् क्षिपन् निन्दन्, तत्र सभायां न्यविशत् विवेश। रुषेति पाठे द्वारपालान् क्षिपन्नित्यर्थः ॥ ३६, ३७ ॥

**स्थल इति**। शत्रूणां जलस्थलबुद्धिं विपर्यासकारिणीं सभामाविशन् दुर्योधनस्तावत्स्थले, जलभ्रान्त्येति शेषः। वस्त्रान्तमभ्यगृह्णात् उद्धृतवान् तथा क्वचित् स्थले जलं मत्वा न्यपतत्। तथा जले च स्थलवद्भ्रान्त्या न्यपतत्। जलविषयक ज्ञानस्य स्थलविषयकज्ञान सारूप्य ज्ञापनाय वत्करणम्। तदात्मिकया भ्रान्त्येत्यर्थः। भ्रान्तौ कारणं वदन् विशिनष्टि मयस्य मायया विमोहित इति ॥३८,३९॥

**जहासेति**। तं एवम्भूतं दुर्योधनं दृष्ट्वा भीमः जहास हसितवान्। तथा अन्ये नृपाश्च राज्ञा युधिष्ठिरेण निवार्यमाणा अपि भगवता अनुमोदिताः तं पश्यतेत्येवं प्रबोधिताः जहसुः ॥ ४०-४२ ॥

**स इति**। स दुर्योधनः लज्जतोऽधोमुखः गजाह्वयं हास्तिनपुरं ययौ तदा सुमहानुच्चैः हा हा दुर्योधनोऽवमानित इति शेषः, इत्येवं विधः शब्दो बभूव विमना इव अभवत्, इवशब्दो अनतिरिक्तार्थकः ॥४३॥

प्रश्नस्योत्तरमुक्तं निगमयति - **एतदिति**। हे राजन्! यत् अहं त्वया पृष्टः तस्य एतदुत्तरं तुभ्यं इतीत्थं अभिहितं किं तत्? यत् दुर्योधनस्य दौरात्म्यं युधिष्ठिर सम्पदमवलोकनज परितापरूपं दौर्जन्यम् ॥४४॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां पञ्चसप्ततितमोऽध्यायः ॥ ७५॥

---

1. K.T.W. omit परीतः

**विज०** वालव्यजनसङ्कुलैः चामर स्तिमित वायुभिः दोधूयमानः वीज्यमानः ॥ ३६ ॥

द्वित्रेष्वध्यायेषु शाल्ववधमाहात्म्यं कथयति । तत्रादौ भूभारहरण हेतु दुर्योधनस्य तेजः क्षतिं च वक्ति - **तत्रेत्यादिना।** तत्र सभायाम् ॥ ३७ ॥

"आचितं निचितं व्याप्तम्" (हला.को. 4-7) इति हलायुधः ॥ ३८ ॥

पुरः अग्रतः स्फटिकमणिनिबद्धाम् ॥ ३९-४४ ॥

योगेश्वरेण श्रीकृष्णेनानुज्ञातः साम्ना सान्त्ववचनेन ॥

आत्मना स्वेनैव ईहितं चेष्टितं आत्मनि मनसि स्मरन्भद्रमिति शेषः, तत्र कथान्तरं वक्तुं तन्नारदागमनमाह तदेति ॥

उपेत्य नारदस्सर्वे सदस्यैरभिपूजितः। कृष्णेनाभ्यर्चितः सम्यगुपविष्टो नृपान्तिके ॥
उवाच धर्मराजस्तं प्रणिपत्य यथाविधि। भवान् सर्वत्र गो ब्रह्मन् सर्वकालेष्वसङ्गतः ॥

नृपाणां शौर्ययुक्तानां सर्वमण्डल वासिनाम्। इदानीं कतमः शूरो नित्योद्योगेन वर्तते ॥
इति तेनोदितां वाणीमाकर्ण्य मुनिरब्रवीत् ॥

**नारद उवाच**

भग्नदर्पा नृपाः सर्वे कृष्णेनाप्रतिमौजसा। वसन्ति विषये स्वे स्वे नष्ट चेष्टागतश्रियः ॥
एक एव महोत्साहः क्षत्रियाणां दुराग्रही। जातः शाल्वेषु नृपतिः बहुपादातिवाहनः ॥

भ्रातर्युपरते युद्धे विष्णुना लोक जिष्णुना। ब्रह्मदत्त सुते हंसे यमुनायां महात्मना ॥
कृष्ण द्विडेत्यराज्ञो सौरुक्म्यादीन्कुण्डिने पुरे। समाजं कारयामासश्चातुरानृण्य काङ्क्षया ॥

शिशुपाल द्रुममुखैर्दन्तवक्त्रपुरस्सरैः। पराजितेषु संग्रामे जरासन्धादिषु प्रभो ॥

रुक्म्यादीन् राज्ञः समाजं सम्मेलनं आनृण्यं ऋणाभावकरणम् ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां टीकायां
दशमस्कन्धे उत्तरार्धे पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
(विजयध्वजतीर्थरीत्या त्र्यशीतितमोऽध्यायः)

# षट्सप्ततितमोऽध्यायः

(विजयध्वजरीत्या पञ्चाशीतितमोऽधयायः)

**श्रीशुक उवाच**

* अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ।
क्रीडा नरशरीरस्य यथा सौभपतिर्हतः ॥ १ ॥

शिशुपालसखस्साल्वो रुक्मिण्युद्वाह आगतः[1] ।
यदुभिः निर्जितस्संख्ये जरासन्धादयस्तथा ॥ २ ॥

साल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ।
अयादवीं[2] करिष्ये [3-]क्ष्मां पौरुषं मम पश्यत[-3] ॥ ३ ॥

इति मूढः प्रतिज्ञाय [4-]देवं पशुपतिं प्रभुम्[-4] ।
▲ गते तस्मिन् बहून् वर्षान् प्रतीक्ष्य तदुपागमम् ॥
तदनन्तरजोऽमात्यैरभिषिक्तो नृपार्थिभिः ।
तपस्तप्त्वा स नृपतिर्देवं पशुपतिं प्रभुम्
आराधयामास नृपः[5] पांसुमुष्टिं सकृद्ग्रसन् ॥ ४ ॥

संवत्सरान्ते भगव[6-]नाशु तोष[-6] उमापतिः ।
वरेणच्छन्दयामास[7] साल्वं[8] शरणमागतम् ॥ ५ ॥

---

* These two verses are not found in M, Ma editions 1. Ml, V तैः 2. K, Ml, T, V, ङ्ग वां 3--3 M, Ma पश्यन्तु मम पौरुषम् 4- -4 M, Ma तपसे प्राविशद्वनम् ▲ These three extra half verses are found in M, Ma editions 5. M,Ma वने 6--6 M, Ma न्सन्तुष्टस्य 7. K, T, W, add स 8.K, T, W णाग

## श्रीधरस्वामि विरचिता भावार्थदीपिका

ततः षट्सप्ततितमे वृष्णिसाल्वमहामृधे द्युमद्गदाप्रहारेण रणात्प्रद्युम्ननिर्गमः ॥

सम्पाद्य धर्मराजस्य राजसूयमहोदयम् निहत्य सौभराजादीनधोपारमदच्युतः ॥ २-३ ॥

**इतीति**। प्रत्यहंसकृत्। पांसुमुष्टिं एकां ग्रसन् भक्षयन् ॥ ४ ॥

**सवत्सरान्त** इति। आशुतोषोऽपि भगवानुमापतिः श्रीकृष्ण विद्विषि साल्वे वरस्य वैफल्यं मन्यमानो न शीघ्रं प्रादुरभूत्। तस्यातिनिर्बन्धमालक्ष्य संवत्सरांते वरेण च्छन्दयामास इच्छां कारितवान् वरं वृणीष्वेत्युवाचेत्यर्थः ॥५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ साल्व वधात्मकं भगवतश्चेष्टितमनुवर्णयितुं प्रस्तौति षट्सप्ततितमेन **अथेति**। क्रीडार्थं नरस्येव शरीरं यस्य तस्य कृष्णस्याद्भुतमन्यदपि चेष्टितं शृणु, किं तत् सौभपतिः सौभं नाम पुरं तस्य पतिस्साल्वो यथा येन प्रकारेण हतः तथा तस्य हननमित्यर्थः ॥१॥

**शिशुपालसख** इति। यदा साल्वो रुक्मिणी विवाहे आगतः संख्ये युे निर्जितः जरासन्धादयश्च जिताः स तदा। सर्वभूतानां शृण्वतां सतां प्रतिज्ञामकरोदिति सम्बन्धः। प्रतिज्ञामेव दर्शयति - अयादवा[1]मिति यादवरहितानां क्ष्मां भूमिम् [2-]करिष्यामि मे पराक्रमं पश्यत[-2] ॥२,३॥

**इतीति**। इत्थं प्रतिज्ञाय अतएव मूढः पशुपतिं रुद्रं आराधयामास। [3-]किं कुर्वन्[-3]? प्रत्यहं सकृत् पांसुमुष्टि मेकं ग्रसन् भक्षयन् आराधयामासेति सम्बन्धः ॥४॥

**संवत्सरान्त** इति। आशु तोषः ईषत् सन्तुष्टवान् भगवद्विद्वेषित्वादिति भावः वरेणेति हेत्वर्थे तृतीया वरार्थं च्छन्दयामास वरं वरयेतेत्युवाचेत्यर्थः ॥५॥

---

1. B.J. 'वी' 2- -2 T.W. omit 3- -3 T.w. omit

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

शिशुपाल द्रुम दुर्मुखैः सह जरासन्धादिषु सत्सु ॥१-४॥

तस्य साल्वस्यानन्तरज अनुजः च्छन्दयामास तृप्तमकरोत् ॥५॥

---

1. M.Ma शा' 2. B. द'

**देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।**
**अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥६॥**

तथेति गिरिशादिष्टो मयः परपुरञ्जयः ।
पुरं निर्माय साल्वाय प्रादात्सौभम[1]योमयम् ॥७॥

सलब्ध्वा कामगं यानं तमोधाम दुरासदम् ।
❖ आययौ स्वं जनपदं समग्र बलवाहनम् ।
इदानीं राजपुत्राणां स एवोद्योगवान् नृप!॥

इति धर्मसुतः श्रीमान् श्रुत्वा तन्नारदोदितम् ।
पार्श्वे भगवतः शौरेः शनैर्मुखमवैक्षत ॥

निशम्य तद्वासुदेवो धैर्यसारो निराकुलः ।
किञ्चित्प्रहस्यास्तुनामेत्याह साहि महात्मता ॥

पूजयित्वा ऋषिं सम्यक् सूनृतैर्गीर्भिरच्युतः ।
चिराभिलषितः सोऽपि प्राप्तः साध्वित्यचिन्तयत् ।

उग्रसेनं यदुपतिं युयुधानञ्च माधवः ।
अक्रूरं कृतवर्माणमन्यांश्च यदुपुङ्गवान् ॥
प्रेषयामास रक्षार्थै द्वारवत्याः स्वसैनिकान् । ❖

श्रीशुक उवाच

तथा वसति गोविन्दे शक्रप्रस्थे महात्मनि।
ससानुजे चैव नृपे कृतकृत्ये युधिष्ठिरे ॥

आकर्ण्य शाल्वः संक्रुद्धो दमघोषसुतं हतम् ।
जरासन्धं च सुहृदं राजसूयं क्रतुं कृतम् ॥
ययौ द्वारवतीं साल्वो वैरं कृष्ण कृतं स्मरन् ॥ ८॥

3- निरुध्य सेनया साल्वो महत्या भरतर्षभ -3 ।
तमावसन्नन्तरिक्षे युयुधे भरतर्षभ।
पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः ॥९॥

स गोपुराणि द्वाराणि प्रसादाट्टालतोलिकाः ।
विहारान् स विमानाग्र्यान्निपेतुश्शस्त्रवृष्णयः ॥१०॥

---

1 . B. G. J. M. Ma. Ml. V. 'मयस्म' ❋ These extra verses beginning with आययौ स्व जनपदं and ending with राजसूयं क्रतुं कृतम्' are found in M.Ma editions only. ❖ According to M. Ma. editions 84th chapter ends here and 85th chapter begins immediately. 2. B. G. J. K. M. MA. T. W. वृष्णि 3- -3 This half verse is not found in M, Ma. editions. ☆ This extra half verse is found in M.Ma editions only.

**श्रीध० तथेति**। तथेति प्रतिज्ञाय गिरिशेनाधिष्ठो मयः अयस्मयं लोहमयं पुरं सौभसंज्ञं निर्माय रचयित्वा प्रादात् ॥ ६, ७ ॥

**स इति**। तमसोन्धकारस्य धाम आश्रयं अन्यैर्दुरासदं दुष्प्रापम्। स गोपुराणीति। प्रासादाः गृहाः आट्टालास्तदुपरिगृहाः तोलिकास्तत्पर्यन्त कुड्यानि ताः विहारान् क्रीडास्थानानि च स बभञ्ज, किञ्च विमानाग्र्यात्तस्मा च्छस्त्र वृष्ट्यादयः पेतुः ॥ ८-१० ॥

**वीर० देवेति**। स साल्वः यानं वव्रे वृतवान् कथम्भूतं देवादीनां भेत्तुमशक्यं कामं यथेष्टं गच्छतीति तथा तद्वृष्णीनां यदूनां भीषणं भयङ्करम् ॥६॥

**तथेतीति**। तथेत्यङ्गीकृत्य गिरिशेनादिष्टो मयः सौभं नाम अयोमयं लोहमयं पुरं निर्माय ददौ ॥७॥

**सलब्ध्वेति**। स साल्वः तमसोऽन्धकारस्य धामाश्रयं यानं लब्ध्वा अधिष्ठायेत्यर्थः वृष्णिकृतं वैरं स्मरन् द्वारवतीं ययौ ॥८॥

**निरुध्येति**। हे भरतर्षभ, पुरीं द्वारवतीं निरुध्य उपवनादीन् बभञ्ज ॥९॥

तत्र अट्टालाः प्राकारोपरिगृहाः तोरणाः बहिर्द्वाराणि विहाराः क्रीडास्थानानि। किञ्च विमानाग्र्यात्तस्मात्सौभात् शस्त्र वृष्टयः शिलादयश्च निपेतुः ॥१०॥

---

1. B. कृष्णस्य

**विज०** अयस्मयं अयोमयं अयस्मयादीनि च्छन्दसीति पाणिनिः। नीलरश्मिपुञ्जात्मकत्वात् तमो धामेत्युच्यते ॥६,७॥

सूनृतैः सूनृताभिः ॥

स्वसैनिकान् स्वसेनानायकान् ॥

तथा महोत्सवसमेतत्वेन शाल्वः संक्रुद्धोऽभूदिति शेषः ॥

आगत्य च अन्तरिक्षे तं विमानं आवसन् तस्मिन् विमाने स्थितः युयुधे इत्यन्वयः। संप्रहार प्रकारमाह पुरीमिति। अट्टालोऽट्टः तोलिकावीथिका गृह पङ्क्तिमध्य पद्धतिरित्यर्थः ॥ ८-१० ॥

**शिलाद्रुमाश्चाशनयस्सर्वा[1][2] आसारशर्कराः।**
**प्रचण्डश्चक्रवातोऽभूद्रजसाच्छादिता दिशः ॥ ११ ॥**

**इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ।**
**नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥ १२ ॥**

**प्रद्युम्नो भगवान् वीक्ष्य बाध्यमाना[3] निजा प्रजाः ।**
**माभैष्टेत्यभ्ययाद्वीरो[4] [5-]रथारूढो महायशाः[-5] ॥ १३ ॥**

**सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरस्सहानुजैः[6] ।**
**हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥ १४ ॥**

**अपरे च महेष्वासा रथयूथपयूथपाः ।**
**निर्ययुर्दंशितागुप्ता [7-]रथेभाश्वपदादिभिः[-7] ॥ १५ ॥**

---

1. M.Ma शैला° 2. B.G.J.K.M.Ma.T.W. °स्सर्पा 3. M.Ma.मध्य° 4. B.G.J. M.Ma °धा° 5--5 M.Ma वाचः पित्रोरनुस्मरन्; K. Ml. T. V. W. रथारूढो महारथः 6. B. G. J. भुजः 7--7 M. Ma रथ नागाश्वपत्तिभिः ॥

**श्रीध०** शिला इति। आसारशर्कराः धारासम्पातवज्ज्वलोपलाः ॥ ११ ॥

**इतीति**। शं सुखं नाभ्यपद्यत ॥ १२ - १५ ॥

**वीर०** तत्रासारो धारासम्पातः शर्कराः सूक्ष्मशिलाः प्रचण्डो निष्ठुरश्चक्रवातो बभूव दिशश्च रजसा रेणुना[1]च्छादिताः बभूवुः ॥ ११ ॥

**इतीति**। इत्थं सौभेन [2]भृशं अर्द्यमाना पीड्यमाना कृष्णस्य नगरी द्वारका हे राजन् शं सुखं नाभ्यपद्यत न प्राप यथा त्रिपुरेण [3-]अर्द्यमाना[-3] मही शं नाभ्यपद्यत तद्वत् ॥ १२ ॥

**प्रद्युम्न इति**। [4-]भगवान् षड्गुणसम्पन्नः प्रद्युम्नः[-4] [5]बाध्यमानाः पीड्यमानाः [6]निजाः स्वकीयाः प्रजाः प्रेक्ष्य, इतीत्यनन्त मुक्त्वेति शेषः अभ्ययादभ्यद्रवत् ॥ १३ ॥

तथा सात्यकि प्रभृतयोऽपरे च यदुवीराः महान्त इष्वासाः धनूंषि येषां ते रथयूथपानामपि यूथपाः दंशिताः क्वचित रथादिभिश्चतुर्भिरङ्गैरुपाश्च निर्ययुः द्वारकाया इति शेषः ॥ १४, १५ ॥

1. B. धूल्लिताः 2. B. K. add यानेन 3- -3. K. T. W. omit 4- -4 T. W. omit 5. T. W. व॰ 6- -6 T. W. omit 7- -7 T. W. omit.

**विज॰** विहायस आकाशादासारो वेगवान् वर्षः तत्सहिताः शर्कराः क्षुद्र पाषाणाः चक्रवातो मण्डल वायुः ॥ १२

शं सुखम् ॥ १२-१५ ॥

**ततः प्रववृते युद्धं साल्वाना यदुभिस्सह।**
**यथासुराणां विबुधैस्तुमुलं रोमहर्षणम् ॥ १६ ॥**
**[1]ताश्च सौभपतेर्माया[2] दिव्यास्त्रै रुक्मिणीसुतः ।**
**क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥ १७ ॥**
**[3]विव्याथ पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः ।**
**साल्वस्य ध्वजनीपालं शरैस्सन्नत पर्वभिः ॥ १८ ॥**
**शतेनाताडयत्साल्वमेकैकेनास्य सैनिकान् ।**
**दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः ॥ १९ ॥**
**तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः ।**
**दृष्ट्वा तं पूजयामासुस्सर्वे स्वपरसैनिकाः ॥ २० ॥**

1. M.Ma ताश्च 2. M.Ma व्यां 3. M.Ma विव्याधद॰

**श्रीध० तत इति**। तुमुलं व्याकुलं रोमहर्षणं रौद्रम् ॥ १६ ॥

**ता इति**। नैशं निशिभवं तमः उष्णगुः सूर्य इव ॥ १७ ॥

किञ्च **विव्याधेति**। स्वर्णमयानि पुंखानि पृष्टप्रान्तानि येषां तैः अयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः ध्वजनीपालं सेनान्यं सन्नतानि निम्नानि पर्वाणि ग्रन्थयो येषां तैः ॥ १८ ॥

**शतेनेति**। सैनिकान् भटान् नेतृन् सारथीन् ॥ १९ ॥

**तदिति**। [1]स्वपरसैनिका[2]ः स्वपरसेनयोर्वर्तमानास्सर्वे पूजयामासुः सम्मानितवन्तः ॥ २० ॥

1--1 B.J. omit

**वीर० तत इति**। युद्धं प्रवृत्तमभूत् यथा विबुधैः देवैस्सह, असुराणां तद्वत् कथम्भूतं तुमुलं व्याकुलं रोमहर्षणं शृण्वतामपि रोमोद्गमकरम् ॥ १६ ॥

**ताश्चेति**। याः शस्त्रवृष्ट्यादयो माया स्ताः क्षणेन नाशयामास उष्णाः गावः किरणाः यस्य सः सूर्यो नैशं निशासम्बन्धि तमोऽन्धकारं नाशयति तद्वत् ॥ १७ ॥

**विव्याधेति**। स्वर्णमयाः पुङ्खाः पृष्टप्रान्ताः येषां तैः अयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः सन्नतानि निमग्नानि पर्वाणि येषां तैः पञ्चविंशत्या शरैः साल्वस्य ध्वजनीपालं सेनान्यं विव्याध ॥ १८ ॥

साल्वन्तु शतेन शराणामीति शेषः। अताडयत् सैनिकान्भटान् एकैकेन शरेणाताडयत् नेतृनवान्तर सेनानायकान् सारथीन् वा दशभिर्दशभिः शरैः वाहनानि गजाश्वरथादीनि त्रिभिस्त्रिभिः शरैः अताडयत् ॥ १९ ॥

**तदिति**। तत्प्रद्युम्नविक्रमात्मकं महदतिकौशलं कर्म दृष्ट्वा स्वपरसेनयोः वर्तमानास्सर्वे तं प्रद्युम्नं पूजयामासुः बहुमेनिरे ॥ २० ॥

1. B. बाणाना°

**विज०** उष्णा गावो यस्य स उष्णगुः सूर्यः ॥ १६-१८ ॥

अस्य प्रद्युम्नस्य ॥ १९-२० ॥

बहुरूपैकरूपं तद्दृश्यते न च दृश्यते ।
[1-]मायामयं मयकृतं[-1] दुर्विभाव्यं [2]परैरभूत् ॥ २१ ॥

क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित् ।
अलातचक्र वत् भ्राम्यत्सौभं तद्दुरवस्थितम् ॥ २२ ॥

यत्र यत्रोपलक्ष्येत [4-]ससौभस्सह[-4] सैनिकः ।
साल्वस्ततस्ततोऽमुञ्चन् शरान् सात्वतयूथपाः ॥ २३ ॥

शरैरग्न्यर्क [5]संस्पर्शैः आशीविषदुरासदैः ।
[6]पीड्यमान पुरानीकस्साल्वोऽमुह्यत्परेरितैः ॥ २४ ॥

साल्वानीकपशस्त्रा[7]स्त्रैर्वृष्णिवीरा भृशार्दिताः ।
न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः ॥ २५ ॥

---

1- -1 M.Ma मयमाया कृतं यानं 2. M.Ma जनै° 3- -3 M.Ma क्वचित्सिन्धौ क्वचिद्गिरौ । 4- -4 M.Ma तस्य सौभस्य 5. M.Ma सङ्काशैः 6. T.W. पाट्य°
7. B.G.J.K.M.Ma.T.W. स्त्रौघैः

**श्रीध० बहुरूपेति।** कदाचित् बहुरूपं कदाचिदेकरूपं क्वचिद्दृश्यते क्वचिन्नदृश्यते एवं दुर्विभाव्यं दुर्वितर्क्य मभूत् ॥ २१ ॥

किञ्च क्वचिदिति एवं तत् दुःखस्थितं अनवस्थतं च अभूत् ॥ २२-२३ ॥

शरैरिति। अग्निवद्दाहकः अर्कवत्संशोषकः युगपत् सर्वतस्संस्पर्शो येषां तैः आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वाद्दुरासदैः दुस्सहैः [2]पाट्यमानं पुरमनीकानि च यस्य सः परैर्यदुभिः ईरितैः मुक्तैः ॥ २४ ॥

**साल्वेति।** भृशार्दिता अपि स्वं स्वं रणं स्वां युद्ध भूमिम् ॥ २५ ॥

---

1- -1. MI. V. अतर्क्य 2. B. J. पीड्य

**वीर० बह्विति।** तन्मयकृतं सौभं क्वचिद्बहुरूपं क्वचिच्चैकरूपं क्वचिच्च दृश्यते क्वचित्तु न दृश्यते एवं परैः दुर्विभाव्य मवितर्क्यमभवत् ॥ २१ ॥

किञ्च - क्वचिदिति। एवं दुरवस्थितं अनवस्थितं च अभूत् ॥ २२ ॥

**यत्रयत्रेति**। उपलक्ष्येत दृश्येत सात्वत यूथपाः यदुवीराः ॥ २३ ॥

शरैरिति। अग्निवद्दाहको अर्कवत्संशोषकः युगपत् सर्वत संस्पर्शो येषां तैः आशीविषवदेकस्पर्शमात्रेण मारकत्वाद्दुरासदैः, दुस्सहैः परेरितैः यदुवीरप्रयुक्तैः शरैः पीड्यमानं पुरमनीकानि च यस्य सः साल्वोऽमुह्यत् मुमोह ॥ २४ ॥

**साल्वेति**। साल्वसैन्यपानां शस्त्रौघैः भृशं पीडिता अपि यदुवीराः स्वं स्वं रणं रणभूमिं न तत्यजुः न त्यक्तवन्तः तत्र हेतुत्वेन विशिनष्टि लोकत्रयमपि जेतुमिच्छवः ॥ २५ ॥

---

1. T.W पाट्य

**विज०** दुरवस्थितं नैकत्र स्थितमभूत् इति शेषः ॥ २१, २२ ॥

तस्य सौभस्य सैनिकः सेनासहितः शाल्वः यत्रयत्रोपलक्ष्येत सात्वतयूथपाः ततश्शरानमुञ्चन्नित्यन्वयः॥ २३

इति परैः शरैः प्रपीड्यमानः पुरस्थितानीकः ॥ २४ ॥

शाल्वस्यानीकपाः सेनानायकाः तेषां शस्त्राणामोघैः ॥ २५ ॥

**साल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः ।**
**आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥ २६ ॥**

**[1]प्रद्युम्नं गदया शीर्णं वक्षस्थलमरिन्दमम् ।**
**अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥ २७ ॥**

**लब्धसंज्ञो मुहूर्तेन कार्ष्णिस्सारथिमब्रवीत् ।**
**अहो असाध्विदं सूत यद्रणान्मे[2]ऽवकर्षणम् ॥ २८ ॥**

**न यदूनां कुले जातश्श्रूयते रणविच्युतः ।**
**विनामत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ॥ २९ ॥**

**किन्नु वक्ष्येऽभिसङ्गम्य पितरौ रामकेशवौ ।**
**युद्धात् सम्यगपक्रान्तः पृष्टस्तत्रात्मनः क्षमम् ॥ ३० ॥**

---

1.Ml.V - तं द्युमद्गदया 2. B. G. J. K.M.Ma. T.W. °ऽपसर्पणम् 3. K. Ml. T.V.W. कल्मषात् 4. K. M. Ma. Ml. T.V.W. र्म्यादप° 5. M. Ma °ना

**श्रीध० साल्वेति**। मौर्व्या कार्ष्णायसमय्या व्याहृत्य प्रहृत्य ॥ २६॥

**प्रद्युम्नमिति**। तं प्रद्युम्नं अपोवाह अन्यतो निनाय ॥ २७,२८ ॥

**नेति**। मत् मत्तो विना क्लीबं चित्तं यस्य तेन त्वया सूतेन ॥ २९ ॥

**किन्स्विति**। पितरौ रामकृष्णौ अभिसङ्गम्य तत्पार्श्वं गत्वा ताभ्यां पृष्टः स्वयोग्यं किं नु वक्ष्यामीति ॥ ३० ॥

---

1. Ml. V. केशवौ

**वीर० साल्वामात्य** इति। द्युमान्नाम द्युमदाख्यः बली मौर्व्या कार्ष्णायसमय्या गुर्वेति पाठान्तरम्। व्याहत्य प्रताड्य व्यनदत् ॥ २६ ॥

**प्रद्युम्नमिति**। गदया तत्प्रहारेण विशीर्णं वक्षस्थलं यस्य तं प्रद्युम्नं रणाद्रणस्थानादपोवाह अपसारयामास, तत्र हेतुत्वन सूतं विशिनष्टि 'धर्मवित्, सूतः कृच्छ्रगतं रक्षेद्रथिनम्' (भाग० 10-76-32) इत्येवं विध धर्मवित्त-दारुकस्य कृष्णसारथेः आत्मजश्च ॥ २७ ॥

**लब्धसंज्ञ** इति। तावन्मूर्छितः ततो मुहूर्तेन लब्धा संज्ञा चेतना येन सः कार्ष्णिः प्रद्युम्नः सारथिं उवाच। उक्तिमेवाह अहो इति सार्धैः चतुर्भिः। हे सूत। इद मसाधुं किं तत् मम रणादपसर्पणमिति ॥ २८ ॥

कुतस्तस्यसाधुत्वमत आह - **नेति**। यदूनां कुले जातः कोऽपि रणाद्विच्युतः पलायितो न श्रूयते किं पुनर्दृश्यत इति भावः क्लीबमधृष्टं चित्तं यस्य तेन त्वया सूतेन हेतुना प्राप्तं कल्मषमयशो येन तस्मात् मत् मत्तः विना अन्यः कोऽपि रणविच्युतो न श्रूयत इति सम्बन्धः ॥ २९ ॥

किञ्च **किन्विति**। रामकेशवाभिसङ्गम्य तत्पार्श्वं गत्वेत्यर्थः, ताभ्यां पृष्टः न्याय्या द्युध्दादपक्रान्तः पलायितोऽहमात्मनः क्षमं येग्यं किन्नुवक्ष्यामि ॥ ३० ॥

**विज०** "रथिनि प्राणसन्दिग्धे सारथीरथमाहरेत्। जीवयेद्युद्धतः साधु युद्धकर्म विशारदः" इति युद्धधर्मवित् ॥२६,२७॥

अपसर्पणं अपसरणम् ॥ २८ ॥

कुतोऽसाध्वित्यतस्तदाह - **नेति मद्विना** ॥ २९ ॥

धर्मसाधनाद्युद्धादपगतोऽहं पितृभ्यां पृष्टः तत्रपित्रोरात्मना मयाकृत मक्षमं किंनु कथंनु वक्ष्ये इत्यन्वयः ॥ ३० ॥

**व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः ।**
**क्लैब्यं कथं गतो वीर तथान्यैः कथ्यतां मृधे ॥ ३१ ॥**

**सूत उवाच**

**धर्मं विजानता युष्मान् कृतमेतन्मया विभो ।**
**सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ॥ ३२ ॥**
**एतद्विदित्वा तु भवान् मयाऽपोवाहितो रणात् ।**
**उपसृष्टः परेणेति मूर्च्छितो गदयाऽऽहतः॥ ३३ ॥**

इति श्रीमद्भागवते महापुराणे वैयाशिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
(विजयध्वजरीत्या पञ्चाशीतितमोऽध्यायः)

---

1. B.G.J.K.Ml.T.V.W. कथं 2. B.G.J.Ml.V. तवा° ;M.Ma सहा° 3- -3 B.G.J.K.T.W. सारथिरुवाच।

**श्रीध० व्यक्तमिति।** भ्रातृ जामयो भ्रातृभार्याः व्यक्तं निश्चितं यत्क्लैब्यं कथयिष्यति तत्कथनमनुकरोति - कथं कथमिति ॥ ३१ ॥

**धर्ममिति।** विभो! हे समर्थ! एतदपसर्पणं धर्ममाह - सूत इति ॥ ३२ ॥

**एतदिति**। अपोवाहितः अपनीतः उपसृष्टः उपसर्गं पीडां प्राप्त इति कृत्वा। यतः परेण शत्रुणा गदया हतस्सन् मूर्च्छितो निस्संज्ञतां गतो भवानिति ॥ ३३ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां

षट् सप्ततितमोऽध्यायः ॥ ७६ ॥

**वीर०** किञ्च **व्यक्तमिति**। मे मम। भ्रातृजामयो भ्रातृभार्याः मृधे युद्धे प्राप्तं क्लैब्यं कथंकथमिति। हसन्त्यः कथयिष्यन्ति व्यक्तं नूनं हे वीर तथा अन्यैरपि कथं कथ्यतां सम्भावनायां लोट् ॥ ३१ ॥

इत्थमुक्तः प्राह सूतः - **धर्ममिति**। हे प्रभो धर्मं विजानतेति हेतुगर्भं,अतो मया एत दपसारणं कृतं कोऽसौ धर्म स्तत्राह सूत इति। कृच्छ्रगतिं विपत्तिं गतं रथिनं रक्षे द्रथीतु तथाभूतं सारथिमिति ॥ ३२ ॥

अस्त्वयं धर्मः किम्म याधुना प्राप्तं कृच्छं? यतो मामपो हितवान् तत्राह - एतदिति। परेण शत्रुणा कर्त्रा गदया आहतस्ताडितः उपसृष्टः पीडां पीडां प्राप्तः मूर्च्छितश्चेत्येत द्विदित्वा उपसृष्ट इति पादे परेणापह्रियेतेत्येतत् विदित्वेत्यर्थः मया भवान् रणादपोवाहितः ॥ ३३ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

**विज०** किञ्चेदं दुःसहमित्याह - **व्यक्तमिति**। जामयः सहोदर्यः कथं कथयन्तीति तत्राह क्लैब्यमिति। हे वीर मृधे अन्यैः सह कथं क्लैब्यं गतः तत् कथ्यतामिति ॥ ३१ ॥

कोऽयं धर्म इति । तत्राह - सूत इति ॥ ३२ ॥

उपस्पृष्टः उपद्रुतः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

दशमस्कन्धे उत्तरार्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

( विजयध्वजरीत्या पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ )

# सप्तसप्तिततमोऽध्यायः

(विजयध्वजरीत्या षडशीतितमोऽध्यायः)

* इति सूतोदितां वाणीमाकर्ण्य यदुनन्दनः ।
पुनरात्त प्रहरणः सूतमाह रणाङ्गणे ॥ १ ॥

श्रीशुक उवाच

[1-]स तूपस्पृश्य सलिलं[-1] दंशितो धृतकार्मुकः ।
नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ २ ॥

विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः ।
[3]प्रतिरुध्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥ ३ ॥

चतुर्भिश्चतुरो वाहान् सूतमेकेन चाहनत् ।
द्वाभ्यां [4-]धनुश्च केतुं च[-4] [5]शरेणाऽन्येन वै शिरः ॥ ४ ॥

[6-]गदसात्यकिसाम्बाद्या जघ्नुः सौभपतेर्बलम्[-6] ।△
पेतुः समुद्रे [7-]सौभेयाः सर्वे सञ्छिन्न[-7]कन्धराः ॥ ५ ॥

एवं यदूनां [8]साल्वानां [9]निघ्नतामितरेतरम् ।
[10]युद्धं त्रिनवरात्रं [11-]तदभूत्तुमुलमुल्बणम्[-11] ॥ ६ ॥

---

* This verse is not found in G. J. K. Ml. T. V. W. editions. 1- -1 B. J. K. स उपस्पृश्य सलिलं ; M. Ma. पश्य सूत द्युमान् एष 2. M. Ma. आद्रवन्तं 3. B. G. J. M. Ma. T. W. °हत्य ; M l.V °हृत्य 4- -4 M. Ma. °च केतुः धनुषी° 5. K. M. Ma. Ml. T. V. W. द्युमतोऽन्येन 6- -6 M. Ma. गदासात्यकिरक्रूरः साम्बश्च शुकसारणौ । △ Here an additional half verse is found in M. Ma. editions as follows वसुदेवोग्रसेनौ च जघ्नुः सौभपतेर्बलम् 7- -7 M. Ma. बहवः शाल्वेयाभिन्न° 8. B. G. J. M. Ma. शा° 9 Ml. V. जघ्नता 10. M. Ma. रणं 11- -11. M. Ma. तु तुमुलं रोमहर्षणम् ।

## श्रीधरस्वामि विरचिता भावार्थदीपिका

सप्तयुक्सप्ततितमे नानामायाविचक्षणः। कृष्णेनागत्य साल्वस्तु हतः सौभं च चूर्णितम् ॥

**स** इति। दंशितः **सन्नद्धः** ॥ १, २ ॥

**विधमन्तमिति**। विधमन्तं क्षपयन्तम् । प्रतिहत्य प्रतिरुध्य ॥ ३ ॥

अष्टानां विनियोगमाह - **चतुर्भिरिति** ॥ ४ ॥

**गदेति**। सौभेयाः सौभस्थाः ॥ ५॥

**एवमिति**। नवानां रात्रीणां समाहारो नवरात्रम्। त्रयाणां नवरात्राणां समाहारः त्रिणव रात्रम्। सप्तविंशति महोरात्राणीत्यर्थः। तुमुलमाकुलम्। उल्बणं घोरम् ॥ ६ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ पुनस्सन्नद्धेन प्रद्युम्न द्युमति हते सति यदुषु च युध्यमानेषु भगवानागत्य साल्वं जघानेत्याह सप्तसप्तति तमेन- **स त्विति**। स तु प्रद्युम्नः सलिलमुपस्पृश्य आचम्य मूर्च्छात उत्थितत्वादिति भावः, दंशितः सन्नद्धः धृतं कार्मुकं धनुः येन सः। सारथिमाह किमिति? वीरस्य द्युमतः पार्श्वं समीपं मां नय प्रापयेति ॥ १, २ ॥

**विधमन्तमिति**। रुक्मिणीसुत इत्यस्य द्युमत्पार्श्वं गत इत्यादिः स्वसैन्यानि विधमन्तं ताडयन्तं द्युमन्तं प्रतिरुध्य सन्निरुध्य स्मयन् अनेनानायासस्सूच्यते, अष्टभिः शरैः प्रत्यविध्यत् प्रत्यताडयत् ॥ ३ ॥

तत्राष्टानां विनियोगमाह - **चतुर्भिरिति**। (चतुरो) वाहानश्वान् एकेन कार्मुकम् एकेन सूतं एकेन ध्वजमेकेन तु द्युमतश्शिरोऽहनत् ॥ ४ ॥

**गदेति**। गदप्रभृतयः यदवः सौभपतेः बलं जघ्नुः। सोभेयाः सौभस्थाः सर्वे सञ्छिन्नाः कन्धरा येषां ते समुद्रे पेतुः पतितवन्तः ॥ ५. ॥

**एवमिति**। इतरेतरं परस्परं निघ्नतां सम्बन्धि तद्युद्धं त्रिनवरात्रमभूत् । नवानां रात्रीणां समाहारः नवरात्रं, त्रयाणां नवरात्राणां समाहारः त्रिनवरात्रं सप्तविंशत्यहोरात्राणि इत्यर्थः। तुमुलमाकुलम् उल्बणं घोरम् ॥ ६ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

यदून्नन्दयतीति यदुनन्दनः। एष द्युमान् दंशितः रणाङ्गणे आस्ते इति शेषः। ततः किं तत्राह - नयेति ॥ १-५ ॥

त्रिनवरात्रम् सप्तविंशद्रात्रम् ॥ ६ ॥

**अलक्षयच्छकुनान्घोरान् सङ्ग्रामशंसिनः ।**
**अन्वीयमानः सामात्यैः पाण्डवैः निर्ययौ पुरात् ॥ क ॥**

**स गत्वा किञ्चिदध्वानं स्थापयित्वा पुरौकसः ।**
**पृथासुताननुज्ञाप्य प्रणतानश्रुलोचनान् ॥ ख ॥**

**सुवर्णशिबिकारूढै रवरोधवधूजनैः ।**
**गजाश्वरथपादाति सहस्रैरपि संयुतः ।**
**अन्वीत राज कटकः प्रतस्थे पश्चिमामुखः ॥ ग ॥**

**शाल्वोऽपि कुरुशार्दूल विमानेन खचारिणा ।**
**अपावृत्य रणाद्राष्ट्रं स्वमेवाभ्यर्दितो ययौ ॥ घ ॥**

**गच्छमानस्य शाल्वस्य साम्बोऽभिद्रुत्य पृष्ठतः ।**
**शाल्वामात्यं क्षेमधूर्तिं बाणैर्निन्ये यमक्षयम् ॥ ङ ॥**

**सेनापतिं विविन्दाख्यं शाल्वस्याखिल वल्लभम् ।**
**निरुध्य पथि गच्छन्तं प्रद्युम्नः प्राहरच्छरैः ॥ च ॥**

अखिलात्समस्त प्रकृति जनात् वल्लभं प्रियतम् ॥

**प्रद्युम्ने नातिविद्धोऽसौ गृहीत्वा खड्गचर्मणी ।**
**ससज्ज रौक्मिणेयेन तदभूद्रणमद्भुतम् ॥ छ ॥**

**ससज्ज सङ्गतः ।**

**मण्डलानि विचित्राणि चरितस्तस्य सङ्गरे ।**
**कृपाणेन यदुश्रेष्ठः शिरः कायादपाहरत् ॥ ज॥**

विभ्रष्टमार्गा सा सेना हतप्रवर यूथपा ।
विदुद्राव यथाकामं प्राणत्राणपरायणा ॥ झ ॥

देवोऽपि द्वारकामेत्य वेगेन गरुडध्वजः ।
ददर्श नगरीं भग्न प्रासादाट्टालगोपुरम् ॥ ञ ॥

विशीर्ण तोरणां रुग्ण तुङ्गसालप्रतोलिकाम् ।
विध्वस्तोपवनोद्यानां प्रस्तरापूर्णदीर्घिकाम् ॥ ट ॥

सालः प्राकारः "रथ्या प्रतोली विशिखा" (वैज.को.4-3-16) इति हलायुधः। प्रतोलिरेव प्रतोलिका। प्रस्तरापूर्ण दीर्घिकां, पाषाणपूरित परिखां गन्तुमिति शेषः ॥

निस्स्वाध्याय वषट्कारामालोक्य द्वारकां पुरीम् ।
आपृच्छत्कृतवर्माणं किमेतदिति दुर्मनाः ॥ ठ ॥

तेनोक्तं सर्वमाकर्ण्य शाल्वराज विचेष्टितम् ।
प्रतिजज्ञे यदुपतिः शृण्वतां सर्वसात्वताम् ॥ ड ॥

अनुद्रुत्य तमद्यैव सौभं हत्वा दुरात्मकम् ।
सौभं निपात्य जलधौ प्रवेक्ष्ये द्वारकामिति ॥ ढ ॥

सरथं शैब्यसुग्रीव मेघपुष्प वलाहकैः ।
युक्तं बहुप्रहरणमग्र्यास्थित दारुकम् ॥ ण ॥

आरुह्य भगवान्विष्णुः गरुडध्वजमुत्तमम् ।
प्रययौ सौभपदवीं मनो मारुतरंहसा ॥ त ॥

तथा गत्वा सुदूरं तमम्भोधेः कुक्षिमाश्रितम् ।
ददर्श सौभं तन्मध्ये शाल्वं च समलङ्कृतम् ॥ थ ॥

[1]इन्द्रप्रस्थगतकृष्ण आहूतो धर्मसूनुना ।
राजसूये[2]ऽथ निर्वृत्ते शिशुपाले [3-]च संस्थिते[-3] ॥ ७ ॥

कुरुवृद्धाननुज्ञाप्य मुनींश्च[5-] ससुतां पृथाम्[-5] ।
[6-]निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ[-6] ॥ ८ ॥

★ आह चाहमिहायात आर्यमिश्राभिसङ्गतः ।
राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥ ९ ॥

वीक्ष्य तत्कदनं[7] रामं निरूप्य पुररक्षणम्[8] ।
सौभं च साल्वराजं च दारुकं प्राहकेशवः ॥ १० ॥

रथं प्रापय मे सूत साल्वस्यान्तिकमाशु वै ।
सम्भ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥ ११ ॥

इत्युक्त श्चोदयामास रथमास्थाय दारुकः ।
विशन्तं ददृशुस्सर्वे स्वे परे चारुणानुजम् ॥ १२ ॥

---

1. B. G. J. M. Ma. Ml. V. °स्थं 2. K . T. W. च 3- -3 M. Ma. रणे हते 4. K. T. W. °नुपामन्त्र्य 5- -5. M. Ma. ब्राह्मणैस्सह 6- -6 M. Ma. omit ★from 9th to 12th verses are not found in M . Ma. editions 7. B. G. J. Ml. V. स्वानां 8. K. T. W. °णे

**श्रीध०** परमतमुपन्यस्यति - **इन्द्रप्रस्थ गत** इत्यादिना ॥ ७ ॥

**आह चेति**। स्वगतमेव पथि चिन्ताविजृम्भित भाषणम्। आर्यमिश्राभिसङ्गतो बलभद्रसहितः ॥ ८,९ ॥

**वीक्ष्येति**। दुर्निमित्तदर्शनाकुलचित्त एवं चिन्तयन् द्वारकामागत्य स्वानां कदनं वीक्ष्य, सौभं च शाल्वराजं च वीक्ष्य, रामं पुररक्षणं प्रति निरूप्य नियुज्य दारुकं प्राहेत्यन्वयः ॥ १० ॥

**रथमिति**। ते त्वया ॥ ११ ॥

**इत्युक्त** इति। आस्थाय सम्यगधिष्ठाय, अरुणानुजं ध्वजे वर्तमानं गरुडम् ॥ १२ ॥

**वीर०** अत्र कैश्चिदृषिभिरुक्तं दूषयितुमनुवदति शुकः – 'इन्द्रप्रस्थगतः' इत्यादिना 'एवं वदन्ति राजर्षे ऋषयः' इत्यतः प्राक्तनेन। धर्मसूनुना युधिष्ठिरेणाहूतः कृष्णः राजसूये संवृत्ते परिसमाप्ते सति शिशुपाले संस्थिते मृते च सति तत्रैव कतिचिद्दिनानि स्थितः ॥ ७ ॥

अतिघोराणि निमित्तानि पश्यन् कुरुवृद्धादीन् भीष्मादीन् ससुतां पृथां कुन्तीं मुनींश्च आमन्त्र्य पृष्ट्वा द्वारावतीं ययौ। आह च इत्युत्तरेण सम्बन्धः ॥ ८ ॥

उक्तिमेवाह - **आह चाह**मित्यादिना। आर्यमिश्रो बलभद्रः तेनाभिसङ्गतः सहितोऽहमिहागतः चैद्यपक्षीया राजन्या मम पुरीं हन्युः नाशयेयुः। अतोऽहं गमिष्यामीति शेषः ॥ ९ ॥

**वीक्ष्येति**। अस्यागमनानन्तरम् इत्यादिः स्वानां तत्कदनंयुद्धंसौभं साल्वं च वीक्ष्य रामं पुररक्षणम् प्रति निरूप्य नियुज्य दारुकंप्राहेत्यन्वयः ॥ १० ॥

उक्तिमेवाह - **रथमिति**। हे सूतः! साल्वस्यान्तिकं प्रति आशु रथं प्रापय। तेन साल्वेन सह सङ्ग्रामः कर्तव्यः। अयं साल्वो मायावी सौभराट् च ॥ ११ ॥

**इतीति**। आस्थायसम्यगधिष्ठाय चोदयामास गमयामास, अश्वानिति शेषः। विशन्तमिति अरुणस्यानुजो यस्मिन् तं गरुडध्वजं रथं विशन्तं रणभूमाविति शेषः। स्वे यदवः परे साल्वपक्षीयाश्च ददृशुः ॥ १२ ॥

**विज०** अस्मिन्नवसरे कृष्णागमनं वक्ति इन्द्रप्रस्थ इति ॥ ७-१२ ॥

**साल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ।**
**[1]प्राहरत्कृष्णसूताय शक्तिं [2]भीमरवां मृधे ॥ १३ ॥**

**तामापतन्तीं नभसि महोल्कामिव रंहसा ।**
**भासयन्तीं दिशश्शौरिस्सायकैश्शतधाऽऽच्छिनत् ॥ १४ ॥**

**तं च षोडशभिर्बाणैर्विध्वा सौभं च [3]खे भ्रमत् ।**
**अविध्यच्छरसंदोहैः खं सूर्य इव रश्मिभिः ॥ १५ ॥**

**साल्व[4]श्शौरेस्तु दोस्स[4]व्यं सशार्ङ्गं शार्ङ्गधन्वनः ।**
**बिभेदन्यपतद्धस्ता च्छार्ङ्गमासीत्तदद्भुतम् ॥ १६ ॥**

**हाहाकारोमहानासीद्भूतानां तत्र पश्यताम् ।**
**विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १७ ॥***

---

1. Ml. प्राहिणोत्कृ° 2. M.Ma भीमां दृढां 3. M.Ma खेचरम् 4- -4 M.Ma °श्शौरेस्ततस्स° 5. M.Ma यदूनां * The following extra verse is found in M.Ma editions only - यस्त्वया युधि दुर्बुद्धे भ्रातरौ मे महाबलौ। निहतौ हंसडिभकौ यमुनायां दुरात्मना ॥

**श्रीध० साल्वश्चेति**। हतप्रायस्य बलस्य सैन्यस्येश्वरः[1] ॥ १३, १४ ॥

**तमिति**। तं च साल्वम्। शरसन्दोहैः शरजालैः। खं सूर्य इव रश्मिभिरिति सुनीलत्व विपुलत्वादिभिः आकाशोपमा सौभस्य। अचिन्त्यवेगत्व[2] बाहुल्यादिभिः शराणां रश्मिसादृश्यम्। अयत्नेनैव रश्मिवच्छरजालप्रसर णात्सूर्यतुल्यः श्रीकृष्ण इति ॥ १५ ॥

**साल्व** इति। दोर्बाहुम् ॥ १६, १७ ॥

---

1. Ml.V omit सैन्यस्य 2. B.J वेगबाहु:

**वीर० साल्व** इति। हतप्रायस्य बलस्येश्वरः साल्वः युद्धे कृष्णमवलोक्य भीमो रवो ध्वनिः यस्यास्तां शक्तिं कृष्णस्य सूताय प्राहरत्प्रयुङ्क्त ॥ १३ ॥

**तामिति**। रंहसा वेगेन नभस्यापतन्तीम् उल्कामिव सर्वाः दिशो भासयन्तीं तां शक्तिं शतधा चिच्छेद ॥ १४ ॥

**तमिति**। खे आकाशे भ्रमद्भ्राम्यमाणं सौभं तं सौभपतिं च विद्ध्वा खमाकाशं रश्मिभिस्सूर्य इव शरजालैः पुनः सौभमाविध्यत्। सुनीलत्वविपुलत्वादिभिः आकाशोपमा सौभस्य अचिन्त्यवेगत्वबाहुल्यादिभिः शराणां रश्मि सादृश्यं अयत्नेनैव रश्मिवत् शरजालप्रसारात् सूर्यतुल्यः श्रीकृष्ण इत्यवगन्तव्यम् ॥ १५ ॥

**साल्व** इति। शार्ङ्गधन्वनः कृष्णस्य शार्ङ्गं सहितं दोर्भुजं बिभेद विव्याध,हस्तात् शार्ङ्गं न्यपतत्। तदद्भुतमभूत् अभूतपूर्वत्वादिति भावः ॥ १६ ॥

अत एवाह - **हाहाकार** इति। महानुच्चैः विनद्येति अस्य शार्ङ्गपातजसन्तोषातिशयादित्यादिः, उच्चैः विनद्य इदं वक्ष्यमाणमाह ॥ १७ ॥

**विज०** सव्यं हस्तम् ॥ १३-१७ ॥

**[1]यत्त्वया मूढ! नस्सख्युर्भार्या [2-]चापहृतेक्षताम्[-2] ।**
**[3-]प्रमत्तस्स सभामध्ये त्वया व्यापादितस्सखा[-3] ॥ १८ ॥ ★**

**तं त्वाद्य निशितैर्बाणैरपराजितमानिनाम् ।**
**नयाम्यपुनरावृत्तं यदि तिष्ठेर्ममाग्रतः ॥ १९ ॥ ▲**

**[4]श्रीभगवानुवाच[-4]**

**वृथा त्वं कत्थसे मन्द न [5]पश्यस्यन्तिकेऽन्तकम्[-5] ।**
**पौरुषं [6]दर्शयन्ति स्म शूरा न बहुभाषिणः[-6] ॥ २० ॥**

**इत्युक्त्वा गदया साल्वं भगवान्भीमवेगया ।**
**तताड जत्रौ संक्रुद्धस्स चकम्पे वमन्नसृक् ॥ २१ ॥**

---

1.M.Ma यद्भूयो 2- -2 M.Ma °प्यपहृता त्वया। 3- -3 M.Ma यश्च मन्द सभामध्ये दमघोषस्सुतस्सखा। ★ Here the following extra half verse is found in M.Ma editions only. व्यापादितः क्षत्रयाणां पश्यतां हतचेतसाम् ▲ Here the following extra verse is found in M.Ma only इति तेनोदितं वाणीमाकर्ण्य मधुसूदनः। प्राहादितो बाणगणैः पुनरात्त शरासनः 4- -4 M.Ma omit 5- -5 M.Ma यस्यास्त्यतिकौतुकम् 6- -6 M.Ma दर्शय त्वं नः शूराणां फल्गुभाषणम् 7. M.Ma संरब्धः

**श्रीध० यदिति**। सख्युः शिशुपालस्य ईक्षतामस्माकम्। प्रमत्तोऽनवहितः। व्यापादितः निहतः ॥ १७ ॥

**तमिति**। अपराजितोऽहमिति मानिनं मानवन्तम्। अपुनरावृत्तिं मृत्युम्। तिष्ठेः स्थास्यसि ॥ १९ -२१ ॥

**वीर० तदेवाह - यदिति** द्वाभ्याम्।यत् यस्मात् हे मूढ! नोऽस्माकं सख्युश्चैद्यस्य भार्यात्वेन सङ्कल्पिता रुक्मिणी त्वया अस्माकमीक्षतां पश्यतां सताम् अपहृता, तथा नस्सखा सभामध्ये व्यापादितः हतः, तत्र हेतुत्वेन सखायं विशिनष्टि- प्रमत्तः तदाऽनवहितः इत्यर्थः ॥ १८ ॥

**तमिति**। तुशब्दोऽत्र हेत्वर्थः। तस्मात्तं सख्युः भार्यापहर्तारं च अपराजितमात्मानं मन्यमानं त्वमपुनरावृत्तं मृत्युं नयामि, अतो युद्धे ममाग्रतास्तिष्ठ ॥ १९ ॥

इत्थमुक्तः प्राह श्रीभगवान् - **वृथेति**। हे मन्द! विकत्थसे प्रगल्भं भाषसे, अन्तिके समनन्तरे प्राप्तं मृत्युं न पश्यसि नालोकयसीत्यर्थः। किञ्च शूराः केवलं पौरुषमेव दर्शयन्ति, न तु बहु यथा तथा भाषन्त इति ॥ २० ॥

**इतीति**। भीमो भयङ्करो वेगः यस्यास्तया गदया जत्रौ स्कन्धमूले तताड ताडयामास, स च साल्वः असृक् रुधिरं वमन् उद्गिरन् चकम्पे कम्पितवान् ॥ २१ ॥

**विज०** सख्युर्भार्या शिशुपालस्य संक्लृप्ता जाया रुक्मिणी ॥ १८ ॥

अपुनरावृत्तिं मरणं यमगृहं वा ॥ १९ ॥

यस्य तवातिकौतुकमिति व्याख्यातं वीर्यं नास्ति स त्वं वृथा कत्थसे पौरुषम् अस्ति चेद्दर्शय शूराणाञ्च भाषणं फल्गुमितं वीर्यप्रकटनं बहित्यर्थः। यद्वा शूराणां पौरुषं दर्शय भाषणं फल्गु तुच्छं विकत्थनमित्यर्थः ॥ २०,२१ ॥

★ **गदायां सन्निवृत्तायां साल्वस्त्वन्तरधीयत ।**
**ततो मुहूर्त आगत्य पुरुषश्शिरसाऽच्युतम् ॥**
**देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥ २२ ॥**

**कृष्ण कृष्ण महाबाहो पिता ते पितृवत्सल ।**
**बद्ध्वाऽपनीतस्साल्वेन सौनिकेन यथापशुः ॥ २३ ॥**

**निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ।**
**विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा ॥ २४ ॥**

**कथं राममसम्भ्रान्तं[2] जित्वाजेयं सुरासुरैः ।**
**साल्वेनाल्पीयसाऽऽनीतः पिता मे बलवान्विधिः ॥ २५ ॥**

**इति ब्रुवाणे गोविन्दे सौभराट् प्रत्युपस्थितः ।**
**वसुदेवमिवानीय कृष्णं चेदमुवाच ह[3] ॥ २६ ॥**

**एष ते जनिता नीतो[4] यदर्थमिह जीवसि ।**
**वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥ २७ ॥**

---

★ From 22 to 27, 6 verses are not found in M.Ma editions 1.MI.V. प्रेषितोऽ° 2. MI.V. °मसम्भ्रान्तं 3. B.G.J.स: 4. B.G.J.K.T.W. तातो

**श्रीध० निशम्येति।** घृणी दयावान् ॥ २२-२६ ॥

**एष इति।** जनिता जनयिता। ईशश्चेच्छक्तश्चेत् ॥ २७ ॥

**वीर० गदायामिति।** सन्निवृत्तायां कृष्णेनापनीतायां सत्यामित्यर्थः। अन्तरधीयत अन्तर्हितवान्। ततः अन्तर्धानानन्तरं कश्चित्साल्वप्रेषितः पुरुष आगत्य अच्युतं शिरसा नत्वा प्रणम्य रुदन् वचो वाक्यं प्राह किमिति? देवक्या प्रहितः प्रेषितोऽस्मीति ॥ २२ ॥

किञ्च हे पितृवत्सल! ते तव पिता वसुदेवः बद्ध्वा अपनीतः, यथा सौनिकेन पशुमारकेण पशुरपनीयते, तद्वत् ॥ २३ ॥

**निशम्येति**। मानुषीं प्रकृतिं स्वभावम् अनुगतः प्राप्तः घृणी दयावान् अत एव विमनस्को दुःखितमनाः स्नेहात्पितृविषयकात् बभाषे, यथा प्राकृतः पुरुषः, तद्वत् ॥ २४ ॥

भाषणमेवाह - **कथमिति**। सुरासुरैरपि जेतुमशक्यं तं प्रसिद्धं रामं कथं जित्वा क्षुद्रेण साल्वेन मम पिता आनीतः, विधिः दैवं बलवान् अहो! ॥ २५ ॥

इति ब्रुवाणे सति वसुदेवमिवेति। इति इवशब्देन वस्तुतोऽवसुदेवमिति सूच्यते ॥ २६॥

उक्तिमेवाह - **एष इति**। ते तव एष जनिता जनकः तातः [illegible] नृत्तये जनितेत्युक्तम्। यदर्थं किमर्थमित्यर्थः। ते तव वीक्षितः पश्यतस्सतः अमुं वसुदेवं वधिष्ये, हे बालिश! मूढ! ईशस्समर्थश्चेत् अमुं पाहि ॥ २७ ॥

**वि[illegible]** No commentary for this unit.

[1]एवं निर्भर्त्स्य मायावी[1] खड्गेनानकदुन्दुभेः ।
उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥ २८ ॥

ततो [2]मुहूर्तं प्रकृतावुपप्लुतः स्वबोध आस्ते[2] स्वजनानुसङ्गतः[3] ।
महानुभावस्तदबुध्यतासुरीं मायां स साल्व[4]प्रहितां मयोदिताम् ॥ २९ ॥

न तत्र [5]दूतं न पितुः कलेबरं प्रबुद्ध आजौ [6]समपश्यदच्युतः ।
[7]स्वाप्नं यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः ॥ ३० ॥

एवं वदन्ति राजर्षे ऋषयः केचनान्विताः ।
यत्स्ववाचो विरुध्येरन्नूनं ते स्मरन्त्युत ॥ ३१ ॥

क्व शोकमोहौ स्नेहो वा भयं वायेऽज्ञसम्भवाः
क्व चाखण्डितविज्ञान [8]ज्ञानैश्वर्यस्य[8] हाऽऽत्मनः ॥ ३२ ॥

9

**यत्पादसेवोर्जितयाऽऽत्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ।**
**लभन्त आत्मीयमनन्तमैश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥ ३३ ॥**

---

1--1 M MA ततः शाल्वः समुत्पत्य 2--2 M Ma °हृतात् प्रकृतावुपस्थितः तत्रानुतिष्ठत्स्व° 3. B. Ml. V. षड्गः ;T. W. षड्गतः 4. B.G. J. प्रसृतां ;M. Ma. प्रकृतां 5. M Ma. दैत्यं 6. M. Ma तदप° ;Ml. V. मदप° 7. M.Ma. स्वाप्ने 8--8 B. G. J. °र्यस्य सुरार्चितः; M. Ma. °र्यैश्वरोऽर्जितः ; Ml. V. °र्यस्सुरेडितः 9 M Ma "वा°

**श्रीध० तत** इति। स्वबोधः स्वतस्सिद्धज्ञानवानपि स्वजनस्नेहतः प्रकृतौ मनुष्य स्वभावे उपप्लुतो निमग्न आस्ते अतिष्ठत्। ततः तत्सर्वमासुरीं मायामबुध्यत् मायेयमिति ज्ञातवान् ॥ २८ , २९ ॥

**नेति**। स्वाप्नं स्वप्नप्रपञ्चं यथा ॥ ३० ॥

एवं परमतमुपन्यस्तं निराकरोति - **एवमिति**। के च केचन नान्विता अनन्विताः पूर्वापरानुसन्धानरहिताः। तदाह यत्स्ववाच इति। तन्नानुस्मरन्तीत्यर्थः। अयमभिप्रायः - न तावत् राजसूयार्थं, रामेण सह गतः श्रीकृष्णः, सङ्कर्षणमनुज्ञाप्येति पूर्वमुक्तत्वात् ॥ ३१ ॥

असम्भावितं चेत्याह - **क्व शोकमोहाविति**। भयं वा दुर्निमित्तदर्शनकृतं, नूनं हन्युः पुरीं ममेति, यदुक्तं - यच्च हस्ताच्छार्ङ्गं न्यपतदित्युक्तं, तद्भयं वा केति। अशेषु सम्भवो येषां ते। अखण्डितानि विज्ञानज्ञानैश्वर्याणि यस्य सः। तत्र विज्ञानं स्वरूपविषयम्। ज्ञानं बाह्यविषयम् ॥ ३२ ॥

**यदिति**। किञ्च यस्य पादसेवया ऊर्जिता पुष्कला या आत्मविद्या तया अनादितश्चासौ आत्मविपर्ययग्रहश्च, अहं कृशः सुखी, दुःखीत्यादि लक्षणस्तं हिन्वन्ति, नाशयन्ति सन्तः ऐश्वरं पदं च। तस्य सतां गतेः कुतो नु मोह इति। अतो नैतद्वचनं सत्यमित्यर्थः ॥ ३३ ॥

**वीर० एवमिति**। आनकदुन्दुभेः वसुदेवस्य शिर उत्कृत्य छित्वा आदाय खस्थम् आकाशे स्थितं सौभमाविशत् ॥ २८ ॥

**तत** इति। प्रकृतौ मानुषस्वभावे उपप्लुते मग्नः स्वबोधः स्वासाधारणं सार्वज्ञ्यं यस्य सः। तत्र हेतुः - स्वजनानुसङ्गतः स्वजनासक्तः महानुभावः, हेतुगर्भमिदम्। तत्त्वात् स भगवान् मायामोहितां शाल्वं प्रति भयेनैवं कुर्वित्युपदिष्टामित्यर्थः। साल्वेन प्रेषिताम् आसुरीं मायाम् अबुध्यत ज्ञातवान् इत्यर्थः॥ २९ ॥

ततः किं कृतवान्? तदाह - नेति। यदैव प्रबुद्धोऽबुध्यत य तत्र तदैव आजौ युद्धाङ्गणे दूतं नापश्यत्, नापि पितुः कलेबरं, यथा स्वप्नादुद्बुद्धस्स्वाप्नमर्थं न पश्यति, तद्वत्। किन्तु अम्बरचारिणं सौभे स्थितं तं रिपुं साल्वमवलोक्य निहन्तुमुद्युक्तो बभूव ॥ ३० ॥

इत्थमुपन्यस्तं परमतं निराकरोति **एवमिति**। हे राजर्षे! केचिदृषयः नान्विताः अनान्विताः पूर्वापरसन्धान रहिताः इत्यर्थः। इत्थं वदन्ति, तदेवाह - यत्स्ववाच इति। स्ववाचो विरुध्येरन् विरोधं प्राप्नुयुरिति यत्, तन्नानुस्मरन्ति नानुसन्दधते, नूनं ध्रुवम्, अयमभिप्राय. न तावद्राजसूयार्थं रामेण सह आगतः श्रीकृष्णः 'सङ्कर्षणमनुज्ञाप्य' (भाग. 10-77-23) इति पूर्वमुक्तत्वात्, न च इन्द्रप्रस्थं गते कृष्णे साल्वागमनं साल्वसङ्ग्रामव्यासक्तेन मया युष्मद्द्यूतं न ज्ञातमिति काम्यकवनस्थान्पाण्डवान् सान्त्वयता कृष्णेनोक्तमिति व्यासोक्तेरिति ॥ ३१ ॥

असम्भावितं चैतदित्याह - **क्व शोकमोहाविति**। विमनस्कः इत्यनेनोक्तः शोकः 'मानुषीं प्रकृतिं गतः' भाग. 10-77-23 इत्यनेनोक्तो मोहश्च 'घृणी स्नेहात्' इत्यनेनोक्तः स्नेहः भयं वा दुर्निमित्त दर्शनजं 'नूनं हन्युः पुरीं मम' इत्युक्तं, यत्र हस्ताच्छार्ङ्गं न्यपतदिति, तच्चाज्ञानसम्भवं न विद्यते ज्ञानं येषां तेषु सम्भवं सम्भवेत्। भयं वा क्वेत्यसम्भावना द्योत्यते। तद्धेतुत्वेन भगवन्तं विशिनष्टि अखण्डितेति। ज्ञानविज्ञानशब्दौ प्रकारप्रकारिविषयज्ञानपरौ अखण्डिते ज्ञानविज्ञाने सर्वपदार्थ तद्याथात्म्यविषयके ऐश्वर्यं च यस्य तस्य ईश्वरस्य सर्वान्तर्यामिणः शोकादिः क्वेति सम्बन्धः, हेत्येवं विधस्य भगवतश्शोकादिकं वदतः प्रति विस्मयते ॥ ३२ ॥

शोकाद्यभावं कैमुत्यन्यायाभिप्रायेणाह - **यत्पादेति**। यस्य भगवतः पादयोः सेवया परिचर्यादिरूपसेवया श्रवणकीर्तनादि रूपया वा ऊर्जिता पुष्कला परिनिष्पन्नेति यावत् तया आत्मविद्यया आत्मनः तस्य परमात्मनः विद्यया उपासनया अनाद्यात्मविपर्ययग्रहं हिन्वन्ति अपनयन्ति अनादिश्चासावात्मनो विपर्ययः देहाद्विलक्षणस्यात्मनो देहतादात्म्यभ्रमः अस्वतन्त्रस्यात्मनः स्वातन्त्र्यभ्रमश्चेत्येवं विपर्ययः स एव ग्रहः पिशाचः तं, किञ्चानन्तम् असङ्कुचितम् आत्मीयमैश्वर्यम् अपहतपाप्मत्वादिगुणाष्टकलक्षणं लभन्ते निरस्तनिश्शेषाज्ञानतत्कार्याः गुणाष्टकप्रादुर्भावरूपमुक्तिं लभन्त इत्यर्थः। सताङ्गतेः परमपुरुषस्य मोहः कुतोऽनु? तत्पाद सेवकानामेव न मोहः, किं पुनस्तस्य मोहाभाव इति वक्तव्यमित्यर्थः ॥३३॥

**विज०** साल्वस्य शक्तिप्रकटनाय तन्मायाप्रकारमाह -**तत** इति ॥ २८ ॥

श्रीकृष्णः साल्वसृष्टां मायामवलोक्य किमकरोदत्राह - **तत** इति। ततो वसुदेवशिरोहरणानन्तरं मुहूर्तकालं तत्र युद्धे अनुतिष्ठत् अन्वतिष्ठत् अन्ववर्तत। कीदृशः? प्रकृतौ चिदानन्दघनस्वभावे उपस्थितोपि साल्वमायां जानन्नपि प्रकृतावृष प्रकृतिसमीपे स्थितः अजानन्निव पुनः किं चकारेति तत्राह - ततो मुहूर्तान्महानुभावः अपरिमितप्रभावः स हरिः स्वजनस्य

स्वभक्तजनस्यानुकूलात्सङ्गतः वचनप्रसङ्गात् तद्वसुदेवशिरोहरणमबध्यत कथं तदत्राह - आसुरी मिति। साल्वेन प्रकृतां प्रयुक्तां मूलबलमाह मय इति। मयेनासुररक्षणोदितामुपदिष्टामित्यर्थः। तदुक्तं 'जानन् शाल्वकृतां मायामजानन्निव केशवः। अन्ववर्तत किञ्चत्' (ब्रह्माण्डे) इति बुद्ध्वा किं कृतमत्राह - प्रकृताविति, कृती च्छेदन इति धातोः बुद्ध्वा मायाः प्रकृतौ निर्मूलने सम्यक् स्थितोऽभूदिति शेषः। ततः 'तामाहरद्विभुः' इति वचनात् अज्ञानप्रकटनं कस्मादत्राह प्रकृताविति। प्रकृतिनिर्मित शरीरस्थत्वादसुरजनमोहनार्थत्वाञ्च। "एवमेव तु सर्वत्र परमात्मा सनातनः। विश्च रुधिरस्रावी कथञ्चिदजयत्परम्" (ब्रह्माण्डे) "इत्यादि दर्शयेत् विष्णुर्मोहयान्मायया जगत्" (ब्रह्माण्डे) इति। चिदानन्दघनस्वभाव इत्येतत्कुत इति चेन्न। चिदानन्दघनस्यास्य कुतो वेधादिसद्गतेःसम्भवेत् (ब्रह्माण्डे) इत्यस्मात् स्वजनानुसङ्गत इतीदमपि सद्गतेः इति सिद्धम्। 'यदचरस्तन्वावावृधनो बलानीन्द्र प्रब्रुवाणो जनेषु मायेत्सा ते, यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से' इत्यादि श्रुति सिद्धोऽयमित्यर्थः। तथाहि हे इन्द्र! तन्वावावृधानः स्वरूपेण भृशं वर्धमानस्त्वं बलानि वीर्याणि विक्रमलक्षणानि अचरः अकृतेति यत्स्वजनेषु प्रब्रुवाणः व्याकुर्वाणो' वर्तसे इति शेषः। तस्मात् स्वभावरहस्यं स्वजना जानन्तीत्यर्थः साल्वादिशत्रुणा क्रियमाणानि यानि युद्धान्याहुः पुराणादौ एतानि त्वामुद्दिश्य सा मयोदिता माया इत् इन्द्रजाललक्षणैव त्वं पुरा प्रथमतो मुहूर्तं शत्रुसुखत्रोटनान्मायां न विवित्से न ज्ञातवानसि, अद्याधुना विवित्से ननु पश्चात् सा सिद्धाऽभूदित्यर्थः ॥ २९ ॥

एतदेव स्पष्टयति - **नेति**। अच्युतः ज्ञानच्युति रहितः तत्पितुः कलेबरं च नापश्यत् प्रबुद्धः मायामिति शेषः। आत्मा परमात्मा निदर्शयति स्वप्न इति। यथा स्वप्ने करितुरगादीन् पश्यति ततः प्रबुद्धः तान् पदार्थान्न पश्यति बद्ध्वा किं कृतमत्राह - अम्बरचारिणमिति ॥ ३० ॥

तद्द्रष्टृणामृष्यादीनामपि ज्ञानलोपो नास्ति किं पुनः हरेरिति भावेनाह - **एवमिति**। कथं वदन्तीत्यत्राह - यतत्स्ववाच इति। स्वस्य स्वतन्त्रस्य हरेः वाचो वेदलक्षणा यन्मोहादिकं हरिविषयं प्रति विरुध्यन्ते विरोधवन्त्यो भवन्ति हरेर्मोहादिकं न सहन्त इत्यर्थः। "अजस्यावक्र चेतसः" (कठ. उ. 5. 1) इति श्रुतेः। नूनं तार्किका उपक्रमादिवेदतात्पर्यलिङ्गकोविदास्ते वैदिकाः तन्महादिकं स्मरन्ति नु किं नैव स्मरन्तीत्यर्थः। येषां स्ववाचो विरुध्यन्ते हरेर्मोहादिवादिन्यः। परस्परविरोधिन्यः स्युः ते शास्त्रप्रणेतारः, तादृशीर्वाचः स्मरन्ति पुराणादौ नैव इति वा ॥ ३१ ॥

प्रत्युत विपरीतमेव वदन्तीत्याह **क्वेति**। ये शोकादयोऽज्ञानतः सम्भवो येषां ते तथा ॥ ३२ ॥

तदेव द्रढयति - **यत्पादेति**। आत्मविद्यया परमात्मज्ञानेन अनादिकालेन आत्मविपर्यायग्रहं मनसि स्थितमन्यथाज्ञानं हिन्वन्ति नाशयन्ति। न तावदेव, किन्तु हरितत्त्वं च जानन्तीत्याह - लभन्ते इति। आत्मीयमात्मनः परमात्मनो विद्यमानमनन्तमैश्वर्यमीश्वरत्वं लभन्ते जानन्ति। यद्वा स्वयोग्य मैश्वर्यरमीश्वरानु गृहीतमनन्तं मोक्षं लभन्ते प्राप्नुवन्ति ॥ ३३ ॥

इति तैरुदितां वाणीमाकर्ण्य कमलेक्षणः ।
ससौभं हन्तुमारेभे शाल्वं कुरु कुलोद्वह ॥

ततो निशातमादाय चक्रं कृष्णः सुदर्शनम् ।
आग्नेयास्त्रेणाभिमन्त्र्य प्राहिणोत्सौभनाशनम् ॥

तन्नारायणहस्ताग्रान्मुक्तमाग्नेयमन्त्रितम् ।
अज्वालाऽब्रह्मसदनं ज्वालामालातिभीषणम् ॥
ततो वैमानिकास्सर्वे ते विहाय विहायसम् ॥

सुदर्शनोष्मणा तप्ता दुद्रुवुः सर्वतो दिशम् ।
तदर्कशतसङ्काशं सौभं भित्वा द्विधा पुरम् ॥

भूयो नारायणकरं प्राप भूपसुदर्शनम् ।
ततः समुद्रे न्यपतत्पुरं विच्छिन्नबन्धनम् ॥

गदापाणिर्दुराधर्षः शाल्वोऽपि प्रत्यदृश्यत ॥
तां प्रेषयामास गदां कृष्णमुद्दिश्य दुर्मतिः ॥

ततो रथं दैत्यबलोपनीतं संस्थाय शाल्वो बहुशस्त्र सञ्चयम् ।
अवाकिरत्कृष्णशिरस्यनन्तैर्महायुधैश्च व्यनदद्धरिर्यथा ॥

तां गदां प्रेषितां तेन छित्वा बाणैस्त्रिधा हरिः ।
पाञ्चजन्यमुपाध्माय सिंहनादं व्यनीनदत् ॥

आब्रह्मसदनं ब्रह्मसदनं ब्रह्मलोक पर्यन्तम्

सौभं नाम पुरम् ॥

अनन्तैः अनेकसङ्ख्यैः हरिः सिंहः ॥

तं शस्त्रपूगैः प्रहरन्तमोजसा साल्वं शरैश्शौरिरमोघविक्रमः ।
[1] विद्ध्वाऽच्छिनद्वर्मधनुश्शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥ ३४ ॥

तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा ।
विसृज्य तद्भूतलमास्थितो गदा[2]मुद्यम्य साल्वो[3]ऽच्युतमभ्यगद्द्रुतम् ॥ ३५ ॥

आधावतः [4]सगदं तस्य बाहुं भल्लेन छित्वाऽथ रथाङ्गमद्भुतम् ।
वधाय साल्वस्य लयार्कसन्निभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥ ३६ ॥

जहार तेनैव शिरस्सकुण्डलं किरीटयुक्तं पुरुमायिनो हरिः ।
वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम् ॥ ३७ ॥

तस्मिन्निपतिते पापे सौभे च गदया हते ।
नेदुर्दुन्दुभयो राजन् दिवि देवगणेरिताः ।
सखीनामपचितिं कुर्वन्दन्तवक्त्रो रुषाऽभ्यगात् ॥ ३८ ॥

1. K. T. W. यु° 2. Ml. V. °मादाय 3. Ml. V. हरिम° 4. K. T. W. साङ्गदमस्य बा°; M. Ma. भीमगदस्य बा°

इति श्रीमद्भगवते महापुराणे श्रीवैय्यासिक्यां अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे सप्तसप्ततितमोऽध्यायः ॥७७ ॥

**श्रीध०** किं तर्हि सत्यं, तदाह - **तं शस्त्रपूगैरिति**। वर्म कवचम्। रुरोज बभञ्ज ॥ ३४, ३५।

**आधावत** इति। लयार्क सन्निभं प्रलयकालीनसूर्यसदृशम् ॥ ३६, ३७ ॥

**तस्मिन्निति**। देवगणैरीरिता वादिताः। [1-]किञ्च सखीनामिति[-1] ॥ ३८ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
[illegible] ॥ ७७ ॥

1 - -1. Ml. V. omit

**वीर०** इत्थं परमते निरस्ते किं तर्हि तात्त्विकमित्यत आह - **तमिति**। शौरिरित्यस्येन्द्रप्रस्थादागत इत्यादिः यद्वा भगवतः शोकमोहादिप्रतिपादकमिव स्थितमनूदितं परमतमुद्धरति एवं वदन्तीति त्रिभिः। अन्विता युक्ता इति यावत्, केचनैवं वदन्तीत्यर्थः। ननु निरस्तनिखिलदोषस्य भगवतोऽज्ञानशोकादि दोषान्वदन्तः कथमाभियुक्ता इत्यत आह - यदिति। यत् यस्मात् स्ववाच इति षष्ठ्यन्तं स्ववाचः "वेदाहं समतीतानि वर्तमानानि चार्जुन" (भ.गी.7-26) "तान्यहं वेद सर्वाणि" (भ.गी.4-5) इति सार्वज्ञ्यविषय भगवद्वचसः ये विरुध्येरन् अज्ञानादयो दोषाः तान् ते ऋषयः नानुस्मरन्त्येव, किन्तु मनुष्य भावानुकारमात्र तात्पर्यकत्वेन, तथा ऊचुः इति भावः। त इति बहुवचनम्, सर्वाभिप्रायकम्, एवं च 'मानुषीं प्रकृतिं गतः' (भागः 10-77-23) इत्यस्य प्रकृतिं स्वभावं गतोऽनुगतः अनुकुर्वन्नित्यर्थः। अन्यथा प्राकृतो यथेति दृष्टान्ता सङ्गतिः, हस्तात् शार्ङ्गं न्यपतदित्युक्तेरपि मनुष्य भावानुकारे तात्पर्यम् अन्यथा निरस्तनिखिलदोषस्य क्वावद्यसम्भावनापीत्यभिप्रायेणाह - क्व शोकेति द्वाभ्याम्। अनन्योः यथोक्त एवार्थः। अस्मिन्पक्षे आर्यमिश्राभि सङ्गत इत्यस्य अयमर्थः आर्यमिश्राः वृद्धाः भीष्मादयः तैः अभिसङ्गतः अभितः सङ्गतः सुखमासमिति। आर्यमिश्रैश्च सङ्गतः इति पाठान्तरमपि क्वचिद्दृश्यते। आर्यैः मुनिभिः मिश्रैः भवद्भिश्च सङ्गतः इत्यर्थः। न तु बलभद्रसहितत्वमनेनोच्यते। अस्मिन्पक्षे काम्यकवनस्थपाण्डवसान्त्वनमुपपन्न मेव, अन्यथा परमतं दूषयन् भगवान्बादरायणः स्ववचसोः पूर्वपरयोः विरोधं परम्तेनापादयितुमर्हति "ततो मुहूर्ते" (भा. 10-77-21) इत्यादेस्तु अयमर्थः - उपप्लुतः स्वबोध इत्यसमस्तं पदद्वयम् । स्वबोधः स्वः स्वभाविकः स्वासाधारणश्च बोधः सार्वज्ञ्यरूपो यस्य तथाभूतोऽपि प्रकृता वुपप्लुतो मग्नः प्रकृतिवश्याज्ञसंसारीव आस्ते आस इत्यर्थः। तत्र हेतुः - स्वजनान् यदून् अनुसङ्गतः अनुवर्तमानः स्वयमपि कश्चिद्यादव इवानुकुर्वन् इत्यर्थः। तत्ततोऽबुध्यत प्रबुद्धवानभूत्। नित्यसर्वज्ञोऽपि प्राकृतवत् क्रमेणाबुध्यतेति, किञ्च आद्यव्याख्याने इन्द्रप्रस्थाद्भगवदागमनस्यानुक्तत्वात्, 'तं शस्त्र पूगैः' इत्यादेः पूर्वग्रन्थसंदर्भवैघट्यं शौरिरित्यस्येन्द्रप्रस्थादागत इत्यादि पूर्णत्वे स्वारस्यमित्यवगन्तव्यमित्यलं विस्तरेण। अमोघोऽप्रतिहतो विक्रमो यस्य स शौरिः ओजसा बलेन शस्त्रजातैः प्रहरन्तं साल्वं शरैर्विद्ध्वा ताडयित्वा वर्म कवचं धनुश्च शिरोमणिं च अच्छिनत्, सौभं तु गदया रुरोज बभञ्ज, हेत्याश्चर्ये ॥ ३४ ॥

**तदिति**। कृष्णहस्तेनेरितया प्रयुक्तया गदया सहस्रधा विचूर्णितं तत्सौभं तोये समुद्रजले पपात, ततस्साल्वः भूतलमास्थितः गदामुद्यम्य द्रुतं यथा तथा तं कृष्णम् अभ्यद्रवत् ॥ ३५ ॥

**आधावत** इति। अभ्यापततोऽस्य साल्वस्य अङ्गदेन सहितं बाहुं भल्लेन बाणविशेषेण छित्वा अथ साल्वस्य वधार्थं प्रलयतुल्यं रथाङ्गं चक्रं बिभ्राणो बभौ, यथा सार्कः सूर्यसहित उदयाचलः तद्वत् ॥ ३६ ॥

**जहारेति**। पुरुमायिनः बहुविधमायिनः साल्वस्य शिरः तेनैव चक्रेणैव जहार हृतवान् ययेन्द्रो वज्रेण वृत्रस्य शिरः तद्वत् तदा नृणां हाहेति शब्दो बभूव ॥ ३७ ॥

अथ सानुजदन्तवक्त्र वधात्मकं हरेश्चेष्टितं वक्तुं तावत्प्रौस्तौति सार्धेन - **तस्मिन्निति**। तस्मिन् साल्वे पतिते हते च सति सखीनां साल्वादीनां अपचितिं पारोक्ष्येणोपकृतिं कुर्वन् कर्तुमित्यर्थः। वर्णाधिक्यमार्षम् ॥ ३८॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां सप्तसप्ततितमोऽध्यायः ॥७७॥

**विज०** शिरोमणिं किरीटं रुरोज बिभेद ह प्रसिद्धम् शतं सहस्रमयुतं नियुतं प्रयुतार्बुदे 'न्यर्बुदं शङ्खवृन्दे च निखर्वं खर्वमर्बुदम्' (न्यर्बुदं बृन्दखर्वे च निखर्वं खर्व मम्बुजम् इति पाठःवैज.को. 5-1-28) इति यादवः ॥ ३४-३६ ॥

पुरुमायिनः अनेकशतमायावतः ॥ ३७,३८ ॥

**स्तूयमानो मुनिगणैः सूतमागध वन्दिभिः ।**
**आजगाम वृतस्सैन्यैः पुरीं द्वारवतीं हरिः ॥**

**सम्प्रविश्य पुरीं रम्यां पताखाखण्डमण्डिताम् ।**
**अलङ्कृतामलङ्कारैः सिक्तसम्मृष्ट चत्त्वरम् ॥**

**पूजितो यदुभिर्वृद्धैः पौरजानपदैस्तथा ।**
**रमयन्नष्टसाहस्र महिषीः प्रेमविह्वलाः ॥**
**उवास देवकीपुत्रः सानन्दं कुरुनन्दन ॥**

सानन्दं आनन्दसहितं इत्यर्थे विषयानन्दः न स्वरूपानन्द इत्यर्थः। स्यात् सोनुपपन्नः 'विज्ञानम् आनन्दं ब्रह्म '(बृह. उ 3-9-28) इति श्रुतेः ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

दशमस्कन्धे उत्तरार्धे सप्तसप्ततितमोऽध्यायः ॥७७॥

(विजयध्वजरीत्या षडशीतितमोध्यायः )

# अष्टसप्ततितमोऽध्यायः

(विजयध्वजरीत्या एकाधिकशततमोऽध्यायः)

**[1-]शिशुपालस्य साल्वस्य पौण्ड्रकस्याऽपि[-1] दुर्मते:[2] ।**
**परलोक गतानाञ्च कुर्वन्पारोक्ष्य सौहृदम् ॥ १ ॥**

**[3-]एकः पदातिः[-3] सङ्क्रुद्धो[4] गदापाणिः प्रकम्पयन् ।**
**[5]पद्भ्यां महीं महाराज महासत्त्वो [6]अभ्यवर्तत ॥ २ ॥**

**तं तथाऽऽभान्त मालोक्य गदामादाय सत्वरः ।**
**अवप्लुत्य रथात्कृष्णः सिन्धुं वेलेव प्रत्यधात्[7] ॥ ३ ॥**

**गदामुद्यम्य [8]कारूषो मुकुन्दं प्राह दुर्मदः ।**
**दिष्ट्या [9]दिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥ ४ ॥**

---

1--1 M.Ma रुक्मिणः शिशुपासस्य पौण्ड्रकस्य च 2. B.G.J °ति: 3. M.Ma पदातिः पथि 4. M.Ma संरोद्धुं ; Ml.V सन्नद्धो 5. B.G.J. पद्भ्यामिमां 6. B.G.J.M.Ma व्यदृश्यत; Ml.v अभ्यदृश्यत 7. M.Ma °गात् 8. K.Ml.V कारूशो; M.Ma कालिङ्गो 9. M.Ma कृष्ण

## श्रीधरस्वामि विरचिता भावार्थदीपिका

ततोऽष्टसप्ततितमे दन्तवक्त्रविदूरथौ। हत्वा हरिः पुरे रेमे रामस्सूतं ततोऽवधीत् ॥

सखीनां अपचितिं कुर्वन्नित्युक्तं, तदेवाह - **शिशुपालस्येति**। पारोक्ष्य सौहृदं परोक्षे करणीयं सुहृत्कृत्यम् ॥१,२॥

**तमिति**। प्रत्यधात् प्रतिरुरोध ॥ ३ ॥

**गदामिति**। 'मुकुन्दं प्राह दुर्मदः' इत्यादे रधिक्षेप परता स्फुटैव। परमार्थस्तु दुर्मदो गतमदः प्राह मुकुन्दं तृतीये जन्मनि मुक्तिदानार्थमागतम्। **अद्येति**। जन्मत्रयेऽन्विष्यमाणोऽद्य ब्रह्मशापावसाने भवान्मम स्वामी दृष्टिपथं गतः प्राप्तः। एतद्दिष्ट्या, भद्रं भद्रम्। अतिहर्षे वीप्सा ॥ ४ ॥

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

सखीनामपचितिं कुर्वन्नित्युक्तं विस्तरेणाऽऽह - **शिशुपालस्येत्यादिना**। पारोक्ष्यसौहृदम् परोक्षेण कर्तव्यं सुहृत्कृत्यं कुर्वन् "लक्षणहेत्वोः" [अष्टा 3-2-126] इति शत्रादेशः, कर्तुमित्यर्थः। व्यदृश्यत इत्युत्तरत्र सम्बन्धः। कथम्भूतः? एकोऽसहायः गदा पाणौ यस्य सः। पद्भ्यां महीं प्रकम्पयन् महत्सत्त्वं बलं यस्य सः। हे महाराज! ॥ १.२ ॥

तदा कृष्णः किमकरोत् तदाह - **तमिति**। तं दन्तवक्त्रं अवलोक्य त्वरया सहितः सिन्धुं समुद्रं वेलेव प्रत्यधात् प्रतिरुरोध इत्यर्थः ॥ ३ ॥

**गदामिति**। [1]कारूषो दन्तवक्त्रः प्राह। तदेवाऽऽह दिष्ट्येति। दिष्ट्या अयमानन्दो जात इत्यर्थः। कोऽसौ अद्यदृष्टिपथं भवान् प्राप्त इत्येषः ॥ ४ ॥

---

1. k. कारूशो

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

**उद्वापनस्नानहेतो र्यमुनातीरमागतम् ।**
**श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्त्रस्सहानुजः ॥ क ॥**

**महत्या सेनया युक्तो गजानीकसमन्वितः ।**
**गच्छन्तं द्वारकां कृष्णं पथि रोद्धुं समाययौ ॥ ख ॥**

**सोऽभ्येत्य पथि गच्छन्तं वृतं यदुकुमारकैः ।**
**कान्ताषोडश साहस्र शिबिका परिवारितम् ॥ ग ॥**

**राजसद्मानुगच्छन्तं महर्षिगणसेवितम् ।**
**ऋत्विक्पुरोहिताचार्य ब्राह्मणैश्च समन्वितम् ॥**
**दन्तवक्त्रोऽरुणन्मूढो मृगेन्द्रं जम्बुको यथा ॥ घ ॥**

**हरेरवशिष्ट भूभार दन्तवक्त्रविदूरथ वधलक्षणं यच्चरितं तत्कथयत्यस्मिन्नध्याये। तत्र तद्घटनप्रकारमाह उद्वापनेति।** उद्वापनेस्नानहेतोः अवभृथस्नानहेतोः ॥ क ॥

अरुणत् रुरोध। जम्बुकः सृगालः ॥ ख - घ ॥

पारोक्ष्यसौहृदं मृतिलक्षणाप्रत्यक्षत्वेऽपि बन्धुना यत्कर्तव्यं सौहृदं प्रेम तत् कुर्वन् कर्तुकामः। ताच्छीलिकः शतृप्रत्ययः ॥ १,२ ॥

वेला जलवृद्धिः । सिन्धुं नदीम् ॥ ३ ॥

कालिङ्गः कलिङ्गविषयनाथः ॥ ४ ॥

*** त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां[1] जिघांससि ।**
**अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया ॥ ५ ॥**
**[2]तेनानृण्य मुपैम्यज्ञ मित्राणां मित्रवत्सलः ।**
**बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥ ६ ॥**

**इतिलोकप्रवादोऽस्ति तेन दोषोऽपि नास्ति मे ।**
**एवं रूक्षैस्तुदन्वाक्यैः[3] कृष्णं तोत्रैरिव द्विपम् ।**
**गदयाऽताडयन्मूर्ध्नि[4] सिंहवद्व्यनदश्च सः ॥ ७ ॥**

**गदयाऽभिहतेऽप्याजौ न चचाल यदूद्वहः[5] ।**
**[6-]कृष्णोऽपि तमहन्[-6] गुर्व्या कौमोदक्या स्तनान्तरे ॥ ८ ॥**

---

* त्वामद्य द्वन्द्वयुद्धेन हनिष्याम्यविलम्बितम्। 1. M.Ma ध्रुक् पारदारिकः 2. B.G.J K.Ml. T.V.W तर्ह्या° 3. M.Ma °श्च वचनैः 4. M.Ma त्कृष्णं 5. M.Ma °त्तमः 6- -6 M.Ma गदया व्यहनत्

**श्रीध०** किञ्च ! हे कृष्ण ! त्वमस्माकं मातुलेयो बन्धुः। एवमपि मित्रध्रुक् मित्राणि घातितवान्। माञ्च जिघांससि। तस्मादस्माकं त्वत्तो मृत्युः सनकाद्यनुग्रह प्राप्तो नूनं दुर्वारः। अतः त्वां एतावन्मात्रमहं याचे। किन्तदाह - हे अमन्द ! सर्वसहनसमर्थ ! क्षात्रधर्मेण सेवितुं गदया त्वां हनिष्ये प्रहरिष्यामि. तां एकवारं सहस्व इति। ननु वज्रतुल्या त्वद्गदां को वा सहेत नैवमित्याह अवज्रकल्पया उत्पलमालावत् अतिकोमलयेत्यर्थः ॥ ५ ॥

नन्वेवं हनने कः तव पुरुषार्थः तमाह **तर्हीति**। अज्ञ ! न विद्यते ज्ञो यस्मात्[1], हे सर्वज्ञेत्यर्थः। परमार्थतः स्वामिनमेतदेह सम्बन्धेन बन्धुरूपमरिं ब्रह्मशापेन शत्रुत्वेन प्रतीतं त्वां हत्वा मित्राणामानृण्य मुपैष्यामि। विशेषेणाऽऽधीयते मनसि चिन्त्यत इति व्याधिः देहेऽन्तर्यामितया चरतीति तथा तम्। ईश्वरं हत्वा क्षात्रधर्मेणाराध्य हन्ते र्गत्यर्थस्य ज्ञानार्थत्वात् ज्ञात्वेति वा तेन यथा पित्रा दीनामानृण्य मुपयन्ति तद्वदिति ॥ ६ ॥

रूक्षैरित्यादि प्रतीत्यभिप्रायेण, तोत्रैरङ्कुशादिभिः ॥ ७,८ ॥

---

1 MI.V. add तस्य सम्बुद्धिः 2 MI.V. omit अरिं

**वीर०** हे कृष्ण! त्वमस्माकं मातुलेयः मातुलस्य पुत्रः, सहजमित्रमिति तात्पर्यम्। तथाऽपि मित्राण्येव द्रुह्यतीति तथा। माञ्च हन्तुमिच्छसि। यत एवम्भूतः ततः त्वां वज्रतुल्यया बृहत्या गदया हनिष्ये ताडयिष्यामित्यर्थः ॥ ५ ॥

तर्ह्येवञ्चेत् मित्रवत्सलोऽहं देहगतं व्याधिमिव मृत्युसंपादकं बन्धुरूपमरिं त्वां हत्वा मित्राणामानृण्यं ऋणाभावं प्राप्स्यामि ॥ ६ ॥

**एवमिति**। तोत्रैः अङ्कुशादिभिः द्विपं गजमिवेत्थं रूक्षैः परुषैः वाक्यैः कृष्णं तुदन् व्यथयन्निव मूर्ध्नि गदया अताडयत्[1] ततः स दन्तवक्त्रः सिंहवत् व्यनदत् ॥ ७ ॥

**गदयेति**। यदूद्वहः कृष्णः आजौ युद्धेगदया ताडितोऽपि न चचाल। अपि तु कृष्णःतं दन्तवक्त्रं स्तनान्तरे स्तन मध्ये कौमोदक्या[2] स्वगदया गाढं यथा तथा, अताडयदित्यनुषङ्गः ॥ ८ ॥

---

1. B. तताड 2\. B. क्याख्यया

**विज०** मातुलो वसुदेवः तत्पुत्रः पारदारिकः परस्त्रीरतिसमुत्सुकः ॥ ५ ॥

विश्वासघाती बन्धुघ्नः सततं कलहप्रियः ।

पौण्ड्रकं मातुलेयं मे सङ्ख्ये सूदितवानसि ।

रुक्मी च शिशुपालश्च भ्रातरौ मे त्वया हतौ ॥ क ॥

भ्रातरौ मातृसोदरी पुत्रत्वेन ॥ क ॥

आनृण्यम् ऋणाभावम् । देहचरं देहगतम् ॥ ६ ॥

रूक्षैर्वचनैः, व्यथयित्वेति शेषः ॥ ७, ८ ॥

गदानिर्भिन्न[1] हृदय उद्वमन् रुधिरं मुखात् ।
प्रसार्य केशबाह्वङ्घ्रीन्[2] धरण्यां न्यपतद्व्यसुः[-2] ॥ ९ ॥

ततस्सूक्ष्मतरं[3] ज्योतिः कृष्णमाविशदद्भुतम् ।
पश्यतां सर्वभूतानां यथा चैद्यवधे[4] नृप ॥ १० ॥

☆ विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः ।
आगच्छदसिचर्मभ्यां उच्छ्वसंस्तज्जिघांसया ॥ ११ ॥

तस्य चाऽऽपततः कृष्णश्चक्रेण क्षुरनेमिना ।
शिरो जहार राजेन्द्र! सकिरीटं सकुण्डलम् ॥ १२ ॥

---

1. K.M. Ma.T.W. गाढं ;Ml. V. गाढं 2- -2 M. Ma. ङ्घ्रि गतासु न्यपतत् भुवि 3. Ml.V. मं 4. M.Ma. °द्यस्य सङ्गरे; Ml.V. °द्यपतेर्नृपः ! M. Ma. reads this भ्रातरं निहतं दृष्ट्वा दन्तवक्त्रं विदूरथः मूर्छितो भ्रातृशोकेनाऽप्यसि चर्म समाददे ॥

श्रीधरीय व्याख्या नास्ति।

**वीर०** एवं ताडितो निर्भिन्नं हृदयं यस्य सः। मुखा द्रुधिरम् उद्वमन् केशादीन् प्रसार्य व्यसुर्गतप्राणो धरण्यां न्यपतत् ॥९॥

ततो दन्तवक्त्र शरीरात् सूक्ष्म मणु स्वरूपं (परं) परित्यक्त प्रकृतिसम्बन्धं ज्योतिः स्वप्रकाशं जीवस्वरूपं श्रीकृष्णमविशत्। तावदाविश्य ततः तत्साधर्म्यं युक्त : तत्पार्षदतां प्राप्त इत्यर्थः। यथा सर्वभूतानां पश्यतां सतां हे नृप! चैद्यवधे कृते तद्देहादाविशत् तद्वदित्यर्थः। यद्यप्यात्म ज्योतिषः अतिसूक्ष्मत्वात् सर्वभूतैर्द्रष्टुमशक्यं अतीन्द्रियञ्च तथापि स्वस्य परमापुरुषत्वं तयोस्तु शापान्ते स्वस्मिन् प्रवेशश्च सर्वभूतेभ्यःप्रख्यापयितु[1]मचिन्त्य शक्तिः भगवान् तथा प्रवेशयामासेति विभावयन्तु ॥ १० ॥

**विदूरथ** इति। तस्य दन्तवक्त्रस्य भ्राता विदूरथः भ्रातृविषयकशोकेन परिप्लुतो[2] व्याप्तः उच्छ्वसन् तज्जिघांसया कृष्णं हन्तुमिच्छयाऽसिचर्मभ्यां खड्गखेटाभ्यां युक्त इति शेषः। आगच्छदभ्यपतत् ॥ ११ ॥

**तस्येति**। क्षुरस्येव नेमिर्धारा यस्य तेन चक्रेण हे राजेन्द्र! किरीटादि सहितमापततः तस्य विदूरथस्य शिरो जहार चिच्छेदेत्यर्थः ॥ १२ ॥

---

1. B. तुं शक्तो भग° 2. T. W. omit परिप्लुतः

**विज०** दन्तवक्त्र गतासुरः कृष्णं ध्वान्तापरपर्यायं तमोविशत् । [illegible] कृष्टानन्द रूपश्रीहरिम् ॥ १० ॥

**सोऽवप्लुत्य रथात्तूर्णं विधुन्वन् खड्गमुत्तमम् ।**
**अभिदुद्राव गोविन्दं पद्भ्यामुर्वीं प्रकम्पयन् ॥**
**तस्य बाणेन चिच्छेद खड्गं यादवनन्दनः ।**
**ततो जग्राह निरतां शक्तिं घोरां विदूरथः ॥**
**तया प्रहर्तुं गोविंदमभिनिश्चित्य सङ्गरे ।**
**क्षणेनाभिससाराऽऽशु चापमुक्तो यथाशरः ॥**

असि युक्तं चर्म ॥ क-ग ॥

विदूरथेति ॥ ११-१२ ॥

**एवं सौभञ्च साल्वञ्च दन्तवक्त्रं सहानुजम् ।**
**हत्वा दुर्विषहानन्[1]यानीडितः सुरमानवैः ॥ १३ ॥**

**मुनिभिः सिद्धगन्धर्वैः विद्याधरमहोरगैः ।**
**अप्सरोभिः पितृगणै र्यक्षैः किन्नरचारणैः ॥ १४ ॥**

**[2]उद्गीयमानविजयः कुसुमैरभिवर्षितः ।**
**वृतश्च विष्णुप्रवरैः विवेशालङ्कृ[3]तां पुरीम् ॥ १५ ॥**

**एवं योगेश्वरः कृष्णो भगवा[4]ञ्जगदीश्वरः ।**
**ईयते पशुदृष्टीनां नि[5]र्जितो जयतीति सः ॥ १६ ॥**

---

1 B G J नन्यै री° 2 B G J M Ma Ml V उपगीय° 3 M Ma °तं 4 M Ma °वा न्देवकीसुत° 5 M Ma जीयते

**श्रीध०** एवं श्रीकृष्णे महाबलानपि लीलया जयत्येवेति कृत्वा स कदाचिज्जरासन्धादिभि र्निर्जित इति पशुदृष्टीनामीयते। [1]नित्यजये हेतवः भोगेश्वरो भगवान् जगदीश्वर इति ॥ ११-१६ ॥

---

1 Ml V विजये

**वीर० एवमिति**। अन्यानपि दुर्विषहान् सोढुमशक्यान् शत्रून्[1] सौभादीन् हत्वा सुरादिभि रीडितः उपगीयमानः विजयो यस्य सः। वृष्णिप्रवरैः यदूत्तमैः परिवृतश्च पुरीं द्वारकां विवेश ॥ १३ - १५ ॥

इत्थं सर्वत्र सर्वदा[2] विजयिनो भगवतः क्वचित्पराजयं वदन्तो मूढा इत्याह - **एवमिति**। भगवान् षाड्गुण्यपूर्णः जगतः कृत्स्नस्येश्वरः प्रशासिता च अनेन पराजय सम्भावना दूरत एवाऽपास्तेति सूचितम्। निर्जितः, जरासन्धादिभिरिति शेषः। क्वचिच्च जयतीत्येवं पशुदृष्टीनां मूढानां ईयते प्रतीयते[3]। निर्जितो, जयति इति भ्रान्तिः। अजित एव जयतीत्यार्थः ॥ १६ ॥

1. K. T. W. omit सौभादीन् 2. T. W. omit सर्वदा 3. T. W. omit प्रतीयते ।

**विज०** पशुदृष्टीनां अज्ञजन बुद्धीनां पक्षे जयतीति ईयते ज्ञायते ॥ १३ - १६ ॥

**एवं निहत्य समरे दन्तवक्त्र विदूरथौ ।**
**कालयामास तत्सैन्यं जगृहे वारणादिकम् ॥ क ॥**

**भूयः पुष्परथं दिव्यमारुह्य समलङ्कृतम् ।**
**सहितः सात्त्वतगणैः ईडितस्सुरमानवैः ॥ ख ॥**

**तस्यकर्माण्युदाराणि पुण्यश्लोकस्य भारत!**
**शक्यन्ते कथितुं नैव वर्षाणामयुतैरपि ॥ ग ॥**

**एवमारभ्य राक्षस्याः पूतनायाः परन्तप!**
**भूभारभूतानसुरान् जघानमधुसूदनः ॥ घ ॥**

कालयामास द्रावयामास वारणादिकम् इत्यत्र गजाश्वरथादिकं गृह्यते ॥ क ॥

पुष्परथम् विवाहयोग्य रथम् ॥ ख ॥

ब्रह्माद्यन्यतमेनाऽपि तत्कर्मसमाप्तिं कर्तुं न शक्यते किं पुनर्मयेति भावेनाऽऽह तस्येति ॥ ग ॥

स्कन्धमारभ्य यदैत्यहननं तदादितः उपसंहरति एवमिति ॥ घ ॥

अत्र विजयध्वजरीत्या एकाधिकशततमोऽध्यायः समाप्यते।

## राजोवाच

❖ अष्टादशाक्षौहिणीनां तावद्भिर्मायया दिनैः ।
व्यापादनं येन कृतं तस्मै विश्वात्मने नमः ॥ ङ ॥

श्रृण्वतो मे कथास्तस्य चरितानि च सङ्घशः ।
वैक्लव्यं विस्मयो भीतिर्वर्धते मे पुनः पुनः ॥ च ॥

मन्ये प्रायेण पाप्मानं जीर्णं मम दुरत्ययम् ।
इन्द्रियाणि प्रबुद्धानि प्रसन्नञ्च मनोभृशम् ॥ छ ॥

क्षुत्तृष्णे च प्रशान्ते मे आत्मा चाऽऽनन्द निर्भरः ।
प्रसादात्तव धर्मज्ञ कृतार्थोऽहमिहाऽभवम् ॥ ज ॥

अपि च श्रोतुमिच्छामि किञ्चिदर्थं तपोधन ।
युध्यतस्सुहृदो दृष्ट्वा निवारितुमशक्नुवन् ।
तीर्थं स्नातुं गतो रामः किञ्चकार तपोधन ! ॥ झ ॥

---

❖ विजयध्वजरीत्या षण्णवतितमोध्यायः आरभ्यते ।

सितकेशावेशिनो बलभद्रस्य चरितं कृष्णमाहात्म्यानुस्यूतमेव,अतस्तदपि पुरुषार्थोपयोगिभवतीत्यनेन अध्याय द्वयेन निरूपयति। तत्रादौ श्रुतकृष्णवैभवो विस्मितमना राजा भगवन्तं नमति - अष्टादशेति। मायया महिम्ना व्यपादनं निधनं विश्वात्मने सर्वान्तार्यामिणे ॥ ङ ॥

हरिकथाश्रवणस्य प्रत्यक्षफलमाह - शृण्वत इति। वैक्लव्यं पारवश्यं कथाश्रवणतात्पर्यम्, विस्मयः स्मयभावः, भीतिः विहिताकरणे प्रत्यवाय बुद्धिः ॥ च ॥

प्रबुद्धानि प्रफुल्लानि, स्वविषय इति शेषः ॥ छ ॥

आत्मा भोगायतनं, आनन्दनिर्भरः पूर्णानन्दः ॥ ज ॥

कृतार्थश्चेत्तूष्णीम्भवेति तत्राऽह - अपि चेति। किञ्चिदित्यव्ययं शब्दतोल्प मर्थतो महान्तमित्यतो वा व्यत्ययः ॥ झ ॥

**बलरामकृत तीर्थयात्रा सूतवधादि कथारम्भः ॥**

[1-]श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः[-1] ।
तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥ १७ ॥

स्नात्वा प्रभासे[2] सन्तर्प्य देवर्षिपितृमानवान् ।
सरस्वतीं प्रतिस्रोतां[3] ययौ ब्राह्मणसंवृतः ॥ १८ ॥

[4]पृथूदकं बिन्दुसरस्त्रि[5]कूटं सुदर्शनम् ।
विशालं ब्रह्म तीर्थञ्च चक्रं प्राचीं सरस्वतीम् ॥ १९ ॥

यमुनामनुयान्येव गङ्गामनु च भारत!
जगाम नैमिषं यत्र ऋषयस्सत्रमासते ॥ २० ॥

तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ।
अभिनन्द्य[6] यथान्यायं प्रणम्योत्थाय चाऽर्चयन् ॥ २१ ॥

सोऽर्चितस्सपरीवारः कृतासनपरिग्रहः।
रोमहर्षणमासीनं [7-]महर्षेश्शिष्यमैक्षत[-7] ॥ २२ ॥

---

1- -1 It is not found in M. Ma. Edns. 2. M. Ma. °सं 3. B. G. J. M. Ma. °स्रोतं 4. Ml. V. मधू° 5. B. G. J. M. Ma. स्त्रितकूपं ; Ml. V. स्त्रिणकूपं 6. M. Ma. °वन्द्या; Ml. V. °गम्य 7- -7 M. Ma. शिष्यमैक्षन्महामुने:

**श्रीध०** ☆ विदूरथान्त [1]मामध्य पूतनादि दनोः कुलम्। कृष्णस्तूपारमन्नाराद्रामोऽहन् सूतपल्वलौ ॥

तत्प्रसङ्गमाह - **श्रुत्वेति** ॥ १७ ॥

**स्नात्वेति**। प्रतिस्रोतां[2] प्रतिलोमम्[3] ॥ १८ ॥

**पृथूदकमिति**। सुदर्शनं तीर्थं, चक्रं चक्रतीर्थम् ॥ १९ ॥

**यमुनामिति**। यमुनामनु यानि तीर्थानि गङ्गा मनु च यानि तानि सर्वाणि गत्वा नैमिशमरण्यं जगाम ॥ २० ॥

**तमिति**। अभप्रेत्य श्रीराम इति ज्ञात्वा ॥ २१ ॥

**स** इति। महर्षेर्व्यासस्य ॥ २२ ॥

---

★ श्रीधरीयोऽयं श्लोकः 1. Ml. V. उन्मथ्य 2. B. J. स्रोतं 3. B. J. लोमम् ।

**वीर०** अथ पुनः कानिचिद्बलभद्रचेष्टितानि अनुवर्णयति - 'श्रुत्वेत्यादिना यावदेकोनाशीति तमाध्याय समाप्ति'। कुरूणां पाण्डवैः सह युद्धोद्यमं युद्धाय यत्नं श्रुत्वा मध्यस्थः उभयेषामपि बान्धवताऽविशेषात् उभयमध्यस्थः तटस्थ इति यावत्। हेतुगर्भमिदम्। अतः पुण्यतीर्थस्नान यात्राव्याजेन प्रययौ ॥ १७ ॥

**स्नात्वेति**। प्रति प्रत्यक् स्रोतः प्रवाहो यस्यास्तां सरस्वतीं प्रत्यक्सरस्वतीं ययौ इत्यर्थः ॥ १८ ॥

ततः पृथूदकादीनि तीर्थविशेषाणि ययाविति सम्बन्धः। तत्र चक्रं चक्रतीर्थं प्राचीं सरस्वतीं त्रिवेणीमित्यर्थः ॥ १९ ॥

ततो यमुना मनु यानि तीर्थानि गङ्गामनु च यानि तीर्थानि तानि सर्वाणि सादरं यथा तथा। नारदमिति पाठे तदाख्यं तीर्थं, नैमिशञ्च जगामेति सम्बन्धः। नैमिशं विशिनष्टि यत्रेति। यत्र नैमिशे ऋषयः शौनकादयः सत्रमासतेऽनु तिष्ठन्ति ॥ २० ॥

तत्र यदभूत्तदेवाऽऽह - तमित्यादिना। तं बलभद्रमागतमभिप्रेत्य दृष्ट्वेत्यर्थः। दीर्घं सहस्रसमं सत्रमेषामस्तीति तथा ते मुनयः यथान्यायमभिनन्द्याऽर्चयन्नर्चितवन्तः ॥ २१ ॥

**स** इति। कृतशासनपरिग्रहो येन सः रामः रोमहर्षणमैक्षतेति सम्बन्धः। कथम्भूतम्? आसीनम् उपविष्टं महर्षेर्बादरायणस्य शिष्यम् ॥ २२ ॥

---

1. K. T. W. omit अभिनन्द्य 2. T. W. महामुने°

**विज०** भोजनादिना मानवसन्तर्पणं, प्रतिस्रोतं प्रवाहाभिमुखम् ॥ १७, १८ ॥

पृथूदकं नाम तीर्थं त्रितस्य मुनेः कूपं विशलमप्येकं तीर्थम् ॥ १९, २० ॥

अभिप्रेत्य अभिगम्य ॥ २१, २२ ॥

**1-अप्रत्युत्थायिनं-1 सूत मकृत प्रह्वणाञ्जलिम् ।**
**अध्यासीनञ्च तान्विप्रां श्चुकोपोद्वीक्ष्य माधवः ॥ २३ ॥**

[2]कस्मादसाविमान् विप्रानध्यास्ते प्रतिलोमजः ।
धर्मपालां स्तथैवाऽस्मान् वधमर्हति दुर्मतिः ॥ २४ ॥

ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च ।
सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ २५ ॥

अदान्तस्याऽविनीतस्य वृथापण्डितमानिनः ।
न गुणाय भवन्त्यस्य[3] नटस्येवाऽजितात्मनः ॥ २६ ॥

एतदर्थो हि लोकेस्मिन्नवतारो मया कृतः ।
वध्या हि[4] धर्मध्वजिनः ते हि पातकिनोऽधिकाः । २७ ॥

एतावदुक्त्वा भगवन्निवृत्तोऽसद्वधादपि ।
भावित्वा त्तं कुशाग्रेण करस्थेनाऽहनत्प्रभुः ॥ २८ ॥

1--1 M. Ma. प्रत्यवस्थायिनं 2. J. यस्मा° 3. B. G. J. K. Ml. T. V. W. °न्ति स्म 4. B. G. J. मे

**श्रीध०** अप्रत्युत्थायिनमिति। सूतं प्रतिलोमजं न कृतं प्रह्वणमञ्जलिश्च येन तम् अध्यासीनञ्च तान् तेभ्योऽप्युच्चैरासीनमित्यर्थः ॥ २३, २४ ॥

अजानन्नध्यास्त इति चेत्, नैवमित्यह - **ऋषेरिति** ॥ २५ ॥

ननु बहुज्ञः कथमेवं कः[1] कुर्यात्? तत्राह - **अदान्तस्येति**। गुणाय ऽथो चितानुष्ठानाय ॥ २६ ॥

[2]ननु, विप्रानध्यास्तान् अन्यद्वा किञ्चित्करोतु किन्तवेति चेत् तत्राह[3] - एतदर्थ इति। धर्मध्वजिनः उत्तम लिङ्गधारिणः ॥ २७ ॥

**एतावदिति**। भावित्वादिति। न हि भवितव्यं केनापि परिहर्तुं शक्यते इत्यर्थः। अहनत् अहन्[4] ॥ २८ ॥

1. B. J. omit कः 2. B. J. omit ननु 3. Ml. V. अत्राऽऽह 4. Ml V. हतवान्

**वीर०** अप्रत्युत्थायिनं प्रत्युत्थानमकृतवन्तं तं सूतं प्रतिलोमजं न कृतं प्रह्वणं प्रणामोऽञ्जलिश्च येन तम्। तान् विप्रान् अध्यासीनं विप्रेभ्योऽप्युच्चासनासीनमित्यर्थः। माधवो रामश्चुकोप सकोपं प्राहेत्यर्थः ॥ २३ ॥

**तदेवाऽऽह कस्मादिति** चतुर्भिः। विप्रान् अध्यास्ते, विप्रेषूच्चैरासनमधितिष्ठतीत्यर्थः। प्रतिलोमज इत्यनेन तदनर्हत्वाविष्कारः। तथा धर्मं पालयन्तीति तथा। तानस्मानप्यध्यास्ते, अतोऽयं दुर्मतिर्वधमर्हति ॥ २४ ॥

**अजानन्नध्यास्त** इत्यत आह - **ऋषेरिति**। ऋषेर्भगवतो बादरायणस्य शिष्यो भूत्वा बहूनि इतिहासादीनि सर्वशः **कात्स्न्र्येन अधीत्य च** ॥ २५ ॥

अदान्तस्य दमविनयादि रहितस्य वृथा पण्डितमात्मानं मन्यमानस्य गुणाय न भवन्ति। इतिहासाद्यध्ययना-दीनीति शेषः। किन्तु दोषायैवेति भावः। अदान्तस्य इत्यादि विशेषणैः, नास्याज्ञानकृतमध्यासनाधिष्ठानम्, अपि तु अहङ्कारप्रयुक्तमिति सूच्यते ॥ २६ ॥

विप्रानध्यास्ताम्, अन्यद्वा करोतु, किं तवेप्यत आह, **एतदर्थ** इति। कोऽसावर्थः? धर्मध्वजिनः उत्तमवेषधारिणो मे वध्या इत्येषः कुतः? हि यस्मात् ते धर्मध्वजिनः अधिकाः पातकिनः। अतो दुष्कृद्विविनाशार्थं अवतीर्णेन मयैवंविधाः अवश्यं वध्या इत्यर्थः ॥ २७ ॥

**एतावदिति**। असतां वधान् निवृत्तोऽपि भगवान् रामः भावित्वाद्भवितव्यस्य केनाऽप्यपरिहार्यत्वात्तं रोमहर्षणं कुशाग्रेण अहनत् ॥ २८ ॥

---

1. K. T. W. सर्वतः 2. K. T. W. omit मे

**विज०** प्रत्यवस्थायिनम् आभिमुख्येन स्थितम्। प्रह्वणं नमनम्। तान्विप्रानध्यासीनं, तेषां मध्ये उच्चासने स्थितं, माधवो मधुकुलोद्भवः ॥ २३ ॥

प्रतिलोमजः विपरीतजन्मा। अस्मानिति द्वितीया पञ्चम्यर्थे ॥ २४ ॥

सेतिहासपुराणान्यधीत्य सुदुष्टस्य प्रतिजन्मनः ॥ २५ ॥

गुणाय पुण्यफलदानलक्षणाय न भवन्ति ॥ २६ ॥

एतदर्थः दुष्टनिग्रहार्थः ॥ २७ ॥

असद्वधान्निवृत्तोऽपि मरणस्यावश्यं भावित्वात् ॥ २८ ॥

**हाहेति वादिनस्सर्वे मुनयः[1] खिन्नमानसाः ।**
**ऊचुस्सङ्कर्षणं देव मधर्मस्ते कृतः प्रभो ॥ २९ ॥**

**अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन ।**
**आयुश्चा[2]त्माऽक्लमं तावद्यावत्सत्रं समाप्यते ॥ ३० ॥**

**अजा[3]नतैवाऽऽचरितः त्वया ब्रह्मवधो यथा ।**
**योगेश्वरस्य भवतो नाम्नायोऽपि नियामकः ॥ ३१ ॥**

**यदेतद्ब्रह्महत्यायाः पावनं लोकपावन!**
**चरिष्यति भवान् लोकसङ्ग्रहो[4]ऽनन्यचोदितः ॥ ३२ ॥**

---

1 M. Ma. ऋषयः 2. M. Ma. °श्चास्याक्षयं 3. K. T W. °तेवा° 4. K. T. W. °हो नान्य° ; Ml. V. M. Ma. °हं नान्य° ; Ml . V. °हे नान्य°

**श्रीध० हाहेति**। ते त्वया ॥ २९ ॥

अधार्मिक प्रतिलोमजवधः कोऽयमधर्म इति चे त्तत्राहुः - **अस्येति**। पुराणप्रवचनाय आत्मनः शरीरस्य नास्ति क्लमो यस्मिन् तदायुश्च दत्तमिति ॥ ३० ॥

**अजानतेति**। ब्रह्मवधेऽपि किं ममेश्वरस्येति चेत्। सत्यमेव। तथाऽपि प्रायश्चित्तं कर्तव्यमित्याशयेनाऽऽहुः- योगेश्वरस्येति सार्धेन। आम्नायो "ब्राह्मणो न हन्तव्यः"—— इत्यादि लक्षणः ॥ ३१ ॥

**यदीति**। तथाऽप्येतस्याः ब्रह्महत्यायाः पावनं प्रायश्चित्तं, हे लोकपावन! अनन्यचोदितः स्वयमेव भवान्यदि करिष्यति तर्हि लोकसङ्ग्रहो भविष्यति, नान्यथेति ॥ ३२ ॥

**वीर० हाहेति**। खिन्नं मानसं येषां ते ऊचुः। उक्तिमेवाऽऽह - अधर्म इत्यादिना सपादत्रयेण। ते त्वया अधर्मः कृतः ॥ २९ ॥

अधार्मिक प्रतिलोमज वधः कोऽयमधर्मः? इत्यत आह _ **अस्येति** सार्धेन। हे यदुनन्दन! अस्य रोमहर्षणस्य अस्माभिर्ब्रह्मासनं यावत् यावताकालेन सत्रं समाप्यते तावदात्मनो देहस्य न क्लमः श्रमो यस्मिन् तदायुश्च दत्तम्। पुराण वक्त्रे ब्राह्मणय देयं यस्मान्न प्रत्युत्थायिते तद्ब्रह्मासनमित्यर्थः ॥ ३० ॥

**अजानतेति**। अतस्त्वयाऽजानतैव आचरितं कृतं यथा ब्रह्मवधः ब्रह्महत्या तद्वत्। ब्रह्महत्यासदृशं पापं कृतमित्यर्थः। ननु ब्रह्मवधादपि किं ममेश्वरस्येत्यत आहुः - योगेश्वरस्येतिसार्धेन। यद्यपि योगेश्वरस्य अवद्याऽस्पर्शोपयुक्त योगनिर्वाहकश्य अकर्मवस्यं तव 'ब्राह्मणो न हन्तव्यः'— इत्यादिलक्षण आम्नायोऽपि न नियामकः यद्यपि त्वं न विधिवस्य इत्यर्थः ॥ ३१॥

तथापि हे लोकपावन! ब्रह्महत्यायाः पावनं प्रायश्चित्तं चरिष्यति, चरतु अनुतिष्ठत्वित्यर्थः। किमर्थमित्यताऽऽहुः- नान्यैश्चोदितः। स्वयमेव यदि भवांश्चरिष्यति तर्हि लोकसङ्ग्रहः स्यादित्यर्थः। 'यद्यदाचरति श्रेष्ठः' (भ.गी.३-२१) इत्युक्तरीत्या लोकाननुशिक्षितुं चरेति भावः ॥ ३२ ॥

**विज०** ब्रह्मासनं ब्राह्मणमध्ये ब्राह्मणयोग्यासनम् ॥ २९, ३० ॥

अस्य निधनं त्वया अजानतेव, यद्वा अजानता वा ब्राह्मणवधसमानदोषोऽयमित्यशयेनाह - ब्रह्मेति। भवत आम्नायो विधिनिषेध शासि शास्त्रं नियामकं इदं कुरु, नेदमिति नियन्ता नास्ति। कुत इत्यत्राऽऽह योगेश्वरस्येति ॥ ३१ ॥

विध्यागोचरत्वा दृषयः स्वहार्दं विज्ञापयन्ति **यदीति**। यदि भवान् त्वं ब्रह्महत्यायाः एतत्पावनं शुद्धि लक्षणं परिहारं चरिष्यति, तर्हि लोकसङ्ग्रहं करिष्यति। कुतोऽत्राऽऽह नेति ॥ ३२ ॥

**[1-] श्रीभगवानुवाच [-1]**

**चरिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया।**
**नियमः प्रथमे कल्पे यावान् स तु विधीयताम् ॥ ३३ ॥**
**दीर्घमायुर्बत[3]ैतस्य सत्वमिन्द्रियमेव च ।**
**आशासितं यत्तद्[4]ब्रूत साधये योगमायया ॥ ३४ ॥**

**ऋषय ऊचुः**

**[5]अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च ।**
**यथा भवेद्वचस्सत्यं तथा राम विधीयताम् ॥ ३५ ॥**

[6-]**श्रीभगवानुवाच**

**आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् ।**
**तस्मादस्य भवेद्वक्ता आयुरिन्द्रियसत्त्ववान्[7] ॥ ३६ ॥**

---

1- -1 K.T.W. श्रीराम उवाच ; M.Ma. बलभद्र उवाच 2. B.G.J. करिष्ये 3. K.T.W. किंलैतस्य ; M. Ma. व्रंतं तस्य 4. M. Ma. यद्यदुत ;T.W. यद्युगपत् 5. K.T.W. शस्त्रस्य 6- -6. K.Ml.T.V.W. राम उवाच M.Ma बलभद्र उवाच 7. M. Ma वीर्यवान्

**श्रीध० चरिष्य इति**। वधस्य निर्वेशं प्रायश्चित्तम्। प्रथमेकल्पे[1] मुख्यपक्षे विधीयतामुपदिश्यताम् ॥ ३३ ॥

**दीर्घमिति**। किञ्च। बत हे मुनयः! एतस्य दीर्घमायुः सत्त्वं बलमिन्द्रियं तत्पाटवञ्च यद्भवद्भिराशासितमपेक्षितं तन्नो ब्रूत सर्वम् ॥ ३४ ॥

**अस्त्रस्येति**। अस्त्रादीनां सत्यता यथा भवेदस्माकञ्च वचस्सत्यं यथाभवेत्तथा विधीयतामित्यर्थः ॥ ३५ ॥

तथा सम्पादयन्नाह - **आत्मेति**। "अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे" (बृह.उ.6-4-9) "आत्मा वै पुत्र नामासि" (कौषी.उ.2-11) "स जीव शरदः शतम्" (कौषी.उ.2-10) इत्यादि वेदानुशासनम् वेदवचनम्। तस्मादस्य रोमहर्षणस्य पुत्रः उग्रश्रवाः भवतां पुराणप्रवक्ता भवेत् स च आयुरादिमांश्च भवेत्। अतः साक्षादजीवनात् अस्त्रस्य मृत्योश्च सव्यता पुत्ररूपेण चायुरादिसिद्धे युष्मद्वचनस्यापि सत्यता स्यादिति भावः ॥ ३६ ॥

---

1. B.J. कल्पे 2. Ml.V. तद्वूतं

**वीर०** - एवमुक्तः प्राह रामः- **चरिष्य** इति द्वाभ्याम्। लोकानुग्रहकाम्यया लोकानुग्रहजिघृक्षया वधस्य निर्वेशं प्रायश्चित्तं चरिष्ये प्रथमे कल्पे मुख्यपक्षे यावान्नियमः स तु विधीयताम्; मुख्यप्रायश्चित्तमुपदिश्यतामित्यर्थः ॥ ३३ ॥

किञ्च। **दीर्घमिति**। अस्य रोमहर्षणस्य दीर्घमायुः, सत्त्वं, बलं, इन्द्रियं इन्द्रियपाटवात्मकम् अन्यच्च यद्भवद्भिराशासितम् अपेक्षितं तत्सर्वं ब्रूत, योगमायया आश्चर्यशक्त्या अहं तत्सर्वं साधये ॥ ३४ ॥

इत्थमुक्ताः प्राहुर्मुनयः **अस्त्रस्येति**। अस्त्रस्य त्वत्प्रयुक्त कुशाग्ररूपस्य तव वीर्यस्य च मृत्योः रोमहर्षणमरणस्य[1] च यथा सत्यत्वं यथा चास्माकं वचः-यावत् सत्रं त्वं दीर्घायुष्मान् पुराणवक्ता भवेत्येवंविधं वचः सत्यं भवेत्तथा हे राम! विधीयतां क्रियतामित्यर्थः ॥ ३५ ॥

अस्त्रादीनां सत्यत्वं सम्पादयन्प्राह रामः -(बृह.उ 6-4-9) **आत्मा वा** इति। "अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे" (बृह.उ 6-4-9) "आत्मा वै पुत्र नामाऽसि" (कौषी.उ.2-11) "सजीव शरदः शतम्" (कौषि. उ.2-11) इत्यादि वेदानुशासनम् वेदवाक्यम्। तस्मादस्य पुत्रः उग्रश्रवाः भवतां पुराणवक्ता भवेत्, आयुरादिमांश्च भवेत् इत्यर्थः। अतः साक्षात् रोमहर्षणस्याऽऽजीवनादस्त्रस्य मृत्योश्च सत्यता पुत्ररूपेण च आयुरादि सिद्धेः भवद्वचनस्यापि सत्यता स्यादिति भावः ॥ ३६ ॥

---

1. B. omits मरणस्य

**विज०** प्रथमे कल्पे उत्तमकल्पे यावान्नियमोविधिः सत्वेव विधिः भवद्भिर्विधीयताम् ॥ ३३ ॥

तस्य व्रतं दीर्घमायुः सत्त्वमिन्द्रियं दूरश्रवण दूरदर्शनादि शक्तिमत्साधये। किं बहुना, यद्य दाशासितं कामितं तत्तत्साधय इत्याह - आशासितमिति ॥ ३४ ॥

अस्त्रवीर्ययोरमोघत्वं मृत्योरनावृत्तित्वमस्मद्वचसश्च अवन्ध्यफलत्वं यथास्यात्तथा विधीयताम् ॥ ३५ ॥

पुराणानां वक्ता पुत्रः स्यात् ॥ ३६ ॥

**किं वः कामो मुनि श्रेष्ठाः ब्रूता[1]ऽहं करवाण्यथ[2]।**
**अजानत[3] स्त्वपचितिं यथा मे चिन्त्यतां[4] बुधाः ॥ ३७ ॥**

**[5-]ऋषय ऊचुः[-5]**

**इल्वलस्य सुतो घोरो बल्वलो नाम दानवः ।**
**स दूषयति नः [6-]सत्रमेत्य पर्वणि[-6] पर्वणि ॥ ३८ ॥**

**तं पापं जहि दाशार्ह तन्नश्शुश्रूषणं परम् ।**
**पूयशोणितविण्मूत्र सुरामांसाभिवर्षिणम् ॥ ३९ ॥**

**ततश्च भारतं वर्षं परीत्य सुसमाहितः ।**
**चरित्वा द्वादशा[7]न्मासां स्तीर्थस्नायी विशुध्यसे ॥ ४० ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादश साहस्र्यां

श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे

बलदेवचरित्रे बल्वलवधोपक्रमो नाम अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

1. Ml. V. ब्रूत मां 2. M. Ma. करवाणि तत् ; T. W. करवाण्युत 3. M. Ma. Ml. V. °तश्चा° 4. M. Ma. बुध्यतां 5- -5. T. W. omit 6- -6. M. Ma. सर्वान् सत्रमेत्य च 7. B. G. J. °श मा°

**श्रीध०** प्रथमं तावदपेक्षितं कथयत तदहं करिष्यामीत्याह - **किं वः काम** इति। किं विषयो वः कामो वर्तते तद्ब्रूतेति। अथानन्तरं ब्रह्मदण्डं गृहीत्वा अपचितिं निष्कृतिमजानतो मे हे बुधाः। यथा वच्चिन्त्यता मपचितिरिति ॥ ३७ ॥

प्रथमं तावदपेक्षितं कर्तव्यं कथयन्ति **इल्वलस्येति** द्वाभ्याम् ॥ ३८, ३९ ॥

प्रायश्चित्तमाहुः - **ततश्चेति**। परीत्य प्रदक्षिणी कृत्य सुसमाधानादि गुणविशेषादेकाब्दमात्रमुक्तमिति अविरोधः । सुसमाहितः कामक्रोधादि रहितः चरित्वा कृच्छ्राणि ॥ ४० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां व्याख्यायां

अष्टसप्ततितमोध्यायः ॥ ७८ ॥

**वीर०** किञ्च। ब्रह्मदण्डार्थं युष्मदपेक्षितं कथयत तदहं करिष्यामीत्यत आह - **किं वः काम** इति। हे मुनि श्रेष्ठाः! वो युष्माकं किं कामः यद्विषयः कामो वर्तते तं ब्रूत। अथानन्तरं ब्रह्मदण्डं गृहीत्वा अपचितिं निष्कृतिं अजानतो मम गृहे बुधाः! यथावत् [1-]वेदशास्त्रानुसारतः[-1] अपचितिः चिन्त्यतां विधीयतामित्यर्थः ॥ ३७ ॥

इत्थमुक्ताः तावदपेक्षितं - **इल्वलस्येति**। दानवो, वर्तत इति शेषः। सपल्वलः प्रतिपर्वाऽऽगत्य स' दूषयति ॥ ३८ ॥

तं पल्वलं जहि मारय , तदेव नोऽस्माकं परमुत्कृष्टं शश्रूषणम् तं कथम्भूतम्? पूयादी [2]न्यभिवर्षतीति तथाभूतम्। तत्र पूयम् हेयम् ॥ ३९ ॥

ततः तद्वधानन्तरं भारतं वर्षं परीत्य प्रदक्षिणी कृत्य सुसमाहितो रागद्वेषादिरहितः तीर्थस्नानशीलो द्वादशमासां श्चरित्वा विशुध्यसे शुद्धो भविष्यसि। चरित्वेत्यस्य कृच्छ्राणीत्यादिर्वा ॥ ४० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रिकायां व्याख्यायां

अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

1. I. T.W. omit 2. B. °नभि°

**विज०** हे बुधाः! युष्माभिर्वरो दत्त इत्यजानतो मे अपचिति परिहारं बुध्यताम् ॥ ३७ ॥

प्रायश्चित्तं विधातुमाहुः - **इल्वलस्येति** ॥ ३८-४० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां टीकायां

श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां

अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

विजयध्वजरीत्या षण्णवतितमोध्यायः ॥ ९६ ॥

अस्मिन्नध्याये 'विज' रीत्या षोडश श्लोक पर्यन्तं एकाधिक शततमोऽध्यायः।

सप्तदशश्लोकादारभ्य समापन पर्यंतं षण्णवति तमोऽध्यायः ॥



# एकोनाशीतितमोऽध्यायः

(विजयध्वजरीत्या सप्तनवतितमोऽधयायः)

### श्रीशुक उवाच

[1]अथ पर्वण्युपावृत्ते प्रचण्डः पांसुवर्षणः ।
भीमोवायुरभूद्राजन्पू[2]यगन्धश्चसर्वशः ॥ १ ॥

ततोऽमेध्यमयं वर्षं [3]पल्वलेन विनिर्मितम् ।
अभवद्यज्ञशालायां सोऽ[4]न्वदृश्यत शूलधृ[5]त् ॥ २ ॥

तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम् ।
तप्तताम्रशिखाश्मश्रुं[6] दंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३ ॥

सस्मार मुसलं रामः परसैन्यविदारणम्[7] ।
हलं च दैत्यदमनं ते[8] तूर्णमुपतस्थतुः ॥ ४ ॥

तमाकृष्य हलाग्रेण [9]पल्वलं गगने चरम् ।
मुसलेनाहनत्क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥ ५ ॥

---

1. B. G. J. K. M. Ma. Ml . V. ततः 2. Ml. V. °ति° 3.B. G. J. M. Ma. °ब° 4. Ml. V. °प्य° 5. B. G. J. M. Ma. °धृक्° ; Ml. V. °भृत्° 6. K. M. Ma.T. W. °श्रु° 7. M. Ma. °विमर्दनम्° 8. M. Ma. °तौ° 9. B. G. J. M. Ma. ब°

## श्रीधरस्वामि विरचिता भावार्थदीपिका

ऊनाशीतितमे रामो बल्वलं द्विजतुष्टये। निहत्य तीर्थ स्नानाद्यैः सूतहत्यामपानुदत् ॥

**अथ** इति। उपावृत्ते प्राप्ते ॥ १,२ ॥

**तमिति**। भिन्नो विदीर्णोऽञ्जनचय उपमा यस्य तमतिकृष्णमित्यर्थः। तप्तताम्रवत् शिखा श्मश्रूणि च यस्य तम्। दंष्ट्राभिरुग्रं भ्रुकुटीयुतं[1] मुखं यस्य तम् ॥ ३-५ ॥

---

1. B. °टीमुखं

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ पल्वलवधं वक्तुं तद्दुश्चेष्टितं प्रस्तौति - **तत इति**। पर्वण्युपावृत्ते प्राप्ते सति प्रचण्डो निष्ठुरः पांसून् वर्षतीति तथा भयङ्करो दुर्गन्धो वायुः अभूत् उदभूत् ॥ १ ॥

ततः अमेध्यमयमिति च्छेदः स पल्वलः शूलं धरतीति तथा अन्वदृश्यत ॥ २ ॥

**तमिति**। तं पल्वलमवलोक्य रामः परसैन्यं विदारयतीति तथा तं मुसलं दैत्यान् दमयति नाशयतीति तथा तद्धलं च सस्मारेति सम्बन्धः। तं कथम्भूतम्? बृहत् कायः शरीरं यस्य तं, भिन्नोविदीर्णोऽञ्जनचयःउपमा यस्य तम्, अतिकृष्णमित्यर्थः। तप्तताम्रवच्छिखा श्मश्रूणि च यस्य तं, दंष्ट्राभिरुग्रं भ्रुकुटीयुतं मुखं यस्य तं, तौ[1] हलमुसलौ[2] तूर्णं तदैव उपतस्थतुः सन्निहितौ[3] बभूवतुः ॥ ३,४ ॥

**तमिति**। गगने चरं तं पल्वलं हलाग्रेणाकृष्य बलो रामः क्रुद्धो मूर्ध्नि मुसलेनाहनत् ताडयामास, तत्र हेतुत्वेन पल्वलं विशिनष्टि - ब्रह्मद्रुहं ब्रह्मा ब्रह्मकुलं[4] तस्मै द्रुह्यतीति तथा तम् ॥ ५ ॥

---

1. K. ते 2. K. ले 3. K. ते 4. B.K. ब्राह्मण

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

तप्तताम्रवत् प्रकाशमानाभिः शिखाश्मश्रुदंष्ट्रोग्रभ्रुकुटीभिः युक्तं मुखं यस्य सः तथा तम् । शिखा च श्मश्रूणि च दंष्ट्रे च उग्रभ्रुकुटी च शिखाश्मश्रुदंष्ट्रोग्रभ्रुकुट्यः उग्रा भ्रुकुटी उग्रभ्रुकुटी ॥ १ -५ ॥

**सोऽपतद्भुवि[1] निर्भिन्नललाटोऽसृक्समुत्सृजन् ।**
**मुञ्चन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः[2] ॥ ६ ॥**

**संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः ।**
**अभ्यषिञ्चन्महाभागा[3] वृत्रघ्नं विबुधा यथा ॥ ७ ॥**

**वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजाम् ।**
**रामाय वाससी दिव्ये दिव्यान्याभरणानि च ॥ ८ ॥**

अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ।
स्नाता सरोवरमगाद्यतस्सरयुरास्रवत् ॥ ९ ॥
अनुस्रोतेन सरयूं प्रयागमुपगम्य सः ।
स्नात्वा सन्तर्प्य देवादीञ्जगाम पुलहाश्रमम् ॥ १० ॥

1. M. Ma. °द्वल 2. M.Ma. °ऽसुरः 3. K.T.W. भाग ; M.Ma. °र्हाभिः 4- -4. M. Ma. स्रोतेन सरयूं पायात्

**श्रीध० स इति**। अरुणो रुधिरेण दैत्यः शैलो धातुभिर्यथेति ॥ ७ ॥

**वैजयन्तीमिति**। श्रियो धामानि अम्लानानि पङ्कजानि यस्यां ताम् ॥ ८ ॥

**अथेति**। किं तत्सरः तदाह[1]- यत इति। आस्रवदुदगात् ॥ ९॥

**अनुस्रोतेनेति**। अनुस्रोतेन अनुलोमतः। पुलहाश्रमं हरिक्षेत्रम् ॥ २० ॥

1. B.J. omit तदाह

**वीर० स इति**। निर्भिन्नं ललाटं यस्य सः पल्वलः असृक् रुधिरम् उत्सृजन् उद्गिरन्[1] आर्तस्वरं मुञ्चंश्च भुवि भूमौ अपतत्, यथा अरुणः गैरिकादि धातुभिरिति शेषः। उपमेये तु रुधिरेणारुणः वज्रेणाहतः पर्वतः अपतत्[2],तद्वत् ॥ ६ ॥

**संस्तुत्येति**। अवितथाः सत्याः ताः आशिषः प्रयुज्य आशीर्वादान् कृत्वेत्यर्थः। हे महाभाग! अभ्यषिञ्चन् स्नापयामासुः। यथा विबुधाः देवाः वृत्रघ्नम् इन्द्रं तद्वत् ॥ ७ ॥

**वैजयन्तीमिति**। श्रियो धामानि अम्लानि पङ्कजानि यस्यां तां वैजयन्तीं नाम माल्यं दिव्ये वस्त्रे दिव्यान्याभरणानि च ददुः ॥ ८ ॥

**अथेति**। तैर्मुनिभिः ब्राह्मणैस्सह कौशिकीं नदीमागत्य तत्र स्नात्वा ततस्सरोवरमगात्। किं तत्सरस्तत्राह यतस्सरसः सरयूः आस्रवत् उदगात् ॥ ९ ॥

सरयूमनुस्रोतेन अनुलोमेन स बलभद्रः पुलहाश्रमं सालग्रामक्षेत्रम् ॥ १० ॥

1.T.W. Omit उद्गिरन् 2. K. पतति

**विज०** श्रियो धामानि अम्लानानि च पङ्कजानि यस्यां सा, तथा ताम् ॥ ६-८ ॥

यतः सरोवरात् आस्रवत् अस्यन्दत् ॥९॥

स्रोतेन प्रवाहेण ॥१०॥

**गोमतीं गण्डकीं स्नात्वा विपाशां शोण आप्लुतः ।**
**गयां गत्वा पितॄनिष्ट्वा गङ्गासागरसङ्गमम्[1] ॥ ११ ॥**

**उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वाऽभिवाद्य च ।**
**सप्तगोदावरीं वेणीं[2] पम्पां भीमरथीं ततः ॥ १२ ॥**

**स्कन्दं दृष्ट्वा ययौ रामश्श्रीशैलं गिरिशालयम् ।**
**द्रविडेषु[3] महापुण्यं दृष्ट्वाद्रिं वेङ्कटं[4] प्रभुः ॥ १३ ॥**

**कामकोटीं[5] पुरीं काञ्चीं कावेरीं च सरिद्वराम् ।**
**श्रीरङ्गाख्यं महापुण्यं यत्र सन्निहितो हरिः ॥ १४ ॥**

**ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ।**
**समुद्रसेतुमगमन्[6] महापातकनाशनम् ॥ १५ ॥**

1. B.G.J. °सङ्गमे 2. B.G.J. वेणां 3. M.Ma द्रुमिलेषु 4.T.W. वेङ्कटाचलम् 5. B.G.J. °कोष्णीं; M.Ma कोष्टीं 6. B.G.J. समुद्रं

**श्रीध० गोमतीमिति।** गोमत्यां गण्डक्यां विपाशायां च स्नात्वा शोणे च आप्लुतः। इष्ट्वा सम्पूज्य ॥ ११,१२ ॥

**स्कन्दमिति। श्रीशैलं** श्रीपर्वतम् ॥ १३ ॥

**कामकोटिमिति। काञ्चीं पुरीम्** ॥ १४,१५ ॥

**वीर०** गोमत्यां गण्डक्यां विपाशायां च स्नात्वा शोणे च नदे आप्लुतः स्नातः पितॄन् पितामहादीन् इष्ट्वा सम्पूज्य मनसा आराध्येत्यर्थः जीवत्पितृकत्वात् श्राद्धाधिकाराभावात्, यद्यपि जीवत्पितृकैः गया न गन्तव्येति वदन्ति, तथाप्यत एव वचनात्तीर्थयात्राव्याजेन गन्तव्या, न तु श्राद्धार्थमित्यवगम्यते, गङ्गासागरसङ्गमं गत्वा उपस्पृश्य तत्र स्नात्वा, क्त्वाप्रत्ययान्तानां

समुद्रसेतुमगमदित्युपरिष्टादन्वयः। गिरिशस्य रुद्रस्य आलयं श्रीशैलं श्रीपर्वतं काञ्चीपुरीं सरिद्वरां कावेरीं यत्र हरिः सन्निहितः तच्छ्रीरङ्गाख्यं महापुण्यावहं क्षेत्रम्, ऋषभाद्रिं वनगिरिं, तद्विशेषणं हरेः क्षेत्रमिति, तत्रेति ॥ ११-१५॥

**विज०** शोणं नदम् ॥ ११ ॥

सप्तशाखाभेदेन समुद्रं गता सप्तगोदावरी तां वेणीं कृष्णवेणीम् ॥ १२-१५ ॥

तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः ।
कृतमालां ताम्रपर्णीं मलयां च कुलाचलम् ॥ १६ ॥

[1]तत्रागस्त्यां समासीनं नमस्कृत्याभिवाद्य च ।
योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम् ॥
दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः ॥ १७ ॥

ततः [2]फाल्गुनमासाद्य पञ्चाप्सरसमुत्तमम् ।
विष्णुस्सन्निहितो यत्र स्नात्वाऽस्पर्शद्गवायुतम् ॥ १८॥

स्थानं दूरं हरेः स्थानं यत्र सन्निहितो हरिः ।
* ततो[3]ऽतिव्रज्य भगवान् के[4]रलांस्तुत्रिगर्तकान् ॥
गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥ १९ ॥

[5]आर्यां द्वैपा[6]यनीं दृष्ट्वा शूर्पारकमगाद्बलः ।
तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्ड[7]कम् ॥ २० ॥

---

1. M. Ma तथा° 2. K. M. Ma. T.W. फ° * This half verse is found only in M.Ma editions. 3. B.G.J. °ऽभि 4. K.T.W. °रलाञ्जत ; M.Ma °रलादींस्त्रि° 5. M. Ma तत्र 6. M.Ma °नं 7.K. °काम् ;T.W. कान्

**श्रीध०** **तत्रेति**। दक्षिणमर्णवम् ॥ १६-१७ ॥

**तत इति**। फाल्गुनमनन्तपुरम्। पञ्चाप्सरसं सरः। अस्पर्शदस्पृशत् ॥ १८ ॥

**तत इति**। केरलादीन् देशान् ॥ १९ ॥

**आर्यामिति**। द्वीपमयनं यस्यास्ताम् ॥ २० ॥

**वीर०** तत्र समुद्रसेतौ [1-]हलायुधः राम[-1]ः अयुतं धेनूः ददौ। कृतमालामिति। अगमदित्यनुषङ्गः, शेषो वा ॥ १६ ॥

तत्र मलयपर्वते तेनागस्त्येन आशीर्भिः योजितः[2] दक्षिणमर्णवं गतः। तत्रार्णवसमीपे [3]कन्याख्यां कन्यां कुमार्याख्यां दुर्गां देवीं ददर्श स बलरामः ॥ १७ ॥

**तत इति।** [4]फाल्गुनमनन्तपुरं प्राप्य उत्तमं पञ्चाप्सरसं नाम सरः समासाद्य, तद्विशिनष्टि - यत्र पञ्चाप्सरसेविष्णुस्सन्निहित. तत्र स्नात्वा गवामयुतम् अस्पर्शत् [5-]अदादित्यर्थ[-5]ः ॥ १८ ॥

भगवान् रामः केरलादीन् देशान् यत्र धूर्जटे शिवस्य सान्निध्यं तद्गोकर्णाख्यं शिवाभिमानिक्षेत्रम् ॥ १९ ॥

द्वीपमयनं यस्यास्तामार्याममम्बिकां दृष्ट्वा शूर्पारकं क्षेत्रं जगाम। तापीमिति। उपस्पृश्य ताप्यादिषु स्नात्वा अथ दण्डकं दण्डकाख्यमरण्यं प्रविश्य ॥ २० ॥

---

1- -1. K.T.W.Omit 2. B.adds चोदितश्च ; K. adds चोदितश्च 3. K. कन्यां 4. T.W. फ॰ 5. B. ददावित्यर्थः

**विज०** अस्पृशत् ददौ। स्थानं दूरम् अनन्तक्षेत्रम् ॥ १६-१९ ॥

धूर्जटेः शिवस्य ॥ २० ॥

**प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी ।**
**[1]मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥ २१ ॥**

**श्रुत्वा द्विजैः [2-]कथ्यमान[-2]ं कुरुपाण्डवसंयुगे ।**
**सर्वराजन्य निधनं [3-]भारं मेने हृत[-3]ं भुवः ॥ २२ ॥**

**सभीमदुर्योधनयोर्गदाभ्यां युध्यतो[4]र्मृधे ।**
**वारयिष्यन्वि[5]नशनं जगाम यदुनन्दनः ॥ २३ ॥**

**[6]युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि ।**
**अभिवाद्याभवं स्तूष्णीं किं विवक्षुरिहागतः ॥ २४ ॥**

**गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ।**
**मण्डलानि विचित्राणि चरन्ताविदमब्रवीत् ॥ २५ ॥**

1. M.Ma अनु॰ 2- -2 M. Ma तु कथितं 3- -3 भारमेतद्धृतं 4. M. Ma ॰तोरणम् 5. M.Ma ॰शसनं 6. M.Ma ॰वीरस्तु

**श्रीध०** स इति विनशनं कुरुक्षेत्रम् ॥ २१-२३ ॥

**युधिष्ठिरस्त्विति** ॥ विवक्षुः वक्तुमिच्छुः। किं वदिष्यतीति भिया तूष्णीमासन्निति ॥ २४-२५ ॥

**वीर०** ततो रेवां नर्मदामगमत्, यत्र रेवातीरे माहिष्मती पुरी वर्तते, तां रेवामित्यर्थः ॥ २१ ॥

**श्रुत्वेति**। तत्र द्विजैः कथ्यमानं सर्वेषां बहूनां राजन्यानां राज्ञां निधनं नाशं शृत्वा भुवो भारं हृतं भगवतेति शेषः। मेने अमन्यत ॥ २२ ॥

**स इति**। स यदुनन्दनो रामः मृथे युद्धे युध्यतोस्सतोः तौ वारयिष्यन् वारयितुं विनशनं कुरुक्षेत्रं जगाम ॥ २३ ॥

**युधिष्ठिर इति**। तं रामं दृष्ट्वा ययौ तत्समीपमिति शेषः। तथा कृष्णार्जुनावपि ययतुः ते तमभिवाद्य किं वक्तुमिच्छुरिहागत इति संशयानाः तूष्णीमभवन् ॥ २४ ॥

उभौ भीमदुर्योधनौ दृष्ट्वा इदं वक्ष्यमाणं अब्रवीत्, कथम्भूतौ? संरब्धौ क्रुद्धौ विजयमाकाङ्क्षन्तौ[1] विचित्राणि मण्डलानि गतिभेदान् चरन्तौ कुर्वन्तौ ॥ २५ ॥

1. B. काङ्क्षमाणौ

**विज०** अनुतीर्थं नाम तीर्थम् ॥ २१ ॥

भुव एतत् एतं भारं हृतं श्रुत्वा एतत् एतर्हि भुवो भारं हृतं मेने इति शेष इति वा ॥ २२ ॥

विशसनं युद्धम् ॥ २३ ॥

किं वक्तुकाम आगत इति मत्वा ॥ २४-२५ ॥

**युवां तुल्यबलौ वीरौ हे राजन् हे वृकोदर ।**
**एकं प्राणाधिकं मन्ये उतैकं शिक्षयाऽधिकम् ॥ २६ ॥**

**तस्मादेकतरस्येह युवयोस्समवीर्ययोः ।**
**न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः ॥ २७ ॥**

**न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत्[1] ।**
**अनुस्मरन्तावन्योन्यं दुरुक्तं दुष्कृतानि च ॥ २८ ॥**

**दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ ।**
**उग्रसेनादिभिः प्रीतैः[2] ज्ञातिभिः समुपागतः[3] ॥ २९ ॥**

**★ तं पुनर्नैमिशं प्राप्तमृषयो[1]ऽयाजयन्मुदा ।**
**क्रत्वङ्गं[4] क्रतुभिस्सर्वै[5]र्निवृत्ताखिलविग्रहम् ॥ ३० ॥**

---

1. K.T.W. °त्मजौ 2. K.T.W. °स्फतैः 3. B. तैः ★ This verse is not found in M.Ma editions only. 4. K. °ङ्गं 5. Ml.T.V.W. °र्वें°

**श्रीध० तस्मादिति।** अन्यः पराजयो वा। रणः सङ्ग्रामः ॥ २६-२७ ॥

**नेति।** अर्थवद्वाक्यम् ॥ २८ ॥

**दिष्टमिति।** दिष्टं प्राचीनं कर्म। समुपागतः सङ्गतः ॥ २९ ॥

**तमिति।** तं बलरामं क्रत्वङ्गं यज्ञमूर्तिम् ॥ ३० ॥

**वीर०** उक्तिमेवाह - **युवामिति।** हे राजन्! दुर्योधन! हे वृकोदर! भीम! एकं भीमं प्राणाधिकं बलाधिकं मन्ये, उतैकम् एकं तु दुर्योधनं शिक्षयाऽधिकं मन्ये ॥ २६ ॥

तस्मात् हेतोः तुल्यवीर्ययोः युवयोः अन्यतरस्य विजयः अन्यः पराजयो वा भविष्यतीति न लक्ष्यते, अतो निष्फलो रणः सङ्ग्रामः विरमतु शाम्यतु ॥ २७ ॥

**नेति**। नृपात्मजौ भीमदुर्योधनौ इत्थमुक्तावपि तस्य रामस्य वाक्यं न जगृहतुः, तत्र हेतुत्वेन तौ विशिनष्टि-बद्धवैरौ, तत्रापि हेतुः - अन्योन्यं दुरुक्तं [1-]दुश्चेष्टितानि[-1] च स्मरन्तौ ॥ २८॥

**दिष्टमिति**। रामः तत् स्ववाक्याग्रहणं दिष्टं तयोः प्रचीनकर्मप्रयुक्तं मन्वानः तूष्णीं द्वारवतीं पुरीं ययौ, तत्र च स्फीतैस्सर्वसम्पत्समृद्धैः उग्रसेनादिभिस्सङ्गतो बभूव ॥ २९ ॥

तमिति। तं बलभद्रं निवृत्ताखिलविरोधं क्रत्वङ्गैस्सह क्रतुभिः अयाजयन्। क्रत्वङ्गमिति पाठे यज्ञशरीरकं परमात्मानम् ॥ ३० ॥

---

1--1 B. दुष्कृतानि

**विज०** प्राणाधिकं बलाधिकम् ॥ २६ ॥

अन्यः पराजयो वा विरमतु शान्तो भवतु ॥ २७ ॥

दुष्कुतानि जतुगृहदाहादीनि ॥ २८ ॥

तद्युद्ध दिष्टं दैवकृतम् ॥ २९,३० ॥

**▲ तेभ्यो विशु[1]द्धविज्ञानं भगवान्व्यतरद्विभुः ।**
**येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः ॥ ३१ ॥**

**स्वपत्न्याऽवभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः ।**
**रेजे स्वज्योत्स्नयेवेन्दु स्सुवासास्सुष्ठलङ्कृतः ॥ ३२ ॥**

**ई[2]दृग्विधान्यसंख्यानि बलस्य बलशालिनः ।**
**अनन्तस्याप्रमेयस्य [3-]मायामर्त्यस्य सन्ति हि[-3] ॥ ३३ ॥**

4- 4
**योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः ।**
**सायं प्रातरनन्तस्य विष्णोस्सदयितो भवेत् ॥ ३४ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

▲ These two verses are not found in M.Ma editions only. 1. Ml.V. द्वं 2. K.T.W. नेकानि 3- -3 M. Ma Omit 4- -4 M.Ma Omit 5. K.T.W. शृण्वन् गृणन्°

**श्रीध० तेभ्य** इति। आत्मन्यधिष्ठाने विश्वगं सर्वानुस्यूतं येनैव विदुः पश्यन्ति तद्विशुद्धं विज्ञानं व्यतरददात् ॥ ३१-३४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

**वीर०** भगवान् रामः तेभ्यः ऋषिभ्यः विशुद्धं विपर्यय संशयादिरहितं विज्ञानं व्यतरत् अदात् उपदिदेशेत्यर्थः। किं तत्ज्ञानम्? यद्व्यतरदित्यत आह-येनैवेति। येन ज्ञानेन आत्मनि परमात्मन्याधारभूते विश्वमात्मानं च विश्वगं विस्वं गच्छति व्याप्य तिष्ठतीति तथाभूतं विदुः साक्षात् कुर्युः, तथाविधं ज्ञानं व्यतरदित्यर्थः। (ज्ञानप्रदानं दक्षिणास्थानीयमिति बोध्यम्) ॥ ३१ ॥

स्वपत्न्येति। [1-]रेवत्याख्यया स्वपत्न्या सह अवभृथस्नातः कृतावभृथस्नान इत्यर्थः[-1]। स्वज्योत्स्नया चन्द्र इव रेजे, ज्योत्स्नास्थानीया स्वपत्नी, चन्द्रस्थानीयस्तु रामः, अनपायित्वाच्छुभ्रवर्णत्वाच्च ॥ ३२ ॥

रामस्य चेष्टितानि साकल्येन वक्तुं न शक्यानीत्यभिप्रयन्नाह — **ईदृग्विधानीति**। अनन्तस्य अनन्तावताररूपस्य अप्रमेयस्य असङ्ख्यातकल्याणगुणस्य मायामर्त्यस्य स्वसङ्कल्पपरिगृहीतमनुष्यजन्मनः ॥ ३३ ॥

उपवर्णितबलभद्रचेष्टितश्रवणादि फलमाह य इति। अद्भुतानि कर्माणि यस्य तस्यानन्तस्य तदवताररूपस्य बलदेवस्य कर्माणि यः पुमान् शृण्वन्, सति वक्तरि गृणन् कथयन् सति श्रोतरि कीर्तयन् उभयोरभावे [2-]अनुस्मरेच्च[-2], स विष्णोर्दयितो निरतिशयप्रियो भवेत् ॥ ३४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां व्याख्यायां

एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

1- -1W. Omits 2- -2 B. Omits

**विज०** [1-]बलभद्ररामस्य विक्रमश्रवणादिना किं फलं भवतीति तत्राह – ईदृग्विधानीति[-1] ॥ ३१-३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

(विजयध्वजरीत्या सप्तनवतितमोऽध्यायः)

---

1- -1B. Omits.



# अशीतितमोऽध्यायः

(श्रीविजयध्वजरीत्या अष्टनवतितमोऽध्यायः)

## कुचेलोपाख्यानम्

★ राजोवाच

भगवन्यानि चाऽन्यानि मुकुन्दस्य महात्मनः ।
वीर्याण्यनन्तवीर्यस्य श्रोतुमिच्छामि हे प्रभो! ॥ १ ॥

को नु श्रुत्वा सकृद्ब्रह्मन् उत्तमश्लोकसत्कथाः ।
विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥ २ ॥

सा [1-]वागनन्तस्य[-1] गुणान् गृणीत करौ च तत्कर्मकरौ मनश्च ।
स्मरेद्वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥ ३ ॥

शिरस्तु तस्योभयलिङ्गमानमेत्तदेव यत्पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥ ४ ॥

सूत उवाच

विष्णुरातेन सम्पृष्टो भगवान्बादरायणिः ।
वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥ ५ ॥

श्रीशुक उवाच

कृष्णस्याऽऽसीत्सखा कश्चित् ब्राह्मणो ब्रह्मवित्तमः ।
विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥
यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ॥ ६ ॥

---

★ विजयध्वजरीत्या अयमध्यायः सप्तदशश्लोकादारभ्यते। 1- -1 B.G.J °ग्यया तस्य

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अथाऽशीतितमे कृष्णः श्रीदामानं गृहागतम्। सम्पूज्याऽपृच्छदर्येप्सुं गुरुवासकथां मुदा ॥

सुरारिमारको हरिः पुरा चकार शं सताम्। अतःपरं विनैव तन्निजोपकारमाचरत् ॥

श्रीरामचरितानि श्रुत्वा पुनर्मुकुन्दवीर्याणि पृच्छति - **भगवन्निति**। हे भगवन्! श्रोतुमिच्छामि इत्यन्वयः॥ १ ॥

**क** इति। उत्तमश्लोकस्य श्रीकृष्णस्य सत्या मनोहराः विषयवैतृष्ण्यजनिकाः कथाः विशेषज्ञः सारवित्, विषण्णो विषादं प्राप्तः ॥ २ ॥

कथाश्रवणं स्तुवन् दृष्टान्ततया अन्यार्थानाह **या वागिति**। तावेव करौ यौ तत्कर्मकर्तारौ, तदेव मनो यत् स्थिरजङ्गमेषु वसन्तं स्मरेत्, यस्तस्य पुण्याः कथाः शृणोति। स एव कर्णः ॥ ३ ॥

**शिर** इति। उभयलिङ्गमिति मत्वा आनमेत्तदेव शिरः तदेव तस्य लिङ्गं स्थिरं जङ्गमञ्च तस्यैव लिङ्गमित्येव यत्पश्यति तदेव चक्षुः तान्येव अङ्गानि यानि पादोदकं भजन्तीति ॥ ४-६ ॥

---

1. B महे

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ भगवतो भक्तानुग्रहं ब्रह्मण्यत्वाद्यात्मकं कुचेलवृत्तान्तं प्रस्तोष्यंस्तावत् तद्विषयकं राज्ञः प्रश्नमाह सूतः **भगवन्निति**। हे भगवन्! शुक! अनन्तस्य अपरिच्छिन्नस्वरूपस्वभावस्य महात्मनो भक्तानुकम्पिनो मुकुन्दस्य यानि वीर्याणि प्रभावसूचकानि कर्माणि तानि श्रोतुं इच्छाम हे प्रभो! वक्तुं समर्थेति भावः ॥ १ ॥

बहुधा श्रुतवतोऽपि कुतस्तव न विरक्तिरुदेतीत्यत आह **कोन्विति**। हे ब्रह्मन्! उत्तमश्लोकस्य सत्कथाः असकृदपि श्रुत्वा काममार्गणैः विषयान्वेषणैः अविषण्णः विषादमप्राप्तः विशेषज्ञो रसज्ञश्च को वा पुमान् विरमेत, भगवत्कथाश्रवणादिति शेषः। सारज्ञश्चेन्न कोऽपि विरमेतेत्यर्थः। यद्वा काममार्गणैः विषण्णः निर्वेदं प्राप्तः ॥ २ ॥

भगवद्गुणवर्णनादिषु उपयुक्तानामेव वागादीन्द्रियाणां साफल्यम्, अन्यथा वैयर्थ्यमेवेत्याह - सेति द्वाभ्याम्। या-अनन्तस्य गुणान् गृणीते वर्णयति सैव वाक् सफलेत्यर्थः। विपर्यये 'जिह्वाऽसति दार्दुरकीव' (भाग.1-3-10) इत्यादि द्वितीयस्कन्धोक्तोऽर्थोऽनुसन्धेयः। तस्य भगवतः कर्माऽऽराधनात्मकं कुरुत इति तथा। तावेव करौ हस्तौ। स्थावरेषु जङ्गमेषु[1] चाऽन्तरात्मतया वसन्तं भगवन्तं यत्स्मरेत् तदेव मनः। यस्तस्य पुण्याः कथाः शृणोति स एव कर्णः श्रोत्रम् ॥ ३ ॥

उभयं चराचरात्मकं लिङ्गं शरीरं यस्य तम्। विभवावताररूपमर्चावतार रूपञ्चेति वा।यत् आनमेत् प्रणमेत् तदेव शिरः। यत्तं पश्यति तदेव चक्षुः। विष्णोः तज्जनानां तद्भक्तानां वा (उदकं) पादोदकं नित्यं यानि भजन्ति सेवन्ते तान्येवाऽङ्गनि गात्राणि ॥ ४ ॥

इत्थमापृष्टः प्राह मुनिरित्याह सूतः **विष्णुरातेनेति**। विष्णुरातेन परीक्षिता निमग्नमासक्तं मानसं हृदयं यस्य सः ॥५॥

उक्तिमेवाऽऽह **कृष्णस्येत्यादिना** यावदध्यायसमाप्ति। ब्रह्मवित्तमः ब्रह्मविदां श्रेष्ठः इन्द्रियार्थेषु शाब्दादिविषयेषु विरक्तः। तत्र हेतुः प्रशान्तः आत्मा मनो यस्य, जितानीन्द्रियाणि बाह्यानि येन सः यदृच्छयोपपन्नेन दैवाल्लब्धेनान्नादिना वर्तमानःजीवन्। एवम्भूतः कृष्णस्य सखा आसीदिति सम्बन्धः ॥ ६ ॥

---

1. B चरेषु

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

भगवानपि गोविन्दः साधयित्वा स्ववाञ्छितम्। सुयोधने महाबाहौ निहते गदया रणे ॥ क ॥

विसृज्यायोधनं शून्यं प्रयातुमुपचक्रमे। कृपश्च कृतवर्मा च द्रौणिश्च रथिनां वरः ॥ ख ॥

अवशिष्टा महात्मानः सुयोधनबले त्रयः। पञ्चपाण्डुसुता वीराः सात्यकिश्च महाबलः॥ ग ॥

वैश्यपुत्रो युयुत्सुश्च शिष्टाः कृष्णपुरोगमाः। तान् पुरस्कृत्य गोविन्दो मुनिबृन्दसमन्वितः ॥ घ ॥

जगाम हास्तिनपुरं धृतराष्ट्रं प्रसादितुम्। गान्धारीं धृतराष्ट्रञ्च विदुरञ्च महामतिम् ॥ ङ ॥

प्रसाद्य पाण्डवान् स्वे स्वे राज्ये संस्थाप्य यत्नतः। स्तूयमानो मुनिगणैः सूतमागधवन्दिभिः ॥ च ॥

अनुयातः पाण्डुपुत्रैः प्रेमबाष्पाविलेक्षणैः।ताननुज्ञाप्य सोत्कण्ठान्रथेनादित्यवर्चसा ॥ छ ॥

शङ्खदुन्दुभि निर्घोषैः वेदमङ्गल निःस्वनैः। पुण्याहमन्त्रघोषैश्च द्वारकां प्रययौ हरिः ॥ ज ॥

विचित्रतोरणरम्यां चलत्कजलिकाकुलाम्। अलङ्कृतां पौरजनैः सिक्तसम्मृष्टभूतलाम् ॥ झ ॥

उपस्थितः पौरजनैः पालिकाङ्कुरधारिभिः। योषिद्भिर्वारमुख्याभि र्भूषिताभिश्च भूषणैः ॥ ञ ॥

वहद्भिर्दीपमुकुरकलशस्रक्फलाक्षतान्। उपस्थितो ब्राह्मणैश्च पुत्रैः पौत्रैस्सहानुजैः ॥ ट ॥

प्रविवेश पुरीं दिव्यां दिवसे पूजितो हरिः। स प्रविश्य सभां दिव्यां सुधर्मां लोकविश्रुताम् ॥ ठ ॥

आहुकं वासुदेवञ्च रामश्चैवाऽभ्यवायवत्। प्रणम्य मातरो विश्वाः काञ्चने परमासने ॥ ड ॥

उपविश्य यथाजोषं पूजितो यदुपुङ्गवैः। रराज रजनीनाथो यथा ग्रहगणै र्दिवि ॥ ढ ॥

हतावशिष्टै र्भूपालैस्तत्पुत्रैश्च महाबलैः। अभिषिक्तैर्यथा स्थानं सेव्यमानो दिवा निशम् ॥ ण ॥

अवतीर्णमहाभारां विश्वां विश्वम्भरो हरिः। धर्मराजं पुरस्कृत्य धर्मेणैवान्वशासत ॥ त ॥

राजा एतदेव इन्द्रियकृत्यमिति वक्ति **सा वागिति**। या अनन्तस्य गुणान् गृणीते सैव वाक्। यौ तत्कर्मकरौ तावेव करौ। अनेन करोतीति करः इति कर्तर्यच् प्रत्ययः सफल इति सूचितं यत्स्थिरजङ्गमेषु वसन्तं हरिं स्मरेत् तदेव मनः 'मन ज्ञाने' इति धातोः स्मरणलक्षणं ज्ञानं यस्तस्य हरेः कथा शृणोति स कर्णः। 'कृणआकर्णने' इति धातुः ॥ १-३ ॥

चराचरभेदेनोभयलिङ्गं उभयप्रतिमाम् आनमेद्यत्तदेव शिरः। श्रयत इति शिरः 'श्रिञ्सेवायाम्' इति धातोः नमनलक्षणसेवायां शिर इति निपात्यते। यदुभयलिङ्गं पश्यति तदेव चक्षुः [1-] चेष्टे पश्यतीति चक्षुः [-1]। 'चक्षुर्दर्शने' इति धातुः। तस्य हरेः जनानां यानि विष्णोः पादोदकं नित्यं भजन्ति। पानस्नानलक्षणां सेवां कुर्वन्ति अथ मङ्गलानि तान्येवाऽङ्गानि, नान्यानि ॥ ४-६॥

---

1- -1 B Omits

अनेनाऽध्यायद्वयेन कृपणब्राह्मणकृपातिशयकथनेन हरिभक्तस्य केवलं न पारत्रिकमेव फलम्, अपि तु ऐहिकमप्यति विस्मयकरं स्यादितीदृशं माहात्म्यं वक्ति। तत्र प्रथमतो भारतयुद्धं समाप्य कृष्णस्य हस्तिनापुरप्रयाणप्रकारं प्रख्यापयति **भगवानपीति** ॥ क ॥

शून्यं शवादिनाऽपि रहितं; प्रयातुं गन्तुम्। अष्टादशाक्षौहिणीभ्यः शिष्टानाह - कृपश्चेति ॥ ख-ङ ॥

भगवत्सेवामन्तरेण राज्यानिच्छून् इत्यतो यतत इति युक्त्या प्रतिपाद्येत्यर्थः ॥ च,छ। ।

वेदे ये मङ्गलनिस्वनाः मङ्गलवचनानि, तैः ॥ ज,झ ॥

उपस्थितोऽभिगतः। अङ्कुरपूरितपालिका पात्रविशेषः ॥ ञ-ठ ॥

मातरो मातॄः॥ ड ॥

यथाजोषं यथासुखम् ॥ ढ-त ॥

**तस्य भार्या कु(चे)चैलस्य क्षुत्क्षामा च तथाविधा ।**
**पतिव्रता पतिं प्राह म्लायता वदनेन सा ॥ ७ ॥**

**[1-]दरिद्रा सीदमाना सा[-1] वेपमानाऽभिगम्य च ।**
**ननु ब्रह्मन् भगवतः सखा साक्षाच्छ्रियः पतिः ॥ ८ ॥**

**ब्रह्मण्यश्च शरण्यश्च भगवान् सात्वतर्[3]षभः ।**
**तमुपैहि महाभाग साधूनाञ्च परायणम् ॥ ९ ॥**

**दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ।**
**आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः ॥ १० ॥**

**स्मरतः पादकमलमात्मानमपि यच्छति ।**
**किन्त्वर्थ कामान् भजतो [5-]नात्यभीष्टाञ्[-5]जगद्गुरुः ॥ ११ ॥**

**स एव भार्यया विप्रो बहुशः प्रार्थितो मृ[6]दु (दुः) ।**
**अयं हि परमो लाभः उत्तमश्लोकदर्शनम् ॥ १२ ॥**

---

1- -1 K.Ml.T.V.W दारिद्र्यात् सीदमाना सा ; M.ma दरिद्रं साध्व्यशनाया 2. Ml,T,V,W ते: 3. Ml.T.V.W तां पति: 4. K.Ml.T.V.W किमर्थं 5- -5 M.Ma नान्यमिष्टञ्जं 6. M.Ma विभु:

**श्रीध० तस्येति**। तथाविधा कुचैला किञ्च क्षुत्क्षामा यत्किञ्चित्सम्पन्नमन्नं तस्मै परिविष्य स्वयं क्षुधा जीर्णा ॥ ७॥

**पतिव्रतेति**। पतिव्रता सती म्लायता शुष्यता वदनेन सीदमाना भर्तुर्भोगसम्पादनशक्त्याऽवसीदन्ती वेपमाना भयेन कम्पमाना ॥ ८,९ ॥

**दास्यतीति**। भोजवृष्ण्यन्धकेश्वर इति तत्स्वीकारमात्रेण सर्वे ते दास्यन्तीति भावः। नात्यभीष्टान् परिपाकविरसत्वात् ॥ १०-१२ ॥

**वीर०** तस्य ब्राह्मणस्य कुचेलाख्यस्य कुत्सितं चेलमस्य - इतीदमन्वर्थ नाम। भार्या क्षुत्क्षामा यदृच्छया लब्धं तस्मै परिविष्य स्वयं क्षुधा जीर्णा। तत्र हेतुः। तथाविधा पतिवत् जितेन्द्रिया। अत एव पतिव्रता एवम्भूता सा म्लायता शुष्यता वदनेन पतिं प्राह ॥ ७ ॥

**दरिद्रा** इति। तदेवाऽऽह - नन्विति सार्धैस्त्रिभिः। हे ब्रह्मन्! भगवतः पूज्यस्य तव यस्सखा कृष्णः तमुपैहि समीपं गच्छ। कथम्भूतः? साक्षात् श्रियो लक्ष्म्याः पतिः तव दारिद्र्यापनयनं तस्य कियदिति भावः। ननु श्रियः पतिश्चेत् मां नाऽवलोकयेदपि इत्यत आह - ब्रह्मण्य इति। ब्रह्मणि ब्राह्मणकुले साधुः। तस्मात्त्वामादरिष्यत इति भावः। अथाऽपि श्रियः पतिश्चेत् मोक्षदो न तु वित्तद इत्यत आह - शरण्यः। चतुर्विधपुरुषार्थार्थिनां शरणार्हः। अथाऽपि न मदभिप्रेतं जानीयात् इत्यत आह - भगवान् ज्ञानशक्त्यादिषाड्गुण्यपूर्णः. अथाऽपि परत्वेन न मामाद्रियेतेत्यत आह - सात्त्वतर्षभः निरतिशयसौशील्यादेव सात्त्वतश्रेष्ठतयाऽवतीर्ण इति भावः। तमेव किं विशिष्योपैहीति ब्रूषे इत्यत आह-साधूनां भवादृशां परमयनं प्राप्यम् ॥ ८-९ ॥

उपेताय किं दास्यतीत्यत आह - **दास्यतीति**। भूरि पुष्कलं द्रविणं धनं सीदते क्लिश्यमानाय कुटुम्बिने च तुभ्यं दास्यति। क्वाऽऽस्त इत्यत आह - आस्ते इति। द्वारकायामेवाऽधुनाऽऽस्ते, न तु शत्रुविजयाद्यर्थं क्वापि गत इति भावः ॥ १० ॥

दास्यति वा नवा इति संशयानं प्रत्याऽऽह - **स्मरत** इति। स्मरत एवाऽऽत्मानमपि यच्छति ददाति, किम्पुनः सुदूरं गत्वा भजतो याचमानस्य अर्थकामान् ददातीति वक्तव्यमित्यर्थः। तान्विशिनष्टि **नात्यभीष्टानीति**। परिपाकविरसत्वादिति भावः। भर्तुर्भोगसम्पादनार्थमेवं प्रचोदितमिति न पूर्वोक्तजितेन्द्रियत्व पातिव्रत्यादिविरोधः ॥ ११ ॥

**स** इति। स विप्रः कुचेलः मृदुः मृदुस्वभावत्वात् ओमिति वदन्निति भावः। उत्तमश्लोकस्य भगवतो दर्शनमित्यतं परमो लाभः ॥ १२ ॥

**विज०** तथाविधा भर्तृवन्मलिनवस्त्रा ॥ ७ ॥

म्लायता म्लानिं गच्छता अशनायावेपमानेत्येकं पदम् । अशनायया अशनेच्छया कम्पमाना ॥ ८.९ ॥

सीदते अवसन्नाय दरिद्राय ॥ १० ॥

अर्थकामान् यच्छतीति किन्नु वक्तव्यम्। किञ्च जगद्गुरुः अन्यम् उक्तेभ्योऽन्यमिष्टं न यच्छति। किन्तु भजतः पुरुषस्य यच्छत्येवेत्यर्थः। यद्वा, ना परमपुरुषः अन्यमभीष्टं यच्छतीत्यतः तमुपैहीत्यन्वयः ॥ ११-१२ ॥

**इति सञ्चिन्त्य मनसा गमनाय मतिं[1] दधे।**
**[2]अप्यस्त्युपायनं किञ्चिद्गृहे कल्याणि दीयताम् ॥ १३ ॥**

याचित्वा चतुरो मुष्टीन् विप्रान्पृथुकत[3]ण्डुलान् ।
[4]चेलखण्डेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम् ॥ १४ ॥

स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल ।
कृष्णसन्दर्शनं मह्यं कथं स्यादिति चिन्तयन् ॥ १५ ॥

त्रीणि गुल्मान्यतीताय तिस्रः कक्षाश्च स द्विजः ।
विप्रोऽगम्यान्ध(क)वृष्णीनां [5]गृहेष्वच्युत धर्मिणाम् ॥ १६ ॥

गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः ।
विवेशैकतमं श्रीमद्ब्रह्मान[6]न्दं गतो यथा ॥ १७ ॥

तं विलोक्याच्युतो दूरात्प्रियापर्य[7-]ङ्कमास्थि[-7]तः ।
सहसोत्थाय चाऽभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १८ ॥

---

1. M,Ma मनो 2. M,Ma अथा 3. M,Ma तंदु 4. B,G,J,M,Ma चैल 5. M,Ma गेहे 6. MI,T,V,W न्द 7- -7 K,T,W ङ्क आस्थितः ; M,Ma ङ्क आश्रितः

**श्रीध० इतीति**। अप्यस्ति किमस्तीति प्रश्नः ॥ १३,१४ ॥

**स** इति। मह्यं मम ॥ १५ ॥

**त्रीणीति**। गुल्मानि रक्षार्थं सैन्यस्थानानि कक्षाः प्रतोलीः अतीयाय अतिक्रम्य जगाम। सद्विजः द्विजैस्सहितः ततश्च अगम्याः दुर्गमाः अच्युतधर्मिणः येऽन्धका वृष्णयश्च तेषां गृहेषु ॥ १६ ॥

**गृहमिति**। तथा हरे र्द्व्यष्टसहस्राणां महिषीणाञ्च ये गृहास्तेषु मध्ये श्रीमदेकतमं गृहं विवेश। तदा च स द्विजो ब्रह्मानन्दङ्गतो यथा ता बभूवेति शेषः॥ १७ ॥

**तमिति**। पर्यग्रहीत् [1]पर्यरम्भत ॥ १८ ॥

---

1. MI,V आलिङ्गितवान्

**वीर०** इति मनसा सञ्चिन्त्य चिन्तापूर्वकं निश्चित्येत्यर्थः। वित्तलाभस्त्वानुषङ्गिक इत्यभिप्रेत्येति भावः। मतिं बुद्धिं दधे चक्रे। विधाय प्राहेत्यर्थः। तदेवाऽऽह अपीति। हे कल्याणि! उपायनं भगवते समर्पणीयं योग्यं वस्तु गृहे किमस्तीति प्रश्नः॥ १३ ॥

इत्थमापृष्टा सा पृथुकतण्डुलान्, तानपि चतुरो मुष्टीन् ग्रामस्थान् विप्रान् प्रति याचित्वा चेलखण्डेन छिद्रपटशकलेन बद्ध्वा भगवत उपायनं भर्त्रे ददौ, तद्धस्ते ददौ इत्यर्थः ॥ १४ ॥

**स** इति। स विप्राग्र्यः कुचेलः तान् पृथुकतण्डुलान् ॥ १५ ॥

**त्रीणीति**। स द्विजः कुचेलः गुल्मानि रक्षार्थसैन्यस्थानानि ततः कक्ष्याः प्रतोलयः,ताश्च अतीयाय अतिक्रान्तवानित्यर्धस्यान्वयः। अच्युतस्येव धर्माः सम्पत्त्यदिगुणाःयेषां तेषामगम्यानां दुर्गमानामन्धकानां वृष्णीनाञ्च गृहेषु मध्ये ॥ १६ ॥

द्व्यष्टसहस्राणि हरेर्महिषीणां गृहान्, तत्राऽपि श्रीमदेकतमं गृहं निवेशेति सम्बन्धः। द्विजशब्दस्य त्रैवर्णिक साधारणत्वात् अग्रजात्यवगमाय विप्र इति चोक्तमिति अतो न पौनरुक्त्यम्। यथा ब्रह्मानन्दं मोक्षसुखं प्राप्तो वैकुण्ठे हरेर्मन्दिरं विशति, तद्वत् ॥ १७ ॥

**तमिति**। प्रियाया रुक्मिण्याः पर्यङ्के आस्थितो भगवांस्तं कुचेलं दूरादेव दृष्ट्वा दोर्भ्यां बाहुभ्यां पर्यग्रहीत् आलिङ्गितवान् ॥ १८॥

**विज०** तैलखण्डेन जीर्णवस्त्रखण्डेन ॥ १४,१५ ॥

गुल्मानि शिबिराणि। कक्ष्याः पुरप्रकोष्ठानि। 'कक्ष्या कच्छे वरत्रायां काञ्च्यां गेहप्रकोष्ठके' (वैज.को.6-2-7) इति यादवः। अन्धवृष्णीनां गृहेषु मध्ये यानि द्व्यष्टसाहस्रमहिषीणां गृहाणि गम्य गत्वा तेष्वेकतमं गृहं विवेशेत्यन्वयः। द्विजत्वं क्षत्रियस्याऽप्यस्तीति विप्र इति। आनन्दं गतो मुक्तो ब्रह्म विशति यथा तथा ॥ १६,१७ ॥

पर्यग्रहीत् आश्लिष्टवान् ॥ १८ ॥

**सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः ।**
**प्रीतो व्यमुञ्चदब्बिन्दून्नेत्राभ्यां पुष्करेक्षणः॥ १९ ॥**

**अथोपवेश्य पर्यङ्के स्वयं सख्युस्समर्हणम् ।**
**उपाहृत्याऽवनिज्याऽस्य पादौ पादावने जनीः ॥ २० ॥**

**अग्रहीच्छिरसा राजन् भगवान् लोकपावनः ।**
**व्यलिम्पद्दिव्यगन्धेन चन्दनागुरु[1]कुङ्कुमैः ॥ २१ ॥**

**धूपैस्सुरभिभिर्मित्रं प्रदीपा[2]वलिभिर्मुदा ।**
**अर्चित्वाऽऽवेद्य ताम्बूलं गाञ्च स्वागतमब्रवीत् ॥ २२ ॥**

**कुचेलं मलिनं क्षामं द्विजं धमनिसन्ततम् ।**
**[3]देवी पर्यचरत्साक्षात् चामरव्यजनेन वै ॥ २३ ॥**

**अन्तः पुरजनो दृष्ट्वा कृष्णेनाऽमलकीर्तिना ।**
**विस्मितोऽ[4-]भूदति प्रीत्या[-4] अवधूतं सभाजितम् ॥ २४ ॥**

---

1. K,T,W गरु 2. K,T,W पैर्बलि 3. K,Ml,T,V,W भैष्मी 4-4 M,Ma भूत्सविप्राग्र्यं

**श्रीध०** सख्युरिति। अब्बिन्दून् आनन्दाश्रूणि ॥ १९ ॥

**अथेति**। समर्हण मुपायनमुपहृत्य समर्प्य पादावने जनीरपः ॥ २०-२२ ॥

**कुचेलमिति**। धमनिभिः सिराभिः सन्ततं व्याप्तम् ॥ २३ ॥

**अन्तःपुरेति**। अवधूतं मलिनम् ॥ २४ ॥

**वीर० सख्युरिति** । अङ्गसङ्गेनाऽऽलिङ्गनेन अतीव निर्वृतः सुखितः प्रीतश्च पुष्करेक्षणः भगवान् नेत्राभ्याम् आनन्दाश्रुबिन्दून् अभ्यमुञ्चत् ॥ १९ ॥

**अथेति**। उपविष्टं कृत्वा तस्य सख्युः स्वयमेवोपायनमुपहृत्य समर्प्य पादाववनिज्य प्रक्षाल्य पादावनेजनीः अपः शिरसा अग्रहीद्दधार। व्यलिम्पदिति। चन्दनादिभिः साधितेन दिव्यगन्धेन मित्रं सखायं व्यलिम्पत् ॥ २०,२१ ॥

सुरभिभिः धूपैः दीपैर्बलिभिरन्यैश्च पूजासाधनैरर्चित्वा गां धेनुं ताम्बूलञ्च निवेद्य स्वागतमब्रवीत् पप्रच्छ ॥ २२ ॥

**कुचेलमिति**। मलिनमभ्यङ्गोद्वर्तनाद्यभावात् धमनिभिः सिराभिस्सन्ततं व्याप्तं मेदोमांसादि रहितकेवल त्वङ्मात्रावशिष्टा शरीरमित्यर्थः। तत्र हेतुः क्षामं क्षुधा कर्शितं भैष्मी रुक्मिणी चामरव्यजनेन पर्यचरत् वीजयामासेत्यर्थः ॥ २३ ॥

**अन्तःपुरजन** इति। कीर्तिर्यस्य तेन कृष्णेन प्रीत्या सभाजितं सम्यक् पूजितं तमवधूतं मलिनं वीक्ष्य विस्मितो बभूव ॥ २४ ॥

---

1. B.Omits भगवान् 2. K,T,W मभ्यङ्गोन्मर्दना 3. B त्वङ्नाडीमात्रा

**विज०** पादावनेजनीरपः पादप्रक्षालनजलानि ॥ १९-२२ ॥

धमनिसन्ततं सिरासहस्राचितगात्रम् ॥ २३-२४ ॥

**किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ।**
**श्रिया हीनेन लोकेऽस्मिन् गर्हितेनाधमेन च ॥ २५॥**

**योऽसौ त्रिलोकगुरुणा श्रीनिवासेन सम्भृतः ।**
**पर्यङ्कस्थां श्रियं हित्वापरिष्वक्तोऽग्रजो यथा ॥ २६ ॥**

**कथयाञ्चक्रतुर्गाथाः पूर्वा गुरुकुले सतोः ।**
**आत्मनो[1] ललिता राजन् करौ गृह्य परस्परम् ॥ २७ ॥**

**[2-] श्रीभगवानुवाच [-2]**

**अपि ब्रह्मन् गुरुकुलात् भवता लब्धदक्षिणात् ।**
**समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा ॥ २८ ॥**

**प्रायो गृहेषु ते चित्त[3]मकाम विहतं तथा ।**
**नैवाति प्रीयसे [4-] विद्वन् [-4] धनेषु विदितं हि मे ॥ २९ ॥**

**केचित्कुर्वन्ति कर्माणि कामैरहतचेतसः ।**
**त्यजन्तः प्रकृतीर्दैवीर्यथाऽहं लोकसङ्ग्रहम् ॥ ३० ॥**

---

1. K,Ml,T,V,W नोर्ललिता; M,Ma नोल्लसिता 2- -2 M,Ma Omit 3. Ml,V त्तं न 4- -4 M,Ma ते तद्वत् 5. K,M,Ma,T,W ति देवीं

**श्रीध०** विस्मयमाह - **किमनेनेति** द्वाभ्याम् ॥ २५ ॥

**य** इति। सम्भृतस्सम्मानितः ॥ २६ ॥

**कथयाञ्चक्रतुरिति**। सतोर्वसतोः, करौ गृह्य गृहीत्वा ॥ २७ ॥

**अपीति**। भार्या ऊढा परिणीता नवेति गृहस्थलिङ्गदर्शनात् भोगादर्शनाच्च संशयादिव प्रश्नः ॥ २८ ॥

अप्रतिषेधात् उद्वाहमनुमतं मत्वाऽऽह **प्राय** इति। तर्हि ते चित्तं नूनमकाम विहतं कामैर्विहतं न भवतीति मे विदितम्। तथा हि धनेषु वस्त्रादिषु नैवाऽतिप्रीयसे हे विद्वन्निति, विदुषस्तव एतद्युक्तमिति भावः ॥ २९ ॥

कामहतत्वाभावे किं गृहधर्मक्लेशेन इत्याशङ्क्याऽऽह - **केचिदिति**। दैवीरीश्वरमायारचिताः प्रकृतीः विषयवासनाः त्यजन्तः कामैः अनाकृष्टचेतसामपि कर्मकरणे दृष्टान्तः - यथाऽहमिति। लोकसङ्ग्रहं लोकस्य सङ्ग्रहो ग्रहणं यथा भवति तथाऽहमीश्वरोऽपि कर्माणि यथा करोमि तद्वत् ॥ ३० ॥

---

1. B, J Omit करौ

**वीर०** विस्मितवाक्यमेवाऽऽह - **किमिति** द्वाभ्याम्। पुरा पूर्वजन्मनि किं पुण्यमनेन कृतमित्यर्थः। अन्यथैवं पूजितो न स्यात् इत्यभिप्रयन् तं विशिनष्टि। अवधूतेन मलिनेन श्रिया हीनेन दरिद्रेण, अत एव अस्मिन् लोके गर्हितेन अनादरणीयेन। अस्मिन् लोके इत्यनेन अमुष्मिंस्त्वादरणीय एवेति सूच्यते। अधमेन न ह्यधमः पूज्यते, किन्तु पूजकापेक्षयोत्तम एव पूज्यते इति ॥ २५ ॥

योऽसावुक्तविधोऽप्ययं द्विजः त्रिलोकगुरुणा श्रीनिवासेन सम्भृतः सम्मानितः परिष्वक्तः आलिङ्गितश्च यथाऽग्रजो रामस्तद्वत् ॥ २६ ॥

**कथयाञ्चक्रतुरिति**। अस्य कृष्णकुचेलाविति शेषः। पुरा गुरुकुले सतोर्वर्तमानयोः आत्मनोर्याः सुन्दरा गाथाः कथाः ताः परस्परं करौ हस्तौ गृह्य गृहीत्वा ल्यबार्षः। हे राजन्! कथयाञ्चक्रतुः ॥ २७ ॥

तदेवाह - **अपीति**। हे ब्रह्मन्! लब्धा दक्षिणा येन तस्माद्गुरुकुलात्समावृत्तेन कृतसमावर्तनाख्य कर्मणा भवता 'वेदमधीत्याभिसमावृत्य' इत्यधीतसाङ्गसशिरस्कस्वाध्यायैरनुष्ठेयं समावर्तनाख्यं कर्मविहितं हे धर्मज्ञ! सदृशी अनुरूपा भार्या ऊढा परिणीता न वा? अपिशब्दः प्रश्नद्योतकः ॥ २८ ॥

नोढैवेत्यहन्तु सम्भावयामीत्यभिप्रयन् आह - **प्राय** इति। अकामविहतं [1-]कामैः अविहतं[-1] तव चित्तं प्रायशः गृहेषु गृहस्थाश्रमेषु न रमत इत्यध्याहारः। यद्वा, तव चित्तं गृहेषु कामैः अविहतं विहतं न भवति तथा हे विद्वन्! तत्त्वत्रययाथात्म्यज्ञानिन्! धनेष्वपि विषयभूतेषु नातीव प्रीयसे प्रीतियुक्तो भवसीति मे मया विदितम् ॥ २९ ॥

गृहस्थलिङ्गदर्शनादूढैवेति पुनर्निश्चित्य कामहतत्वाभावे किं गृहाश्रमेण इत्याशङ्कामपनुदन् तत्प्रयोजनमाह - **केचिदिति**। कामैरहतं चेतो येषां तथाभूता अपि केचिन्मुमुक्षवः दैवीं देवस्य विष्णोः सम्बन्धिनीं प्रकृतिं मायां 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' (भगी.7-14) इत्युक्तविधां त्यजन्तः 'लक्षणहेत्वोः' (अष्टा 3-2-126) इति शत्रादेशः त्यक्तुं, प्रकृतिसम्बन्धान्मोक्तुमिति यावत्, कर्माणि गृहस्थाश्रमप्रयुक्तानि अनभिसंहितफलानि नित्यनैमित्तिकादिरूपाणि कुर्वन्ति, ब्रह्मविद्याङ्गत्वेनाऽनुतिष्ठन्तीत्यर्थः। ब्रह्मविद्याङ्गतया कर्मणामनुष्ठानार्थं गृहाश्रमपरिग्रह इति भावः। ननु कामैश्चेतसोऽविहतय एव हि कर्माणि कर्तव्यानि, कर्मणां विद्याङ्गत्वमपि चित्तशुद्धिजननद्वारैव। तथा च सति कामैरविहतचेतसां किं कर्मानुष्ठानेन इत्यत आह - यथाऽहं लोकसङ्ग्रहमिति।

लोकस्य सङ्ग्रहो यस्मिंस्तद्यथा भवति तथा अहं करोमि तद्वत्। अयं भावः - कामैर्विहतचेतोभिस्तद्विद्दतिद्वाराविद्यानिष्पत्तये कर्माणि कर्तव्यानि। अविहतचेतोभिस्तु लोकसङ्ग्रहार्थमिति भावः ॥ ३० ॥

1--1 B Omits

**विज०** सम्भृतः सभाजितः सङ्गृहीतो वा ॥ २५,२६ ॥

गुरुकुले सतां स्वेषां काले पूर्वस्मिन् या गाथा वृत्ताः ताः कथयाञ्चक्रतुः ॥ २७ ॥

स भवान् (तेन भवता) सदृशी भार्या लब्धापि किं न वा। यथा प्राकृतस्य चित्तं गृहेषु कामविहतं भवति तथा प्रायस्ते चित्तं गृहेषु भार्यदिषु अकामविहतं काम (मे)नाविषयेच्छया विहतं न स्यात्, तद्वत् तव चित्तं धनेष्वपि नैवातिप्रीयते, कथमेतदत्राऽऽह - विदितमिति ॥ २८-२९ ॥

केचिन्निवृत्तिमार्गस्थाः प्रकृतिं देहाभिमानलक्षणां दैवीं देवाधीनाम् ॥ ३० ॥

**कच्चिद्गुरुकुले[1] वासं ब्रह्मन् स्मरसि नौ यतः ।**
**द्विजो विज्ञाय विज्ञेयं तमसः परमश्नुते ॥ ३१ ॥**

**स वै सत्कर्मणां साक्षात् द्विजातेरिह सम्भवः ।**
**आद्योऽ[2-]ङ्ग यत्राऽ[-2]श्रमिणां यथाऽहं ज्ञानदो गुरुः ॥ ३२ ॥**

**[3]नन्वर्थकोविदा ब्रह्मन् वर्णाश्रमवतामिह ।**
**ये मया गुरुणा वाचा तरन्त्यञ्जो [4]भवार्णवम् ॥ ३३ ॥**

**नाऽहमिज्या प्रजातिभ्यां तपसोपशमेन वा ।**
**तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ ३४ ॥**

**अपि [5]नः स्मर्य[6]ते ब्रह्मन् वृत्तं निवसतां गुरौ ।**
**गुरुदारैश्चोदितानामिन्धनानयने क्वचित् ॥ ३५ ॥**

**प्रविष्टानां महारण्यमपर्तौ सुमहद्द्विज ।**
**वातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः ॥ ३६ ॥**

1. M. Ma. लावासं 2- -2. M.Ma. गुरुर्ह्याश्र 3. M.Ma. ते त्वर्थ 4. K.T.W महार्ण 5. T.W. न 6. M.Ma. तां

**श्रीध० कच्चिदिति**। नौ आवयोः यतो गुरोः विज्ञेयं परमात्मत्वं तमसः संसारस्य ॥ ३१ ॥

तत्राऽऽत्मज्ञनप्रदस्य गुरोरत्यन्तं पूज्यत्वं वक्तुं पुरुषस्य त्रीन् गुणानाह - **स वा** इति। इह संसारे यत्र सम्भवो जन्म मात्रं स पिता। तावदाद्यः प्रथमो गुरुः पूज्यः। कर्मविद्याप्रदं गुरुमाह - द्विजातेस्सतः पुंसः सत्कर्मणां यत्र सम्भवः, उपनीय वेदाध्यापक इत्यर्थः। स द्वितीयो गुरुः यथाऽहमीश्वरः तथा प्रथमादपि पूज्य इत्यर्थः। ब्रह्मविद्याप्रदं गुरुमाह - आश्रमिणां सर्वेषामपि ज्ञानदो यः स तु साक्षादहमेवेति ॥ ३२ ॥

अतो ज्ञानप्रदं गुरुरूपं मामाश्रित्य ये संसारं तरन्ति ते बुद्धिमन्त इत्याह **नन्विति**। हे ब्रह्मन्! ते ननु वर्णाश्रमवतां मध्ये अर्थकोविदाः इह मनुष्यजन्मनि तत्राऽपि वर्णाश्रमवत्त्वे सति ये मया गुरुणा।गुरुरूपेण वक्त्रा वाचा उपदेशमात्रेण अञ्जः सुखेनैव भवार्णवं तरन्तीति ज्ञानप्रदाद्गुरोरधिकः सेव्यो नास्तीत्युक्तम् ॥ ३३ ॥

अत एव तद्भजनादधिको धर्मश्च नास्तीत्याह **नाऽहमिति**। इज्या गृहस्थधर्मः। प्रजातिः प्रकृष्टं जन्म,उपनयनं ते न ब्रह्मचारिधर्मः उपलक्ष्यते। ताभ्यां तथा तपसा वनस्थधर्मेण उपशमेन यतिधर्मेण वा अहं परमेश्वरः तथा न तुष्येयं यथा सर्वभूतात्माऽपि गुरुशुश्रूषयेति ॥ ३४ ॥

किञ्च अस्माकं गुरुशुश्रूषणं किमपि दैवादेव सम्पन्नम् तत्किं त्वया स्मर्यत इति पृच्छति अपि न इति। गुरौ निवसतां अस्माकं यत्किमपि वृत्तं तत् कचित् कदाचित् ॥ ३५ ॥

**प्रविष्टानामिति**। अपर्तौ अपगते ऋतौ, अकाले इत्यर्थः। वातश्च वर्षश्च तयोः समाहारः। स्तनयित्नवो गर्जितानि चाऽभवन् ॥ ३६ ॥

---

1. Ml,v ऽभूवन्

**वीर० कच्चिदिति**। हे ब्रह्मन्! नौ आवयोः गुरुकुले वासं स्मरसि कच्चित्? तं विशिनष्टि। यतो गुरुकुलवासाद्विज्ञेयं स्वपराऽऽत्मयाथात्म्यं विज्ञाय तमसः पारमज्ञानस्य पारं मुक्तिमिति यावत्। अश्नुते प्राप्नोति ॥ ३१॥

**किञ्चसवा** इति। सवै गुरुकुलवासः द्विजातेस्त्रैवर्णिकस्य सतां कर्मणां सम्भवोऽनुष्ठानहेतुः, तद्धेतुभूत ज्ञानोत्पादकत्वादित्यभिप्रायः। यद्वा, सत्कर्मणां पुंसां द्वितीयजन्मसम्भवेन गुरुकुलावासरूपो ह्याश्रम इत्यर्थः। यस्मिन्नाश्रामे गुरुरहमिव ज्ञानदस्य इत्यन्वयः। यद्वा ज्ञानप्रदस्य गुरोरत्यन्तपूज्यतां वक्तुं पुरुषस्य त्रीन् गुरूनाह स वा इति। अङ्ग ! हे

ब्रह्मन्! इह संसारे यतस्सम्भवो जन्ममात्रं स पिता तावदाद्यः प्रथमो गुरुः। द्विजातेस्सतः पुंसः यत्कर्मणां यत्र सम्भवः उपनीय वेदाध्यापकः स द्वितीयो गुरुः। यथाऽहमीश्वरस्तथा प्रथमादपि पूज्य इत्यर्थः। ब्रह्मविद्याप्रदं गुरुमाह - आश्रमिणां सर्वेषामपि ज्ञानदो यो गुरुः स तु साक्षादहमेवेति ॥ ३२ ॥

अतो ज्ञानप्रदं गुरुमाश्रित्य ये संसारं तरन्ति ते बुद्धिमन्त इत्याह **नन्विति**। ननु हे ब्रह्मन्! इह लोके सर्वे षां वर्णानामाश्रमिणाञ्च मध्ये त : एवार्थकोविदाः पुरुषार्थकुशलाः के? ये मया गुरुणा गुरुरूपेण वक्त्रा वाचा उपदेशमात्रेण अञ्जस्सुखेन संसाररूपं महार्णवं तरन्ति ॥ ३३ ॥

एवं महोपकर्तुर्गुरोरधिकस्सेव्यो नास्तीत्युक्तम् । अत एव तद्भजनादधिको धर्मश्चनाऽस्तीत्याह - नाऽहमिति। इज्या महायज्ञपञ्चकं, प्रजातिः प्रकृष्टं जन्म, तपोऽनशनादिरूपं, शम इन्द्रियनिग्रहः। यथाऽहं गुरुशुश्रूषया तुष्येयं प्रीतस्स्यां न तथा इज्यादिभिस्तुष्येयम्। आत्मानं विशिनष्टि - सर्वभूतानामन्तरात्मा ॥ ३४ ॥

किञ्च अस्माकं गुरुशुश्रूषणे किमपि दैवादेव सम्पन्नं तत्किं त्वया न स्मर्यत इति पृच्छति अपिन इति। गुरौ तत्सन्निधौ निवसतामस्माकं वृत्तं न स्मर्यते किम्? किं तदित्यत आह गुरुदारैरित्यादिना । इन्धनानयने निमित्ते चोदितानामस्माकम्। क्वचित् कदाचित् ॥ ३५ ॥

अपर्तौ अपगते ऋतौ, अकाल इत्यर्थः। महारण्यं प्रविष्टानां सतां वातो वर्षञ्च तयोस्समाहारः,तदभूत् । तथा निष्ठुरा स्तनयित्नवः स्तनयित्नुशब्दोऽत्र तद्गर्जिते लाक्षणिकः, गर्जितानि चाऽभवन् ॥३६॥

**विज०** तात्पर्यात्पुनरुक्तं करोति **कश्चिदिति**। यतो यस्मिन् गुरुकुलवासे विज्ञेयं विज्ञाय तमसः अज्ञानस्य पारम्, प्रकृतेर्वा। वैकुण्ठमश्नुते ॥ ३१ ॥

इतोऽपि गुरुकुलवासः कर्तव्य इत्याह **स वा** इति। यस्मात् द्विजातेः साक्षात् सत्कर्मणां सम्भवो जन्म स गुरुकुले वासो वा इत्यन्वयः। अत्र हेतुमाह आद्य इति। ज्ञानदो गुरुः आश्रमिणां आद्यः हि यस्मात्तस्मात् यथाऽहम् इति ॥ ३२॥

ज्ञानमपि यन्मुक्तिसाधनं तद्वदेव गुरुरित्याह **तेत्विति**। गुरुणा गुरुस्थेन मयाऽप्युक्तया वाचा अञ्जः शिक्षिता ये पुरुषाः भवार्णवं तरन्ति ते त्विह वर्णाश्रमवतां मध्ये अर्थकोविदाः स्वप्रयोजनसम्पादनपटव इत्यन्वयः॥ ३३ ॥

सर्वेषु साधनेष्वयमेव भगवदनुग्रहान्तरङ्गमित्याह **नेति**। इज्या यजनं प्रजनं प्रजातिः सन्ततिजननं 'नाऽपुत्रस्य लोकोऽस्ति' (ऐत. ब्रा. 7-13-12-a) इति श्रुतिः ॥ ३४ ॥

अनुग्रहविशेषस्मरणार्थम् उभयोरनुभूतविशेषं स्मारयति **अपीति**। गुरौ निवसतां नो यत्कर्म तत् स्मर्यताम् । अपि स्मर्यते किम् ॥ ३५ ॥

अपर्तौ वर्षाकालमन्तरेण वातयुतवर्षम् ॥ ३६ ॥

1- -1Ma गुर्वन्तर्याम्युक्तया

**सूर्यश्चास्तङ्गतस्तावत्तमसा [1]चाऽऽवृता दिशः।**
**निम्नं कूलं [2]जलमयं न प्रज्ञायत किञ्चन ॥ ३७ ॥**

**वयं भृशं तत्र महानिलाम्बुभि[3]र्निहन्यमाना मुहरम्बुसम्प्लवे।**
**दिशोऽविदन्तोऽथ परस्परं वने गृहीतहस्ताः परिबभ्रिमाऽऽतुराः ॥ ३८ ॥**

**एतद्विदित्वा उदिते रवौ सान्दीपनिर्गुरुः ।**
**अन्वेषमाणो न[4-]श्शिष्यानाचार्यो[-4]ऽपश्यदातुरान् ॥ ३९ ॥**

**[5-]आचार्य उवाच[-5]**

**अहो [6]मे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ।**
**आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥ ४० ॥**

**[7]इयदेव हि सच्छिष्यैः कर्त[8]व्यं गुरुनि[9]ष्कृतम् ।**
**यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ ४१ ॥**

**[10-]तुष्टोऽहं भो[-10] द्विजश्रेष्ठाः सत्यास्सन्तु मनोरथाः ।**
**छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥ ४२ ॥**

1.M,ma संवृता; T,w ऽऽच्छादिता 2. M,Ma जलौघेन 3.T,W ना नि 4- -4 M,Ma नार्यः पश्यन् अरूरुदत् 5- -5 B,G,J,K,M,Ma,T,W omit 6. B,G, J,Ml,V हे 7. B,G,J, एतदेव 8. Ml,V व्या 9. K,T.w निष्क्रियम् ;Ml, V निष्कृतिः 10- -10 K,Ml,T,V,W तुष्टोऽहं वो ;M,Ma सन्तुष्टोऽहं

**श्रीध० सूर्य** इति । निम्नं कूलं नतमुन्नतञ्च स्थानम् ॥३७॥

वर्यामिति। अम्बूनां सम्प्लवे व्यामिश्रणं यस्मिन्नेकोदके तस्मिन्वने इत्यर्थः। परिबभ्रिम, 'भृञ् भरणे' इति धातो रूपम्। परि परितो बभ्रिम, इडागमश्छान्दसः। भारान् धृतवन्त इत्यर्थः ॥ ३८,३९ ॥

उवाच कृपया श्लोकत्रयीम्, यया वयं कृतार्था इत्याह अहो इति। आत्मा देहः ॥ ४० ॥

इयदिति। गुरोर्निष्कृतं प्रत्युपकारः। सर्वे अर्थाः यस्मात्स आत्मा देहः तस्यार्पणं विनियोगः ॥४१॥

तुष्ट इति। अयातयामानि यातो यामो यस्य, पक्वस्यान्नस्य तद्गतसारं भवति तद्वत् अन्यदपि गतसारम्। गौण्यावृत्त्या यातयाममित्युच्यते,अगतसाराणि छन्दांसि मत्तोऽधीयमानानि भवन्त्वित्यर्थः ॥ ४२ ॥

**वीर०** तावत्तथैव[1] सूर्योऽस्तङ्गतश्च। अत एव दिशस्तमसा व्याप्ताः निम्नं नतं कूलमुन्नतञ्च स्थलं जलमयं, हेतुगर्भम्, अतो न **प्रज्ञायत** न ज्ञातमभूत् ॥ ३७ ॥

**वयमिति**। अम्बूनां सम्प्लवे प्रवाहे महानिलैरम्बुभिश्च हन्यमानाः पीड्यमानाः दिशोऽविदन्तः अजानन्तः अत एवाऽऽतुराः परस्परं गृहीताः हस्ता यैस्ते वयं वने परिबभ्रिम परितो बभ्रिम। इन्धनभारान् धृतवन्त इत्यर्थः। पर्यचरामेति वा। उपसर्गवशात् भृञः चरत्यर्थत्वम्। इडार्षः ॥ ३८ ॥

**एतदिति**। एतदस्माकं कृच्छ्रं विदित्वा सूर्ये उदिते सति अन्वेषमाणो नोऽस्मान् अपश्यत्, दृष्ट्वाऽब्रवीदित्यर्थः ॥ ३९ ॥

तदेवाऽऽह **अहो** इति त्रिभिः। हे पुत्रकाः! देहिनामात्मा देहः प्रेष्ठः प्रियतमः, तथाऽपि तमात्मानमनादृत्य मत्पराः मत्सेवापराः मत्प्रयोजनाय अतीव दुःखिता इत्यर्थः ॥ ४० ॥

**इयदेवेति**। सच्छिष्यैः गुरोः कर्तव्यं निष्क्रियं प्रत्युपकारः इयदेव एतावदेव। कियत् यद्विशुद्धभावेन निष्कपटभावेन सर्वथा सर्वप्रकारेण आत्मार्पणं देहसमर्पणमित्येतावत् 'शरीरमर्थं प्राणांश्च सद्गुरुभ्यो निवेदयेत्' (विहगेश्वरसंहिता) इत्युक्तेरिति भावः ॥ ४१ ॥

**तुष्ट** इति। हे द्विजश्रेष्ठाः! द्विजशब्दस्य त्रैवर्णिकपरत्वात् एवं सम्बोधनम्। वो युष्मभ्यमहं गुरुः सन्तुष्टः अतो युष्माकं मनोरथाः अपेक्षाः सफलाः सन्तु। किञ्च, छन्दांसि मत्तोऽधीता वेदाः इह परत्र च लोके अयातयामानि अगतसाराणि, सफलानि ऐहिकामुष्मिकापेक्षितफलजननसमर्थानि भवन्तु इत्यर्थः ॥ ४२ ॥

---

1. K °त्तदेव

**विज०** इदं निम्नमिदं कूलमिति किञ्चन स्थूलजलप्रवाहेण न प्राज्ञायत न ज्ञातमभूत् ॥ ३७ ॥

अम्बुसम्प्लवे जलप्रवाहे दिशोऽविदन्तः अजानन्तः परिबभ्रिम परितो भ्रान्ता बभूविम ॥ ३८ ॥

विदित्वा उदित इत्यनेन दुःखातिशयं दर्शयति - कथमेतदत्राह - अरूरुदर्ददिति ॥ ३९ ॥

आत्मा देहः ॥ ४० ॥

गुरुनिष्कृतं गुरुप्रत्युपकारः सर्वोऽर्थो यस्मात्सः तथा सर्वार्थ आत्मा शरीरं तस्यार्पणं यत्तत् ॥ ४१,४२

**इत्थं विधान्यनेकानि वसतां गुरुवेश्मसु ।**
**गुरोरनुग्रहेणैव पुमान् पूर्णः [2]प्रशान्तये ॥ ४३ ॥**

**[3-]कुचेल उवाच[-3]**

**[4]किमस्माभिरनिर्वृत्तं देव देव जगद्गुरो ।**
**भवता सत्यकामेन येषां वासो गुरावभूत् ॥ ४४ ॥**

**यस्य छन्दोमयं ब्रह्म देह आवपनं विभौ ।**
**[5]श्रेयसां तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥ ४५ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे श्रीदामचरितं नाम अशीतितमोऽध्यायः ॥ ८० ॥

---

1. K,T,W नि । 2. Ml,V प्रजायते । 3- -3 B,G,J,K,M,Ma,T,W ब्राह्मण उवाच 4. K,T,W किन्न्व 5. M,Ma योऽयं स

**श्रीध०** **इत्थमिति**। इत्थंविधानि एवम्प्रकाराणि अनेकानि वृत्तानि किं त्वया स्मर्यन्त इति शेषः। फलतमुपसंहरति **गुरोरिति** ॥ ४३ ॥

**किमिति**। अस्माभिः किमनिर्वृत्तमसम्पन्नं येषामस्माकं भवता सह वासोऽभूत् ॥ ४४ ॥

भवतस्तु सर्वमेतद्विडम्बनमात्रमित्याह **यस्येति**। छन्दोमयं वेदाख्यं ब्रह्म तथा श्रेयसामावपनं तदुद्भवस्थानं देहो मूर्तिर्यस्य तस्य तव ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां अशीतितमोऽध्यायः ॥ ८० ॥

---

**वीर० इत्थमिति**। गुरुवेश्मनि स्वाचार्यगृहेषु वसतामस्माकम् एवंविधान्यनेकानि वृत्तानि किं त्वया न स्मर्यन्त इति शेषः। फलितमाह - गुरोरिति। अनुग्रहेणैव इत्येवकारेण उपायान्तरव्यावृत्तिः। पूर्णः पूर्णमनोरथः स्यादिति [1]लक्षयन् इत्यर्थः ॥ ४३ ॥

इत्थमुक्तः प्राह कुचेलः **किन्नविति**। हे देवदेव ! हे जगद्गुरो ! अस्माभिरनिर्वृत्तमसम्पन्नम् अस्माकं दुर्लभं किन्वस्ति न किमपीत्यर्थः। तत्र हेतुं वदन् आत्मनो विशिनष्टि। येषामस्माकं सत्यकामेन भवता सह गुरुकुले वासो बभूव, तैरस्माभिरिति सम्बन्धः। सत्यकामस्य तव गुरुकुलवासः केवलमस्म न् मनोरथपूरणार्थ एवेति भावः ॥ ४४ ॥

अन्यथा न घटत इत्यभिप्रयन्नाह **यस्येति**। छन्दोमयं वेदरूपं ब्रह्म, यस्य देहः विग्रहः [2-]यस्य च देहः[-2] श्रेयसां पुरुषार्थानाम् आवपनं उत्पत्तिभूमिः। तस्य तव गुरुषु गुरुगृहेषु वासोऽत्यन्तविडम्बनमभिनयमात्रं विडम्बनेनाऽस्मान् मनोरथपूरणार्थः अन्यथा सर्वविद्यास्थान नदवबोध्यपुरुषार्थचतुष्टय वर्षुकशीलशरीरस्यतव न घटते इत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भाग वतचन्द्रचन्द्रिकायां

व्याख्यायां अशीतितमोऽध्यायः ॥ ८० ॥

---

1. K omits लक्षयन् 2- -2 B,K omit

**विज० उक्तमतिदिशति इत्थमिति**। इत्थंविधान्यनेकानि व्यसनान्यासन्निति शेषः। तानि व्यसनानि गुरोरनुग्रहेण निस्तीर्य पुमान् प्रशान्तये प्रकृष्टसुखवृत्तये पूर्णः कृतार्थः स्यात् ॥ ४३ ॥

अस्माभिर्गुरुकुलवासे इदं कृतमिति विशे(शि)ष्य किं वक्तव्यं सर्वमप्यनुष्ठितमिति ब्राह्मण आह - किमिति । सत्यकामेन भवता सह येषां नो गुरुकुलवासोऽभूत्, तैरस्माभिः गुरुकुलवासे किमनिर्वृत्तं न कृतं किं सर्वं मया चीर्णमेव ॥ ४४ ॥

किन्त्विदमस्माकं युक्तं, तव तु अत्यन्तविडम्बनमित्याह - यस्येति। छन्दोमयं वेदमुख्यप्रतिपाद्यम् आवपनं जगदुत्पत्तिक्षेत्रं ब्रह्म यस्य तव देहः स्वरूपं तस्य तव योऽयं गुरुषु वासः, सोऽयमत्यन्त विडम्बनम् अनुकार इति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

दशमस्कन्धे उत्तरार्धे अशीतितमोऽऽध्यायः ॥ ८० ॥

(विजयध्वजरीत्या अष्टनवतितमोऽध्यायः)



# एकाशीतितमोऽध्यायः

(विजयध्वजरीत्या एकोनशततमोऽध्यायः)

### श्रीशुक उवाच

स इत्थं द्विजमुख्येन[1] सह सङ्कथयन् हरिः ।
सर्वभूतमनोऽभिज्ञः स्मयमान उवाच तम् ॥ १ ॥

*ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान्प्रहसन्[2] प्रियम् ।
प्रेम्णा निरीक्षणेनैव प्रेक्षन् खलु सतां गतिः[3] ॥ २ ॥

### श्रीभगवानुवाच

किमुपायनमानीतं ब्रह्मन्मे भवता गृहात् ।
[4-]अण्वप्युपाहृतं[-4] भक्तैः प्रेम्णा भूर्येव मे भवेत् ।
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ ३ ॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ४ ॥

इत्युक्तोपि द्विजस्तस्मै व्रीडितः पतये श्रियः ।
पृथुकप्रसृतिं राजन्न प्रायच्छ दवाङ्मुखः ॥ ५ ॥

सर्वभूतात्मदृक्साक्षात्तस्याऽऽगमन कारणम् ।
विज्ञायाऽचिन्तयन्नाऽयं श्रीकामो माऽभजत्पुरा ॥ ६

1. M.Ma वर्येण *This verse is not found in K.T.W. editions 2. M.Ma श्रिव। 3. M.Ma पतिः 4- -4 M.Ma अल्पमप्याहृतं ;Ml,V. अण्वप्युपहृतं

## श्रीधरस्वामि विरचिता भावार्थदीपिका

एकाशीति तमे सख्यु र्जग्ध्वा पृथुकतण्डुलान्। श्रियं निर्मितवानिन्द्र दुर्लभान्तु तदाश्रमे ॥

**स** इति। सङ्कथयन् सुखगोष्ठीः कुर्वन् सर्वभूतानां मनसोऽभिज्ञः मदर्थं पृथुका नानीय दातुं लज्जित इति जानन्नित्यर्थः ॥ १ ॥

**ब्रह्मण्य** इति। प्रहसन् क्ष्वेलीं कुर्वन् ॥ २ ॥

लज्जया त्व कथयत स्ता मपनुदन्नाऽऽह अण्वपीति द्वाभ्याम् ॥ ३-५ ॥

**सर्वेति**। सर्वभूताना मात्मदृक् अन्तःकरणसाक्षी ॥ ६ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

ततः किं जातं तदाह **स** इति। स हरिरित्थं द्विजमुखेन कुचेलेन सह सङ्कथयन् सुखगोष्ठीं कुर्वन् सर्वभूतानां मनसोऽभिज्ञः मदर्थं पृथुकानानीय दातुं लज्जित इति जानन्नित्यर्थः। तं विप्र मुवाच ॥ १,२ ॥

तदेवाऽऽह **किमिति** सार्ध द्वयेन। हे ब्रह्मन्! भवता गृहात् मे मह्यं उपायनं किमानीतम्? लज्जया तूष्णीं स्थितस्य तमपनुदन्नाह - अण्विति द्वाभ्याम्। यद्भक्तैः प्रेम्णोपहृतं समर्पितं तदणु अत्यल्पमपि मे भूर्येव भवेत्, यद्भूर्यपि अभक्तेनोपहृतं तन्मम सन्तोषाय न कल्पते इत्यर्थः ॥ ३ ॥

अतः पत्रादीना मन्यतमं यः पुमान्मह्यं प्रयच्छति ददाति समर्पयतीति यावत् । प्रयतः नियतः विशुद्ध आत्मा मनो यस्य तस्य सम्बन्धि भक्त्या समर्पित मह मश्नामि ॥ ४ ॥

**इतीति**। व्रीडाऽस्य सञ्जाता इति तथा अत एवाऽवाङ्मुखः हे राजन्! तस्मै श्रियःपतये भगवते पृथुकप्रसृतिं न प्रायच्छत् न ददौ ॥ ५ ॥

सर्वभूताना मात्मानम् अन्तःकरणं पश्यतीति तथा। अत एव साक्षी[1] साक्षाद्द्रष्टा भगवान् सर्वभूतमनोऽभिप्रायसाक्षात्कर्ता वा तस्य द्विजस्य आगमन कारणं विज्ञाय कार्य मात्मना कर्तव्यमचिन्तयत्। किमिति विज्ञाय? इत्यत्राह श्रीकाम इत्यादिना मामित्यन्तेन। श्रीकामो नाऽभजत् मां इति शेषः। किन्तु मोक्षार्थकाम इत्यर्थः॥ ६ ॥

1.B.omits साक्षी

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

**सङ्कथयन्** संलापं कुर्वन् ॥ १,२ ॥

दरिद्रत्वेन भूरिद्रव्याभावात् भवतो महतोऽल्पं मन स्तुष्टिकरं न स्यदिति नाऽऽनीतमिति शङ्का माभूदित्याह - अल्पमिति। आहृतमानीत द्रव्यभूरित्वाभूरित्वे अप्रयोजके, किन्तु भक्तिरेवेत्यनेनादर्शि ॥ ३-५ ॥

सर्वभूतानामात्मदृक् स्वभावज्ञः, 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' (वैज को.6-1-6) इति यादवः ॥ ६ ॥

**पत्न्याः पतिव्रतायास्तु[1] सखा प्रियचिकीर्षया ।**
**प्राप्तो मामस्य दास्यामि सम्पदोऽमर्त्यदुर्लभाः ॥ ७ ॥**

**इत्थं विचिन्त्य वसना च्चीरबद्धान् द्विजन्मनः ।**
**स्वयं जहार किमिद मिति पृथुकतण्डुलान् ॥ ८ ॥**

**★ नन्वेतदुपनीतं मे परम प्रीणनं सखे ।**
**तर्पयत्यङ्ग मां विश्व मेते पृथुक तण्डुलाः ॥ ९ ॥**

**[2]इति मुष्टिं सकृज्जग्ध्वा द्वितीयां[3] जग्धु माददे ।**
**तावच्छ्रीर्जगृहे हस्तं सत्वरा परमेष्ठिनः ॥ १० ॥**

**एतावताऽलं विश्वात्मन् ! सर्वसम्पत्समृद्धये ।**
**अस्मिन् लोकेऽथवाऽमुष्मिन् पुंसस्त्वत्तोषकारणम् ॥ ११ ॥**

**ब्राह्मण स्तान्तु रजनी मुषित्वाऽच्युतमन्दिरे ।**
**भुक्त्वा पीत्वा [4]सुखं मेने ऽऽत्मानं स्वर्गतं यथा[4] ॥ १२ ॥**

---

1. Ml,V. मे ★ This verse is not found in M,Ma editions. 2. M,Ma एक 3. K,T,W. यं मुष्टि 4- -4 M,Ma सुखं सुप्त्वा मेन आत्मानमिन्द्रवत्

**श्रीध० पत्न्या** इति। अमर्त्यानां देवानामपि दुर्लभाः ॥ ७ ॥

**इत्थमिति**। अतिजीर्णत्वा द्वसनस्य पुनस्तन्मध्ये चीरेण बद्धान् ॥ ८ ॥

**नन्विति**। अङ्ग ! हे सखे ! मां विश्वं, विश्वात्मानं माम् ॥ ९ ॥

**इतीति**। इति वदन्नेकां मुष्टिं जग्ध्वा, तत्परेति। अयं भावः - एतावता पुंस इहाऽमुत्र च मत्कटाक्षविलासभूतानां सर्वसम्पदां समृद्धयेऽलम्, अतः परं द्वितीयमुष्ट्यदनेन मा मा मेतदधीनां कुर्विति ॥ १० ॥

**एतावतेति**। त्वत्तोषकारणं तव तोषस्य कारणं यथा भवेत्तथा सर्वसम्पत्समृद्धये, यां भक्तस्य समृद्धिं दृष्ट्वा त्वं तुष्ये रित्यर्थः ॥ ११ ॥

**ब्राह्मण** इति। स्वर्गतम् स्वर्गवासिनम् ॥ १२ ॥

**वीर०** अधुना तु पतिव्रतायाः पत्न्याः प्रियं कर्तुमिच्छया मां प्राप्त इति कार्यचिन्ताप्रकार मेवाह अस्येत्यादिना। अमर्त्यानां देवानामपि दुर्लभा स्सम्पदः भोग्यभोगोपकरण भोगस्थानादि समृद्धीरस्य द्विजस्य दास्यामि ॥ ७ ॥

**इत्थमिति**। अतिजीर्णत्वा द्वस्त्रस्य पुनः तन्मध्ये चीरेण बद्धान्पृथुकतण्डुलान् किमिदमिति पृच्छन् स्वयमेव जहार आददे, आदाय उवाचेत्यर्थः ॥ ८ ॥

उक्तिमेवाह - **नन्विति**। ननु हे सखे! मह्यमेतत्पृथुक तण्डुलरूपमुपायनमानीतमेतदेव मम परमप्रीणनं नितरां प्रीतिकृत्। अङ्ग! हे सखे! एते पृथुकतण्डुलाः विश्वं[1] विश्वशरीरकं मां तर्पयन्ति तृप्तं कुर्वन्ति ॥ ९ ॥

इतीत्यनन्तरमुक्त्वेति शेषः। एकं मुष्टिं जग्ध्वा द्वितीयं मुष्टिं जग्धु मत्तु मुपाददे, तावददनात्पूर्वमेव श्रीः रुक्मिणी सत्वरा त्वरयायुक्ता परमेष्ठिनःश्रीकृष्णस्य हस्तं जगृहे गृहीत्वा वारयन्ती प्राहेत्यर्थः ॥ १० ॥

तदेवाऽऽह - **एतावतेति**। हे विश्वात्मन्! विश्वात्मना त्वया एकमुष्ट्यदनेनैव कृत्स्नं विश्वं तर्पितमिति सम्बोधनाभिप्रायः। एतावता एकमुष्ट्यदनमात्रेणैव पुंसः अस्मिन्नमुष्मिन्वा लोके सर्वसम्पदां समृद्धय [illegible] इतःपरं द्वितीयमुष्ट्यदनेन किं मामपि द्विजाधीनां कर्तु मुद्युङ्क्षे इति भावः। तव तोषस्य कारणं यथा भवे त्तथा सर्वसम्पत्समृद्धये इति सम्बन्धः ॥ ११ ॥

**ब्राह्मण** इति। अच्युतस्य मन्दिरे भुक्त्वा पीत्वा तां रात्रिं सुखं यथा तथोषित्वा चाऽऽत्मानं स्वर्गतं स्वर्गवासिनमिव अमन्यतेत्यर्थः ॥ १२ ॥

---

1. B.W. Omit विश्वं

**विज०** चीरं पटच्चरं जीर्णवस्त्रमित्यर्थः। इदं चीरबद्धं किमित्युक्त्वा द्विजन्मनःपृथुकतण्डुलान् स्वयमाजहार ॥ ८-१२।

**श्वो भूते विश्वभावेन स्वसुखेनाभिवन्दितः ।**
**जगाम स्वालयं तात! पथ्यनुव्रज्य नन्दितः ॥ १३ ॥**

**स चाऽलब्ध्वा धनं सख्यु र्न तु याचितवान्स्वयम् ।**
**स्वगृहान्व्रीडितोऽगच्छ न्महद्दर्शन निर्वृतः ॥ १४ ॥**

**अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया ।**
**यद्दरिद्रतमो लक्ष्मी माश्लिष्टो बिभ्रतोरसि ॥ १५ ॥**

**क्वाहं दरिद्रः पापीयान् क्व कृष्णः श्रीनिकेतनः ।**
**ब्रह्मबन्धुरिति स्माऽहं बाहुभ्यां परिरम्भितः ॥ १६ ॥**

**निवेशितः[1] प्रियाजुष्टे पर्यङ्के भ्रातरो यथा ।**
**महिष्या वीजितः श्रान्तो वालव्यजनहस्तया ॥ १७ ॥**

**शुश्रूषया परमया पादसंवाहनादिभिः ।**
**पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १८ ॥**

---

1. B.G.J.M.Ma. Ml.V निवासित:

**श्रीध० श्वोभूत** इति। श्वो भूते उदिते रवौ विश्वं भावयतीति विश्वभावः तेनेति पुरतो भाविन मिन्द्र दुर्लभं सूचयति स्वसुखेन स्वानन्दपूर्णेनेति दानेऽदीनतां दर्शयति - नन्दितो विनयोक्तिभिः ॥ १३ ॥

**स** इति। व्रीडितः स्वचित्तकार्पण्येन लज्जितः महतः श्रीकृष्णस्य दर्शनेन निर्वृतः सुखं प्राप्तः ॥ १४ ॥

निर्वृतिमेवाऽऽह - **अहो** इति चतुर्भिः। यद्यतः लक्ष्मीमुरसि बिभ्रता आश्लिष्टोऽहम् ॥ १५ ॥

**क्वेति**। पापीयान्नीचः ॥ १६,१७ ॥

**शुश्रूषयेति**। पूजितश्चन्दन लेपनादिभिः ॥ १८ ॥

**वीर०** ततः श्वो भूते उदिते रवौ विश्वं भावयति अभ्युदययुक्तं करोतीति तथा। तेन स्वसुखेन श्रीकृष्णेनाऽभिनन्दितः अभिनन्दनपूर्वकमनुज्ञात इत्यर्थः। तथा हे तात! तेन पथि अनुव्रज्य अनुगम्य वन्दितश्च स्वालयं स्वगृहं प्रति जगाम ॥ १३ ॥

**स चेति** । स ब्राह्मणः सख्युस्सकाशाद्धन मलब्ध्वा स्वयं व्रीडितः कार्पण्येन लज्जितः न याचितवान् । भगवानयाचितो न ददौ। स्वयन्तु न याचित्वाऽपि लब्धानित्यर्थः। किन्तु महतो भगवतो दर्शनेनैव निर्वृतः सुखितः स्वगृहान्प्रति जगाम ॥ १४ ॥

निर्वृति मेवाऽऽह - **अहो** इति चतुर्भिः। ब्रह्मण्यदेवस्य ब्राह्मणश्रेष्ठस्य ब्रह्मण्यता ब्रह्मकुले साधुता दृष्टा। काऽसौ उरसि वक्षसि लक्ष्मीं बिभ्रता भगवता अहं दरिद्रोऽप्याश्लिष्ट आलिङ्गितः इति यदेषा ॥ १५ ॥

अय मलभ्यलाभ इत्याह - **क्वाऽह** मिति। पापीयान्नीचः, अथाऽपि ब्रह्मबन्धुरयमित्यभिप्रेत्य बाहुभ्या मालिङ्गितः ॥१६॥

किञ्च श्रिया लक्ष्म्यवताररूपया रुक्मिण्या जुष्टे सेविते पर्यङ्के अहं निवेशितः[1] उपवेशितः[2] यथा भ्रातर स्तद्वत्। किञ्चाऽध्वनिश्रान्तोऽहं वालव्यजनं हस्ते यस्या स्तस्या महिष्या भार्यया वीजितश्च ॥ १७ ॥

किञ्च, **शुश्रूषयेति**। पादसंवाहनं पादपीडनम् आदि येषां आदि शब्देन चन्दनलेपनादि सङ्ग्रहः देवानां ब्रह्मादीनां देवेन। तथाऽपि सौशील्यातिशयेन विप्राणां देवेन कर्त्रा देववदहं पूजितः ॥ १८ ॥

---

. B.T.W. निवासितः 2. B.Omits उपवेशितः

**विज०** अनुव्रज्य अनुगम्य नन्दितः, कृष्णेनेति शेषः ॥ १३

महतः कृष्णस्य दर्शनेन निर्वृतः ॥ १४,१५ ॥

अहं ब्राह्मणानां विप्राणां बन्धुरिति स्मृत्वा ॥ १६ ॥

भ्रातरो यथा, भ्रातरमिति शेषः ॥ १७,१८ ॥

**स्वर्गापवर्गयोः पुंसां रसायां[1] भुवि सम्पदाम्।**
**सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥ १९ ॥**

**अधनो[2]ऽयं धनं प्राप्य माद्यन्नुच्चै र्न मां स्मरेत् ।**
**इति कारुणिको नूनं धनं मे भूरि नाऽददात् ॥ २० ॥**

**इति [3-]तच्चिन्तयन्नन्त[-3]ः प्राप्तो निजगृहान्तिकम् ।**
**सूर्यानलेन्दुसङ्काशै र्विमानै स्सर्वतो वृतम् ॥ २१ ॥**

**विचित्रोपवनोद्यानैः कूजद्‌द्विजकुलाकुलैः ।**
**प्रोत्फुल्ल कुमुदाम्भोज कह्लरोत्पलवारिभिः ॥ २२ ॥**

**जुष्टं स्वलङ्कृतैः पुम्भिः स्त्रीभिश्च हरिणाक्षिभिः ।**
**किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥ २३ ॥**

**एवं मिमांसमानं तं नरा नार्योऽमरप्रभाः ।**
**प्रत्यगृह्णन् महाभागं गीतवाद्येन भूयसा ॥ २४ ॥**

1. M.Ma दिवि 2. M.Ma नो यद्‌ध 3- -3 K.T.W. तच्चिन्तयाहृष्टः ; M.Ma तच्चित्तगत्यान्तः ; Ml.V. सञ्चिन्त्य यन्विप्रः

**श्रीध०** एवं सम्पूज्याऽपि धनस्यादाने कारणं कल्पयति - **स्वर्गापवर्गयोरिति** द्वाभ्याम् । स्वर्गादीनां यद्यपि तस्य चरणार्चनमेव कारणं, तथाऽपि कारुणिकत्वादभूर्यपि स्वल्पमपि धनं मह्यं नाऽददात् ॥ १९,२० ॥

**इतीति**। इत्येवं चिन्तयन् निजगृहस्यान्तिकं तत्प्रान्तम्। तस्य विशेषणं सूर्येति ॥ २१ ॥

**विचित्रेति**। विचित्रोपवनादिभि र्वृतम्। कथम्भूतैः? कूजद्भिः द्विजकुलैः पक्षिसमूहैः आकुलैः व्याप्तैः। तथा प्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तानि तथा तैः ॥ २२ ॥

किञ्च, **जुष्टमिति**। हरिणीनामिवाक्षीणि यासां ताभिः तदैश्वर्यं दृष्ट्वा वितर्कितवां स्तदाह - **किमिदमिति**। प्रथमं तेजःपुञ्जं दृष्ट्वा किमिदमिति पश्चाद्विमानानि दृष्ट्वा कस्य वेति स्थानं स्वीयमिति ज्ञात्वा कथं तदिदं स्थान मित्येवं रूप मभूदिति ॥ २३ ॥

**एवमिति**। अमरप्रभा स्तत्तुल्यकान्तयः प्रत्यगृह्णन्नुपायनादिभि रादृतवन्तः ॥ २४ ॥

**वीर०** इत्थं सम्पूज्याऽपि धनस्य अदाने कारणं कल्पयति - **स्वर्गापवर्गयोरिति** द्वाभ्याम्। यद्यपि रसायां पाताले भुवि च सम्पदां सर्वासां सिद्‌धीनां [1-]अणिमादीनां[-1]च स्वर्गापवर्गयोः स्वर्गमोक्षयोश्च कारणं तस्य भगवत श्चरणार्चनमेव ॥ १९ ॥

तथाऽप्ययं भगवान् कारुणिकः, हेतुगर्भमिदम्। अतो निर्धनो मादृशो धनं लब्ध्वा नितरां माद्यन् गर्वितो मां न स्मरेत् इत्यभिप्रेत्य मे मह्यं भूरि बहुधनं नाऽददात् न ददौ ॥ २० ॥

**इतीति**। तच्चिन्तया भगवद्गुणानुचिन्तयैव हृष्टः स्वगृहसमीपं प्राप्तः। तस्य विशेषणं सूर्येति। सूर्यादिव दीप्यमानै रित्यर्थः। सर्वतः परितः वृतम् ॥२१॥

किञ्च, **विचित्रेति**। कूजतां द्विजानां पक्षिणां कुलानि तै राकुलैर्व्याप्तैः विचित्रै रुपवनै रुद्यानैश्चावृतं, तथा प्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तैः, सरोभिरिति विशेष्य मध्याहार्यम्। जुष्टं युक्तमित्यर्थः ॥२२॥

पुम्भिः हरिणानामिव अक्षीणि यासां ताभिः स्त्रीभिश्च जुष्ट तन्निलय दृष्ट्वा वितर्कितवानित्याह - **किमिति**। प्रथमं तेजः पुञ्जं दृष्ट्वा किमिदमिति, पश्चात् विमानानि दृष्ट्वा कस्य वेदं स्थानमिति, स्वीयमिति ज्ञात्वा कथं तदिदं स्थानम् इत्येवं रूपमभूत् ॥२३॥

इतीत्थं मीमांसमानं वितर्कयन्तं द्विजं नरा नायश्च हे महाभाग! भूयसो[1]श्च गीतवाद्येन प्रत्यगृह्णन् उपायनादिभि राद्दतवन्त इति सम्बन्धः। अमरप्रभाः देवतुल्यकान्तयः इति नरनारीविशेषणम्॥२४॥

---

1- -1 T.W. Omit

**विज०** दिवि आकाशे॥ १९ ॥

माद्यन् मदं गच्छन् ॥ २० ॥

अन्तर्हृदय इति तस्मिन् कृष्णे स्थितचित्तगत्या स्वगृहान्तिकं प्राप्तः॥ २१,२२॥

स्वमन्दिरं दृष्ट्वा इदं किं, कस्यचेदं स्थानम्, इदं तदिति तत् द्वारकाविधं कथमभूत्॥ २३

एवं मीमांसमानं जिज्ञासमानं तं नरादयः प्रत्यगृह्णन् अभ्याययु रित्यन्वयः ॥ २४ ॥

**पतिमागत माकर्ण्य पत्न्युद्[1]धर्षाऽति सम्भ्रमा।**
**निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवा लयात् ॥ २५ ॥**
**पतिव्रता पतिं दृष्ट्वा [2]प्रेमोत्कण्ठाश्रुलोचना ।**
**मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥ २६ ॥**
**पत्नीं वीक्ष्य [3]प्रस्फुरन्तीं देवीं वैमानिकीमिव ।**
**दासीनां निष्ककण्ठीनां मध्ये भान्तीं [4]सुविस्मितः ॥ २७ ॥**

प्रीतः स्वयं तथा युक्तः प्रविष्टो निजमन्दिरम्।
मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा ॥ २८ ॥

पयः फेननिभाश्शय्या दान्ता रुक्मपरिच्छदाः ।
पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥ २९ ॥

आसनानि च हैमानि मृदूपस्तरणानि च ।
मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥ ३० ॥

1. K.T.W प्रीत्युद्धर्ष ; Ml.V. भक्त्युद्धर्ष 2. K.T.W प्रेम्णो 3. B.G.J विस्फुरन्तीं ; M.Ma प्रस्फुरन्तीं 4. B.G.J.K.Ml.V. स वि॰5.M.Ma प्रीतां

**श्रीध० पतिमिति**। उद्भूतो हर्षो यस्या स्सा अतिसम्भ्रमः आदरो यस्या स्सा आलयात् कमलवनात् रूपधारिणी श्रीरिव[1] स्वर्गस्य तत्र भगवता आनीतत्वात् स्वर्गिणामिव तयो रूपञ्च बभूवेति भावः ॥२५॥

बुद्ध्या अयमेव वन्द्य इति निश्चयेन मनसा सङ्कल्पेन ॥ २६-२८ ॥

**पय** इति। यत्र मन्दिरे पयःफेननिभाः शय्याः आस्तरणानीत्यादि सम्पदः तत्र सर्वसम्पदां समृद्धीः विलोक्य तर्कयामासेति चतुर्थेनाऽन्वयः यत्र च दान्ताः गजदन्तमयाः पर्यङ्काः॥ २९ ॥

**असनानीति**। यत्राऽऽसनानि च मृदून्युपस्तरणानि तूलादिमयानि येषु तानि यत्र च मुक्तादामविलम्बवन्ति द्युमन्ति च वितानानि ॥ ३० ॥

1. B. श्रीरेव

**वीर० पतिमिति**। आलयात् कमलवनात्, श्रीर्लक्ष्मीरिव स्वगृहात् तूर्णं निश्चक्राम निश्चक्रवती ॥ २५ ॥

**पतिव्रतेति**। उत्कण्ठया प्रेमपूर्वकानुध्यानेन, अश्रूणि आनन्दजलबिन्दवो लोचनयो र्यस्या स्सा, प्रेम्णा पतिं दृष्ट्वा मीलिते अक्षिणी यया सा बुद्ध्या आनम न्नमश्चक्रे, मनसा परिषस्वजे आलिङ्गितवती च ॥ २६ ॥

**पत्नीमिति**। स ब्राह्मणः वैमानिकीं विमानारूढां दैवीं देवतास्त्रियमिव प्रस्फुरन्तीं तां, निष्कः पदकाख्यभूषणं कण्ठे यासां तासां दासीनां मध्ये भान्तीं दीप्यमानां पत्निं वीक्ष्य विस्मितो बभूव ॥ २७ ॥

**प्रीत** इति। तया पत्न्या युक्तः सहितः निजमन्दिरं विशिनष्टि मणिस्तम्भेत्यादिना । यथा महेन्द्रभवनं तद्वत् स्थितम् ॥ २८ ॥

**पय** इति। पयःफेनेत्यादेः मन्दिरः इत्यादिः। पयः फेननिभाः दुग्धफेनवन्मृदुलाः शुभ्राश्च दान्ता धौताः परिच्छदाः रुक्ममयाः परिकराः यासां ताः। शय्या इति द्वितीयान्तानां विलोक्येत्युपरिष्टात् सम्बन्धः। प्रथमान्तपाठे तु यत्र मन्दिरे पयः फेननिभाः शय्यादयः तत्र सर्वसम्पदां समृद्धिमवलोक्य तर्कयामासेति सम्बन्धः। अस्मिन्पक्षे दान्ताः दन्तमयाः रुक्म परिच्छदा इति च पर्यङ्कविशेषणम्। हेममयो दण्डो येषां तानि चामरव्यजनानि च ॥ २९ ॥

**आसनानीति**। मृदून्युपस्तरणानि तूलादिमयानि येषु तानि आसनानि मुक्तादाम्नां मुक्तासराणां विलम्बा येषु सन्तीति तथाभूतानि तानि वितानानि उल्लोचाः द्युमन्ति कान्तियुक्तानि च ॥ ३० ॥

**विज०** स निजमन्दिरं प्रविष्टोऽभूत् ॥ २५-२९ ॥

द्युमन्ति द्युतिमन्ति ॥ ३० ॥

**स्वच्छस्फटिककुड्येषु महामरकतेषु च ।**
**रत्नदीपान्[1]भ्राजमानान्[2] ललनारत्नसंयुतान्[3] ॥ ३१ ॥**

**विलोक्य ब्राह्मणस्तत्र समृद्धी[4]स्सर्वसम्पदाम् ।**
**तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ ३२ ॥**

**नूनं [5]बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ।**
**महाविभूतेरवलोकतो[6]न्यो नैवोपपद्येत यदूत्तमस्य ॥ ३३ ॥**

**नन्वब्रुवाणो दिशते समक्षं [7]याचिष्णवे भूर्यपि [8]भूरिभोगः ।**
**पर्जन्यवत्स्वयमीक्षमाणो दाशार्हकाणामृषभः[9]सखा मे ॥ ३४ ॥**

**किञ्चित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी ।**
**[10]मयोपनीतां पृथुकैकमुष्टिं प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥ ३५ ॥**

**तस्यैव मे सौहृदसख्यमैत्री दास्यं पुनर्जन्मनि जन्मनि स्यात् ।**
**महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः ॥ ३६ ॥**

1. G.Ml.V. पा 2. G.Ml.V. ना 3. G.Ml.V. ता 4. M.Ma. "द्धिं 5. K.T.W. बतेदं मम 6. M.Ma. ऽन्यन्नै 7. M.Ma. यो वि 8. B.G.J. भोज: ; M.Ma. तेजा: 9. K.T.W. स कामे 10. K.T.W. नीतं

**श्रीध० विलोक्येति**। स ब्राह्मणो निर्व्यग्रस्सन् स्थिरस्सन् अहैतुकीमाकस्मिकीं स्वस्य समृद्धिं तर्कयामास। कुत एषा समृद्धिरागतेति ॥ ३१,३२ ॥

निश्चिनोति **नूनमिति**। एतन्ममेति एष चाऽसावहञ्च तस्यै तन्मम महतीविभूतिर्यस्य तस्यावलोकादन्यस्तु न सम्भवेत् ॥ ३३ ॥

ननु स चेदवलोकनमात्रेण महदैश्वर्यं दत्तवान् , तर्हीदं तुभ्यं मया दत्तमिति किं नाऽवोचत्, अत आह नन्विति। ननु मे सखा समक्षमब्रुवाण एव याचिष्णवे याचकाय भूरि बह्वपि दिशति ददाति। अत्र हेतुः भूरिभोगः[1] स्वयं तद्देयं पर्जन्यव दीक्षमाण इति, अयमर्थः - स्वयं तावद्भूरिभोजो बहुभोज आप्तकामत्वात् लक्ष्मीपतित्वाच्च अतो यथा पारावारपरि पूरकोऽतिवदान्यः पर्जन्यः कदाचिद्बह्वपि वर्षमल्पमेव च मन्यमानो लज्जयैव समक्षमवर्षन् रात्रौ निद्राणे कर्षके तत्क्षेत्रमाप्लाव यति, एवं श्रीकृष्णोऽपि स्वभोगापेक्षया तद्देयमिन्द्रादिपदमप्यतितुच्छं मन्वानः तस्यैव भजनं बहुमन्यमानः समक्षं अब्रुवाणः एव ददातीति ॥ ३४ ॥

तदेवाऽऽह - **किञ्चिदिति**। उरु बह्वपि स्वदत्तं यत् तत् किञ्चित्करोति अल्पं मन्यते । सुहृत्कृतं फल्गु अतितुच्छ मपि भूरिकारी बहु मन्यत इत्यर्थः। अत एव मयोपनीतां समीपं नीतां प्रीतियुतः स्वयमेव प्रतिगृहीतवान् ॥ ३५ ॥

श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा तद्भक्तिं प्रार्थयते - **तस्येति**। सौहृदं प्रेम सख्यं हिताशंसवश्च मैत्री उपकारित्वञ्च दास्यं सेवकत्वम्, तत्समाहारैकवचनम्। तस्य तत्सम्बन्धिनो मे मम स्यात् न तु विभूतिः। किञ्च महानुभावेन तेनैव विषज्जतो विशेषेण सङ्गं प्राप्नुवतः तद्भक्तेषु प्रकृष्टः सङ्गः स्यादिति ॥ ३६ ॥

1. B.J.V. जः

**वीर०** महान्तो मरकता इन्द्रनीलमणयः येषु तेषु स्वच्छेषु स्फटिकमयकुड्येषु रत्नान्येव दीपाः स्त्रीरत्नैस्संवृताः भ्राजमानाः। औज्वल्यातिशयाद्रत्नानां दीपत्वरूपणम् ॥ ३१ ॥

**विलोक्येति।** निर्मग्रः निश्चलः स्थितस्सन् अहैतुकीं स्वस्य समृद्धिं तर्कयामास। कुतः? एषा समृद्धिरागतेति तावच्चिन्तितवानित्यर्थः ॥ ३२ ॥

निश्चिनोति **नूनमिति**। दुर्भगस्य अस्मिञ्जन्मनि निर्भगस्य शश्वत्सदा जन्मान्तरेषु अपीत्यर्थः। दरिद्रस्य मम समृद्धिहेतुः सम्पद्धेतुः महाविभूतेः विभूतिद्वयनाशकस्य यदूत्तमस्य भगवतो अवलोकनादन्यो नैवोपपद्येत न सम्भाव्येत। नूनं ध्रुवं अहो बत एतदाश्चर्यं इत्यर्थः ॥ ३३ ॥

एवं तर्हि समक्षमेव मह्यं दास्यामीति ब्रुवन् किं न ददौ इत्याशङ्क्याऽऽह - **नन्विति**। भूरिभोगो बहुभोगो भगवान्। हेतुगर्भमिदम्। अतः याचिष्णवे याचकाय भूर्यपि बहुभाग्यमपि अब्रुवाणः 'दास्यामि प्रतिगृह्णीष्व' इत्येवमवदन् असमक्षमेव दिशते यच्छति। विरिञ्चिभोगपर्यन्तमपि याचकाय दीयमानं स्वभोगापेक्षया अतितुच्छमेवेत्यभिप्रेत्य लज्जया तत्समक्षं न यच्छति, किन्तु असमक्षमेवेत्यर्थः। एतदेव दृष्टान्तमुखेन वदन् कृतज्ञतामप्याह - पर्जन्यवदिति। यथा पर्जन्यः कदाचित् बह्वपि वर्षमल्पमेव मन्यमानः शयाने सति जने रात्रावगर्जन् असमक्षमेव वर्षति तद्वदयं दाशार्हकाणामृषभो यदुपतिः तत्सेवकसमर्पितमत्यल्पमपि समीक्षमाणे बहुमन्यमानः सकामे कामनया युक्ते पुंसि अभिलषितानर्थानसमक्षं वर्षतीत्यर्थः ॥ ३४ ॥

तत्स्वयमीक्षमाण इत्येतदेव स्वदृष्टान्तेन द्रढयति - **किञ्चिदिति**। यत्स्वदत्तमात्मना दत्तमैश्वर्यमुरु भूर्यपि तत्किञ्चित्करोति, अत्यल्पं मन्यते इत्यर्थः। यत्सुहृदा भक्तेन कृतं समर्पितं फल्गु अत्यल्पमपि तद्भूरि बहु करोतीति तथा। तथाहि- मयोपनीतं समीप आनीतं पृथुकानां एकं मुष्टिं स्वयं महात्मा उभयविभूत्यधिपतिरपि प्रीति.युक्तः प्रत्यग्रहीत्। महात्मेत्यस्य सर्वभूताभिप्रायज्ञ इति वाऽर्थः ॥ ३५ ॥

अतः कृतज्ञतामस्य भगवतः सख्यादिकमेव मम प्रतिजन्मनि स्यादिति प्रार्थयते - **तस्यैवेति**। भगवत एव सौहृदं हितैषित्वं प्रेम वा सख्यं प्रियत्वं हिताशंसनं वा मित्रत्रायकत्वं वा मैत्री उपकारस्मरणेन[2] किञ्चित्करत्वं दास्यं भृत्यत्वं तेषां द्वन्द्वैकवद्भावः। तन्मम जन्मनि जन्मनि। वीप्सायां द्विर्भावः स्यादस्तु, न तु विभूतिरिति भावः। किञ्च गुणालयेन अनन्तकल्याणगुणाश्रयेण महानुभावेन भगवता विषज्जतः विशेषेण सङ्गतिं प्राप्तवतो मम तत्पुरुषाणां तद्भक्तानां प्रसङ्गः प्रकृष्टसङ्गः स्यात् ॥ ३६ ॥

1. B. स्पष्टं 2. B. करणेन

**विज०** निर्व्यग्रः निस्सम्भ्रमः ॥ ३१, ३२ ॥

ममैतदेव समृद्धिहेतुः महाविभूतेः यदूत्तमस्य अवलोकतोऽन्यन्निमित्तं नैवोपपद्येत । स एव हेतुरित्यन्वयः ॥ ३३ ॥

यः स्वयमब्रुवाणः तूष्णीकः पर्जन्यवत् नः अक्षयं शं दिशते ददाति यो यस्मै विष्णवे अभूर्यपि धनं ददाति भूरितेजाः अनल्पप्रभावो भवति। स एतादृशमहिमा दाशार्हकाणामृषभः श्रीकृष्णः मे सखा नन्वनुमतं, लोकेनेति शेषः ॥ ३४ ॥

भक्तदत्तमेव हरेः तृप्तिजनकत्वेन अनन्तफलत्वेन परिणमति, नाऽभक्तदत्तमित्याह - **किञ्चिदिति**। यत्सुष्ठु भक्तिपूर्वमदत्तं तदुर्वपि किञ्चित्करोति फलत इति शेषः। 'त्रैविद्या मां सोमपाः पूतपापायज्ञैरिष्ट्वा स्वर्गतिम्' (भ.गी. 9-20) इत्यादेः। सुहृत्कृतं पूजनं फल्गु अपि अल्पमपि भूरिकारि। एतत्कुतो दृष्टमत्राह मयेति, हेतुगर्भविशेषणम् एतत् ॥ ३५ ॥

यतोऽत्र भक्तिरेव प्रधानकारणम् अतः सैव सम्पाद्येति भावेनाऽऽह - तस्यैवेति। योऽहनादिकालमारभ्य तच्चरणैकशरणः तस्यैव मे सौहृदादि स्यादित्यन्वयः। न केवलमस्य हरेः भक्तिलक्षणसङ्गेन पूर्यते, अपि तु तद्भक्तसङ्गोऽपि स्यादिति प्रार्थयते। महानुभावेनेति। भगवता सह विषज्जतः विशेषेण सङ्गं कुर्वतः मे तत्पुरुषप्रसङ्गः तस्य हरेः पुरुषेषु ब्रह्मादिष्वपि प्रकृष्टसङ्गश्च स्यादित्यन्वयः ॥ ३६ ॥

**भक्ताय चित्रा[1] भगवान् हि सम्पदो राज्यं विभूतिर्न समर्थयत्यजः ।**
**अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवम् ॥ ३७ ॥**

**इत्थं व्यवसितो बुद्ध्या भक्तो[2]ऽतीवजनार्दने ।**
**विषयाञ्जायया[3]त्यक्ष्यन् बुभुजे नाऽतिलम्पटः ॥ ३८ ॥**

**तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ।**
**ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३९ ॥**

**[4-] श्रीशुक उवाच [-4]**

**एवं सविप्रो भगवत्सुहृत्[5]तदा दृष्ट्वा स्व[6]भक्तैरजितं पराजितम् ।**
**तद्ध्यानवेगोद्ग्रथितात्मबन्धनः तद्धाम लेभे[7]ऽचिरतः सतां गतिम् ॥ ४० ॥**

**एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ।**
**लब्धभावो भगवति कर्मबन्धाद्विमुच्यते ॥ ४१ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

1. B.G.J.M.Ma.Ml.V. चित्रा 2. M.Ma. भक्त्या 3. M.Ma. त्यक्त्वा 4- -4 B.G.J.M.Ma.Ml.V.omit 5. K.Ml.T.V.W. °त्तमो 6. B.G.J.K.Ml.T.V.W. भृत्यै° 7. K.T.W. चरितैः 8. M.Ma.Ml.V. "न्धात्प्र"

**श्रीध०** ननु, भक्तेः फलं सम्पदं प्राप्य पुनर्भक्तिं किमिति प्रार्थयते? अत आह - भक्तायेति। सम्पदः केशादीन्, राज्यमैश्वर्यं विभूतीः कलत्रपुत्रीदीन् न समर्थयति न ददाति, अपि तु दृढां भक्तिमेव, कुतः अदीर्घबोधाय, अविवेकिने, मम तु भक्त्या भावा देवं जातम् अतः तद्भक्तिरेव मम स्यादिति भावः ॥ ३७ ॥

**इत्थमिति** । त्यक्ष्यन् शनैः शनैः त्यागमभ्यस्यन् जायया सह बुभुजे ॥ ३८ ॥

श्रीकृष्णस्यैवं ब्रह्मण्यता नातिचित्रमित्याह - **तस्येति** ॥ ३९ ॥

**एवमिति**। अन्यैरजितमपि स्वभृत्यैः पराजितं दृष्ट्वा तस्य ध्यानं तस्य वेगः तेनोद्ग्रथितमात्मबन्धनमहङ्कारो यस्य सः, गतिमित्यविवक्षित[1]लिङ्गं धाम विशेषणम्। सतां ब्रह्मविदां प्राप्यमित्यर्थः ॥ ४० ॥

एतत् पृथुकोपाख्यानं श्रुत्वा तत्र ब्रह्मण्यतां विशेषतः श्रुत्वेति ॥ ४१ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां व्याख्यायां
एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

1. B. J. °विष्ट लि°

**वीर०** ननु भक्तस्सन्नेव किमिति पुनः तद्भक्तिं प्रार्थयसे? इत्यत आह - **भक्तायेति**। चित्रं यद्यहं भक्तस्तर्हि मह्यमैश्वर्यप्रदानमतिचित्रमित्यर्थः। इत्थमैश्वर्यदानेन मामभक्तमेव सम्भावयामीति भावः। कुतः? हि यस्मादजो भगवान् भक्ताय सम्पदो राज्यं विभूतीश्च न समर्थयति, न वर्धयति न यच्छतीत्यर्थः। तत्र सम्पदो [1-]भोग्यभोगोपकरणं[-1] भोगस्थानादि समृद्धयः, विभूतयः, पुत्रपशुवित्तादिसमृद्धयः। अदाने हेतुं वदन् भगवन्तं विशिनष्टि - धनिनां मदस्योद्भवो यस्मात् तदैश्वर्यनिपातं निपतन्त्यनेन नरके इति तथाभूतम्। अदीर्घबोधाय अविवेकाय च भवेदिति पश्यन् जानन् विचक्षणः, हेतुगर्भमिदम्। अतस्तावन्न समर्थयत्येवेति सम्बन्धः। अतः किं वाऽऽहमभक्तः तस्मात्तद्भक्तिं प्रार्थये इति भावः ॥ ३७॥

**इत्थमिति**। बुध्या विवेकात्मिकया व्यवसितः निश्चिन्वन् नितरां भगवति भक्तियुक्तस्सन् विषयांस्त्यक्ष्यन् शनैश्शनै र्विषयत्यागमभ्यस्यन्नातिलम्पटः तेषु अतीव आदररहितः तान् जायया सह बुभुजे अनुबभूव ॥ ३८ ॥

स्वयं निस्समाभ्यधिको भगवान् कथमेवमकिञ्चनं द्विजमाहृतवानिति स्मयमानं राजानमालक्ष्याऽऽह - तस्य वै इति। हे प्रभो! यज्ञपतेः यज्ञनिर्वाकस्य देवानां ब्रह्मादीनामपि देवस्य हरेः प्रभवो दैवञ्च ब्राह्मणा एव। तेभ्यो ब्राह्मणेभ्यः परमन्यद्दैवं न तस्य विद्यते इत्यर्थः ॥ ३९ ॥

ततो ब्राह्मणः किमभूदित्यत आह - **एवमिति**। भगवत्सखः स ब्राह्मणः अन्यैरजितमपि (स्वभक्तैः) स्वभृत्यैः पराजितं वशीकृतं दृष्ट्वा तस्य भगवतो ध्यानेनोद्ग्रथितम् उन्मोचितमात्मनः स्वस्य बन्धनं संसृतिबन्धो यस्य सः। चरितैः तद्ध्यानाङ्गतयाऽनुष्ठितैर्वर्णाश्रमानुगुणैः पञ्चमहायज्ञाद्यनुष्ठानैः ध्यानद्वारा साधनैः सतां मुक्तानां गतिं प्राप्यं तस्य भगवतो धाम स्थानं वैकुण्ठाख्यं लेभे प्राप्तवान्। स्वभृत्यैः पराजितं सताङ्गतिं उपायभूतं दृष्ट्वेति वा सम्बन्धः ॥ ४० ॥

अथ उपवर्णितभगवच्चेष्टित[2]श्रवणफलमाह - **एतदिति**। ब्रह्मण्यश्रेष्ठस्य भगवतो ब्रह्मण्यतां श्रुत्वा लब्धः भावो भक्तिः येन सः कर्मबन्धात् प्राचीनकर्मरूपाद्बन्धनात् मुक्तो[3] भवति ॥ ४१ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

1- -1 B. omits 2. B.omits श्रवण 3. T.W. °क्तोऽभवत्

**विज०** हरिरैहिकमैश्वर्यं न ददातीति मन्दजनानुमितदोषापमार्जनयेयं सम्पादितेति भावेनाह - भक्तायेति ॥ ३७ ॥

त्यक्त्वाऽहम्ममतामिति शेषः ॥ ३८ ॥

देवदेवस्येत्यनेन सर्वप्रभुत्वं, यज्ञपतेरित्यनेन सर्वदेवत्वञ्च हरेरेव मुख्यमिति सूचितम्। अनेन इतरैर्ब्राह्मणभक्तिरेवावश्यं कर्तव्येति तात्पर्यं विधीयते न तु तस्य वै इति ॥ ३९ ॥

तस्य विप्रस्य का सिद्धिरभूत्तत्राह - एवमिति। अजितं नाम भगवन्तं स्वभक्तैः पराजितं दृष्ट्वा तस्य हरेर्ध्यानवेगेन उद्ग्रथितमुन्मुक्तम् आत्मबन्धनं यस्य तथा तद्भक्तैरेव प्राप्यं तद्धाम वैकुण्ठादिलक्षणम् ॥ ४० ॥

एतच्चरितोपासकस्य फलमाह - **एवमिति**। लब्धभावो लब्धभक्तिः, अनेनास्य विप्रस्येतरभक्तवैलक्षण्यमुक्तं स्यादिति तात्पर्यमवगन्तव्यम् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे उत्तरार्धे एकाशीतितमोऽऽध्यायः ॥ ८१ ॥
(विजयध्वजरीत्या एकोनशततमोऽध्यायः ॥ ९९ ॥ )



# द्व्यशीतितमोऽध्यायः

सूर्योपरागे कुरुक्षेत्रं प्रति श्रीकृष्णादीनां गमनकथा

**श्रीशुक उवाच**

**अथैकदा द्वारवत्यां वसतो रामकृष्णयोः ।**
**सूर्योपरागः सुमहानासीत्कल्पक्षये यथा ॥ १ ॥**

**तं ज्ञात्वा [1]मनुजा राजन् पुरस्तादेव सर्वतः ।**
**[2]स्यमन्तपञ्चकं क्षेत्रं ययुः श्रेयोविधित्सया ॥ २ ॥**

**निःक्षत्रियां महीं कुर्वन्रामः शस्त्रभृतां वरः ।**
**नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥**

**ईजे [3]स भगवान्रामो यत्राऽस्पृष्टोऽपि कर्मणा ।**
**लोकस्य ग्राहयन्[4]नीशो यथाऽन्योऽघापनुत्तये ॥ ४ ॥**

**महत्यां तीर्थयात्रायां तत्राऽगन् भारतीः प्रजाः ।**
**वृष्णयश्च तथाऽक्रूरवसुदेवाहुकादयः ॥ ५ ॥**

**ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ।**
**गदप्रद्युम्नसाम्बाद्या[5]ः सुचन्द्रशुकसारणैः ॥ ६ ॥**

**आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ।**
**ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः ॥ ७ ॥**

---

1. K.T.W. सत्तमाः; MI.V. पुरुषाः 2. G. स° 3. B.G.J.K.T.W. च 4. K.T.W. °न्नार्यो° 5. K.T.W. °श्च

## श्रीधरस्वामि विरचिता भावार्थ दीपिका

द्व्यशीतितम आगत्य कुरुक्षेत्रं रविग्रहे। वृष्णीन् दृष्ट्वा मुदा भूपाश्चक्रुः कृष्णकथामिथः ॥
[1]श्रीदाम सुहृदे कृष्णः प्रकल्प्यै[2]न्द्रं पदं भुवि। नन्दादि सुहृदानन्दी कुरुक्षेत्रं जगाम सः ॥

**अथेति**। कल्पक्षये यथा सर्वग्रास इत्यर्थः ॥ १ ॥

**तमिति**। ज्योतिर्विद्भिः कथ्यमानमादावेव ज्ञात्वा स्यमन्तकपञ्चकं क्षेत्रं कुरुक्षेत्रम् ॥ २ ॥

अब्रह्मण्य क्षत्रियवधस्थानत्वेन, परशुरामस्य अघापनुत्ति स्थानत्वेन च क्षेत्रस्य पापनिरासकत्वमाह - **निःक्षत्रिया** मिति द्वाभ्याम् ॥ ३ ॥

**ईजे** इति। अन्योऽविद्वान् यथा ॥ ४ ॥

**महत्यामिति**। आगन् आजग्मुः। भारतीर्भारत्यः ॥ ५,६ ॥

**आस्ते** इति। सुचन्द्रशुकसारणैस्सह अनिरुद्धो द्वारकारक्षायामास्ते तथा कृतवर्मा च यूथपतिः सेनानीः देवधिष्ण्याभैर्विमानसङ्काशैः। तरलास्तरङ्गाः तद्वत् प्लुधो गतिर्येषां तैः ॥ ७ ॥

---

1. MI.V श्रीकाम 2.MI.V. °ल्य्य इन्द्रपदं

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ भागवतः सबान्धवस्य तीर्थयात्रा व्याजेन सुहृत्सङ्गमतत्सल्लापाद्यात्मकं चेष्टितमनुवर्णयति त्रिभिरध्यायैः- **अथेति**। रामकृष्णयोर्द्वारकायां वसतोस्सतोः सुमहान् सर्वग्रासः। तत्र दृष्टान्तः कल्पक्षये यथेति। यथा कल्पावसाने सूर्यो न दृश्यते, तद्वदित्यर्थः ॥ १ ॥

**तमिति**। हे राजन् ! तं सूर्योपरागं ज्योतिर्विद्भिः कथ्यमानम् आदावेव ज्ञात्वा सत्तमाः शिष्टाः सर्वे श्रेयोविधित्सया पुण्यार्जनेच्छया स्यमन्तपञ्चकं नाम क्षेत्रं कुरुक्षेत्रमित्यर्थः। ययुः जग्मुः ॥ २ ॥

अब्रह्मण्य क्षत्रिय वधस्थानत्वेन, परशुरामस्य अघापनुत्तिस्थानत्वेन च क्षेत्रस्य पापनिरासकत्वमाह - **निः क्षत्रियामिति** द्वाभ्याम्। रामो भार्गवः रुधिरौघेण रुधिरधारया यत्र क्षेत्रे महाह्रदान् पञ्च चक्रे ॥ ३ ॥

**ईजे** इति। कर्मणा नृपवधप्रयुक्तपापेनाऽस्पृष्टोऽपि रामो भार्गवःलोकस्य ग्राहयन्नन्योऽपि मत्तोऽर्वाचीनाः शिष्टा एवं कुर्युरिति तान् ग्राहयितुमित्यर्थः। तथाऽन्येषामविदुषामघापनुत्तये पापापनोदनाय च यत्र क्षेत्रे ईजे इयाज तत् क्षेत्रं ययुरिति पूर्वेण सम्बन्धः ॥ ४ ॥

**महत्यामिति**। महत्यां अतिशयितपुण्यावहायां भारतीः भारत्यः भारतवर्षस्थाः प्रजाः तत्र क्षेत्रे आगन्नाजग्मुः। तथा अक्रूरादयो वृष्णयश्च अगमन् ॥ ५ ॥

किमर्थमित्यत आह - **ययुरिति**। हे भारत! स्वं स्वकीयमघं पापं क्षपयिष्णवः निरसितुमिच्छवः इत्यर्थः। गदेति। गदादिभिस्सह ॥ ६ ॥

अनिरुद्धः रक्षायां निमित्तभूतायां द्वारकारक्षणार्थमित्यर्थः। तत्रैवाऽस्ते स्थितवानित्यर्थः। [1-]एतैर्विशेषणैस्सर्वे भगवदादयो जग्मुरित्यभिप्रायः[-1]। तत्र श्रीकृष्णस्तु लोकं तीर्थयात्रायां प्रवर्तयितुं गत इति बोध्यम्। तेऽक्रूरादयः देवधिष्ण्याभैः देवविमानसङ्काशैरिति रथविशेषणम्। तरलाः तरङ्गाः तद्वत् प्लवो गतिः येषां तैः इति हयविशेषणम् ॥ ७ ॥

1- -1 T.W. omit

**गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ।**
**व्यरोचन्त महातेजाः पथिकाञ्चनमालिनः ॥ ८ ॥**

**दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खेचरा इव ।**
**तत्र स्नात्वा महाभागा उपेष्य सुसमाहिताः ॥ ९ ॥**

**ब्राह्मणेभ्यो ददुर्धेनूर्वासस्स्रग्रुक्ममालिनीः ।**
**रामह्रदेषु विधिवत्पुनराप्लुत्य वृष्णयः ॥ १० ॥**

**ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ।**
**स्वयञ्च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ ११ ॥**

**भुक्त्वोपविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु ।**
**तत्राऽऽगतांस्ते ददृशुस्सुहृत्सम्बन्धिनो नृपान् ॥ १२ ॥**

**श्रीध० गजैरिति**। विद्याधरद्युभिः विद्याधराणामिव द्युतिर्येषां तैः महातेजाः महातेजसाः ॥ ८ ॥

**दिव्येति**। दिव्या अत्युत्तमाः स्रग्वस्त्रसन्नाहा येषाम् ॥ ९ ॥

**ब्राह्मणेभ्य** इति। पुनरन्येद्युराप्लुत्य, यद्वा तस्मिन्नेवाऽहनि मुक्तिस्थानं कृत्वा ॥ १०,११ ॥

**भुक्त्वेति**। स्निग्धा शीतला छाया येषामङ्घ्रिपानामङ्घ्रिषु मूलेषु ॥ १२ ॥

**वीर०** नदद्भिः अभ्राभैः नीलमेघसङ्काशैः इति च गजविशेषणम्। महाभागाः महाभाग्यवन्तः सर्वे काञ्चनमालायुक्ताः ॥ ८ ॥

दिव्याः स्रगादयो येषां ते। सन्नाहः कवचादिपरिकरबन्धः खेचरा देवा इव कलत्रैस्सह व्यरोचन्त। तत्रेति। वासस्स्रगादय आसां सन्तीति तथा ताः धेनूर्ददुः। रामह्रदेषु भार्गवनिर्मितेषु ह्रदेषु आप्लुत्य स्नात्वा कृष्णे भगवति नोऽस्माकं भक्तिरस्त्विति प्रार्थयमाना ददुः। तथा स्वयं भगवानपि तत्राऽऽप्लुत्य ददौ इत्यर्थः। कृष्णो देवता येषां ते ॥ ९-११ ॥

अत एव तेन कृष्णेन अनुज्ञाता वृष्णयः कामं यथेष्टं भुक्त्वा स्निग्धा सान्द्रा छाया येषां तेषामङ्घ्रिपाणां वृक्षाणामङ्घ्रिषु मूलेषु उपविविशुः। तत्रेति। ते वृष्णयस्तत्र स्यमन्तपञ्चके आगतान् सुहृदादीन् ददृशुः सुहृदश्च सम्बन्धिनश्च तान् ॥ १२ ॥

**मत्स्योशीनरकौसल्यविदर्भकुरुसृञ्जयान् ।**
**काम्भोज[1]कैकयान् मद्रान् कुन्तीनारट्ट[2]केरलान् ॥ १३ ॥**

**अन्यांश्चैवाऽऽत्मपक्षीयान् परांश्च शतशो नृप ।**
**नन्दादीन् सुहृदो गोपान् गोपीश्चोत्कण्ठिताश्चिरम् ॥ १४ ॥**

**अन्योन्यसन्दर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ।**
**आश्लिष्य गाढं नयनैः स्रवज्जलाहृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥ १५ ॥**

**स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापाङ्गदृशोऽभिरेभिरे[3] ।**
**स्तनैः स्तनान्कुङ्कुमपङ्करूषितान्निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥ १६ ॥**

**ततोऽभिवाद्य ते वृद्धान् यविष्ठैरभिवादिताः।**
**स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथामिथः ॥ १७ ॥**

**पृथा भ्रातॄन् स्वसॄर्वीक्ष्य तत्पुत्रान्पितरावपि ।**
**भ्रातृपत्नीर्मुकुन्दञ्च जहौ सङ्कथया शुचः ॥ १८ ॥**

---

1. B.G.J. काम्बोज, K. कम्बोज ; T.W. कम्भोज 2. B.G.J. °नर्त 3. MI.T.V.W. °भिरे

**श्रीध० अन्य** इति। प्रोत्फुल्लैः हृद्वक्त्रसरोरुहैः श्रीः शोभा येषां ते ॥ १३-१५ ॥

**स्त्रिय** इति। अति सौहृदेन यत् स्मितं तेनाऽमलाः अपाङ्गैर्दृशो दृष्टयो यासां ताः, मिथः परस्परं संवीक्ष्य दोर्भिरभिरेभिरे आलिङ्गनं कृतवत्यः॥ १६-१७ ॥

**पृथेति**। सङ्कथया मिथस्सप्रेमगोष्ठ्या ॥ १८ ॥

**वीर०** मत्स्यादयश्शब्दाः जनपदतद्राजसाधारणाः अन्यान्मत्स्यादिभ्योऽन्यानात्मपक्षीयान् स्वपक्षपातिनः, तथा परान् शत्रूंश्च सुहृदो नन्दादीन् गोपांश्चिरमुत्कण्ठा प्रीतिपूर्वकानुध्यानं आसां सञ्जातेति तथा ता गोपीश्च ददृशुरिति पूर्वेण सम्बन्धः ॥ १३,१४॥

**अन्योन्येति**। अन्योन्यस्य सन्दर्शनेन यो हर्षस्तस्य रंहसा वेगेन, अतिशयेनेति यावत्। प्रोत्फुल्लैः, हृद्वक्त्राण्येव सरोरुहाणि तैः श्रीः शोभा येषां ते, गाढं यथा तथा आलिङ्ग्य नयनैः स्रवन्ति जलानि येषां ते, हृष्यन्त्यः उदञ्चितरोमाणः (तनवः) त्वचो येषाम् रुद्धः गद्गदाः गिरो येषां ते मुदं हर्षं ययुः प्रापुः ॥ १५ ॥

**स्त्रियश्चेति**। अतिसौहृदेन स्मितं तेनाऽमलाः अपाङ्गैर्नेत्रान्तैः दृशो दृष्ट्यो यासां ताः कुङ्कुमपङ्केन रूषितान् लिप्तान् तादृशैः स्तनैः निहत्य सम्पीड्य मिथोऽभिरेभिरे परिषस्वजिरे। प्रणयेन प्रीत्या अश्रूणि लोचनयोः यासां ताः ॥ १६ ॥

**तत** इति। ते यदवो मत्स्यादयश्च वृद्धान् वयसा अधिकानभिवन्द्य यविष्ठैः न्यूनवयस्कैः अभिवन्दिताश्च स्वागतं कुशलञ्च पृष्ट्वा तत्र परस्परं कथाश्चक्रुः कथयामासुः ॥ १७ ॥

तावत् पृथा कुन्ती भ्रातॄन् स्वसॄर्भगिनीश्च तत्पुत्रान् भ्रातृपुत्रान् स्वसृपुत्रांश्च वीक्ष्य सङ्कथया मिथः सप्रेमगोष्ठ्या शुचः क्लेशान् जहौ तत्याज ॥ १८ ॥

## कुन्त्युवाच

**आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम् ।**
**यद्वा आपत्सु मद्वार्ता[1] नाऽनुस्मरथ सत्तमाः ॥ १९ ॥**

**सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि ।**
**नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम्॥ २० ॥**

**वसुदेव उवाच**

**अम्ब माऽस्मानसूयेथाः दैवक्रीडनकान्नरान् ।**
**ईशस्य हि वशे लोकः कुरुते[2] कार्यतेऽथवा ॥ २१ ॥**
**कंसप्रतापितास्सर्वे वयं याता[1]दिशं दिशम् ।**
**एतर्ह्येव पुनः स्थानं दैवेनाऽऽसादिताः स्वसः॥ २२ ॥**

**श्रीशुक उवाच**

**वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः ।**
**आसन्नच्युत सन्दर्श परमानन्द निर्वृताः॥ २३ ॥**

---

1. K.M.I.T.V.W. °त 2. K.T.W. क्रियते

**श्रीध०** तामेव वसुदेवपृथयोः सङ्कथामाह - **आर्येत्यादि** चतुर्भिः। अकृताशिषमपूर्णमनोरथम् ॥ १९ ॥

**सुहृद** इति। यस्य दैवमदक्षिणम् अननुकूलं तं स्वजनमपि सन्तं सुहृदादयो नाऽनुस्मरन्ति। अतो मम[1] दैवं प्रतिकूलं युष्माकं कोऽपराधः इति भावः ॥ २०,२१ ॥

ईशवशत्वमेवाऽऽह - **कंसप्रतापिता** इति। हे स्वसः! एतर्ह्येव सम्प्रत्येव ॥ २२,२३ ॥

---

1. M.I.V. ममैव

**वीर०** तावत् पृथावसुदेवयोः सङ्कथामाह - आर्येत्या[1]दिभिः चतुर्भिः। हे आर्य! हे भ्रातः! अहमात्मानमकृताशिष मप्राप्तमनोरथं मन्ये, मम मनोरथपूर्तिरजातेत्यर्थः। कुतः? यद्यस्मात् हे सत्तमाः! मद्वार्तां नानुस्मरत न स्मृतवन्तः। अडभाव आर्षः ॥ १९ ॥

युक्तश्चैतदित्याह - **सुहृद** इति । यस्य दैवमदक्षिणम् प्रतिकूलं तं स्वजनमपि सुहृदो नानुस्मरन्त्येव । अतो मम दैवं प्रतिकूलमिति भवतां कोऽपराध इति भावः ॥ २० ॥

एवमुक्तः प्राह वसुदेवः - **अम्बेति**। हे अम्ब, दैवस्य क्रीडनकान् क्रीडासाधनभूतान्नरानस्मान् प्रति माऽसूयेथाः असूयां मा कार्षीः। कुतः ? हि यस्मात् लोकः जनः ईशस्य ईश्वरेण इत्यर्थः। वशे क्रियते वशीक्रियत इत्यर्थः। यथा ईशस्य यथारुचि कार्यते व्यापार्यते च ॥ २१ ॥

ईशवशत्वमेवाऽऽह - **कंसप्रतापिता** इति। कंसेन प्रतापिताः क्लेशिताः सर्वे वयं दिशं दिशं याताः गताः हे स्वसः॥ एतर्ह्येव सम्प्रत्येव दैवेन स्थानमासादिताः प्रापिताः ॥ २२ ॥

**वसुदेवेति**। ते मत्स्यादयो नृपाः वसुदेवादिभिः यदुभिः अर्चिताः अच्युतसन्दर्शनजपरमानन्देन सुखिताश्चाऽऽसन् बभूवुः ॥ २३ ॥

1. B. °ति च°

**भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा ।**
**सदाराः पाण्डवाः कुन्ती [1]सञ्जयो विदुरः कृपः ॥ २४ ॥**

**कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान् ।**
**पुरुजिद्द्रुपद[2]श्शैब्यः धृष्टके[3]तुस्सकाशिराट् ॥ २५ ॥**

**दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ ।**
**युधामन्युस्सुशर्मा च ससुता बाह्लिकादयः ॥ २६ ॥**

**राजानो[4]ऽन्ये च राजेन्द्र युधिष्ठिरमनुव्रताः ।**
**श्रीनिकेतं वपुश्शौरेः सस्त्री[5]का वीक्ष्य विस्मिताः ॥ २७ ॥**

**अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः ।**
**प्रशशंसुर्मुदा युक्ता वृष्णीन् कृष्णपरिग्रहान् ॥ २८ ॥**

1. B.G.J. सृ° 2. MI.T.V.W. °श्शल्यो 3. K.MI.T.V.W. °तुश्च 4. B.G.J. ये च 5. B.G.J. °कं

**श्रीध० राजान** इति। युधिष्ठिरं येऽनुव्रतास्ते, राजसूये जितत्वात् ॥ २४-२८ ॥

**वीर०** भीष्मादयोऽन्ये च ये युधिष्ठिरमनुव्रताः ते सर्वे सस्त्रीकाः श्रियो लक्ष्म्याः श्रीनिकेतनमाश्रयं शौरेः [1-] श्रीकृष्णस्य [-1] वपुः [2] शरीरं वीक्ष्य विस्मिता बभूवुरिति [3-] चतुर्णामन्वयः [-3]। [4-] तत्राऽम्बिकापुत्रो [-4] धृतराष्ट्रः ससुता दुर्योधनादिसहिता गान्धारी ॥ २४-२७ ॥

**अथेति**। ते भीष्मादयः कृष्णरामाभ्यां कर्तृभ्यां सम्यग्यथातथा प्राप्तं समर्हणं यैस्ते। कृष्णेन परिगृह्यन्त इति तथा तान् वृष्णीन् प्रशशंसुः ॥ २८ ॥

1- -1 K.T.W. omit 2. K.T.W. अवलोक्य 3- -3. K.T.W. सम्बन्धः। 4- -4 K.T.W. omit.

**अहो! भोजपते! यूयं जन्मभाजो नृणामिह ।**
**यत्पश्यथाऽसकृत्कृष्णं दुर्दर्शमपि योगिनाम् ॥ २९ ॥**

**यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति पादावनेजनपयश्च वचश्च शास्त्रम् ।**
**भूः कालभर्जित [1] भगाऽपि यदङ्घ्रिपद्म स्पर्शोत्थ शक्तिरभिवर्षति नोऽखिलार्थान् ॥ ३० ॥**

**[2] यद्दर्शनस्पर्शनानुपथप्रजल्प शय्यासनाशनसयौनसपिण्डबन्धः ।**
**येषां गृहे निरयवर्त्मनि वर्ततां वः स्वर्गापवर्गविगमः स्वयमास विष्णुः ॥ ३१ ॥**

**श्रीशुक उवाच**

**नन्दस्तत्र यदून्प्राप्तान् ज्ञात्वा कृष्णपुरोगमान् ।**
**तत्राऽगमद्वृतो गोपैरनस्[3]स्थार्थैर्दिदृक्षया ॥ ३२ ॥**

1. T.W. °गुणापि 2. B.G.JMI.v त° 3. K°नोभिः; °नस्साध°

**श्रीध० अहो**! इति। जन्मभाजो नृणां मध्ये सफलजन्मानः ॥ २९ ॥

किञ्च, न केवलं तस्य दर्शनमेव अपि तु, अत्यन्तदुर्लभं बहु युष्माकं स्वतस्सम्पन्नमित्याहुः-यद्विश्रुतिरिति द्वाभ्याम् - यदिति पृथक् पदम्, यस्येत्यर्थः। विश्रुतिः कीर्तिः श्रुतिभिर्नुता वेदैः स्तुता इदं विश्वम् अलमप्यर्थं पुनाति। 'यद्विश्रुति

श्रुति रमीव मलम् 'इति पाठे श्रुतिः श्रवणम्, अमीवं पापमिति। यस्य पादावनेजनपयो गङ्गा च यस्य वचो वाक्यरूप शास्त्रञ्च वेदाख्यं विश्वं पुनाति। किञ्च, कालेन भर्जितं दग्धं भागं माहात्म्यं यस्या स्सा, तथा विधाऽपि भूः यस्याङ्घ्रिपद्मस्पर्शेन उत्था आविर्भूता शक्तिर्यस्या स्सा नोऽस्माक मखिलानर्थान् अभितो वर्षति ॥ ३० ॥

**यदिति**। दर्शनञ्च स्पर्शनञ्च अनुपथोऽनुगतिश्च प्रजल्पो गोष्ठी च शय्या शयनञ्चाऽऽसनञ्चाऽशनं भोजनञ्च यौनं विवाहसम्बन्धस्तेन सह वर्तमानः सपिण्डबन्धो दैहिकसम्बन्धः तेन श्रीकृष्णेन सह दर्शनाद्युपलक्षितः स यौनः सपिण्डबन्धो येषां वोऽस्ति। किञ्च येषां वर्तमानानां स्वर्गापवर्गाभ्यां विरमयति वितृष्णान् करोतीति तथा। सः ते यूयं जन्मभाज इति। यद्वा तदिति सामान्यनिर्देशः स इत्यर्थः। स विष्णुः स्वयं येषां वो निरयवर्त्मनि संसारकारणे गृहे वर्तमानानामपि बध्यते सम्बध्यत इति बन्धोः दर्शनादिभिः सम्बन्धस्सन् स्वर्गापवर्गाविरम आस परमसुखप्रदो बभूवेत्यर्थः ॥ ३१ ॥

**नन्द** इति। अनस्स्थार्थैरिति। तत्रैव वासचिकीर्षया शकटेषु स्थापितैः अर्थैः सहाऽऽगत इत्यर्थः ॥ ३२ ॥

---

1--1 MI.V. °तः दग्धः भगः

**वीर०** प्रशंसामेवाऽऽह - **अहो**! इति त्रिभिः। भोजपतिरुग्रसेनः। हे भोजपते! इह लोके नृणां मध्ये यूयमेव जन्मभाजः सफलजन्मनः। कुतः? यद्यस्मात्, योगिनामपि दुर्दर्शं श्रीकृष्णमसकृत् पश्यथ ॥ २९ ॥

किञ्च, न केवलं तस्य दर्शनमेव, अपि तु दुर्लभं बहु युष्माकं सम्पन्नमित्याहुः - **यद्विश्रुतिरिति** द्वाभ्याम्। यदिति पृथक्पदमव्ययम् यस्येत्यर्थकं विश्रुति पदावनेजनपादाभ्यां पृथक् सम्बध्यते। यद्वा, पादेत्यस्य यस्येत्यादिः यस्य भगवतो विश्रुतिः कीर्तिः श्रुतिभिः वेदैः नुता इदं कथयत्सर्वमाश्वपाकं जगत्पुनाति यस्य पादावनेजनपयःपादप्रक्षालनजलं तदात्मिका गङ्गा च जगत्पुनातीत्यर्थः। वचः काव्यपुराणादिरूपं शास्त्रं शासनात्मकवेदाश्च विश्वं पुनाति। किञ्च कालेन भर्जितं दग्धं भगवन्माहाँत्म्यं यस्यास्तथाविधाऽपि भूः पृथ्वी यस्याङ्घ्रिपद्मस्पर्शेन उत्था आविर्भूता शक्तिर्माहात्म्यमैश्वर्यम् इति यावत्। सा यस्यास्ताथाभूता नोऽस्माकमखिलानर्थान् सर्वान् अभीष्टान् अर्थान् अभिवर्षतीति। [1-]श्रुतेरिति पाठे श्रुतेर्यस्य विश्रवणं विश्रुतिः[-1]। विश्रुतमिति पाठे "इमम्मे गङ्गे यमुने सरस्वति" (म.ना.उ.5.21) इत्यादिषु विविध श्रुतिषु श्रुतिमिति पयोविशेषणम्। वचः गीतात्मकं शास्त्रं यत्कीर्तनं जगदलं सकलमितिपाठे अलं पुनातीत्यन्वयः। जगदमीवमलं पुनातीति पाठे अमीवं पापं तदेव मलं यस्य तज्जगत्पुनातीत्यर्थः। गङ्गाजलं गीताशास्त्रञ्च जगत्सकलं पुनातीत्यर्थः ॥ ३० ॥

किञ्च, **यद्दर्शनमिति**। यस्य दर्शनञ्च स्पर्शनञ्च अनुपथः अनुगतिश्च प्रजल्पो गोष्ठी च शय्या शयनम्, आसनञ्च, अशनं भोजनञ्चेति इतरेतरयोगद्वन्द्वः सयौन सपिण्डाभ्यां विवाहैकगोत्रत्वाभ्यां बन्धस्सम्बन्धः दर्शनादिभिः सहितः, सयौन सपिण्डबन्धः स येषां भवतामस्ति। किञ्च येषां गृहे श्रीकृष्णः स्वयमास आविर्बभूव, येषां वो निरयवर्त्मनि प्रवृत्तिमार्गे वर्ततां वर्तमानानामपि स्वर्गापवर्गवैतृष्ण्यञ्च आस अभूत् ॥ ३१ ॥

**नन्द** इति। कृष्णपुरोगमान् कृष्णप्रभृतीन् ज्ञात्वा आकर्ण्य तद्दिदृक्षया कृष्णादिदर्शनेच्छया गोपैः परिवृतः अनोभिश्शकटैः गमनसाधनैः तत्र कृष्णसन्निधौ आजगाम ॥ ३२ ॥

1--1 K.T.W. omit

**तं दृष्ट्वा वृष्णयो दृष्टा स्तन्वः प्राणमिवोत्थिताः ।**
**परिषस्वजिरे गाढं चिरदर्शनकातराः ॥ ३३ ॥**

**वसुदेवः परिष्वज्य सम्प्रीतः प्रेमविह्वलः ।**
**स्मरन् कंसकृतान् क्लेशान् पुत्रन्यासञ्च गोकुले ॥ ३४ ॥**

**कृष्णरामौ परिष्वज्य पितरावभिवाद्य च ।**
**न किञ्च नोचतुः प्रेम्णा साश्रुकण्ठौ कुरुद्वह ॥ ३५ ॥**

**[1-]ता उत्सङ्गं[-1] समारोप्य बाहुभ्यां परिरभ्य च ।**
**यशोदा च महाभागासुतौ विजहतुश्शुचः ॥ ३६ ॥**

1--1 K. तावात्मोत्सङ्ग° ; B.G.J. तावात्मासन° ;M.V. तावात्माङ्के स°

**श्रीध० वसुदेव** इति। वसुदेवस्तं परिष्वज्य प्रेमविह्वलो बभूवेति शेषः ॥ ३३-३५ ॥

**ताविति**। तौ सुतौ परिरभ्य नन्दो यशोदा च विरहशोकान् विजहतुः तत्यजुः। यद्वा, शुचोऽश्रूणि विजहतुः मुमुचतुः इत्यर्थः ॥ ३६ ॥

**वीर० तमिति**। तं नन्दं प्राणं मुख्यप्राणं प्रति तन्वः शरीराणीव तावद्विनिर्गते पुनरागते सति मुख्यप्राणे यथा शरीराण्युत्तिष्ठन्ते तद्वदित्यर्थः। उत्थिताः सन्तः चिरं दर्शने निमित्ते कातराः लम्पटाः अतो गाढं यथा तथा परिषस्वजिरे आलिङ्गितवन्तः ॥ ३३ ॥

**वसुदेव** इति। परिष्वज्य, नन्दमिति शेषः। प्रणयेन स्नेहातिशयेन विह्वलः परवशः गोकुले पुत्रयोः रामकृष्णयोर्न्यासम्, अवस्थापनञ्च, स्मरन्नास्ते इत्यध्याहारः ॥ ३४ ॥

कृष्णरामाविति प्रथमान्तम्। पिता च माता च पितरौ 'पिता मात्रा (अष्टा.1.2.70) इत्येकशेषः। तौ यशोदानन्दौ अभिवाद्य आलिङ्ग्य च हे कुरूद्वह! प्रेम्णा साश्रुः कण्ठो ययोस्तौ, किञ्चिदपि नोचतुः तूष्णीमासतुरित्यर्थः ॥ ३५ ॥

**ताविति**। यशोदा चेति, चशब्दान्नन्दः तौ सुतौ रामकृष्णावात्मनः उत्सङ्गमारोप्य तस्मिन्नुपवेश्येत्यर्थः। बाहुभ्यां परिरभ्य च शुचः पुत्रविश्लेषजशोकान् विजहतुः ॥ ३६ ॥

**रोहिणी देवकी चाऽथ परिष्वज्य व्रजेश्वरीम् ।**
**स्मरन्त्यौ तत्कृतां मैत्रीं बाष्पकण्ठ्यौ समूचतुः ॥ ३७ ॥**

**का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि !**
**अवाप्याऽप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ ३८ ॥**

**एतावदृष्टपितरौ युवयोः स्म पित्रोः सम्प्रीणनाभ्युदयपोषणपालनानि ।**
**प्राप्योषतुर्भवति पक्ष्म हि[1] यद्वदक्ष्णो र्न्यस्तावकुत्र च भयौ न सतां परः स्वः ॥ ३९ ॥**

**श्रीशुक उवाच**

**गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे[2] दृशिषु पक्ष्मकृतं शपन्ति[3] ।**
**दृग्भिर्हृदीकृतमलं परिरभ्य सर्वा स्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ ४० ॥**

---

1. B.G.J. ह 2.T.W. त॰ 3. K.MI.T.V.W. ॰न्त्यः

**श्रीध० रोहिणीति** । व्रजेश्वरीं यशोदाम् ॥ ३७ ॥

**केति**। अनिवृत्तां निवृत्तिकारणे सत्यप्यनुवर्तमानाम् ऐन्द्रमैश्वर्यं प्राप्याऽपि यस्याः प्रतिक्रिया कर्तुं न शक्यत इत्यर्थः ॥ ३८ ॥

तत्कृतां मैत्रीमाहतुः - **एताविति** । न दृष्टौ पितरौ याभ्यां तौ। वस्तुतस्तु, अजन्मत्वादेव अदृष्टपितरौ, हे भवति! युवयोः पित्रोन्यस्तावेतौ सम्प्रीणनादीनि प्राप्य अकुत्रचभयौ क्वचिदपि भयरहितौ भूत्वा ऊषतुः वासं

चक्रतुः। कथम्भूतयोः अक्ष्णोर्नेत्रयोः? रक्षकं पक्ष्म यद्वत्तथा रक्षकयोः युक्तं युवयोरेतत्, यतः सतां परः, स्वः इति नास्ति वैषम्यम् ॥ ३९ ॥

**गोप्य** इति। अभीष्टत्वे लिङ्गम्। यद्यस्य श्रीकृष्णस्य प्रेक्षणे दृशिषु नेत्रेषु व्यवधायक[1]पक्ष्मकृतं विधातारं शपन्ति। दृग्भिर्नेत्रद्वारैः हृदि कृतं हृदये प्रवेशितं परिरभ्य तद्भावं तदात्मतां प्रापुः। अपि नित्य युजामारूढयोगिनामपि ॥ ४० ॥

---

1. B.J. °कं

**वीर० देवकीति**। व्रजेश्वरीं यशोदां परिष्वज्य तत्कृतां व्रजेश्वरीकृतां मैत्रीं स्मरन्त्यौ बाष्पमानन्दाश्रुकण्ठे ययोस्ते समूचतुः ॥ ३७ ॥

उक्तिमेवाऽऽह - **केति**। हे व्रजेश्वरि! वां युवयोः मैत्रीं अनिवृत्तां यावद्देहमनुवृत्तमित्यर्थः। का वा स्त्री विस्मरेत। न कापीत्यर्थः। अत्र हेतुत्वेन तां विशिनष्टि - ऐन्द्रमैश्वर्यं दत्त्वाऽपि यस्याः मैत्र्याः प्रतिक्रिया प्रत्युपकृतिरिह लोके नास्ति ॥ ३८ ॥

मैत्रीं प्रपञ्चयतः - **एताविति**। न दृष्टौ पितरौ याभ्यां तौ हे भवति! युवयोः पित्रोर्न्यस्तावेतौ सम्प्रीणनादीनि प्राप्य अकुत्रचभयौ क्वचिदपि भयरहितौ भूत्वा ऊषतुः वासं चक्रतुः। कथम्भूतयोः? अक्ष्णोः नेत्रयोः पक्षकं पक्ष्म यद्वत्तथा रक्षकयोः युवयोः इति सम्बन्धः। रक्षकयोरित्यस्याध्याहारः। [1]सुप्रीणनमपेक्षितप्रदानेन तर्पणम्, अभ्युदयो महोत्सवः। युक्तञ्चैतदित्यूचतुः। न सतां परोऽस्तीति। परः स्वः इति पाठे परः स्वकः इति च न वैषम्यमस्तीत्यर्थः ॥ ३९ ॥

**गोप्यश्चेति**। अभीष्टं प्रियतमं कृष्णं उपलभ्य दृष्ट्वा यस्य श्रीकृष्णस्य प्रेक्षणे प्रवृत्तासु दृशिषु स्वनेत्रेषु व्यवधायकपक्ष्मकृतं विधातारं शपन्त्यः दृग्भिर्नेत्रद्वारैः हृदिकृतं हृदये प्रवेशितमाश्लिष्य नित्ययुजां नित्यं मनो युञ्जानानां योगिनामपि दुरापं दुर्लभं तद्भावं कात्स्न्र्येन तद्विग्रहावगाहनात्मकमभिप्रायं प्रापुः ॥ ४० ॥

---

1. K. सम्प्री

**भगवांस्तास्तथाभूता विविक्त उपसङ्गतः ।**

**आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ४१ ॥**

**अपि स्मरथ नस्सख्यः स्वानामर्थचिकीर्षया ।**
**गतांश्चिरायिताञ्शत्रुपक्षक्षपणचेतसः ॥ ४२ ॥**

**अप्यवध्यायथाऽस्मान् स्विदकृतज्ञा विशङ्कया ।**
**नूनं भूतानि भगवान् युनक्ति वियुनक्ति च ॥ ४३ ॥**

**वायुर्यथा घनानीकं तृ[1]णतूलं रजांसि च ।**
**संयोज्याऽऽक्षिपते भूयस्तथाभूतानि भूतकृत् ॥ ४४ ॥**

---

1. B.G.J. °णं तूलं

**श्रीध० अपीति**। चिरायितान् विलम्बितान्। अत्र हेतुः शत्रूणां पक्षस्य क्षपणे चेतो येषां तान् ॥ ४१,४२ ॥

**अपीति**। अपिस्वित् अस्मान् अवध्यायथा अवजानीथ, अकृतज्ञा एत इत्याऽऽविशङ्कया ईषच्छङ्कया न शङ्कामात्रं निश्चितमेवैतत् परित्यज्य गतत्वादित्यत आह - नूनमिति ॥ ४३ ॥

एतत्सदृष्टान्तमाह - **वायुरिति**। आक्षिपते [1-]आक्षिपति[-1] पृथक्करोतीत्यर्थः ॥ ४४ ॥

---

1--1. B.J. omit

**वीर० भगवानिति**। तथाभूता आत्मभावमापन्नाः ता गोपीर्विविक्ते एकान्ते उपसङ्गतः अनामयमारोग्यं पृष्ट्वा इदं वक्ष्यमाणमब्रवीत् ॥ ४१ ॥

तदेवाऽऽह - **अपीति** षड्भिः। हे सख्यः! नोऽस्मानपि स्मरथ, स्मरथ किम्? इत्यर्थः। क्षणसौहृदान् युष्मान्नानुस्मरामेत्यत आत्मनो विशिनष्टि - सतां साधूनां स्वानामर्थं प्रयोजनं कर्तुमिच्छया चिरायितान् विलम्बितान्। तत्र हेतुः - शत्रु पक्षक्षपणे चेतो येषां तानस्मान् ॥ ४२ ॥

अकृतज्ञविशङ्कया अकृतज्ञः कृतज्ञादन्यः तद्विशङ्कया कृतघ्ना एवैते इति बुद्ध्येत्यर्थः। अवध्यायथापिस्वित् अवजानीथ किमित्यर्थः। अवपूर्वाद्ध्यायतेः लोण्मध्यमपुरुषबहुवचनम् । न शङ्कामात्रं निश्चितमेतत्, परित्यज्य गतत्वादित्यत आह- नूनमिति। भूतानीति द्वितीयान्तम् ॥ ४३ ॥

एतत्सदृष्टान्तमाह - **वायुरिति**। घनानीकं मेघसमुदायं तृणादीनि च वायुर्यथा युनक्ति वियुनक्ति वियोजयति च तद्वत् भूतकृत् भूतस्रष्टा भगवान् क्वचिद्भूतानि संयोज्य पुनराक्षिपते वियोजयति च ॥ ४४ ॥

**मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ।**
**दिष्ट्या यदाऽऽसीन्मत्स्नेहो भवतीनां मदापनः ॥ ४५ ॥**

**अहं हि सर्वभूतानामादिरन्तोऽन्तरं बहिः ।**
**भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरङ्गनाः ॥ ४६ ॥**

**एवं ह्येतानि भूतानि भूतेष्वात्माऽऽत्मना तत ।**
**उभयं मय्यथपरे पश्यताऽऽभात[1]मक्षरे ॥ ४७ ॥**

**श्रीशुक उवाच**

**अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ।**
**तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥ ४८ ॥**

**आहुश्च ते नलिन नाभपदारविन्दं यो[2]गेश्वरैर्हृदि विचिन्त्यमगाधबोधैः ।**
**संसारकूपपतितोत्तरणावलम्बं गेहञ्जुषामपि मनस्युदियात्सदा नः ॥ ४९ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे वृष्णिगोपसङ्गमो नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

1. M.L.V. "न्त 2. K.T.W. "गी"

**श्रीध०** अपि च, अतिभद्रमिदं यदुत भवतीनां मद्वियोगेन मत्प्रेमातिशयो जात इत्याह - **मयीति**। मयि भक्तिमात्रमेव तावदमृतत्वाय कल्पत इति यदुत भवतीनां मत्स्नेह आसीत् तद्दिष्ट्या अतिभद्रं कुतः मदापनो मत्प्रापण इति ॥ ४५ ॥

कीदृशस्त्वं,यं वयं स्नेहेन प्राप्स्याम इत्यपेक्षायामात्मस्वरूपमाह - **अहं हीति**। हे अङ्गनाः ! भौतिकानां शरावसैन्धवादीनां यथाऽऽकाशादीनि पञ्चमहाभूतान्याद्यन्तादिरूपाणि एवं सर्वभूतानां जरायुजादीनामहं, अतो व्यापकं मां भवत्यः प्राप्ता एवेति ॥ ४६ ॥

ननु चतुर्विधभूतग्रामाणां तद्भोक्ता आत्मैव आद्यन्तादिरूपः तस्मिंश्च सर्वव्यापके सर्वभूतानि वर्तन्त इति कुतस्त्वत्प्राप्तिरस्माकमित्यत आह - **एवं हीति**। अयमर्थः - शरावादीनां यथा भौतिकानां महाभूतान्याद्यन्तादिरूपाणि एवमेवैतानि चतुर्विधानि भूतान्यपि भौतिकत्वाविशेषात् स्वकारणेषु भूतेष्वेव वर्तन्ते। ननु "भोक्तर्यात्मनि, आत्मा तु तेषु भूतेषु आत्मना भोक्तृरूपेण ततो व्याप्तो न कारणत्वेन। अथैतदुभयं भूतभौतिकरूपं भोग्यञ्च भोक्तारञ्चाऽऽत्मानं मय्यक्षरे परिपूर्णे आभातं, पश्यतेति" ॥ ४७ ॥

**अध्यात्मेति**। अध्यात्मशिक्षया स्वरूपोपदेशेन शिक्षिताः बोधिताः तस्यानुस्मरणेन ध्वस्तो जीवकोशो लिङ्गं यासां ताः तमेवाऽध्यगन् प्रापुः ॥ ४८ ॥

एवं प्राप्तोऽपि कृष्णः पुनर्गृहव्यासङ्गेन माऽपयात्विति तच्चरणस्मरणं प्रार्थयामासुरित्याह - **आहश्चेति**। हे नलिननाभ ! ते पदारविन्दं [1-]योगेश्वरैः हृदि विचिन्त्यं[-1] गेहञ्जुषां गृहसेविनीनामपि [2-]नो मनसि[-2] सदा उदियात् आविर्भवेत् ॥ ४९ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां

द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

1- -1. B.J. omit 2- -2 Ml.v omit

**वीर०** किञ्चाऽतिभद्रमिदं यद्भवतीनां मद्वियोगेन मत्प्रेमातिशयोऽभूदित्याह - **मयीति**। मयि भक्तिमात्रमेव तावदमृतत्वाय मुक्तये कल्पते। यत्तु भवतीनां मयि स्नेहः आसीत् तद्दिष्ट्याऽतिभद्रम्। कुतः ? मदापनः मत्प्रापणः ॥४५॥

कीदृशस्त्वम् ? यं वयं स्नेहेन प्राप्स्यामहे इत्यपेक्षायामात्मनो याथात्म्यमाह - **अहमिति**। आदिः सृष्टिकारणम्, अन्तः लयकारणम्, अन्तरमन्तरात्मा बहिश्च व्याप्य स्थितः इत्यर्थः। अन्तर्बहिश्च सद्भावे दृष्टान्तार्थमाह - भौतिकानामिति। हे अङ्गनाः ! खमाकाशः, वाः जलम्, भूः पृथ्वी, खादीनि यथा भौतिकानां भूतपरिणामात्मकानां देवमनुष्यादिशरीराणामन्तर्बहिश्च वर्तन्ते ॥ ४६ ॥

एवं दृष्टान्तमुखेन शिक्षितमर्थं दार्ष्टान्तिके सङ्गमयति - **एवमिति**। एतान्याकाशादीनि तत्कार्यरूपाणि देवादि शरीरात्मकानि च भूतानि भूतेषु आत्मा तेषु भूतेषु स्थित आत्मा जीवात्मा च आत्मना मया अन्तर्बहिश्च, व्याप्यन्त इति

**शेषः**। ततः तस्मादुभयं चेतन मचेतनञ्च वस्तुजातं अक्षरेऽन्तर्बहिश्च व्याप्य वर्तमानेऽपि व्याप्यगत विकाररहिते मय्याभातं प्रमितं पश्यत। मयीत्यनेन धारकत्वमुक्तम्। आत्मनेत्यनेन अन्तःप्रविश्यप्रशासितृत्वञ्च अन्तः प्रविश्य नियमनं हि आत्म शब्दप्रवृत्तिनिमित्तम् ॥ ४७ ॥

**अध्यात्मशिक्षयेति**। आत्मनि अध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः। स्वात्मपरमात्म याथात्म्यविषयज्ञानमित्यर्थः। तस्य शिक्षया सम्यगुपदेशेन साधनेन इत्थं कृष्णेन कर्त्रा शिक्षिता गोप्यः तस्य भगवदुपदिष्टात्मयाथात्म्यस्य अनुस्मरणेन मननपूर्वकनिदिध्यासनेन ध्वस्तः जीवकोशः कोशवदावरकं कर्म मूलमज्ञानं यासां ताः, तं भगवन्तम् अध्यगन् प्रापुः क्रमेण मुक्ता बभूवुरित्यर्थः ॥ ४८ ॥

तदा तदुपदिष्टाध्यात्मानुस्मरणविरोधिमोहोपशमनाय मनसः तदङ्घ्रिप्रावण्यं प्रार्थयमानाः प्राहुः च इत्याह - **आहुश्चेति**। उक्तिमेवाह - त इत्यादिना। हे नलिननाभ! अगाधोऽपारो बोधः ज्ञानं येषां तैः योगेश्वरैः हृदि विचिन्त्यं केवलं चिन्त्यमेव, न तु दृश्यम्। संसारकूपे पतितानां उत्तरणाय[1] अवलम्बमालम्बनभूतं ते तव पदाम्बुजं देहधारिणां नोऽस्माकं मनसि सदा उदियात् आविर्भवेत् यथावत् विषयीभवेत् इत्यर्थः ॥ ४९ ॥

**इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे**

**श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां**

**व्याख्यायां द्व्यशीतितमोऽऽध्यायः ॥ ८२ ॥**

---

1. B. उत्ता°



# त्र्यशीतितमोध्यायः

**श्रीशुक उवाच**

**तथाऽनुगृह्य[1] भगवान् गोपीनां [2-]स गुरुर्गतिः[-2] ।**
**युधिष्ठिरमथाऽपृच्छ त्सर्वांश्च सुहृदोऽव्ययम् ॥१॥**

**त एवं लोकनाथेन परिपृष्टास्सुसत्कृताः ।**
**[3-]प्रोचुः प्रहृष्ट[-3]मनस स्तत्पादेक्षाहतांहसः ॥२॥**

**कुतोऽशिवं त्वच्चरणाम्बुजासवं [4-]महन्मनस्तो मुखनिस्सृतं[-4] क्वचित् ।**
**पिबन्ति ये कर्णपुटै रलं प्रभो! देहम्भृतां देहकृदस्मृतिच्छिदम् ॥ ३ ॥**

**हित्वाऽऽत्मधाम विधुतात्मकृतत्र्यवस्थ मानन्द सम्प्लव मखण्डमकुण्ठ बोधम् ।**
**कालोपसृष्ट निगमावन आत्तयोग मायाकृतिं परमहंसगतिं नताः स्मः ॥४॥**

---

1. K.T.W. अथाऽ; M.I.V. ततोऽ 2- -2 K.T.W. सङ्गतिं गुरुः 3- -3 B.G.J.K.M.I.V. प्रत्यूचुर्हृष्ट 4- -4 K.T.W. महात्मनां सम्मुखानिर्वृतं

## श्रीधरस्वामि विरचिता भावार्थदीपिका

त्र्यशीतितम एवञ्च स्त्रीणां कृष्णकथोत्सवे। द्रौपद्यै कृष्णभार्याभि रुक्ताः स्वस्वकरग्रहाः ॥

**तथेति**। अव्ययम् कुशलम् ॥ १ ॥

**त** इति। तत्पादेक्षया हत मंहो येषां ते ॥ २ ॥

**कुत** इति। महतां मनस्तः [1]मनसस्सकाशा न्मुखद्वारतो निस्सृतं क्वचित्कदाचित् देहम्भृतां देहधारिण देहकृच्चाऽसावस्मृतिश्चाविद्यां तां छिनत्तीति तथा तं देहकृदीश्वरः तद्विषयाज्ञानच्छिदं वा ॥३॥

हि, त्वा इति पदद्वयम्। त्वा त्वां हि एव त्वामेव नताः स्मेत्यर्थः। कथम्भूतम्? आत्मधाम्ना स्वरूपप्रकाशेन विधुत निरस्ताः आत्मकृताः बुद्धिनिमित्ता स्तिस्रोऽवस्थाः यस्मिंस्तम्। अत एवाऽनन्दसम्प्लवं सर्वानन्दकदम्बरूपम् अखण्डश्चापरिच्छि यतो न कुण्ठः कुण्ठितो बोध श्चिच्छक्ति र्यस्य तम्। ननु एवं रूपता श्रीकृष्णस्य कुतः? अस्मदादिवद्देहप्रतीते रत आह

कालोपसृष्टेति। कालेनोपसृष्टा विप्लुताश्च ते निगमाश्च तेषा मवने रक्षार्थं मात्ता उपात्ता योगमायया आकृति र्नराकारमूर्ति र्येन तम्। परमहंसानां गतिं त्वाम्। अत स्तवैवंरूपत्वा दस्माकञ्च त्वन्माययैतत्सर्व वैपरीत्या त्वामेव नताः स्मेति। यद्वा, त्वामिति प्रकरणात् ज्ञातव्यम्। त्वां नताः स्म। किं कृत्वा, हित्वा, किम्, आत्मधाम आत्माशरीरं धाम गृहम् तञ्च तञ्च देहदैहिकसङ्गं परित्यज्येत्यर्थः। समान मन्यत् ॥४॥

---

1. B.J.Omit मनसः 2. B.Omits देह

## श्रीवीरराघवविदुषा लिखिता भागवत चन्द्रचन्द्रिका

**अथेति**। गुरुस्तत्वोपदेष्टा। भगवान्गोपीनां सङ्गतिं स्वपादारविन्दासक्तिं तथाऽस्त्वित्यनुगृह्य अथ युधिष्ठरं सर्वान् सुहृदश्च प्रति अव्ययमारोग्यमपृच्छत् ॥ १ ॥

त इति। ते युधिष्ठिरादयः तस्य भगवतः पादयोरीक्षया दर्शनेन हतं निरस्तं अंहः पाप ममङ्गलञ्च येषां ते। अत एव हृष्टं मनो येषां ते प्रत्यूचुः ॥ २ ॥

उक्तिमेवाह - कुत इति द्वाभ्याम्। त्वच्चरणाम्बुजासवं त्वत्पादाब्ज कथामृतमित्यर्थः। आसववन्मधुरं विषयविस्मापनञ्च ये कर्णपुटैः श्रोत्रचषकैः पिबन्ति त्वच्चरणाम्बुजं ये ध्यायन्तीत्यर्थः। तेषामशिवममङ्गलं कुतः? नास्त्येवेत्यर्थः। आसवत्वरूपणात्पिबन्तीत्युक्तम्। प्रसिद्धासवा दौत्कृष्ट्यम् वक्तुं विशिंषन्ति। महात्मनां सतः परिशुद्धान् मुखमेव पद्मं तस्मान्निस्सृतं देहसम्पादक मनादि अज्ञानं तां छिनत्तीति तथा तम्। प्रसिद्धामृतन्तु नैवंविधमिति भावः ॥ ३ ॥

**तमिति**। यस्य चरणाम्बुजामृत मेवंविधं तं त्वां नताः स्मः प्रणमामः। कथम्भूतम्? परमहंसानां गतिं प्राप्यं मुक्त्युपायभूतञ्च तदुपयुक्तं सौशील्यं वात्सल्यञ्चाहुः। कालेनोपसृष्टो विप्लुतो निगमो वेदः तस्यावने निमित्ते रक्षणार्थं वैदिकधर्ममर्यादापालनार्थमित्यर्थः। आत्ता परिगृहीता योगमाया स्वाश्चर्यशक्तियोगेन आकृति विग्रहो यस्य तम्। योगमायेत्यनेन आकृतेरकर्मायत्तत्वमुक्तम्। आत्मेत्यनेन स्वेच्छयैवोपात्तत्वम्। यद्यपि सङ्कल्पमात्रेणाऽपि निगमविरोधि दुष्कृद्विनाशसम्भवः, तथापि आश्रितवात्सल्यात् सौशील्याञ्च आत्तयोगमायाकृतिरिति भावः। आश्रितकार्यापदकज्ञानगुणयोगमाहुः। अखण्डः अविच्छन्नः अप्रतिहतः बोधः अनिष्टपरिहारेष्टप्रापणाद्युपयुक्तज्ञानं यस्य तम्। प्राप्यत्वोपयुक्तं गुणमाहुः आनन्दसम्प्लवमानन्दप्रवाहरूपम्। प्राप्यवैलक्ष्ण्य माहुः - तिस्रः अवस्थाः उत्पत्तिस्थितिसंहृतयः आत्मधाम्ना स्वतेजसा विधुता निर्धूताः आत्मकृताः स्वकृताः तिस्रः अवस्थाः यस्य तम्। अन्येषां सृष्ट्यादिकृत् स्वयं सृष्ट्याद्यविषयश्चेत्यर्थः ॥ ४ ॥

[1-] श्रीशुक उवाच [-1]

इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वन्धककैरवस्त्रियः ।
समेत्य गोविन्दकथामिथोऽगृणं स्त्रिलोकगीताः श्रुणु वर्णयामि[2] ते ॥ ५ ॥

द्रौपद्युवाच

हे वैदर्भ्य[3]च्युतो भद्रे हे जाम्बवति कौसले ।
हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे ॥ ६ ॥

हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान्स्वयम् ।
उपयेमे यथालोकमनुकुर्वन् स्वमायया ॥ ७ ॥

रुक्मिण्युवाच

चैद्याय माऽर्पयितुमुद्यत कार्मुकेषु राजस्वजेय भट शेखरिताङ्घ्रि रेणुः ।
निन्ये मृगेन्द्र इव भाग [4-] मजावियूथा [-4] त्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ ८ ॥

1--1 B.G.J. ऋषिरुवाच 2. K. यामहे 3. K.MI.T.V.W. "च्युते 4--4 MI.V. मजोऽपि यद्धा

श्रीध० इतीति। त्रिषु लोकेषु गीताः ॥ ५ ॥

हे वैदर्भीति। कौसले हे सत्ये! शैब्ये हे मित्रविन्दे! रोहिणी नाम काचित्पट्टमहिषी तुल्या ॥ ६ ॥

हे कृष्णपत्न्य इति। हे अन्याः श्रीकृष्णस्य पत्न्यः ॥ ७ ॥

चैद्याय इति। मा माम्, अर्पयितुं सम्पादयितुं राजसु जरासन्धादिषु उद्यतकार्मुकेषु सत्सु अजेया ये भटास्तेषां शेखरिताः [1]मुकुटवत्कृताः अङ्घ्रिरेणवो येन तेषां मूर्ध्नि पदं दधतीत्यर्थः। तस्य श्रीनिकेतस्य चरणो ममाऽर्चनायास्तु ॥ ८ ॥

1. MI.V. मकुट

**वीर० इतीति**। उत्तमश्लोकानां पुण्यकीर्तीनाम् उत्तमं[-1] श्रीकृष्णं इत्थं जनेष्वभिष्टुवत्सु सत्सु परितः स्तोत्रं कुर्वत्सु सत्सु अन्धकानां कौरवाणाञ्च स्त्रियः समेत्य सङ्घीभूय मिथो गोविन्दस्य कथा अगृणन् कथयामासुः। ताः त्रिषु लोकेषु गीताः कथा वयं वर्णयामहे। त्वं श्रुण्विति शुकोक्तिः ॥ ५ ॥

इत्थं प्रतिज्ञाय तावत्ताः प्रस्तोतुं श्रीकृष्णपत्नीः प्रति द्रौपदीप्रश्नमाह - वैदर्भीत्यादि द्वाभ्याम्। अच्युते इति वैदर्भी विशेषणम्। नित्यानपायिनीत्यर्थः। हे कौसल्ये सत्ये हे शैब्ये! मित्रविन्दे! रोहिणीनाम काचित्पट्टमहिषी तुल्या ॥ ६ ॥

अन्याः कृष्णपत्नीः युगपत्सम्बोधयति - हे कृष्णपत्न्य इति। एतत् नोऽस्मभ्यं ब्रूत इति। यदयं भगवान् श्रीकृष्णः स्वमायया स्वसङ्कल्पेन लोकमनुकुर्वन् यथा भवतीरुपयेमे उदूढवानित्येतत् ॥ ७ ॥

एवमापृष्टासु तावद्रुक्मिणी प्राह - चैद्यायेति। मां **चैद्याय** शिशुपालाय अर्पयितुं दापयितुं राजसु चैद्यपक्षीयेषु उद्यतकार्मुकेषु उद्धृतचापेषु सत्सु अजेया भटास्तेषां शेखरिताः मुकुटवत्कृताः अङ्घ्रिरेणवो येन सः तेषां मूर्ध्नि पदं निदधदित्यर्थः। स भगवान् मृगेन्द्रः सिंहः अजानामवीनाञ्च यूथात् स्वभागमिव मां नित्ये आनीतवान्। अत्र उद्यतकार्मुक राजन्य यूथस्य अजावियूथतुल्यताऽभिप्रेता। तस्य भगवतः श्रीनिकेतचरणः श्रीमत्पादारविन्दं ममार्चनाय परिचर्यार्थमस्तु। तच्छ्रीनिकेतचरणं सदाऽहं परिचरेयमिति प्राथना ॥ ८ ॥

---

1--1 K.T.W. श्लोकोत्तमं"

**सत्यभामोवाच**

**यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ।**
**जित्वर्क्षराजमथ रत्नमदा त्सतेन भीतः पिताऽदिशत मां प्रभवोऽपि दत्ताम् ॥ ९ ॥**

**जाम्बवत्युवाच**

**प्राज्ञाय[1] देहकृदमुं निजनाथदेवं सीतापतिं त्रिनवहान्यमुनाऽभ्ययुध्यत् ।**
**ज्ञात्वा परीक्षित[2] उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽह ममुष्य दासी ॥ १० ॥**

**कालिन्द्युवाच**

**तपश्चरन्ती माज्ञाय स्वपादस्पर्शनेच्छया[3] ।**
**सख्योपेत्याऽग्रहीत्पाणिं यो[4]ऽहं तद्गृहमार्जनी ॥ ११ ॥**

**भद्रोवाच**

**यो मां स्वयंवर उपेत्य विजित्य भूपान् निन्ये श्वयूथगमिवात्मबलिं द्विपारिः ।**
**भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियैका स्तस्यास्तु मेऽनुभवमङ्घ्र्यवनेजनीत्वम्[5] ॥ १२ ॥**

---

1. G. प्र° ; K. अ° 2. Ml.V. तं 3. B.G.J. नाशया ;K.T.W. काम्यया 4. Ml.V. साऽहं 5. B.G.J. जन° ;Ml.V. जनि°

**श्रीध० य** इति। सनाभे र्भ्रातुर्वधेन सिंहकृतेन तप्तं हृद्यस्य तेन मे ततेन तातेन लिप्तमभिशापं दुर्यशोऽपमार्ष्टुं परिहर्तुमृक्षराजं जित्वा रत्नं स्यमन्तकमुपाजहार आनीतवान्। अथानन्तरं मत्पित्रे रत्नमदात्। तेन स्वापराधेन भीतस्स मे पिता प्रभवे श्रीकृष्णाय माममदिशत अदिशत्[1] ददौ, दत्तामक्रूरादिभ्यः प्रतिश्रुतामपीत्यर्थः ॥ ९ ॥

**प्राज्ञायेति**। देहकृत् पिता अमुं श्रीकृष्णं निजनाथं स्वामिनं देवमीश्वरं सीतापतिं प्राज्ञाय अविज्ञाय त्रिनवहानि। ह्रस्वश्छन्दोनुरोधेन सप्तविंशतिदिनानि अमुना अभ्ययुध्यत् परीक्षितः सञ्जाता परीक्षा यस्य स परीक्षितः तं साक्षात्सीतापति रेवाऽसाविति ज्ञात्वा पादौ प्रगृह्य मणिना सह मामर्हणमुपाहरत् अर्हणतया समर्पितवान्। अहो! तर्हि त्वमतिश्रेष्ठाऽसि? नेत्याह - अमुष्य अहं दासीति ॥ १० ॥

**तप** इति। सख्या अर्जुनेन तस्य गृहमार्जनी गृहेसम्मार्जनकर्त्री ॥ ११ ॥

**य** इति। शुनां यूथगतं स्वबलिं द्विपारिः सिंह इवेति मे भ्रातुश्च अपकुरुतोऽपकारं कुर्वतो विजित्य श्रियैको लक्ष्मीनिवासः तस्य अङ्घ्र्यवनेजनत्वं चरणक्षालनकर्तृत्वमनुभवं प्रति जन्म मेऽस्तु ॥ १२ ॥

---

1. B.J. omit अदिशत्

**वीर०** अथ सत्यभामोक्तिमाह - य इति। सनाभेर्भ्रातुः प्रसेनस्य वधेन सिंहकर्तृकेण तप्तं हृदयं यस्य तेन ततेन अस्मत्पित्रा लिप्तमापादितमभिशापं दुर्यशोऽपमार्ष्टुमपनेतुम्, ऋक्षराजं जाम्बवन्तं जित्वा रत्नं शमन्तकाख्यमुपाजहार आनीतवान्। अथ अनन्तरं मत्पित्रे रत्नमदाद्ददौ। तेन स्वापराधेन भीतः स मे पिता प्रभवेऽस्मत्स्वामिने श्रीकृष्णाय , दत्तामक्रूरादिभ्यः प्रतिश्रुतामपि माम् अपि शब्दाद्रत्नमपि अदिशद्ददौ इत्यर्थः ॥ ९ ॥

अथ जाम्बवती जगौ - अज्ञायेति। देहकृन्मम पिता जाम्बवान् अमुं श्रीकृष्णं निजनाथं स्वस्वामिनं स्वकुलदैवतञ्च सीतापतिमज्ञाय, अज्ञात्वेत्यर्थः। ल्यबार्षः। अमुना श्रीकृष्णेन सह त्रिनवहानि सप्तविंशत्यहानि। अत्यन्तसंयोगे

द्वितीया। छन्दोभङ्गाभावाय ह्रस्व आर्षः। शकन्ध्वादित्वात्पररूपं वा। अयुध्यत् युयोध। ततः परीक्षितः परीक्षाऽस्य सञ्जातेति तथा स मम पिता ज्ञात्वा सीतापतिरेवाऽसा वधुना यदुष्ववतीर्ण इति ज्ञात्वेत्यर्थः। पादौ प्रगृह्य पादग्रहणपूर्वकं प्रसाद्य मणिना सह मामर्हण मुपायनमुपाहरत् समर्पितवान्। अहममुष्य भगवतो दासी यावदात्मभावि दास्यं कुर्यामिति प्रार्थना ज्ञेया ॥ १० ॥

अथ कालिन्दी जगौ - तपश्चरन्तीमिति। स्वस्य भगवतः पादस्पर्शकाम्यया[1] पादसंवाहनादिपरिचर्या चिकीर्षया तपः कुर्वतीं मां ज्ञात्वा सख्या अर्जुनेन सहाऽऽगत्य मम पाणिमग्रहीत्। इत्थं गृहीताऽहं तस्य भगवतो गृहमार्जनी गृहान्मार्जयतीति तथाभूता भवेयम् ॥ ११ ॥

अथ भद्रागीतिमाह - **य** इति। शुनां यूथगतं स्वबलिं द्विपारिस्सिंह इव नृपानपकुर्वतः मे भ्रातृंश्च विजित्य यः श्रियौकाः श्रीनिवासः मां पुरं द्वारकां प्रति निन्ये आनीतवान् तस्य श्रियौकसः अङ्घ्र्यवनेजनीत्वं चरणक्षालनकर्तृत्वं ममाऽनुभवं प्रतिजन्म अस्तु स्यात् ॥ १२ ॥

---

1. B. °नाशया

**सत्योवाच** (नाग्नजिति )

**सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गान् पित्रा कृतान् क्षितिप वीर्यपरीक्षणाय ।**
**तान्वीर दुर्मदहनस्तरसा निगृह्य क्रीडान्बबन्ध ह यथा शिशवोऽजतोकान् ॥ १३ ॥**

**य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम्।**
**पथि[1] निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥ १४ ॥**

**मित्रविन्दोवाच**

**पिता मे मातुलेयाय स्वयमाहूय दत्तवान् ।**
**कृष्णे कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥ १५ ॥**

**अस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि ।**
**कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥ १६ ॥**

---

1. B. युधि

**श्रीध० सप्त** इति। सप्तोक्ष्णो वृषभान्, बलञ्च वीर्यञ्च सुतीक्ष्णशृङ्गाणि चाऽतिशयितानि येषां तान् मे पित्रा कृतान् सम्पादितान् बलीयसे परीक्षणाय तानतिप्रसिद्धान् वीराणां दुर्मदं घ्नन्ति ये तां स्तरसा शीघ्रमेव निगृह्य दमयित्वा क्रीडन् अनायासेनैव बबन्ध अजतोकान् अजापत्यानि ॥ १३ ॥

**य** इति। वीर्यमेव शुल्कं देयं यस्यास्तां दासीभिस्सह चतुरङ्गिणीं गजाश्वादिसेनायुक्तां मां पुरं निन्ये ॥ १४ ॥

**पितेति**। हे कृष्णे! हे द्रौपदि! तस्मिन्नेव चित्तं यस्यास्तां मामक्षौहिण्या सेनया सह सखीजनैश्च सह ॥ १५ ॥

**अस्येति**। पादसंस्पर्शेन आत्मनो मे तत्कैवल्याख्यं श्रेयो भवेत् सः यद्वा, येन कारणेनाऽत्मनो जीवस्य तच्छ्रेयः, स एव पुरुषार्थः इति ॥ १६ ॥

**वीर०** अथ नाग्नजिती गायति - **सप्तेति**। क्षितिपानां राज्ञां वीर्यस्य परीक्षणाय परीक्षार्थं मम पित्रा नग्नजिता कृतान् सम्पादितान् बलं वीर्यं प्रभावश्च सुतीक्ष्णशृङ्गाणि च तान्यतिशयितानि येषां तान् वीराणां दुष्टं मदं घ्नन्ति इति तथा तान् प्रसिद्धान् सप्त उक्ष्णः वृषभान् यथा शिशवो बालाः अजतोकान् अजापत्यानि तथा तरसा आशु निगृह्य दमयित्वा क्रीडन् अनायासेनैव बबन्ध ॥ १३ ॥

यो भगवान् युद्धे राजन्यान्निर्जित्य वीर्यमेव शुल्कं देयं द्रव्यं यस्यास्तां दासीभिस्सह चतुरङ्गिणीं गजाश्वादिसेनायुक्तां मां निन्ये तस्य भगवतो दास्यं ममाऽस्तु इति प्रार्थना ॥ १४ ॥

अथ मित्रविन्दा गायनमाह - पितेति द्वाभ्याम्। हे कृष्णे! द्रौपदि! मे इति पूर्वोत्तरान्त्र्यिपदम्। मम पिता स्वय माहूय मम मातुलसुताय श्रीकृष्णाय। तस्मिन् श्रीकृष्णे एव चित्तं यस्यास्तां मामक्षौहिण्या सखीजनैश्च सह दत्तवान् ॥ १५ ॥

अस्य श्रीकृष्णस्य पादसंस्पर्शः पादसंवाहनादिपरिचर्या मम प्रतिजन्म भवेत् अस्तु। इत्थं प्रार्थनायां हेतुत्वेन पादसंस्पर्शं येन विशिनष्टि येन तत्पादसंस्पर्शनेन आत्मनो मम कर्मभिः पुण्यपापात्मकैः भ्राम्यमाणायाः संसरन्त्याः श्रेयो निःश्रेयसं भवेत् ॥ १६ ॥

**लक्ष्मणोवाच**

**ममापि राज्ञ्यच्युतजन्मकर्म श्रुत्वा मुहुर्नारदगीतमास ह[1] ।**
**चित्तं मुकुन्दे किल पद्महस्तया वृतः सुसम्मृश्य विहाय लोकपान् ॥ १७ ॥**

**ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ।**

**बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥ १८ ॥**

**यथा स्वयंवरे राज्ञि ! मत्स्यः पार्थेप्सया कृतः ।**

**अयन्तु बहिराच्छन्नो दृश्यते स जले परम् ॥ १९ ॥**

**श्रुत्वैतत्सर्वतो भूपा आययुर्मत्पितुः पुरम् ।** [2]

**सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः॥ २० ॥**

---

1. MI.V. मासीत् 2. MI.V. उपेयुः

**श्रीध० ममेति**। राज्ञि ! हे द्रौपदि ! यथा मित्रविन्दायास्तथैव ममाऽपि चित्तं मुकुन्दविषयमासीत्। सुसम्मृश्य सुष्ठु विचार्य पद्महस्तया श्रिया वृतः किल। अतो ममाऽपि चित्तं श्रीमुकुन्दे आसेति ॥ १७ ॥

**ज्ञात्वेति**। तत्र श्रीकृष्णप्राप्तावुपायमचीकरत् कारयामास ॥ १८ ॥

**यथेति**। यथा राज्ञि! तव स्वयंवरे पार्थस्येप्सया आप्तुमिच्छया कृतः तथा मत्स्यं कारितवान्। पाठान्तरे पार्थस्यंषुणाऽपाकृतः, तर्हि इममप्यर्जुन एव किं नाऽध्यत्तत्राह - अयन्त्विति। समस्त्यो बहिरेवाच्छन्नो नाऽन्तः अतः, स्तम्भलग्नयोर्ध्वदृष्ट्या संलक्ष्यते, अयन्तु न तथा । किन्तु स्तम्भमूले निहितकलशजले केवलं दृश्यते। अतः दृष्टिरधस्ता दुपरि च लक्ष्यमिति श्रीकृष्णव्यतिरेकेण न कस्यापि भेद्य इति भावः ॥ १९,२० ॥

**वीर०** अथ लक्ष्मणागीतिं प्रपञ्चयति - ममाऽपीत्यादिना। हे राज्ञि! नारदेन गीतमच्युतस्य जन्मादिकं श्रुत्वा ममाऽपि यथा मित्रविन्दायास्तथा ममाऽपि चित्तं मुकुन्दे आसीदित्यर्थः। पद्महस्तया श्रिया तदवताररूपया रुक्मिण्येत्यर्थः। वृतः किल। अतोऽपि सुष्ठु विचार्य मम चित्तं मुकुन्दे आसेति सम्बन्धः ॥ १७ ॥

**ज्ञात्वेति**। हे साध्वि ! मम तमभिप्रायं ज्ञात्वा मम पिता बृहत्सेनोनाम दुहितृवत्सलः। अतस्तत्र श्रीकृष्णप्राप्तावुपाय मचीकरत् कारयामास ॥ १८ ॥

कोऽसावित्यतः तं प्रपञ्चयति - **यथेति**। हे राज्ञि ! यथा तव स्वयंवरे पार्थेप्सया अर्जुनप्राप्तेच्छया त्वत्पित्रा मत्स्यः कृतः तथा अस्मत्पित्राऽपि कृत इत्यर्थः। तर्ह्यर्जुन एव किं नाऽविध्यत्? तत्राऽऽह -अयन्त्विति। स मत्स्यो बहि रेवाऽऽच्छन्नो नान्तः स्तम्भसंलग्नयोर्ध्वदृष्ट्या दृश्यते अयन्तु न तथा, किन्तु स्तम्भमूलनिहितकलशजले केवलं दृश्यते।

अतः दृष्टिरधस्तात् उपरि च लक्ष्यमिति कृष्णमन्तरेण न कस्यापि भेद्य इति भावः। बहिराच्छन्नः प्रतिबिम्बस्य बिम्बभूतो मत्स्यस्तिरोहितः स मत्स्यप्रतिबिम्ब एव जले दृश्यते, प्रतिबिम्बेन बिम्बभूतमत्स्यस्यावस्थानं निरूप्य तत्र वेधो दुष्कर इति व्याख्यानान्तरम् ॥ १९ ॥

**श्रुत्वेति**। एतन्मत्स्ययन्त्रनिर्माणं श्रुत्वा सर्वतो दिग्भ्यः मत्पितुः पुरमाजग्मुः। कथम्भूताः? सर्वेषां शस्त्राणा मस्त्राणाञ्च तत्त्वं याथात्म्यं प्रयोगोपसंहारौ जानन्त इति तथा। उपाध्यायैस्सहिताश्च ॥ २० ॥

**पित्रा सम्पूजितास्सर्वे यथा वीर्यं यथा वयः ।**
**आददुस्सशरं चापं वेद्धुं पर्षदि मद्धियः ॥ २१ ॥**
**आदाय व्यसृजन् केचित् सज्यं[1] कर्तुमनीश्वराः ।**
**आकोटि[2] ज्यां समुत्कृष्य[3] पेतुरोकोऽमुना हताः ॥ २२ ॥**
**सज्यां कृत्वाऽ[4-4]परे वीराः मागधाम्बष्ठचेदिपाः[5] ।**
**भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितम्[6] ॥ २३ ॥**
**मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितम् ।**
**पार्थो यत्तोऽसृजद्बाणं नाऽच्छिनत्पस्पृशे परम् ॥ २४ ॥**

---

1. K. MI.T.V.W. सज्यो 2. B.G.J. आकोष्टं 3. MI.V. समाकृष्य 4- -4. MI.V. सज्जं धृत्वा 5. MI.V. धावन्ति चे 6. MI.V. माविदं

**श्रीध०** पित्रेति। मत्स्यं वेद्धुं पर्षदि संसदि मद्धियो धीर्येषामिति, अन्यचित्ता न वेद्धुशक्ता इति ॥ २१ ॥

तदेवाऽऽह - **आदायेति**। अमुना चापेन ॥ २२ ॥

**सज्यमिति**। नाऽविन्दं स्तदवस्थितिमिति मागधादीनां क्रियाशक्तिरेव न तु लक्ष्याभिज्ञतेत्यर्थः ॥ २३ ॥

**मत्स्येति**। यत्तो यत्नवान् असृजत् मुमोच। स बाणो मत्स्यं नाऽच्छिनत् परं केवलं पस्पर्श, ज्ञानवानप्यर्जुनो बलेनाऽपूर्ण इत्यर्थः ॥ २४ ॥

**वीर० पित्रेति**। मम पित्रा वीर्यवयःस्थानाद्यनुरूपं सर्वे सम्पूजिताः। मय्येव धीर्येषां ते मत्स्यं वेद्धुं पर्षदि सभायां सशरं चापमाददुः मद्धिय इत्यस्य अन्यचित्तत्वाञ्च वेद्धुं नाऽशक्नुवन्निति भावः ॥ २१ ॥

तदेवाह - **आदायेति**। केचिद्व्यसृजन् लक्ष्यादन्यत्र प्रयुक्तवन्त इत्यर्थः। केचित्तु आकोटिधनुषः कोटिपर्यन्तं ज्यां समाकृष्य सज्यीकर्तुं ज्यासहितं कर्तुम् , आरोपितज्याकं कर्तुमित्यर्थः। अनीश्वराः असमर्थाः अमुना चापेन हतास्ताडिताः निपेतुः ॥ २२ ॥

**सज्यमिति**। अपरे जरासन्धादयस्तु वीराः सज्यं कृत्वाऽपि लक्ष्यावस्थितिं नाऽविन्दन्। मागधादीनां क्रियाशक्तिरेव न तु लक्ष्याभिज्ञतेति भावः ॥ २३ ॥

मत्स्येति। पार्थोऽर्जुनस्तु जले मत्स्याभासं मत्स्यप्रतिबिम्बं वीक्ष्य तदवस्थितिं मत्स्ययन्त्रावस्थानदेशं ज्ञात्वा यत्तो यत्नवान् बाणं व्यसृजत् मुमोच। स बाणो मत्स्यं नाऽच्छिनत् परं केवलं पस्पर्श। ज्ञानवानप्यर्जुनो न वेद्धुं प्रबभूवेत्यर्थः ॥ २४ ॥

**राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु ।**
**भगवान्धनुरादाय सज्यं[1] कृत्वाऽथ लीलया ॥ २५ ॥**
**तस्मिन्सन्धाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ।**
**छित्वेषुणाऽपातयत्तं सूर्येचाऽभिजिति स्थिते ॥ २६ ॥**
**दिवि दुन्दुभयो नेदुर्जयशब्दयुता[2] भुवि ।**
**देवाश्च कुसुमासारान् मुमुचुर्हर्ष विह्वलाः ॥ २७ ॥**
**तद्रङ्गमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ।**
**नूत्ने निषीय परिधाय च कौशिकाग्र्ये स व्रीड हास वदना कबरी धृतस्रक् ॥ २८ ॥**

---

1. MI.V. सज्ज्ं 2. MI.V. पुनर्भुवि।

**श्रीध० तस्मिन्निति**। अभिजिति सर्वार्थसाधके मुहूर्ते ॥ २६, २७ ॥

भगवत्प्राप्तिहर्षनिर्भरेण आत्मानमेवाऽनुवर्णयन्त्याह द्वाभ्यां **तद्रङ्गमिति**। तत्तदा कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रङ्गं प्राविशं कनकेनोज्ज्वलां रत्नमालां निवीय प्रावृत्य परिधाय च नीवीबन्धेन च कौशिकाग्र्ये उत्तमकौशेयवस्त्रे सव्रीडो हासो यस्मिंस्तद्वदनं यस्यास्सा कबर्यां धृताः स्रजो यया सा ॥ २८ ॥

**वीर०** भगवांस्तु विव्याधेत्याह - राजन्येष्विति। मानिषु साहङ्कारेषु राजन्येषु भग्नमानेषु अत एव निवृत्तेषु च सत्सु सूर्ये अभिजितिस्थिते सर्वार्थसाधके मध्याह्ने इत्यर्थः। लीलया अनायासेनैव तस्मिन् धनुषि विशिखं बाणं सन्धाय सकृदेव जले वीक्ष्य इषुणा मत्स्यं छित्वा न्यपातयत् ॥ २५,२६ ॥

भुविजयशब्देन युताः (दुन्दुभयो) देवदुन्दुभयो नेदुः। यदा दिवि दुन्दुभयो नेदुस्तदैव भुवि जयशब्दा बभूवुरित्यर्थः ॥२७॥

भगवत्प्राप्तिजहर्षनिर्भरेण आत्मानमेवाऽनुवर्णयन्त्याह - तदिति द्वाभ्याम्। तत् तदा नूले नवीने कौशिकाग्र्ये उत्तम कौशिकेये वस्त्रे परिधाय सव्रीडो हासो यस्मिं स्तद्वदनं यस्याः कबर्यां धृताः स्रजो यया सा अहं कनकेनोज्ज्वलां रत्नमालां निवीय प्रगृह्य कलौ कलस्वनौ नूपुरौ ययो स्ताभ्यां पद्भ्यां रङ्गं प्राविशं प्रविष्टवत्यस्मि ॥ २८ ॥

**उन्नीयवक्त्रमुरुकुन्तलकुण्डलत्वि ड्गण्डस्थलं शिशिरहास कटाक्षमोक्षैः ।**
**राज्ञो निरीक्ष्य परितः शनकैर्मुरारे रंसोनुरक्त हृदया निदधे स्म[1] मालाम् ॥ २९ ॥**

**तावन्मृदङ्गपटहाः शङ्खभेर्यानकादयः ।**
**निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ ३० ॥**

**एवं वृते भगवति[2] मयेशे नृपयूथपाः ।**
**न सेहिरे याज्ञसेनि ! स्पर्धन्तो हृच्छयातुराः ॥ ३१ ॥**

**मां तवद्रथमारोप्य हयरत्नचतुष्टयम् ।**
**शार्ङ्गमुद्यम्य सन्नद्धस्तथा वाजौ चतुर्भुजः ॥ ३२ ॥**

**दारुकश्चोदयामास काञ्चनोपस्करं रथम् ।**
**मिषतां भूभुजां राज्ञि! मृगाणां मृगराडिव ॥ ३३ ॥**

**तेऽन्वसज्जन्त राजन्या निषेद्धुं पथि केचन ।**
**संयत्ता उद्धृतेष्वासा[3] ग्रामसिंहा यथा हरिम् ॥ ३४ ॥**

---

1. Ml.V. स्व° 2. K.T.W. यदुपतौ 3. K.T.W. उद्यते°

**श्रीध० उन्निन्येति**। उरवः कुन्तला यस्मिन् कुण्डलयोस्त्विषो ययोस्ते गण्डस्थले यस्मिंस्तच्च तच्च शिशरः सन्तापहरो हासो येषु तैः कटाक्षमोक्षै[1]रपाङ्गमोक्षणविलासैः अनुरक्तं हृदयं यस्यास्सा अहम् ॥ २९, ३० ॥

**याज्ञसेनि**! हे द्रौपदि! ईशे श्रीकृष्णे मया वृते सति स्पर्धन्तः स्पर्धमानाः। नन्वेवं परमैश्वर्यं दृष्टवतां कुतः स्पर्धावसरः, तत्राह - हृच्छयातुरा इति। हृच्छयेन कामेन आतुरा विवशाः। कामविजृम्भिता स्पर्धेति[2] भावः ॥ ३१ ॥

**मामिति** । हयरत्नानां चतुष्टयं यस्मिंस्तं रथम्। द्वाभ्यां भुजाभ्यां मामालिङ्ग्य द्वाभ्यां धनुर्बाणौ गृहीत्वा चतुर्भुजस्तस्थौ ॥ ३२ ॥

**दारुक** इति। मृगाणां मिषतां मृगराडिव तदा हरिर्जगामेति शेषो ज्ञातव्यः। दारुकस्यैव वा मृगराजोपमा ॥३३ ॥

**त** इति। अन्वसज्जन्त। पृष्ठतस्सक्ता बभूवुः। निषेद्धुं प्रतिबन्धं कर्तुं केचन पुरतो गत्वा पथि संयत्ता बभूवुरित्यर्थः। उद्धृतेष्वासाः ऊर्ध्वकृतचापाः[3] ग्रामसिंहाः श्वानो हरिं सिंहं यथेति ॥ ३४ ॥

---

1. MI.V. वीक्षण 2. MI.V. स्पर्धन्ते 3. MI.V. ऊर्ध्वी

**वीर० उन्नीयेति**। उरवः कुन्तलाः यस्मिन् कुण्डलयोस्त्विवस्त्वषो ययोस्ते गण्डस्थले यस्मिन् तञ्च वक्त्रम् उन्नीय परितश्शनै राज्ञो राजन्यान्निरीक्ष्य मुरारेः श्रीकृष्णस्य शिशिरः सन्तापहरः हासो येषु तैः कटाक्षमोक्षैरपाङ्गवीक्षणविलासैरनुरक्तं हृदयं चित्तं यस्याः साऽहं तस्य अंसे स्कन्धे मालां निदधे स्म निहितवत्यस्मि ॥ २९ ॥

**तावदिति**। तदैव नटा नर्तक्यश्च ननृतुः ॥ ३० ॥

**एवमिति**। इत्थं ईश्वरे भगवति मया वृते सति हे याज्ञसेनि! द्रौपदि! नृपयूथपाः हृच्छयेन कामेनाऽऽतुराः स्पर्धमाना न सेहिरे ॥ ३१ ॥

**मामिति**। हयरत्नाना मश्वश्रेष्ठानां चतुष्टयं यस्मिंस्तं रथ मारोप्य तस्मिन्निधाप्येत्यर्थः द्वाभ्यां भुजाभ्यां आलिङ्ग्य द्वाभ्यां धनुर्बाणान् गृहीत्वा चतुर्भुजो युद्धे तस्थावित्यर्थः ।। ३२ ।।

**दारुक** इति। काञ्चनेनोपस्कृतं रथं गमयामास। हे राज्ञि! मृगाणां क्षुद्राणां पश्यतां (सतां) मृगाधिपस्सिंह इव भूभुजां मिषतां सतां हरिर्जगामेति शेषोऽवगन्तव्यः ॥ ३३ ॥

**त इति**। केचन राजन्याः सन्नद्धा आयत्ताः उद्यताः इष्वासाश्चापा यैस्ते पथि निषेद्धुं वारयितुं अन्वसज्जन्त पृष्ठतोऽन्वधावन् यथा ग्रामसिंहाः श्वानः हरिं सिंहं तद्वत् ॥ ३४ ॥

**ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वङ्घ्रिकन्धराः ।**
**निपेतुः प्रधने केचिदेके सन्त्यज्य दुद्रुवुः ॥ ३५ ॥**

**ततः पुरीं यदुपतिरत्यलङ्कृतां रविच्छदध्वजपटचित्रतोरणाम् ।**
**कुशस्थलीं दिवि भुवि[2]चाऽभिसंस्तुतां समाविशत्तरणिरिव स्वकेतनम् ॥ ३६ ॥**

**पिता मे पूजयामास सुहृत्सम्बन्धिबान्धवान् ।**
**महार्हवासोऽलङ्कारैश्शय्यासनपरिच्छदैः ॥ ३७ ॥**

**दासीभिस्सर्वसम्पद्भिर्भटेभरथवाजिभिः ।**
**आयुधानि महार्हाणि ददौ [3]पूर्णस्य भक्तितः ॥ ३८ ॥**

**आत्मारामस्य तस्येमा वयं वै गृहदासिकाः ।**
**सर्वसङ्गनिवृत्त्याद्धा तपसा च बभूविम ॥ ३९ ॥**

---

1.K.T.W. कदने 2.K.T.W ऽनिशं; M1.V. ऽपिसं 3.K.T.W. पूर्णाय

**श्रीध० तत** इति। रविं छादयन्ति ते रविच्छदा ध्वजेषु पटा यस्यां चित्राणि तोरणानि यस्यां सैव सा च तां कुशस्थलीं द्वारकापुरीं यदुपतिः समाविशत् स्वकेतनं मण्डलमस्ताचलं वा ॥ ३५,३६ ॥

**पितेति**। महार्हवासःप्रभृतिभिः सुहृदादीन् पूजयामास ॥ ३७ ॥

**दासीभिरिति**। दास्यादिभिस्सह आयुधानि पूर्णायापि ददौ ॥ ३८ ॥

**आत्मारामस्येति** । इमाः अष्टौ वयं सर्वसङ्गनिवृत्या तपसा स्वधर्मेण अद्धा साक्षात् तस्य गृहदासिका बभूविम ॥ ३४ ॥

**वीर०** ते नृपाः कृत्ताश्छिन्नाः बाह्वादयो येषां ते केचित् प्रधने युद्धदेशे निपेतुः, केचित्तु सन्त्यज्य दुद्रुवुः ॥३५ ॥

**तत** इति। यदुपतिः श्रीकृष्णः पुरीं तत्राऽपि स्वगृहं समाविशदिति सम्बन्धः। यथा सूर्यः स्वकेतनं मण्डलमस्ताचलं वा, तद्वत्। कथम्भूतम्? परितोऽलङ्कृतां रविं छादयन्तीति तथा तेषु ध्वजेषु पटा यस्यां (पटानि) चित्राणि तोरणानि यस्यां सा चाऽसौ सा च ताम् ॥ ३६ ॥

**पितेति**। [1]अनर्घ्यवस्त्रादिभिः सुहृत्प्रभृतीन् पूजयामास ॥ ३७ ॥

**दासीभिरिति**। सर्वसम्पद्भिः सर्वाभरणभूषिताभिरित्यर्थः। हे राज्ञि! दास्यादिभिस्सह पारिबर्हम् उपायनं, पूर्णस्य अवाप्तसमस्तकामस्याऽपि भगवतो भक्तितो ददौ। पूर्णायेति पाठान्तरम् ॥ ३८ ॥

**आत्मारामस्येति**। इमाः अष्टौ वयं सर्वसङ्गनिवृत्त्या वैराग्येण तपसा च हेतुना तस्य भगवतः आत्मारामस्य निरवधिक स्वानन्दानुभवशीलस्य अद्धा साक्षात् गृहदासिका बभूविम ॥ ३९ ॥

---

1. K.T.W. अनर्घ

**षोडशसहस्रमहिष्य ऊचुः**

**भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नःक्षिति जये जितराज कन्याः ।**

**निर्मुच्य संसृतिविमोक्षमनुस्मरन्तीः पादाम्बुजं परिणिनाय य[1] आप्तकामः ॥ ४० ॥**

**न वयं साध्वि साम्राज्यं स्वाराज्यं भोज्यमप्युत ।**

**वैराज्यं पारमेष्ठ्यञ्च आनन्त्यं वा हरेः पदम् ॥ ४१ ॥**

**कामयामह एतस्य श्रीमत्पादरजः श्रियः ।**

**कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ ४२ ॥**

**व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः ।**

**गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ॥ ४३ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे

उत्तरार्धे तीर्थयात्रानुवर्णनं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

1. M.I.V. स

**श्रीध० भौममिति**। क्षितिजये दिग्विजये जितानां राज्ञां कन्याः नोऽस्मान् तेन रुद्धाः ज्ञात्वा ततो निर्मुच्य संसृतेर्विमोक्षो यस्मात् तत्पादाम्बुजमनुस्मरतीर्नः परिणिनाय उदवहत् आप्तकामोऽपि यः ॥ ४० ॥

**न वयमिति**। साम्राज्यादि न कामयामहे किन्तु एतस्य श्रीमत्पादरजो मूर्ध्ना वोढुं कामयामह इति। ननु तस्य गृहिण्यो यूयं सर्वसम्पद्भाजः किमेवं कामयध्वम्? अत आहुः - हे साध्वि! साम्राज्यं सार्वभौमपदं, स्वाराज्यमैन्द्रं पदं भोज्यं तदुभयभोगभाक्त्वं, विविधं राजत इति विराट् तस्य भावो वैराज्यम् अणिमादिसिद्धिभाक्त्वमित्यर्थः। पारमेष्ठ्यं

ब्रह्मपदं अनन्यं मोक्षं हरेः पदं तत्सालोक्यादि न तु कामयामह इति। यद्वा बह्वृचब्राह्मणोक्तक्रमेण प्रागादिदिक्चतुष्टयाधिपत्यानि साम्राज्य भौज्य स्वाराज्यवैराज्यानि व्याख्येयानि ॥ ४१ ॥

कामयामह इति। तत्किं तत्पादरज एव काम्यते, अत आहुः - श्रियः कुचकुङ्कुमगन्धाढ्यमिति ब्रह्मादि सेव्यया लक्ष्म्याऽपि सेवितत्वादिति भावः ॥ ४२ ॥

ननु, तर्ह्यतिदुर्लभत्वात्किं तद्वाञ्छया? अत आहुः - **व्रजस्त्रिय** इति। यद्यथा गावो गाः महात्मनोऽपि गाश्चारयतः पादस्पर्शञ्च गोपा यथा वाञ्छन्ति तद्वत् तत्पराणां सुलभ इति भावः ॥ ४३ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

**वीर०** अथ षोडशसहस्रपत्नीनां गीतिमाह चतुर्भिः - **भौममिति**। सगणं ससैन्यं भौमं नरकं निहत्य क्षितिजये दिग्विजये जितानां राज्ञां कन्याः अस्मान् तेन नरकेन रुद्धाः ज्ञात्वा ततो मोचयित्वा संसृतेर्विमोक्षो यस्मात् तत्पदाम्बुजमनुस्मरन्तीरस्मान् आप्तकामोऽपि परि णिनाय उपयेमे ॥ ४० ॥

**नेति**। हे साध्वि! वयं साम्राज्यादीनि न कामयामहे तत्र साम्राज्यं सार्वभौमपदं, स्वाराज्यं ऐन्द्रपदं कैवल्यं वा, भोज्यं तदुभयभोगभाक्त्वमित्यर्थः। पारमेष्ठ्यं ब्रह्मपदं आनन्त्यमिति स्वार्थेष्यञ्। अनन्तं हरेः पदमित्यर्थः ॥ ४१ ॥

तर्हि किं कामयध्वम्? तत्राऽऽहुः - एतस्य गदाभृतः, श्रियो लक्ष्म्याः कुचकुङ्कुमस्य गन्धेनाऽढ्यं श्रीमत्पादरजोमूर्ध्ना वोढुं कामयामह इति सम्बन्धः। श्रियः कुचकुङ्कुमगन्धाढ्यमित्यनेन ब्रह्मादिसेवितया श्रियाऽपि सेव्यमानत्वात् पादरज एव कामयामह इति सूचितम् ॥ ४२ ॥

**नन्विति**। दुर्लभत्वात्किं तद्वाञ्छया? इत्यत आहुः व्रजस्त्रिय इति। महात्मनः निरवधिक सौशील्ययुक्तात्मनः अत एव गावः गाः चारयतो भगवतः यत् यथा व्रजस्त्रियः पुलिन्द्यः आरण्यकस्त्रियः तृणानि वीरुधश्च पादस्पर्शं वाञ्छन्ति, तद्वत् वयमपि कामयामह इत्यर्थः। सौशील्यसौलभ्याद्यनन्तकल्याणगुणाकरस्य भगवतः पादरजः तद्दासानां सुलभमेवेति भावः। तृणवीरुधो वाञ्छन्तीत्यनेन तृणादीनामपि भगवत्सान्निध्यातिशयहितचैतन्यानां तदिच्छावत्त्वं सूचितम् ॥ ४३ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

# चतुरशीतितमोऽध्यायः

## श्रीशुक उवाच

श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः ।
कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्म[1]युरलमश्रुकलाऽऽकुलाक्ष्यः ॥ १ ॥

इति सम्भाषमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु ।
आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥ २ ॥

द्वैपायनो नारदश्च च्यवनो देवलोऽसितः ।
विश्वामित्रश्शतानन्दो भरद्वाजोऽथ गौतमः ॥ ३ ॥

रामस्सशिष्यो भगवान् वसिष्ठो गालवो भृगुः ।
पुलस्त्यः [2]कश्यपोऽत्रिश्च मार्कण्डेयो बृहस्पतिः ॥ ४ ॥

द्वितास्त्रितश्चैकतश्च ब्रह्मपुत्र[3]स्तथाऽङ्गिराः ।
अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥ ५ ॥

तान् दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः ।
पाण्डवाः कृष्णरामौ च प्रणे[4]मुर्विश्ववन्दितम् ॥ ६ ॥

---

1. B.G.J. °स्म्यु 2. MI.V. पुलगोऽ° 3. B.G.J. °त्रा° 4. K.T.W. °लोक

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्भिरधिकाशीतितमे मुनिसमागमे। वसुदेवमखोत्साहबन्धुप्रस्थापनादिकम् ॥

**श्रुत्वेति**। सुबलपुत्री गान्धारी, माधवी सुभद्रा, क्षितिपानां राज्ञां पत्न्यः स्वगोप्यः कृष्णभक्ता गोप्यः विसिस्म्युः विस्मयं चक्रुः ॥ १-६ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**श्रुत्वेति**। सबलपुत्री गान्धारी, याज्ञसेनी द्रौपदी, माधवी सुभद्रा, अथ तथा क्षितिपानां राज्ञां पत्न्यश्च उतापि च गोप्यः कृष्णभक्ता गोप्यश्च रुक्मिण्यादीनामखिलान्तरात्मनि भगवति कृष्णे हरौ अमलं निष्कपटं प्रणयानुबन्धं प्रेमपारतन्त्र्य युक्तं वच इति यावत्। श्रुत्वा सर्वाः पृथादयः अश्रुकलाभिः आनन्दाश्रुबिन्दुभिः आकुले व्याप्ते अक्षिणी यासां ताः, विसिस्म्युः विस्मयं चक्रुः ॥ १ ॥

**इतीति**। स्त्रीषु स्त्रीभिस्सह सम्भाषमाणासु सतीषु तथा नृषु पुरुषेषु तैस्सह सम्भाषमाणेषु सत्सु ॥ २ ॥

आगतान्मुनीन्निर्दिशति - **द्वैपायन** इति त्रिभिः ॥ ३ ॥

तत्र रामः [1-] परशुरामः ॥ ४ ॥

ब्रह्मपुत्र इत्यङ्गिरसो विशेषम् । अपरे निर्दिष्टेभ्योऽन्ये च ॥ ५ ॥

विश्ववन्दितान् कृत्स्नजगद्वन्द्यानित्यर्थः [-1] ॥ ६ ॥

1- -1.T.W. omit

**तानानर्चुस्तथा सर्वे सहरामोऽच्युतोऽर्चयत् ।**
**स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥ ७ ॥**

**उवाच सुखमासीनान् भगवान्धर्मगुप्तनुः ।**
**सदसस्तस्य महतो यतवाचोऽनुश्रुण्वतः ॥ ८ ॥**

**श्रीभगवानुवाच**

**अहो वयं जन्मभृतो लब्धं कात्स्न्येन तत्फलम् ।**
**देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥ ९ ॥**

**किं [2] न्वल्पतपसां नृणामर्चायां देवचक्षुषाम् ।**
**दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥ १० ॥**

1. B.G.J. MI.V. ॰र्यथा 2. B.G.J.MI.V. स्वल्प

**श्रीध० तानिति**। आनर्चुः अर्चितवन्तः ॥ ७ ॥

**उवाचेति**। धर्मगोप्त्री तनुर्यस्य स धर्मगुप्तनुः, यता नियता वाक् यस्य तस्य सदसः ॥ ८ ॥

**अहो** इति। जन्मभृतः सफलजन्मानः तत्फलं जन्मफलं किं तत्? यद्योगेश्वरदर्शनम् ॥ ९ ॥

किञ्च युष्माकं दर्शनमेव तावद्देवानामपि दुष्प्रापमस्माकन्तु स्पर्शनादिकमपि कथन्नु घटितमिति विस्मयेनाऽऽह - **किमिति**। स्वल्पतपसां तीर्थस्नानादिमात्रे तपोबुद्धिर्येषां तथाऽर्चायां प्रतिमायां देव इति चक्षुर्दृष्टिर्येषां तेषां योगेश्वरदर्शन[1]स्पर्शनादिकमिदं [2-]किं सम्भावितं न सम्भावितमित्यर्थः[-2] ॥ १० ॥

1. B.J. omit स्पर्शन 2.- -2 B.J. किमसम्भावितमित्यर्थः।

**वीर० तानिति**। [1-]यदा सर्वे आनर्चुः अर्चितवन्तः तदा सरामोऽच्युतः[-1] कृष्णोऽपि तान् स्वागतप्रश्नादिभिरर्चितवान् ॥७॥

**उवाचेति**। धर्मगोप्त्री तनुर्यस्य भगवान् यतवाचो मौनीभूतस्य महतो विपुलस्य तस्य सदसि सभायां अनुश्रुण्वतः सतः सुखमासीनान् तान् द्वैपायनादीनुवाच ॥ ८ ॥

तदेवाऽऽह -**अहो** इति पञ्चभिः[2]। हे मुनयः! वयं जन्मभृतः सफलजन्मानो बभूविम तत्फलं जन्मफलं कात्स्न्येनाऽस्माभिर्लब्धञ्च। किं तत्? यद्देवानामपि दुर्लभं योगिनां वो दर्शनमिति ॥ ९ ॥

कथञ्चेतद्घटितमिति विस्मयेनाऽऽह - **किञ्चिति**। अल्पं तपः पुण्यं येषां ते अर्चायां प्रतिमायामेव देवचक्षुर्देवताबुद्धिः येषां तेषामस्माकं वो दर्शनादिकं किन्नु कथं बभूवेत्यर्थः। प्रह्वशब्दः प्रणामपरः, प्रश्नःस्वागतप्रश्नः ॥ १० ॥

1- -1 T.W. omit 2. K.T.W. omit पञ्चभिः

**न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।**
**ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ११ ॥**

**नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः ।**
**उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्तसेवया ॥ १२ ॥**

**यस्याऽऽत्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ।**

**यस्तीर्थबुद्धिः[1-] सलिले[-1] न कर्हिचि ज्जनेष्वभिज्ञेषु स एव गोखरः ॥ १३ ॥**

**श्रीशुक उवाच**

**निशम्येत्थं भगवतः कृष्णस्याऽकुण्ठमेधसः ।**

**वचो दुरन्वयं विप्रास्तूष्णीमासन् भ्रमद्धियः ॥ १४ ॥**

1--1 K.T.W. °द्धिस्तु जले

**श्रीध०** एतत्प्रपञ्चयति - न **ह्यम्मयानीति** त्रिभिः ॥ ११ ॥

**नेति**। वाङ्मनसयोर्[1]प्युपासनाविषयत्वं यो वाचं ब्रह्मेत्युपास्ते यो मनो ब्रह्मेत्युपास्ते (छान्दो.उ.7-2-2) इति श्रुतेः। अघं तन्मूलमज्ञानं च अग्न्यादयो न हरन्ति। अत्र हेतुः - भेदकृतो भेदकर्तारः। यद्वा भेदबुद्धिं कुर्वतः पुंसः विपश्चितो निरस्तभेदाः ते तु मुहूर्तमात्रसेवयैवाऽघं घ्नन्तीति ॥ १२ ॥

अतः साधून्विहाय अन्यत्राऽऽत्मादिबुद्ध्या सज्जमानो[2]ऽतीवमन्द इत्याह - **यस्येति**। आत्मबुद्धिरहमिति बुद्धिः। त्रयो धातवो वातपित्तश्लेष्माणः प्रकृतयो यस्य तस्मिन् कुणपे शरीरे स्वधीः स्वीया इति बुद्धिः भौमे भू[3]मिविकारे [4]मृच्छिलादौ इज्यधीः देवताबुद्धिः, यद्यस्य तीर्थबुद्धि तीर्थमिति बुद्धिः अभिज्ञेषु तत्त्ववित्सु यस्य एताः बुद्धयो न सन्ति स एव गोष्वपि खरो दारुणो[5]ऽत्यविवेकी। यद्वा, गवां तृणादिभार वहः खरो गर्दभ इति ॥ १३ ॥

**निशम्येति**। दुरन्वयम् अननुरूपं भ्रमन्त्यनवस्थिता धीः[6] बुद्धिर्येषां ते ॥ १४ ॥

**वीर०** नन्वर्चायां देवचक्षुः पवित्रावहमपि किमिति त[1]त्तुच्छीकरोषीत्यत्राऽऽह - **न हीति**। अम्मयानि तीर्थानि मृण्मयाः शिलामयाश्च देवाश्च दर्शनादेव न पुनन्ति, किन्तु उरुकालेन। साधवस्तु दर्शनादेव पुनन्तीत्यर्थः। तीर्थानीति दृष्टान्तार्थम् ॥ ११ ॥

देवा उरुकालेनैव पुनन्तीत्येतत् प्रपञ्चयति - **नाग्निरिति**। भूजलादिशब्दैः तदभिमानिदेवताः लक्ष्यन्ते, ता अग्न्यादयश्चोपासिता भेदकृतः आत्मनि देहगतभेदं कुर्वाणस्याऽघं हरन्ति, उरुकालसेवया हरन्तीत्यर्थः। विपश्चितः साधवस्तु मुहूर्तसेवयैव हरन्ति इति। अघशब्देन तन्मूलमज्ञानञ्च विवक्षितम् ॥ १२॥

यत एवमतोऽर्चादेव चक्षुषं क्षिपन् अर्थान्तरमप्याह - **यस्येति**। यस्य पुंसः त्रिधातुके वातपित्तश्लेष्ममये कुणपे शवप्राये शरीरे आत्मबुद्धिः आत्माभिमानः कलत्रेषु दारेषु स्वधीः स्वकीयबुद्धिः, एवम् अहम्ममाभिमानौ उक्तौ पार्थिवप्रतिमादौ इज्यधीः देवताबुद्धिः जले गङ्गादिजले एव तीर्थबुद्धिः कर्हिचिदप्यभिज्ञेषु स्वात्मपरमात्मयाथात्म्याभिज्ञेषु भवादृशेषु नेज्यधीः न तीर्थबुद्धिश्च स पुमान् गोखर एव गोप्रायः खरप्रायश्च। यद्वा, गवां सम्बन्धी खरः तदर्थतृणभारार्थखरसदृशः, अतीव अज्ञ इत्यर्थः। न हि निन्दान्यायेनेयं साधुजनप्रशंसा ॥ १३ ॥

**निशम्येति**। अकुण्ठा प्रतिहतिरहिता मेधा यस्य तस्य भगवतः कृष्णस्य दुरन्वयम् अननुरूपं वचो निशम्य भ्रमन्ती अनवस्थिता धीर्येषां तथाभूताः तूष्णीमासन् अहो स्वभजनाऽऽहितमाहात्म्यान् अस्मानयं स्वस्मादुत्कृष्टतमान् वदति अतो विपरीतमेतद्वच इत्येवं तावत् भ्रमद्धियः इत्यर्थः ॥ १४ ॥

1. B omits तत्

**चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् ।**
**जनसङ्ग्रह[1] इत्यूचुः स्मयन्त स्तं जगद्गुरुम् ॥ १५ ॥**

**मुनय ऊचुः**

**यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वरा[2] ।**
**यदीशतव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥ १६ ॥**

**अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न [3-]तत्र बध्यते[-3] ।**
**भौमैर्हि भूमिर्बहुमानरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥ १७ ॥**

**अथाऽपि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय च[4] ।**
**स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥ १८ ॥**

1. K.T.W. °हमि° 2. B.G.J.Ml.V. °राः 3- -3. B.G.J. बध्यते यथा ;K.T.W. सज्यते यथा 4. Ml.V.Omit च

**श्रीध० चिरमिति**। ईशितव्यतामनीश्वरतां कर्माधिकारितां जनसङ्ग्रहमात्रमेतदित्यूचुः, [1-]स्मयन्तो स्मयमानाः[-1] हसन्तः ॥ १५ ॥

दुरन्वयं विवृण्वन्त आहु र्द्वाभ्यां **यन्मायेति**। तत्त्ववित्सूत्तमा अपि वयं काऽसौ माया यया विमोहिता इति तामाहुः- यदिति। यद्यस्मात् ईहया नरचेष्टितेन गूढस्सन् ईशितव्यायति अनीश्वरवदाचरति भवान्। नन्वहमीश्वरश्चेत् किमित्येवमाचरेयम्? तत्राऽऽहुः - अहो इति। भगवतः तव विचेष्टितं विचित्रम[2]वितर्क्यमेव ॥ १६ ॥

भगवत्त्वमेवाऽऽहुः - **अनीह** इति। अनीहोऽक्रिय एव आत्मना स्वरूपमात्रेण। बहुधेत्यत्र दृष्टान्तः यथा भौमैरिति। भौमैः घटादिविकारैः उपलक्षिता 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छान्दो.उ.6-1-5) इति श्रुतेः। ननु कथमहं जगत्सृष्ट्यादिकर्ता [3]देवकीवसुदेवपुत्रत्वादिति तत्राऽऽहुः - अहो इति। विभून्नः परिपूर्णस्य तवेदं जन्मादिचरितं विडम्बनमनुकरणमात्रं, न तु तत्त्वमिति ॥ १७ ॥

जनसङ्ग्रहमाहुः - **अथापीति** त्रिभिः। सत्त्वं शुद्धसत्त्वात्मकं रूपं बिभर्षि स्वलीलया आचारेण वेदपथञ्च बिभर्षि ॥१८॥

1--1 B.J. omit 2. B.J. °मतर्क्य° 3. B.J. omit देवकी

**वीर० चिरमिति**। जनसङ्ग्रहम् अकृत्स्नविदो जनाः इत्थं साधून् भजेयुः इत्येवंविधजनानुग्रहरूपम् ईश्वरस्य भगवतः ईशितव्यतां (कर्माधिकारितां) चिरमालोच्य स्मयन्त ईषद्धसन्तः जगद्गुरुं कृष्णं प्रति इत्थं वक्ष्यमाणप्रकारेण ऊचुरित्यन्वयः ॥ १५ ॥

तमेवाऽऽह - **यदिति**। हे विश्वसृजां ब्रह्मादीनामधीश्वर! तत्त्वविच्छ्रेष्ठा अपि वयं त्वन्मायया विमोहितास्ताव त्त्वदभिप्रायं जनसङ्ग्रहात्मकमवगन्तुमसमर्था बभूविमेत्यर्थः। कोऽसावभिप्रायः इत्यतस्तं निर्दिशन्ति, यदिति। गूढ ईहयेति सर्वेश्वरोऽपि भगवानीहया गूढः मनुष्यचेष्टया छन्नः ईशितव्ययति ईशितव्यवत् कर्मवश्यवत् आचरतीत्यर्थः। यत एवं तस्मादहो भगवतस्तव चेष्टितमहो विचित्रमतिविचित्रमित्यर्थः। यद्वा, तत्वविदुत्तमा अपि तावत्त्वन्मायया मोहिता इति चित्रम्। ईश्वरोऽपि ईहया गूढस्सन् ईशितव्यायति इति यत् तद्भगवतस्तव चेष्टितमहो विचित्रमित्यर्थः। 'यदीशतव्याः स तु गूढ ईहया 'इति पाठे तु यस्येशितव्या वयं स ईश्वरो मनुष्यचेष्टया छन्न इत्यर्थः ॥ १६ ॥

विश्वसृजामधीश्वरत्वे सम्बोधनाभिप्रेतं कृत्स्नजगत्स्रष्टृत्वं व्यञ्जयन्तो विस्मयन्ते - **अनीह** इति। अनीहः कर्मायत्त चेष्टारहितः भवानेकः कारणावस्थायामेक एव सन् आत्मनैतज्जगत् बहुधा सृजति। बहुधेत्यनेन नामरूपविभागनिबन्धनं बहुत्वविवक्षितम्। एक इत्यनेन तु तत्प्रतिसम्बन्ध्येकत्वम् तदयमर्थः - व्याकरिष्यमाणकार्यावस्थचिदचिद्गतनामरूप विभाग निबन्धनबहुत्वप्रतिसम्बन्धितदविभागनिबन्धनैकत्वापन्नचिदचिच्छरीरकतया एकत्वव्यपदेशार्होपादानकारणतया तावदवस्थितो बहुधैतज्जगत्सृजतीति। एवञ्च, एक इत्यनेनोपादानत्वं फलितं सृजतीति। कर्तृत्वनिर्देशान्निमित्तत्वम् आत्मनेत्यनेन

स्वस्यैवोपकरणत्वं वदतोपकरणान्तरनिरपेक्षत्वम् अवति रक्षति, अत्ति संहरते च। अथाऽपि न सज्जते। सृज्यचिदचिद्गतैर्दोषैर्न स्पृश्यते इत्यर्थः। अनेनोपादानत्वप्रयुक्तविकाराश्रयत्वप्रसङ्गः परिहृतः। विकाराणां चिदचिद्द्वारकत्वेन स्वतो न सृज्यत इति भावः। एकस्यैव सतोऽनेकधापत्तौ दृष्टान्तः - यथा भौमैः भूमिः बहुनामरूपिणीति यथा एकैव मृत् भौमैस्तदविकारैः घटशरावमणिकादिभिः बहूनि रूपाण्यवस्थास्सन्तीति तथाभूता। तथैकोऽपि भगवान् बहुरूपो बभूवेत्यर्थः। विभूम्नो भगवतः तवेदं चरितं विडम्बनमनुकरणम् अहो अति विचित्रमित्यर्थः ॥ १७ ॥

ननु, नाऽहं विश्वसृजामधीश्वरः, अपि तु वसुदेवसुतः, अन्यथा सर्वेश्वरस्यैवं मनुष्यतापत्तिर्न घटत इत्यत आहुः - **अथापीति**। यद्यपि ईश्वरः, तथाऽपि स्वजनानां स्वभक्तानां साधूनामभिगुप्तये परित्राणाय खलानां दुष्कृतां निग्रहाय च सत्त्वं शुद्धसत्त्वमयं रूपं बिभर्षि स्वलीलारूपेण आचारेण सनातनं वेदपथं च बिभर्षि पुष्णासि। कथम्भूतः? परः प्रकृतिपुरुषविलक्षणः पुरुषोऽपि वर्णाश्रमात्मा वर्णाश्रमोपलक्षितजीवात्मेव सन्नित्यर्थः। यद्वा एवं वर्णाश्रमात्मा वर्णाश्रमयुक्त जीवात्मा इव प्रतीयमानोऽपि भवान् परः पुरुषः परमपुरुष एवेत्यर्थः ॥ १८ ॥

**ब्रह्म ते हृदयं शुक्लं तपस्स्वाध्यायसंयमैः ।**
**यत्रोपलब्धं सद्व्यक्तमव्यक्तञ्च ततः परम् ॥ १९ ॥**

**तस्माद्ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्[1]तवात्मनः ।**
**सभाजयसि स[2]द्धाम तद्ब्रह्मण्यग्रणीर्भवान् ॥ २० ॥**

**अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः ।**
**त्वया सङ्गम्य सद्गत्या य[3]देतत् श्रेयसां पर[4]म् ॥ २१ ॥**

**नमस्तस्मै भगवते कृष्णायाऽकुण्ठमेधसे ।**
**स्वयोगमाययाच्छन्नमहिम्ने परमात्मने ॥ २२ ॥**

---

1. B.G.J. °स्त्वमा° ;K.T.W. °र्महा° 2. K त° 3. B.G.J. यदन्तः ;Ml.V. यत्त्वं निश्श्रे° 4. B.G.J.Ml.V. परः।

**श्रीध०** अत एव ब्राह्मणेषु बहुमानमपि करोषीति सहेतुकमाहुः - **ब्रह्मेति**। ब्रह्म वेदाख्यं शुक्लं शुद्धं ते हृदयमन्तरङ्गं रूपं कुतः इत्यत आहुः - यत्रेति। यत्र ब्रह्मणि व्यक्तं कार्यम्, अव्यक्तं कारणं ततः परं सत् सन्मात्रं ब्रह्म च तप आदिभिरुपलब्धं तद्ब्रह्म ॥ १९ ॥

**तस्मादिति**। तस्माद्वेद हृदयत्वात् वेदप्रवर्तकं ब्राह्मणकुलं शास्त्रयोनेः वेदप्रमाणकस्य तव सद्धाम श्रेष्ठमुपलब्धि स्थानं सभाजयसि सम्पूजयसि। तत् तस्मादेव कारणात् त्वं ब्रह्मण्यानामग्रणीः मुख्यः तत्प्रवर्तकस्सन् कर्माचरसीत्यर्थः ॥ २० ॥

तस्मादीश्वरस्य तवेदं जनसङ्ग्रहमात्रं वयं तु तव सङ्गत्या कृतार्था इत्याहुः - **अथेति** षड्भिः। सतां गत्या त्वया सङ्गम्य सङ्गं प्राप्य यत् यस्मात् त्वं श्रेयसां[1] परोऽवधिः ॥ २१,२२ ॥

---

1. MI.V. निश्श्रे°

**वीर०** यतो वेद (मयं) पथं बिभर्षि अत एव ब्राह्मणान् बहुमन्यसे इत्याहुः - ब्रह्मेति द्वाभ्याम्। शुद्धं भ्रमविप्रलिप्सादि पुरुषदोषासंस्पृष्टं ब्रह्म वेदः ते तव हृदयम् अन्तरङ्गं तद्ब्रह्म विशिंषन्ति तप इत्यदिना। यत्र यतो वेदा तपादिभिस्सह सत् परमार्थं व्यक्तं कार्यम् अव्यक्तं कारणम्। यद्वा, व्यक्तं शरीरम्, अव्यक्तं आत्मस्वरूपं ततस्ताभ्यां परं विलक्षणं परमात्मस्वरूपञ्च उपलब्धं यथावदवगतं यत्तत्त्वत्रय तप आदि याथात्म्यावेदकं ब्रह्म तत्तव हृदयमित्यर्थः। तत्र तपोऽनशनादिरूपं,स्वाध्यायोऽध्ययनं,संयमः वर्णाश्रमानुरूपो धर्मः ॥ १९ ॥

**तस्मादिति**। यस्मादुक्तविधं ब्रह्म तव हृदयं तस्मादित्यर्थः। शास्त्रं वेदः योनिः स्वप्रमितिकारणं यस्य तस्य सर्वान्तरात्मनस्तव ब्रह्मकुलं स्थानम् उपलब्धिस्थानं त्वद् याथात्म्यावबोधकवेदाधारभूतमित्यर्थः। एवं हेतुनिर्देशः तस्मात्तद्धाम ब्राह्मणकुलरूपं धाम सभाजयसि बहुमन्यसे। किञ्च ब्रह्मण्यानां ब्राह्मणान् बहुमन्यमानानां अग्रणीः श्रेष्ठश्च भवान् अतोऽपि सभाजयसीति भावः ॥ २०॥

आत्मनां कृतार्थतामाविष्कुर्वन्ति - **अद्येति**। सतां साधूनां गत्या प्राप्यप्रापकभूतेन त्वया सङ्गम्य नोऽस्माकम् अद्य जन्मसाफल्यं जातं तथा विद्यायाः तपसो दृशोर्नेत्रयोश्च साफल्यमित्यन्वयः। कुतः? यत् यतः एतत्त्वत्सङ्गमनं श्रेयसामपि परमुत्कृष्टं श्रेयः ॥ २१ ॥

किञ्च, यथावद्विज्ञातुं न शक्नुम इत्यभिप्रायेण प्रणेमुः - **तस्मा** इति। स्वयोगमायया स्वासाधारणाश्चर्यशक्त्या छन्नो गूढो महिमा ऐश्वर्यं यस्य तस्मै परमात्मनेऽन्तःप्रविश्य प्रशासनेन भर्त्रे ॥ २२ ॥

**न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः ।**
**मायायवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥ २३ ॥**

**यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक् ।**
**नाममात्रेन्द्रियाभातं न वेद रहितं परम् ॥ २४ ॥**

**एवं त्वा[2] नाममात्रेषु विषयेष्विन्द्रियेहया[2] ।**
**मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् ॥ २५ ॥**

**तस्याऽद्य ते ददृशिमाङ्घ्रिमघौघमर्ष तीर्थास्पदं हृदिकृतं सुविपक्वयोगैः ।**
**उत्सिक्तभक्त्युपहताशयजीवकोशा[3] आपुर्भवद्गतिमतः[4] अनुगृहाण भक्तान् ॥ २६ ॥**

1. G.J. ज° 2- -2. K.T.W. त्वामाश्रितं ब्रह्मन् नाममात्रेन्द्रिये° ;MI.V. त्वाऽयं जनो ब्रह्मन् नाममात्रेन्द्रिये° 3. K.T.W. °क्त्युपहता° ; MI.V. °क्त्यपहतां°
4. B.G.J. °थोऽनु ;T.W. °थाऽनु

**श्रीध० नेति**। एकस्मिन्नेव स्थाने आरामो येषां तेऽपि कालं सृष्ट्यादिकारणम् ईश्वरं नियन्तारम् ॥ २३ ॥

एतत्सदृष्टान्तमाह - **यथेति**। शयानः स्वप्नान् पश्यन् गुणतत्त्वदृक् स्वप्नविषयेषु तत्त्वदृष्टिः नाममात्रमिन्द्रियेण मनसा आभातं सिंहव्याघ्रादिरूपमात्मानं वेद तद्रहितं देवदत्तादिरूपमात्मानं न वेद यथा ॥ २४ ॥

**एवमिति**। एवं त्वा त्वां नाममात्रेषु स्वप्नादितुल्येषु विषयेष्विन्द्रियैर्वा ईहा प्रवृत्तिः सैव माया तथा विभ्रमच्चित्तो न वेद, स्मृतेः विवेकस्य उपप्लवान्नाशात् ॥ २५ ॥

**तस्येति**। अघौघस्य मर्षं नाशं करोति यद्गङ्गाख्यं तीर्थं तस्याऽऽस्पदमाश्रयं तेऽङ्घ्रिं सुविपक्वयोगैरपि हृदि कृते केवलं न तु दृष्टं, तस्य तेऽङ्घ्रिं ददृशिम दृष्टवन्तो वयं बहुभिः पुण्यैः, अतोऽस्मान् भक्ता ननु गृहाण भक्तान् कृत्वाऽनुग्रहं कुर्वित्यर्थः। ननु किं भक्त्या, यथापूर्वं तप एव तप्यतामिति नेत्याहुः, उत्सिक्ता उद्रिक्ता या भक्तिः तयोपहत आशयलक्षणो जीवकोशो येषां त एव पूर्वे भवद्गतिमापुर्[1]नाऽन्य इति ॥ २६ ॥

1. MI.V. भगवद्गतिमापु°

**वीर० केवलं वयमेव न शक्नुमः, अपि तु शश्वत्सहचरा वृष्णयोऽपीत्यभिप्रेत्याहुः - नेति**। एकस्मिन् स्वात्मन्ये वाऽऽरमन्त इति तथा ते केवलप्रत्यगात्मानुभवपराश्च यं त्वां न विदन्ति यथावन्न जानन्ति। कथम्भूतम्? सर्वजीवमोहिनी मायैव यवनिका तिरस्कारिणी तथा छन्नं भूपादिज्ञानविषयम् आत्मानमीश्वरमन्तरात्मतया सन्तमपि कालं बहिः कालरूपेण परिच्छन्दन्तम् ॥ २३ ॥

एतत्सदृष्टान्तमाहुः - **यथेति**। गुणतत्त्वदृक् गुणेषु सत्त्वादिगुणकार्येषु शब्दादिविषयेषु तत्त्वदृक् पुरुषार्थदर्शी। यद्वा,

गुणतत्त्वं गुणपरिणामरूपं तत्त्वं देहमात्मतया पश्यतीति तथा स शयानः पुरुषो यथा नाममात्रेन्द्रियाभातं, मात्रा शब्देन रूपं विवक्षितम्। स्वाप्ननामरूपेन्द्रियैरवभातमुपलक्षितं युक्तमित्यर्थः। तमात्मानं वेद, न तु स्वतो नामादिरहितं परं देहाद्विलक्षण मात्मानं वेद ॥ २४ ॥

एवं जाग्रत्पुरुषोऽपि हे ब्रह्मन्! मायया त्वन्मायामूलया नाममात्रेन्द्रियेहया नाममात्रेन्द्रियानुगुणया[1] चेष्टया यः स्मृत्युप प्लवः स्वात्मपरमात्मयाथात्म्यविषयः स्मृतेः प्रमोषः तस्माद्विभ्रमत् अनात्मानं देहमात्मतया पारतन्त्रं स्वतन्त्रतया च गृह्णच्चित्तं यस्य सः, त्वामात्माश्रितम्, कर्तरि क्तः। तं प्रत्यगात्मानमेव न वेद प्रत्यगात्मनः परमात्मानं त्वां न वेदैवेति कैमुत्यसिद्ध मित्यर्थः ॥ २५ ॥

तर्हि कैरप्यविज्ञेयोऽहमनुपास्योऽमोक्षदश्चेत्यत आहुः - **तस्येति**। अघौघस्य मर्षं शुद्धिं करोति यद्गङ्गादितीर्थं तस्याऽऽश्रयमास्पदं ते तवाङ्घ्रिं सुविपक्वो योगो भक्तियोगो येषां तैर्हृदिकृतं साक्षात्कृतं वयमधुना ददृशिम। सुविपक्व योगै र्हृदिकृतमित्यनेन योगपरिशुद्धमनुपास्यत्वञ्च निरस्तम्। उत्सिक्तया उद्रिक्तया भक्त्या अपहतः आशया वासना जीवकोशः अज्ञानरूपः कोशश्च येषां ते। कोशवदावारकत्वात् कोशत्वरूपणम्। भवद्गतिं प्रापुः। अनेन मुक्तप्राप्यत्वमुक्तम्। यत एवमतो भक्तानस्मान् अनुगृहाण ॥ २६ ॥

---

1. B. "णाचे"

**श्रीशुक उवाच**

**इत्यनुज्ञाप्य[1-1] दाशार्हं धृतराष्ट्रं युधिष्ठिरम् ।**
**[2]राजर्षे स्वाश्रमान् गन्तुं मुनयो दधिरे मनः ॥ २७ ॥**

**तद्वीक्ष्य ता[3]नुपव्रज्य वसुदेवो महायशाः ।**
**प्रणम्य चोपसङ्गृह्य बभाषेदं सुयन्त्रितः ॥ २८ ॥**

**वसुदेव उवाच**

**नमो वस्सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ ।**
**कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥ २९ ॥**

**श्रीनारद उवाच**

**नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया ।**
**कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ ३० ॥**

---

1--1. K.T.W. इतीदमुक्त्वा 2. MI.V. राजंस्ते 3.MI.V. °ननु°

**श्रीध० तदिति**। उपसङ्गृह्य चरणौ पाणिभ्यां धृत्वा बभाषे। बभाषेदमिति सन्धिरार्षः ॥ २७,२८ ॥

**नम** इति। सर्वे देवा येषु तेभ्यः "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति" (सह.वा.उ.19) इति श्रुतेः। येन कर्मणा यथाकृतेन वा। कर्मणां निर्हारो निरासो भवति तदच्युताम् ॥ २९ ॥

श्रीकृष्णं हित्वा अस्मान् पृच्छतीति विस्मितान्प्रत्याह - **नातीति**। बुभुत्सया बोद्धुमिच्छया ॥ ३० ॥

**वीर० इतीति** दाशार्हं श्रीकृष्णम्। इदमुक्त्वा अनुज्ञां पृष्ट्वेत्यर्थः। हे राजर्षे! मनो दधिरे मनश्चक्रुः ॥ २७ ॥

**तदिति**। तन्मनोधानं वीक्ष्य तान्मुनीनुपव्रज्य समीपमेत्य प्रणम्योपसङ्गम्य चरणौ पाणिभ्यां धृत्वा सुयन्त्रितोऽवहितचित्तः इदं वक्ष्यमाणं बभाषे ॥ २८ ॥

सर्वे देवा येषु तेभ्यः युष्मभ्यं नमः। हे ऋषयः! श्रोतुं मद्वच इति शेषः। 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' (सह.वा.उ.19) इति श्रुतिप्रसिद्ध्यभिप्रायेण सर्वदेवेभ्य इत्युक्तम्। किं तद्वच इत्यत आह - कर्मणेति। यथा यथाऽनुष्ठितेन कर्मणा वर्णाश्रमानुगुणेन कर्मणां भगवद्भक्तियोगोत्पत्तिप्रतिबन्धकानां प्राचीनपुण्यापुण्यात्मकानां निर्हारः स्यादिति तदुच्यतां तत्रोत्तरमुच्यतामित्यर्थः ॥ २९ ॥

इत्थं पृष्टेषु मुनिषु किं सर्वज्ञं कृष्णं हित्वा अस्मान् पृच्छतीत्येवं संशयितवत्सु तान्प्रतिप्रश्नकारणमुत्थापयन्नाह नारदः **नातिचित्रमिति** चतुर्भिः। हे विप्राः। वसुदेवः आत्मनः स्वस्य श्रेयस्साधनं बोद्धुमिच्छया नोऽस्मान् पृच्छतीत्येतन्नाति चित्रम्। तत्र हेतुः - कृष्णमर्भकं मत्वेति। मत्वा नः पृच्छतीति सम्बन्धः ॥ ३० ॥

**सन्निकर्षो[1] हि मर्त्यानामनादरणकारणम् ।**
**गाङ्गं हित्वा यथाऽन्याम्भस्तत्रत्यो याति शुद्धये ॥ ३१ ॥**

**यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै ।**
**स्वतोऽन्यस्माच्च गुणतो न कुतश्च[2]न रिष्यति ॥ ३२ ॥**

**तं क्लेशकर्मपरिपाकगुणप्रवाहै रव्याहतानुभवमीश्वरमद्वितीयम् ।**
**प्राणादिभिः स्वविभवैरुपगूढमज्ञो[3] मन्येत सूर्यमिव मेघहिमोपरागैः ॥ ३३ ॥**

**अथोचुर्मुनये राजन् आभाष्यानकदुन्दुभिम् ।**
**सर्वेषां श्रुण्वतां राज्ञां तथैवाऽच्युतरामयोः ॥ ३४ ॥**

---

1. J.Ml.V. °षोऽत्र 2. Ml.V. °श्चिन्न 3. B.G.J.Ml.V. °न्यो

**श्रीध० सन्निकर्ष** इति। तत्रत्यो गङ्गातीरवासी ॥ ३१ ॥

श्रीकृष्णेऽर्भकत्वं मन्यमानोऽविद्याविजृम्भित इत्याह - **यस्येति** द्वाभ्याम्। अनुभूतिर्ज्ञानम् कुतश्चिदपि न रिष्यति न नश्यति तदेवाऽऽह - कालेन कर्कटिका फलवत् अस्य विश्वस्य लयोत्पत्त्यादिनाऽपि स्वतश्च[1] विद्युदादिवत् अन्यस्माच्च मुद्गरादेर्घटादिवत् गुणतो रूपाद्यन्तरोत्पत्तेः पूर्वरूपादिना देहादिवत् ॥ ३२ ॥

**तमिति**। तमेव कुतश्चिदप्यव्याहतानुभवमत एवेश्वरं किञ्च अद्वितीयं कृष्णम् अन्यः प्राकृतः उपगूढमाच्छन्नं मनुष्यं मन्येत? कैः क्लेशकर्मादिभिः तत्र क्लेशाः रागादयश्च तत्पूर्वकाणि कर्माणि च तत्परिपाके सुखदुःखे च सत्वादीनां गुणानां पुनःपुनः प्रवाहश्च तैः प्राणादिभिश्च स्वैर्विभवैः स्वकार्यैः। अत्र दृष्टान्तः मेघहिमोपरागैः अभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥ ३३, ३४ ॥

---

1. Ml. V. एव

**वीर०** तत्कृत इत्यत आह - **सन्निकर्ष** इति। हि यस्मात् सन्निकर्षः निरन्तरसान्निध्यमनादरणकारणम्। ततः कृष्णमर्भकं मत्येत्यर्थः। सन्निकर्षस्य अनादरणकारणत्वे दृष्टान्तः -गाङ्गमिति। यथा तत्रत्यो गङ्गातीरस्थो गाङ्गमम्भो हित्वा अनादृत्य आत्मनो विशुद्धये विशुद्ध्यर्थं अन्याम्भः प्रति याति पुण्यजलान्तरं याति तद्वत् ॥ ३१ ॥

एवं सन्निकर्षस्य अनादरकारणत्वमुक्त्वा सर्वज्ञत्वानभिज्ञानमपि तत्कारणमिति वक्तुं तावत्कृष्णस्य नित्यसर्वज्ञतामाह-

**यस्येति**। यस्य कृष्णस्यानुभूतिः ज्ञानं कालादिभिः न रिष्यति न नङ्क्ष्यति तं श्रीकृष्णमित्युत्तरेण सम्बन्धः यथा अस्मदादीनामनुभूतेः कालादिभिः प्रमोषः तथा नेश्वरस्येति भावः। अस्य जगत उत्पत्यादिनेत्यादिशब्देन प्रलयः, गुणाः सत्वादयः त्रयः, कुतश्चन उक्तातिरिक्तादन्यस्मादपि कालादयो ह्यन्येषां ज्ञानलोपहेतवः तैस्सङ्कुचितज्ञान इत्यर्थः ॥ ३२ ॥

तदेव सदृष्टान्तमुपपादयति - **तमिति**। क्लेशाः कर्माणि च पुण्यापुण्यात्मकानि च तेषां परिपाकः सुखदुःखे च गुणानां सत्त्वादीनां पुनः[1]पुनः प्रवाहश्च तैरव्याहतोऽनुभवो [2]महिमा यस्य तमद्वितीयं स्वतुल्यरहितमीश्वरं श्रीकृष्णं स्वविभवैः प्राणादिभिः इन्द्रियादिभिः उपगूढमावृतं प्राकृतेन्द्रियतद्व्यापारैः तिरोहितानुभवं मन्येत मन्यते। अज्ञेति हेतुगर्भं स्वयमज्ञत्वादेवम्भूतमपीश्वरं स्वतुल्यं मन्यत इत्यर्थः। अत्र दृष्टान्तः मेघहिमोपरागैः अभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥ ३३ ॥

एवमुक्त्वा सर्वे मुनयः सम्भूयोचुरित्याह - **अथेति**। आभाष्य सम्बोध्य सर्वेषां राज्ञां श्रुण्वतां सतां तथैवाऽच्युतराम योरपि श्रुण्वतोस्सतोः (मुनय ऊचुः आभाष्य सम्बोध्य हे राजन्! परीक्षित!) ॥ ३४ ॥

---

1. B. omits पुनः 2. T.W. omit महिमा

**कर्मणा कर्मनिर्हार एष साधु निरूपितः ।**
**यदृच्छया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥ ३५ ॥**

**चित्तस्योपशमोऽयं वै कविभिश्शास्त्रचक्षुषा ।**
**दर्शितस्सुगमो योगो धर्म[1-]श्चाऽऽत्ममुदा[-1]वहः ॥ ३६ ॥**

**अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः ।**
**यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥ ३७ ॥**

**वि[2]त्तैषणां यज्ञदानैर्गृहै[3]र्दारसुतैषणाम् ।**
**आत्मलो[4]कैषणां देवकालेन विसृजेद्बुधः ।**
**ग्रामेत्यक्तैषणा स्सर्वे ययु र्धीरास्तपोवनम् ॥ ३८ ॥**

---

1--1. K.T.W. °श्चात्र सुखा° 2. K.T.W. °त्ते 3. K.T.W. °ते° 4. K.T.W. °के° 5. K.T.W. °क्ते°

**श्रीध०** चित्तस्योपशमः उपशमहेतुः योगो मोक्षोपायश्च शनैरात्ममुदमावहततीति तथा सुगमः प्रवृत्याश्रयत्वात् धर्मश्चाऽऽवश्यकः। अन्यथा विहिताकरणेन मालिन्यप्रसङ्गात् ॥३५,३६॥

ननु, 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' (म.ना.उ.8-14) इत्यादिना आदावेव त्यागस्य अशक्यत्वादित्याशयेनाऽऽहुः **अयमिति** सार्धचतुर्भिः। स्वस्त्ययनः स्वस्ति क्षेममीयतेऽनेनेति तथा। श्रध्दया निष्कामतया शुक्लेन शुध्देनाऽऽप्तेन वित्तेन पूरुष ईश्वर इज्येतेति यदेष पन्थाः ॥३७॥

स्वस्त्ययनमाहुः - **वित्तैषणामिति**। वित्तफलभूतैर्यज्ञैः दानैश्च वित्तेषणां वित्तेच्छां विसृजेत्। गृहैः गृहोचितैः भोगैः दारसुतेषणां विसृजेत्, तदनुभवेनैव तदौत्सुक्यनिवृत्तेः। देहे मृते आत्मनः स्वर्गादिलोकेषणां कालेन क्षयानुसन्धानेन विसृजेत्। देव हे वसुदेव! यद्वा, देवकालेन देवानामपि मृत्युना मृत्युहेतुभूतेनेत्यर्थः। अत्राऽऽचारं प्रमाणयति - ग्राम इति ॥३८॥

**वीर०** उक्तिमेवाऽऽह - **कर्मणेति**। साधु यथा तथा एष एवेति निरूपितः। कोऽसौ? यत्सर्वेषां यज्ञानामीश्वरं निर्वाहकं विष्णुं श्रद्धया मखैः यज्ञैः यजेदाराधयेदित्येषः ॥ ३५ ॥

**चित्तस्येति**। अयं विष्णवाराधनरूपो धर्मः अत्र लोके चित्तस्योपशमः शान्त्यावहः सुखावहःनिरतिशयमोक्षसुखावहश्च अतोऽयमेव सुगमोपाय इति मुनिभिः शास्त्रमेव चक्षुस्तेन दर्शितः। ण्यन्तात् दृशेर्निवृत्ते प्रेरणात् कर्मणि क्तः, दृष्ट इत्यर्थः ॥ ३६ ॥

**अयमिति**। द्विजातेस्त्रैवर्णिकस्य गृहाश्रमिणः श्रेयः प्रापकोऽयमेव पन्थाः। कोऽसौ? शुक्लेन शुद्धेन आप्तवित्तेन परपीडादिकमन्तरेणलब्धेन धनेन पुरुषः परमपुरुषः श्रद्धया इज्यतेति अयं भक्तियोगोत्पत्ति प्रतिबन्धनिरसनद्वारा मोक्षसुखावहः पन्थाः केवलमीश्वराराधनात्मक यज्ञ एवेत्यर्थः ॥ ३७ ॥

आप्तवित्तेन इज्यतेत्युक्तं सम्यग्व्यय एव वित्तस्य प्रयोजनमिति वदन्तः प्रसङ्गात् अन्यदप्याहुः - **वित्तैषणामिति**। यज्ञैर्दानैश्च वित्तैषिणां वित्तेच्छां विसृजेत्। अर्थस्य सम्यग्व्ययेन तद्रक्षणदुःखं परिहरेदित्यर्थः। गृहैर्गृहोचितैः भोगैः दारसुतैषणां विसृजेत्, तदनुभवे सत्येव एतावताऽलमिति तदौत्सुक्यनिवृत्तेः। मृते देहे आत्मनः स्वर्गादिलोकेषणां कालेन स्वर्गादीनामपि कालवशात् क्षयिष्णुत्वनिरूपणेन त्यजेदित्यर्थः। तथाहि धीराः तावत् ग्रामे त्यक्ताः ईषणाः पूर्वोक्तास्तिस्रः यैस्ते ततः तपोवनं ययुः ॥ ३८ ॥

**ऋणैस्त्रिभिर्द्विजो जातो देवर्षि पितृणां प्रभो ।**
**यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत् ॥ ३९ ॥**

**त्वन्त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते! ।**
**यज्ञैर्देवर्णमुन्मुच्य निरृणोऽशरणो भव ॥ ४० ॥**

**वसुदेव भवान्नूनं भक्त्या परमया परिम् ।**
**जगतामीश्वरं प्रार्च[1]: स यद्वां पुत्रतां गतः ॥ ४१ ॥**

**श्रीशुक उवाच**

**इति तद्वचनं श्रुत्वा वसुदेवो महामनाः ।**
**तानृषीनृत्विजो वव्रे मूर्ध्नाऽऽनम्य प्रसाद्य च ॥ ४२ ॥**

1. Ml.V. प्रार्चत्

**श्रीध०** किञ्च, **ऋणैरिति**। तथा च श्रुतिः 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तैत्ति.सं.6-3-10) इत्यादि तान्यनिस्तीर्य तेषामृणान्यनपाकृत्य। तथा च मनुः- 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनापाकृत्य मोक्षं तु सेवमानो व्रजत्यधः' (मनु.स्मृ.6-35) इति ॥ ३९ ॥

निर्ऋणो निर्मुक्तऋणः अशरणो भव गृहात्प्रव्रज ॥ ४० ॥

किञ्च, अविशुद्धचित्तानामयं क्रमः। त्वन्तु कृतार्थ एवेत्याहुः - **वसुदेवेति**। [1-]भवान्नूनं निश्चितं परमया प्रेमलक्षणया भक्त्या हरिं[-1] [2]प्रार्चोऽर्चितवान्, यद्यस्मात् वां युवयोः ॥ ४१,४२ ॥

1--1. Ml.V. omit 2. Ml.V. प्रार्चत् अर्चि°

**वीर०** इतोऽपि विष्णुर्यष्टव्य इत्याहुः - **ऋणैरिति**। हे विभो! देवानाम् ऋषीणां पितॄणाञ्च ऋणैस्त्रिभिः द्विजः त्रैवर्णिको जातः जायते। अतस्तानि देवर्षिपितृऋणानि क्रमेण यज्ञाध्ययनपुत्रैरनिस्तीर्य अनपाकृत्य चरन् पतेत्, नरक इति शेषः। अत्र 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते। ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (म.ना.उ.6-3-10) इति श्रुतिः। 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनापाकृत्य मोक्षं तु सेवमानो व्रजत्यधः' (मनु.6-35) इति स्मृतिश्च अनुसन्धेया। श्रुतौ ब्रह्मचर्यशब्दः तत्पूर्वकाध्ययनपरः ॥ ३९ ॥

अतस्त्वयाऽधुना देवऋणमेवाऽपाकर्तव्यम्, ऋषिपितृऋणाभ्यान्तु मुक्त एवेत्याहुः - **त्वन्त्विति**। हे महामते! उन्मुच्य अपाकृत्य निर्ऋणः ऋणत्रयरहितः अशरणः गृहसङ्गरहितो भव ॥ ४० ॥

हे वसुदेव ! भवान् नूनं हरिम् आराधितवान्। ततः ? यद्यस्मात् स भगवान् स्वयं वां युवयोः पुत्रतां गतः ॥ ४१ ॥

**इतीति**। तद्वचनं तेषां वचः श्रुत्वा आनम्य प्रणम्य प्रसाद्य प्रसन्नान् कृत्वा ऋत्विजो वव्रे वृतवान् ॥ ४२ ॥

**त एन[1]मृषयो राजन् वृता धर्मेण धार्मिकम्।**
**तस्मिन्नयाजयन् क्षत्रे मखैरुत्तमकल्पकैः ॥ ४३ ॥**

**तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः ।**
**स्नाता[2]स्सुवाससो राजन् राजा[3]नः सुष्ठलङ्कृताः ॥ ४४ ॥**

**तन्महिष्यश्च मुदिता निष्ककण्ठ्यस्सुवाससः ।**
**दीक्षाशालामुपाज[4]ग्मुरालिप्ता वस्तुपाणयः ॥ ४५ ॥**

**नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः ।**
**ननृतुर्नटनर्तक्यस्तुष्टुवुस्सूतमागधाः ॥**
**जगुस्सुकण्ठ्यो गन्धर्व्यः सङ्गीतं सहभर्तृकाः ॥ ४६ ॥**

**तमभ्यषिञ्चन्विधिवदक्तमभ्यक्तमृत्विजः ।**
**पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥ ४७ ॥**

**ताभिर्दुकूलवलयैर्हारनूपुरकुण्डलैः ।**
**स्वलङ्कृताभिर्विब[5]भौ दीक्षितो[6]ऽजिनसंवृतः ॥ ४८ ॥**

1. MI.V. °व° 2. MI.V. °त्वा° 3. MI.V. °नश्च स्व° 4. MI.V. "जग्मुस्सवलि" 5. MI.V. °भवैः 6. MI.V. जनसंवृतः ॥

**श्रीध० तदिति**। आलिप्ताः कुङ्कुमादिभिः वस्तुपाणयो गृहीतार्हणहस्ताः ॥ ४३-४६ ॥

**तमिति**। अक्तं नेत्रयो रञ्जनेन, अभ्यक्तं सर्वाङ्गेषु नवनीतेन ॥ ४७ ॥

**ताभिरिति**। ताभिः पत्नीभिः सहितो दीक्षितो विरेजे ॥ ४८॥

**वीर० त** इति। एवं धर्मेण यथाविधि वृतास्ते ऋषयस्तस्मिन् स्यमन्तपञ्चके क्षेत्रे उत्तमकल्पकैः मन्त्रतन्त्रद्रव्यादि लोपरहितैः मखैर्यज्ञैः तं वसुदेवमयाजयन् ॥ ४३ ॥

एतदेव प्रपञ्चयति - **तद्दीक्षायामित्यादिना**। तद्दीक्षायां यज्ञदीक्षायां पुष्कराणां स्रजो येषां ते ॥ ४४ ॥

तस्य वसुदेवस्य महिष्यः पत्न्यः आलिप्ताः कुङ्कुमादिभिः, वस्तून्यर्हणानि पाण्योः यासां ताः ॥ ४५ ॥

सूताः पुराणपाठकाः, मागधाः वंशावलिपाठकाः, सहभर्तृकाः ॥ ४६ ॥

**तमिति**। अक्तं नेत्रयोरञ्जनेन, अभ्यक्तं सर्वाङ्गेषु नवनीतेन अक्तं तं वसुदेवम् उडुभिः नक्षत्रैः सहितं सोमराजं चन्द्रमिव अष्टादशाभिः पत्नीभिस्सहितम् अभ्यषिञ्चन् ॥ ४७ ॥

**ताभिरिति**। दुकूलादिभिरन्यैश्च विविधैर्विपुलालङ्कारैः सुष्ठु अलङ्कृताभिः पत्नीभिस्सह दीक्षितः अजिनेन संवृतः विरेजे ॥ ४८ ॥

**तस्यर्त्विजो महाराज [1]नूत्नकौशेयवाससः ।**
**ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ४९ ॥**

**त[2]दा रामश्च कृष्णश्च स्वैः स्वैर्बन्धुभिरन्वितौ ।**
**[3-]विरेजतुः सु[-3]तैर्दा[4]रैर्जीवेशौ स्वविभूतिभिः ॥ ५० ॥**

**ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ।**
**प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥ ५१ ॥**

**अथर्त्विग्भ्योऽददात्काले यथाऽऽम्नातं सदक्षिणाः ।**
**स्वलङ्कृतेभ्यो[5]ऽलङ्कृत्य गोभूकन्या महाधनाः ॥ ५२ ॥**

**पत्नीसंयाजवभृ[6]थ्यैश्च[7]रित्वा ते महर्षयः ।**
**सस्नू रामह्रदे विप्रा यजमानपुरस्सराः ॥ ५३ ॥**

**[8]स्नातोऽलङ्कारवासांसि वन्दिभ्योऽदात्तथा स्त्रियः ।**
**ततः [9-]अलङ्कृता[-9]न्वर्णानाश्वभ्योऽन्नेन पूजयत् ॥ ५४ ॥**

---

1. B.G.J. र° 2. M.I.V. °था 3- -3. ABGJ रेजतुः स्वसु° 4. K. दें° 5. K विप्रेभ्यो 6. M.I.V. °थै° 7 M.I.V. °त्वाऽथ 8. K.T.W. °ना° ;M.I.V. °त्वा° 9- -9. B.G.J. स्वलङ्कृतो व°

**श्रीध० तथेति**। जीवेशौ सर्वजीवानामीशौ ॥ ४९, ५० ॥

**ईजे** इति। अनुयज्ञं प्रतियज्ञम्। आम्नातसर्वाङ्गाः प्राकृताः ज्योतिष्टोमदर्शपूर्णमासादयः, तेभ्यश्चोदनालिङ्गादिभिरति देशप्राप्ताङ्गाः वैकृताः सौरसत्रादयः तैस्सर्वैः। द्रव्यं पुरोडाशादि, ज्ञानं मन्त्रः, क्रिया कर्म तेषामीश्वरम् ॥ ५१,५२ ॥

**पत्नीति**। सस्नुः स्नानञ्चक्रुः ॥ ५३ ॥

**स्नात्वेति**। आश्वभ्यः शुनोऽभिव्याप्य, अन्नेन पूजयदपूजयत् ॥ ५४ ॥

**वीर०** तस्य वासुदेवस्य सम्बन्धिनः ऋत्विजः नूत्नानि नवानि कौशेयानि वासांसि येषां ते, सदस्यैस्सभ्यैः सहिता विरेजुः यथा वृत्रहणः इन्द्रस्य अध्वरे, तद्वत् ॥ ४९ ॥

**तदेति**। देवानां ब्रह्मादीनामपि ईशौ इति रामकृष्णयोर्विशेषणम्। जीवेशौ इति पाठान्तरम्। तदा जीवानामीश्वरौ इत्यर्थः। देवेशैः स्वविभूतिरिति च पाठः। तदा स्वाः विभूतयो येषान्तैः देवेशैः देवश्रेष्ठांशसम्भूतैः इति स्वसुत विशेषणम् ॥ ५० ॥

**ईजे** इति। अनुयज्ञं प्रतियज्ञम्। ईजे इष्टवान्। तदेवाऽऽह - विधिनेति। आम्नात सर्वाङ्गा- प्राकृताः ज्योतिष्टोम दर्शपूर्णमासादयः तेभ्यश्चोदनालिङ्गादिभिः अतिदेशप्राप्ताङ्गाः वैकृताः सौर्यसत्रादयः सर्वैरग्निहोत्रादिनामकैस्तैः होमैश्च द्रव्यज्ञानक्रियेश्वरं भूतपञ्चकज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकनिर्वाहकं भगवन्तं ईजे। यद्वा, पुरोडाशादिद्रव्यसाङ्गकर्मविषयज्ञानतदनुष्ठानानां प्रभुम् ॥ ५१ ॥

**अथेति**। वसुदेवः काले विहितकाले यथाऽऽम्नातं यथोक्तं दक्षिणाः ऋत्विग्भ्यः स्वयमप्यलङ्कृत्य तावत्, ततो महाधना अनर्घा गोभूकन्याश्च ददौ ॥ ५२ ॥

पत्नीसंयाजा आवभृथ्याश्च यागविशेषाः तैश्चरित्वा इष्ट्वा रामह्रदे परशुरामनिर्मिते ह्रदे सस्नुः स्नानं चक्रुः ॥ ५३ ॥

**स्नानेति**। स्नानादीनि ददौ स्नपयामास। तेभ्योऽलङ्कारवासांसि च ददौ इत्यर्थः। तत्र स्त्रियश्च सस्नुः सुष्ठलङ्कृतश्चेति सम्बन्धः। आश्वभ्यः शुनोऽभिव्याप्य सर्वान् वर्णान् अन्नेन पूजयत् अपूजयत्। अडभाव आर्षः। आगमशास्त्रस्यानित्यत्वाद्वा ॥ ५४॥

**बन्धून् सदारान् ससुतान् पारिबर्हेण भूयसा ।**
**विदर्भकोसलकुरून् काशिकेकयसृञ्जयान् ॥ ५५ ॥**
**सदस्यर्त्विक्सुरगणान् नृभूतपितृचारणान्[1] ।**
**श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम् ॥ ५६ ॥**

**धृतराष्ट्रोऽनुजः पार्थाः भीष्मो द्रोणः पृथा यमौ ।**
**नारदो भगवान् व्यासः सुहृत्सम्बन्धि बान्धवाः ॥ ५७ ॥**

**बन्धून्परिष्वज्य यदून् सौहृदाऽऽक्लिन्नचेतसः ।**
**ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥ ५८ ॥** (2- -2)

**नन्दस्तु सह गोपालैर्बृहत्या पूजयार्चितः ।**
**कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बन्धुवत्सलः ॥ ५९ ॥**

**वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम् ।**
**सुहृद्वृतः प्रीतमना नन्दमाह करे स्पृशन् ॥ ६० ॥**

---

1. K.T.W. °णा 2- -2. Ml. V °श्चामरप्रभाः

**श्रीध० बन्धूनिति।** बन्ध्वादि चारणान्तान् पारिबर्हेण प्रीतिदानेन चाऽपूजयत्। ते च सर्वे प्रययुः ॥ ५५, ५६ ॥

प्रयाणे केषाञ्चिद्विशेषमाह-**धृतराष्ट्र** इति द्वाभ्याम्। अनुजो विदुरः, पार्था युधिष्ठिरभीमार्जुनाः, यमौ नकुलसहदेवौ ॥ ५७॥

**बन्धूनिति।** सौहृदेनाऽऽक्लिन्नानि चेतांसि येषां ते ॥ ५८,५९ ॥

**वसुदेव** इति। मनोरथो यज्ञविषयः तमेव महार्णवम् ॥ ६० ॥

**वीर०** बन्ध्वादीन् पारिबर्हेण बहुमानार्थं देयद्रव्येण पूजयदिति सम्बन्धः ॥ ५५ ॥

स दस्येति। सदस्यादयः श्रीनिकेतं कृष्णमनुज्ञाप्य अनुज्ञां पृष्ट्वा क्रतुं प्रशंसन्तो ययुः ॥ ५६ ॥

**धतराष्ट्र** इति। अनुजो विदुरः, पृथा कुन्ती, यमौ नकुलसहदेवौ, सुहृदश्च सम्बन्धिनश्च बान्धवाश्च ते सौहृदेन सौहार्देन क्लिन्नमार्द्रं चेतो येषां ते विरहकृच्छ्रेण विश्लेषयुक्तक्लेशेन उपलक्षिताः ययुः, तथा अपरे जनाश्च ययुः ॥ ५७,५८ ॥

**नन्दस्त्विति।** बृहत्या महत्या पूजया समर्चितः गोपैस्सह न्यवात्सीत् उषितवान्। तत्र हेतुत्वेन विशिनष्टि बन्धुवत्सल इति ॥ ५९ ॥

**वसुदेव** इति। मनोरथः यज्ञविषयः स एव महार्णवः अञ्जसा सुखेन उत्तीर्य निस्तीर्य ॥ ६० ॥

वसुदेव उवाच

भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः ।
तं दुस्त्यजमहं मन्ये शूराणामपि योगिनाम् ॥ ६१ ॥

अस्मास्वप्रतिकल्पेयं यत्कृताज्ञेषु सत्तमैः ।
मैत्र्यर्पिताऽफला [1]वाऽपि न निवर्तेत कर्हिचित् ॥ ६२ ॥

प्रागकल्[2]पाच्च कुशलं भ्रातर्वो नाचराम हि ।
अधुना श्रीमदान्धाक्षा न पश्यामः [3]पुराकृतम् ॥ ६३ ॥

मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद! ।
स्वजनानुत बन्धून्वा न पश्यति [4]यथाऽन्धदृक् ॥ ६४ ॥

[5-]श्रीशुक उवाच[-5]

एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः ।
रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥ ६५ ॥

नन्दस्तु सख्युः प्रियकृत्प्रेम्णा गोविन्दरामयोः ।
अद्य श्व इति मासांस्त्रीन् यदुभि[6]र्वारितोऽवसत् ॥ ६६ ॥

---

1. K. Ml.T.V.W. °चा° 2. K. Ml.T.V.W. °ल्या° 3. B.G.J. पुरस्सतः ;Ml.V. पुरस्स्थितावान् 4. K.T.W. मदान्ध 5- -5. Ml.T.V.W. omit 6. B.G.J. Ml.V. °र्मानितो

**श्रीध० भ्रातरिति**। शूराणां बलेन, योगिनां ज्ञानिनाऽपीत्यर्थः ॥ ६१ ॥

तत्कुतस्तत्राऽऽह - **अस्मास्विति**। कृताज्ञेषु कृतमुपकारमजानत्सु सत्तमैर्भवद्भिः अप्रतिकल्पा अनुपमा मैत्री[1] इयमर्पिता अफलाऽपि प्रत्युपकारशून्याऽपि कर्हिचित् यद्यस्मात् न निवर्तेत तस्मात् ईश्वरकृतः पाशोऽयं भवतामिति गम्यते इत्यर्थः ॥ ६२ ॥

अफलत्वमेवाऽऽह - **प्रागिति**। हे भ्रातः! अकल्पात् असामर्थ्यात् वः कुशलं प्रियं न ह्याचराम न कृतवन्तो वयं [2]अधुना श्रीमदेन अन्धानि अक्षीणि येषां ते ॥ ६३ ॥

मा इति! राज्यश्रीर्माभूत्। छान्दसोऽडागमः ।. ६४,६५ ॥

**अद्यश्व** इति। प्रातर्निर्गमे अद्यैव अपराह्णे गम्यताम्। अपराह्णे निर्गमे श्वो गम्यतामिति पुनः पुनः एवं मानितः ॥ ६६

1. Ml.V. °मपि 2. B.J. omit अधुना

**वीर०** उक्तिमेवाह - **भ्रातरिति**। हे भ्रातः! य ईशेन भगवता कृष्णेन कृतः निर्मितः स्नेहलक्षणः पाशः, तं शूराणां बलेन, योगिनां ज्ञानेनाऽपि दुस्त्यज्यं मन्ये इत्यर्थः ॥ ६१ ॥

कुत इत्यतआह - **अस्मास्विति**। यद्यस्मात् कृतमुपकारं न जानन्तीति तथा तेषु अस्मासु सत्तमैर्भवद्भिः अयमप्रतिकल्पा अनुपमा मैत्री अर्पिता निहिता अफला प्रत्युपकारशून्याऽपि अधुनाऽपि न निवर्तते ॥ ६२ ॥

अफलत्वमेवाऽऽह - **प्रागिति**। हे भ्रातः! प्राक् कंसकृतनिर्बन्धदशायाम् अकल्पाः असमर्थाः। हेतुगर्भमिदम्। अतो वो युष्माकं कुशलं प्रियं नाऽऽचरेमहि न कृतवन्तः। अधुना तु श्रीमदेन ऐश्वर्यमदेन अन्धे अक्षिणी येषां ते वयं पुराकृतमुपकारं न पश्यामः ॥ ६३ ॥

अतो हे मानद! श्रेयस्कामस्य पुंसो राज्यश्रीर्माभूदिति प्रार्थना। कुतः? यतो मदान्धदृक् पुमान् सुजनान् साधून् उताऽपि च बन्धून् न पश्यति ॥ ६४ ॥

**एवमिति**। शुकोक्तिः। सौहृदेन शैथिल्यं, स्वार्थे ष्यञ्। शिथिलं चित्तं यस्य सः, तत्कृतां नन्दकृतां मैत्रीं स्मरन् अश्रूणि विलोचनयोः यस्य सः रुरोद ॥ ६५ ॥

**नन्दस्त्विति**। सख्युर्वसुदेवस्य रामकृष्णयोश्च प्रियकृत् अत एव (लक्षणहेत्वोरिति शत्रा प्रियङ्कर्तुमित्यर्थः) अद्य श्वः इति, प्रातर्निर्गमे अपराह्णे गम्यताम् इति, अपराह्णे निर्गमे श्वो गम्यताम् इत्येवं यदुभिः निवारितश्च। मानित इति पाठान्तरम्। त्रीन् मासान् अवसत्, मासानिति अत्यन्तसंयोगे द्वितीया ॥ ६६ ॥

**ततः कामैः पूर्यमाणः सव्रजः सह बान्धवः ।**
**परार्ध्याभरणक्षौम नाना[1]र्घ्यपरिच्छदैः ॥ ६७ ॥**

**वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः ।**
**दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ ॥ ६८ ॥**

**नन्दो गोपाश्च गोप्यश्च गोविन्दचरणाम्बुजे ।**
**मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः ॥ ६९ ॥ ★**

**बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ।**
**वीक्ष्य प्रावृषमासन्नां ययुर्द्वारवतीं पुनः ॥ ७० ॥**

**जनेभ्यः कथयाञ्चक्रुर्यदुदेवमहोत्सवम् ।**
**यदासीत्तीर्थयात्रायां सुहृत्सन्दर्शनादिकम् ॥ ७१ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे
तीर्थयात्रानुवर्णनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

1. K. °नर्घं ; T.W. °रत्न ★ The following three half verses are found only in M.V. editions पाण्डवाश्च महात्मानः सर्वे च मुनिसत्तमाः । अनुज्ञाताः केशवेन बाष्पगद्गदभाषिणः । शक्रप्रस्थं ययुस्सर्वे स्वजनैः परिवारिताः ॥

**श्रीध० वसुदेवेति**। यापितो महासैन्येन प्रस्थापितः ॥ ६७ - ७० ॥

**जनेभ्य** इति। यदुदेवस्य वसुदेवस्य महोत्सवं यज्ञादिलक्षणं सुहृत्सन्दर्शनादिकञ्चेति ॥ ७१ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुरशीतितमोऽध्यायः ॥ ८४ ॥

**वीर० तत** इति। सव्रजः गोपैस्सहितः सबान्धवश्च परार्ध्यैः श्रेष्ठैः आभरणैः क्षौमैः दुकूलैः नानाविधैरनर्घैः परिच्छदैः भोगोपकरणैः इत्येवंविधैः कामैः पूर्यमाणः दत्तान् पारिबर्हानादाय यदुभिर्यापितः महता सैन्येन प्रस्थापितो ययौ ॥ ६७, ६८ ॥

**नन्दो** गोप्यश्चेति। गोविन्दस्य चरणाम्बुजे क्षिप्तं निहितं चित्तं पुनर्हर्तुमसमर्थास्सन्तः ययुः ॥ ६९ ॥

**बन्धुष्विति**। बन्धुषु नन्दादिषु प्रतियातेषु प्रस्थितवत्सुकृष्ण एव देवता येषां ते वृष्णयः प्रावृषं वर्षर्तुमासन्नां सन्निहितां वीक्ष्य ज्ञात्वा ॥ ७० ॥

**जनेभ्य** इति। यदुदेवस्य महोत्सवं यज्ञादिलक्षणं यत्र सुहृत्सन्दर्शनादिकं तत्सर्वं जनेभ्यो द्वारकास्थेभ्यः कथयामासुः ॥ ७१ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुरशीतितमोऽध्यायः ॥ ८४ ॥



# पञ्चाशीतितमोऽध्यायः

[1-] श्रीशुक उवाच [-1]

अथैकदाऽऽत्मजौ प्राप्तौ कृतपादाभिवन्दनौ ।
वसुदेवोऽभिनन्द्याऽऽह प्रीत्या सङ्कर्षणाच्युतौ ॥ १ ॥

मुनीनां स वचः श्रुत्वा पुत्रयोर्धामसूचकम् ।
तद्वीर्यै र्जातविस्रम्भः परिभाष्याऽभ्यभाषत ॥ २ ॥

वसुदेव उवाच

कृष्ण कृष्ण महायोगिन् सङ्कर्षण सनातन !
जाने वा मस्य यत्साक्षात् प्रधानपुरुषौ परौ ॥ ३ ॥

यत्र येन यतो यस्य यस्मै यद्यद्यथा यथा ।
स्यादिदं भगवान् साक्षात् प्रधानपुरुषे वरः ॥ ४ ॥

[2]एवं नानाविधं विश्व मात्मसृष्ट मधोक्षज !
आत्मनाऽनु प्रविश्याऽऽत्मन् प्राणो जीवो बिभर्त्यज[3]ः ॥ ५ ॥

---

1- -1 B.G.J. श्रीबादरायणिरुवाच  2. B.G.J.K. एतन्ना°  3. B. G. J. K. Ml.T.V.W. त्यंजः

## श्रीधरस्वामि विरचिता भावार्थदीपिका

पञ्चाशीति तमे रामकृष्णौ सम्प्रार्थितौ सुतौ। पित्रे ज्ञान मथो मात्रे मृतान्पुत्रा नयच्छताम् ॥
नन्दयित्वा कुरुक्षेत्रयात्रायां सुहृदो बहून्। तत्त्वज्ञानं ततः पित्रो रादिशन्मृतसूनुभिः ॥ १ ॥

**मुनीनामिति**। धाम प्रभावः, तत्सूचकम् जातविस्रम्भः उत्पन्नविश्वासः परिभाष्य सम्बोध्य ॥ २ ॥

**कृष्णेति**। अस्य विश्वस्य यत्साक्षात्स्वरूपभूतं कारणं प्रधानपुरुषौ नाम परौ तयोरपि कारणत्वेन ईश्वरौ च साक्षाद्वां युवामिति जाने ॥ ३ ॥

नन्विदं विश्व मनेकैः कारकैः जायमानं कुतः प्रधानपुरुषात्मकं, कुतस्तरा मावयो स्तत्कारणत्वेन ईश्वरत्वम् तत्राऽऽह -**यत्रेति**। यत्र अधिकरणे, येन कर्ता करणेन च, यतः अपादानात् यस्य सम्बन्धेन, षष्ठ्यर्थस्याकारत्वेऽपि निमित्ततोक्ता। यस्मै सम्प्रदानाय, यद्यदिति प्रयोज्य [2]प्रयोजक कर्तृकर्मकारके दर्शिते। ननु तयो र्नास्ति भेदः, यथोक्तम् 'करोति क्रियमाणेन न कश्चित्कर्मणा विना। भवत्यर्थस्य कर्ता च करोतेः कर्मजायते'॥ इति। तथा 'करोत्यर्थस्य यः कर्ता भवितुः सप्रयोजकः, भविता तमपेक्ष्याऽथ प्रयोज्यत्वं प्रपद्यते' इति च। सत्यम्। तथाऽप्यवस्थाभेदन भेदो विवक्षितः। दृश्यते चाऽवस्थाभेदः। तण्डुला नोदनं पचति, मृदं घटं करोतीति। तदेवं सप्तविभक्त्यर्था दर्शिताः। यथेति यदेति च क्रियाविशेषणभूताना मन्येषाञ्च अव्ययाना मर्थाः स्यादिति क्रियापदार्थोपलक्षणम्। एवं [3]सर्वं प्रपञ्चमनूद्य तत्कार[4]णस्य भगवद्रूपतां विधत्ते इदं साक्षादिति तयो रैक्य मभिप्रेत्यैकवचनम् ॥ ४ ॥

किञ्च, धारणपोषणकर्ताऽपि त्वमेवेत्याह - **एतदिति**। हे आत्मन्! प्राणः क्रियाशक्तिः जीवो ज्ञानशक्तिश्च सन् त्वमेव बिभर्षि ॥ ५ ॥

---

1. V. °णौ: 2. B.J.Omit प्रयोजक 3. MI.V. सर्वं 4. MI.V. °णाभ

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ कदाचिद्वसुदेव देवक्यावेदित याथात्म्यस्य भगवतः प्रेताग्रजादानात्मकं चेष्टितमनुवर्णयति - अथेत्यादिना पञ्चाशीतितमेन। कृतं पादाभिवन्दनं याभ्यां तौ रामकृष्णावभिनन्द्य प्राह ॥ १ ॥

किञ्च, **मुनीनामिति**। स वसुदेवः पुत्रयोः प्रभावसूचकं मुनीनां वचः 'वसुदेव भवान्नूनं भक्त्या परमया' इत्याद्युक्तं वचः स्मृत्वा तथा तयोः [1-]रामकृष्णयो[-1]र्वीर्यैः र्जातो विस्रम्भो जगदीश्वरत्वविषयविश्वासो यस्य सः परिभाष्य सम्बोध्य अभाषत ॥ २ ॥

तदेवाऽऽह - **कृष्णेति**। प्राकृतौ आवां किमित्येवं सम्बोधयसि इत्यत आह - जान इति। वामिति। 'युष्मदस्मदोः षष्ठी चतुर्थीद्वितीयास्थयो र्वां नावौ' (अष्टा ८-1-20) इति वामादेशे सति रूपम्। यद्यस्मात् अस्य जगतः साक्षात्प्रधानपुरुषौ कारणभूतौ प्रकृतिपुरुषौ परौ ताभ्यां विलक्षणौ च वां युवां जाने। कार्यावस्थचिदचिदात्मकस्याऽस्य जगतः कारणावस्थौ प्रधानपुरुषौ प्रकृतिपुरुषशरीरकौ अत एव तदात्मभूतौ तद्विलक्षणौ पुरुषौ जाने इत्यर्थः ॥ ३ ॥

एवं जगतस्तत्कार्यत्वं प्रतिज्ञातम्। ननु जगत्कार्यञ्चेत् कारकषट्कसाध्यं कस्यचित्सम्बन्धि केनचित्प्रकारेण युक्तं काल सह चरितञ्चेति कथं मदेककार्यमित्यत आह - **यत्रेति**। कारकषट्कसम्बन्धिप्रकारकालानां त्वच्छरीरत्वेन त्वदात्मकत्वात

कृत्स्नं जगत् त्वत्कार्यमेवेत्यभिप्रायः यत्राऽधिकरणे, येन कर्त्रा, यतः उपादानात् यस्य सम्बन्धिनः यस्मै सम्प्रदानाय यत्प्रयोजकं कर्तृ यदा यस्मिन्काले यथा यः प्रकारः। एवं कारकषट्कादीनां निर्देशः यथा स्यादित्येतदिदं विश्वमधिकरणादिकं सर्वं साक्षात् प्रधानपुरुषयोः प्रकृतिपुरुषयोः ईश्वरो भगवांस्त्वमेवेति सम्बन्धः। वक्ष्यमाण कान्त्यादि सामानाधिकरण्योपयुक्तत्वेन एतत्प्रपञ्चयति हे अधोक्षज! आत्मन् आत्मनि आत्मना सृष्टम्। अनेन अधिकरणान्तर कर्त्रन्तरव्युदासः। नानाविधं देवनर पशु पादपभिन्नमेतत् जगदात्मना स्वशरीरभूतेन जीवेनाऽनुप्रविश्य रक्षणोपयुक्त मनुप्रवेशं कृत्वा प्राणः प्राणशरीरको जीवः स्तच्छरीरकश्च एवमप्यजः प्राणजीवगतदोषास्पृष्टः बिभर्षि प्राणशरीरकत्वं जीवशरीरकत्वञ्च श्रूयते - 'मनोमयः प्राणशरीरनेता' (मुणड.उ.2-2-7) 'यस्यात्मा शरीरम्' (बृह.उ.3-7-22) इति ॥ ४,५ ॥

1- -1 K.T.W. Omit

प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः ।
पारतन्त्र्याद्वैसादृश्या द्द्वयोश्चेष्टैव चेष्टताम् ॥ ६ ॥

कान्ति स्तेजः प्रभा सत्ता चन्द्राग्न्यर्कर्क्षविद्युताम् ।
यत्स्थैर्यं भूभृतां भूमे र्वृत्ति र्गन्धोऽर्थतो भवान् ॥ ७ ॥

तर्पणं प्राणन मपां देवत्वं ताश्च तद्रसः ।
ओज स्सहो बलश्चेष्टा गति र्वायो स्तवेश्वर ॥ ८ ॥

दिशां त्व मवकाशोऽसि दिशः खं स्फोट आश्रयः ।
नादो वर्ण स्त्व मोङ्कार आकृतीनां पृथक्कृतिः ॥ ९ ॥

इन्द्रियन्त्विन्द्रियाणां[1] त्वं देवाश्च तदनुग्रहः[2] ।
अवबोधो भवान् बुद्धे र्जीवस्यानुस्मृतिः सती ॥ १० ॥

भूताना मसि[3] भूतादि रिन्द्रियाणाञ्च तैजसः[4] ।
वैकारिको विकल्पानां प्रधाना[5] मनुशायिनाम् ॥ ११ ॥

नश्वरे ष्विहभावेषु तदसि त्वमनश्वरम् ।
यथा द्रव्यविकारेषु द्रव्यमात्रं अनश्वरम्[6] ॥ १२ ॥

1- -1 K.T.W. यत्वानीन्द्रियाणां 2. K.T.W. °हा: 3. K.T.W. °पि 4. K.T.W °सम् 5. L. °दा° 6. B.G.J.MI.V. निरूपितम् ।

**श्रीध०** ननु प्राणादीनां विचित्रशक्तीनां कारणत्वावगमात् कथं परमेश्वरस्यैव कारणत्वेन सर्वात्मकत्वमुच्यते इत्याशङ्क्य प्राणदिशक्तयोऽपि तस्यैवेत्याह - **प्राणादीनामिति**। प्राणः प्रकृतिभूतं सूत्रं तदादीनां विश्वसृजां विश्वकारणानां यश्शक्तयः ताः परस्य परमकारणस्येश्वरस्यैव कृतः पारतन्त्र्यात् यथा वेधशक्ति र्न बाणस्य अपितु पुरुषस्य तद्वदित्यर्थः। ननु भगवतः प्राणादिवर्गस्य च स्वातन्त्र्यमेव किं न स्यात्? अत आह - वैसादृश्यात् द्वयोरिति। चेतनाचेतनत्वेन विसदृशत्वा द्द्वयोः अचेतन प्राणादिवर्गस्य चेतनपारतन्त्र्यमेव युक्तमित्यर्थः यद्वा प्राणादिषु द्वयोर्द्वयोरेव तावद्विसदृशत्वं विरुद्धक्रियकारित्वात्, किं पुनर्बहुनाम्? तस्मा देकेन सर्वज्ञेन सर्व[1]शक्तिनाऽधिष्ठितानामेव विशिष्टकार्यरम्भकत्वं युक्तं न स्वतन्त्राणामिति, तथाचोक्तम् - 'यदैते संहता भावा भूतेन्द्रिय मनोगुणाः। यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम। तथा संहत्यचाऽन्योन्य भगवच्छक्तिचोदिताः। सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः' (भाग 2-5-32,33) इति तथा 'नानात्वात्स्व क्रियाऽनीशाः प्रोचुः प्राञ्जलयो विभुम्' (भाग.3-5-37) इत्यादि। ननु प्राणादीनां क्रियाकारित्वं शक्त्यभावे कुतः स्यात् अत आह - चेष्टेव चेष्टैतामिति। चेष्टमाना मेषां चेष्टैव न तु शक्तिः। यथा वायो श्शक्त्या तृणादीनां चलनं, यथा वा पुरुषस्य शक्त्या शराणां [2]वेग इति ॥ ६ ॥

पारतन्त्र्यमेव प्रपञ्चयति कान्तिरिति पञ्चभिः। चन्द्रस्य कान्तिः, अग्ने स्तेजः, अर्कस्य प्रभा, ऋक्षविद्युतां सत्ता, स्फुरणमात्रेण सत्त्वम अर्थतो वस्तुतो भवान्। तथा च श्रुतिः - 'न तत्र सूर्यो भाति न चन्द्र तारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः, तमेव भान्त मनुभाति सर्वं तस्यभासा सर्व मिदं विभाति' (कठ.उ.5-15) इति स्मृतिश्च - 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चान्द्रमसि यत्ताग्नौ तत्तेजो विद्धि मामकम्' (भगी.15-12) इति. भूमे र्वृत्तिः प्रणिना माधारत्वेन वर्तनं गन्धश्च भवान् तवैव शक्ति रित्यर्थः ॥ ७ ॥

**तर्पणमिति**। किञ्च, हे देव! अपां तर्पणं तृप्तिजनकत्वं प्राणनं जीवनहेतुत्वं ता आपश्च तासां रसश्च त्वमेव। किञ्च वायो रोजः, सह आदि तवैव शक्तिः ॥ ८ ॥

**दिशामिति**। दिशा मुपाधिकृताऽऽकाश प्रदेशानां अवकाशो दिशश्च त्वम्। खं सामान्याकाशः तदाश्रयः स्फोटश्च शब्दतन्मात्रं परावस्था वाक् इत्यर्थः। नादः पश्यन्ती ओङ्कारो मध्यमा, वर्णश्चाऽऽकृतीनां पदार्थातनां पृथक्कृतिः पृथक्करण मभिधानां यश्मात्तत्पदं वर्णपदाद्यात्मिका वैखरी चत्वमित्यर्थः ॥ ९ ॥

**इन्द्रियमिति**। इन्द्रियाणामिन्द्रियं विषयप्रकाशन शक्तिः, देवाश्चेन्द्रियाधिष्ठातारः, तदनुग्रह स्तेषां अधिष्ठानशक्तिश्च त्वम्। अवबोधोऽध्यवसायशक्तिः अनुस्मृतिः प्रतिसन्धानशक्तिः ॥ १० ॥

**भूतानामिति**। भूतानां कारणं भूतादिः तामसोऽहङ्कार स्त्वमसि इन्द्रियाणां कारणं तैजसो राजसोऽहङ्कार स्त्वं विविध मधिदैवाध्यात्माधिभूतभेदेन कल्प्यन्त इति विकल्पा देवा स्तेषां कारणं वैकारिकः सात्त्विकोऽहङ्कारश्च त्वम्, अनुशायिनां जीवानां संसारकारणं प्रधानं त्वम् ॥ ११ ॥

अपि च नश्वरेषु नाशशीलेषु इह एतेषु भावेषु यदनश्वर मवशिष्यमाणं रूपं तत्त्वमसि द्रव्यविकारेषु मृत्सुवर्णादिकार्येषु घटकुण्डलादिषुव नश्वरेषु च द्रव्यमात्रं मृत्सुवर्णादिमात्र मनश्वरं यथा तद्वत् ॥ १२ ॥

---

1. M1.V. शक्तीनामधि 2. M1.V. वेध:

**वीर०** एवं भगवत श्चिदचित्सामानाधिकरण्यं शरीरात्मभावनिबन्धमिति शिक्षा कृता। अथ चिदचिदसाधारण धर्मसामनाधिकरण्यं तन्निर्वाहकत्वनिबन्धनमिति शिक्षयति - प्राणादीनामिति। विश्वसृजां विश्वशरीरसृष्टि हेतुभूतानां प्राणादीनां, आदिशब्देन भूतपञ्चकैकादशेन्द्रिय महदहङ्कारसङ्ग्रहः। एतै र्हि विश्वसृष्टिः तेषां या श्शक्तयः कार्योपयोग्यपृथक्सिद्धधर्माः ताः परस्य परमात्मनः तवैव शक्तयः त्वन्निर्वाह्या एवेत्यर्थः। कुतः? पारतन्त्र्यात् शक्त्याश्रयाणां प्राणादीनां पारतन्त्र्यस्वाभाव्यात्। एवञ्च तच्छक्तीनां पारतन्त्र्यं किम्पुनर्न्यायसिद्धमितिभावः। ननु प्राणादीनां शक्तयः मिथः प्राणादिभिनिर्वाह्याः कुतो न स्युः इत्यत आह - वैसादृश्यादिति। अन्योन्य प्रतिनियतशक्तित्वेन **वैधर्म्यान्न** मिथो निर्वाह्यतेत्यर्थः। किमुताचेतनानां पारतन्त्र्यस्वभावतेति। कुतश्चेतनस्यैव[1] तत्स्वभावत्वादित्यभिप्रेत्याह- **द्वयोश्चेष्टैव चेष्टतामिति**। चेष्टतां चेष्टमानानां देहानां चेष्टाद्वयोश्चैव जीवपरयो श्चेष्टैव न केवलं जीव एव स्वतन्त्रः प्रवर्तते अपि तु परमात्मानुमान्यः प्रवर्तत इत्यर्थः।

सर्ववस्तुशक्तीनां तन्निर्वाह्यत्वनिबन्धनं सामानाधिकरण्य माह - कान्तिरित्यादिना। चन्द्रस्य कान्तिः, अग्ने स्तेजः, अर्कस्य प्रभा, ऋक्षाणां नक्षत्राणां विद्युताञ्च सत्ता प्रकाशसत्ता भूभृतां पर्वतानां यत्स्थैर्यं, भूमिवृत्ति गन्धः, यद्वा वृत्तिः प्राणिनामाधारत्वेन वर्तनं गन्धश्चेत्येतत्सर्वम् अर्थतः वस्तुतः भवान् त्वन्निर्वाह्यमित्यर्थः ॥ ७ ॥

**तर्पणमिति**। अपां तर्पणं लोकवृत्तिहेतुत्वं जीवनं जीवनहेतुत्वम्। प्राणनमिति पाठे स एवार्थः, क्लेदन मार्दीकरणं देवत्वमितिपाठे देवताधिष्ठितत्वं ता आपः तासां रसो माधुर्यं च सर्वं भवान् त्वदधीन मित्यर्थः। या वायो श्शक्तयः ओजः प्रभृतयः ताः ईश्वर स्त्वमेवेति पूर्ववत्। तत्र ओजः प्रवृत्तिसामर्थ्यं सहो वेगः बलं धारणसामर्थ्यं, चेष्टा व्यापारः, गति र्गमनम् ॥ ८ ॥

**दिशामिति**। दिशां सम्बन्धी अवकाशः दिशश्च त्वमेव स्फोटः शब्दः आश्रयः तदाश्रयभूतं खं त्वमेवेत्यन्वयः।

नादः शब्दभिव्यञ्जकः वर्णः आकाशादिः ओङ्कारः आकृतीनां शब्दवाच्याना माकृतीनां पृथक्कृतिः द्वैविध्यञ्च त्वमेव। स्फोटनादोङ्कारशब्दैः परा पश्यन्ती मध्यमाख्या वाग्भेदा उच्यन्ते आकृतीनां पदार्थनां पृथक्करण मभिधानं यस्मात्तत्पदं वर्णपदाद्यात्मिका वैखरी त्वमित्यर्थः। इति केचित् ॥ ९ ॥

**इन्द्रियत्वानीति**। इन्द्रियाणा मिन्द्रियत्वानि विषय प्रकाशन सामर्थ्यानि तदनुग्रहा स्तेषाम् इन्द्रियाणां अनुग्राहकाः विषयप्रकाशनरूप सामर्थ्यापादका इति यावत्। ते देवाः दिग्वातार्कादयः इन्द्रियाभिमानिदेवाश्च त्वम् इन्द्रियाणा मिन्द्रियत्वं देवाश्च त्वदनुग्र हाः इति पाठे अनुग्रहाः अनुग्रहशब्दवाच्याः इन्द्रियाद्यभिमानिदेवाश्चेतत्सर्वं त्वत्त्वत्तः जातं त्वदनुग्रह प्रभवा देवा इत्यर्थः। अनुग्रह इत्येकवचनान्तपाठे - तदनुग्रहः तेषामधिष्ठानशक्तिश्च त्वमेवेत्यर्थः। बुद्धेरवबोधोऽध्यवसायः सत्यबाधिता जीवस्थानुस्मृतिः संस्कारजन्यं ज्ञानं च भवान् ॥ १० ॥

**भूतानामिति**। भूताना माकाशादीनां कारणं भूतादि स्तामसाहङ्कारः इन्द्रियाणा मनुग्राहक स्तैजसः राजसाहङ्कारः विकल्पा ना मनुग्राहको वैकारिकः सात्त्विकाहङ्कारः विविधं कल्पनं ज्ञान मनेनेति विकल्पः इन्द्रियं तत्कारणम् - इति वार्थः। अनुशयिना मनुशयवतां कर्मिणां (कर्मणां) भुक्तावशिष्टं कर्मानुशयशब्दार्थः। प्रधानं फलदं कर्म च त्वमेवेत्यर्थः ॥ ११ ॥

एवं सर्वकारणत्व निर्वाहकत्वप्रयुक्त सार्वात्म्य मभिधाय अथ सार्वात्म्य प्रयुक्तानित्यत्वादि दोषपरि जिहीर्षयाऽऽह नश्वरेष्विति। भावेष्ववस्थासु नश्वरेषु आगमापायिषु सत्सु यद्भवाश्रयमनश्वरं स्थिर मवस्थारहित माधारभूतञ्च तत्त्वमसि। एतदेव दृष्टान्तमुखेन विवृणोति - यथेति। द्रव्यस्य मृत्सुवर्णादे विकारेषु पिण्डत्वघटत्वकुण्डलत्वकटकत्वादिविकारेषु नश्वरेष्वपि द्रव्यमात्रं मृत्सुवर्णादिरूप मनश्वरं सर्वावस्थानुवृत्तं, तद्वत् वस्तुतो यद्यपि मृत्सुवर्णादिद्रव्यमपि नश्वरमेव। तथाऽपि यावत्स्वविकार मनश्वरत्वमात्राभिप्रायेण दृष्टान्तः ॥ १२ ॥

---

1. B. यत

**सत्त्वं रजस्तम इति गुणा स्तद्वृत्तयश्च याः ।**
**त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥**

**तस्मा न्न सन्त्यमीभावा यर्हि त्वय्येव[1] कल्पिताः ।**
**त्वञ्चामीषु विकारेषु ह्यन्यदा[2] व्यावहारि कः ॥ १४ ॥**

**गुणप्रवाह एतस्मिन्नबुधा स्त्वखिलात्मनः[3] ।**

**गतिं सूक्ष्मा मबोधेन संसरन्तीह कर्मभिः ॥ १५ ॥**

**यदृच्छया नृतां प्राप्य सुकल्या[4] मिह दुर्लभाम्**

**स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ! ॥ १६ ॥**

---

1. B.G.J.M1.V. त्वयि वि° 2. K.T.W. सन्सदा 3. M1.V. नि। 4. B.G.J. °ल्पा

**श्रीध०** ननु त्रिगुणात्मक कार्यरूपोऽपि त्वमित्युक्तत्वात् कथमनश्वरत्वं? तत्राऽऽह - **सत्त्वमिति**। तद्वृत्तय स्तत्परिणामाश्च महदादयः अद्धा साक्षात् त्वयि परे ब्रह्मणि कल्पिताः ॥ १३ ॥

**तस्मादिति**। तस्मान्नसन्तीति नन्वसतां कथं प्रतीतिः? अत आह - यर्हीति। यदा विकल्पिता स्तदैव प्रतीतिमात्रेण त्वयि सन्ति। त्वञ्चामीषुतदैव कारणतयाऽनुगतः अन्यदात्वव्यावहारिको निर्विकल्पकस्त्वमेवाऽवशिष्यसे[1] इत्यर्थः ॥ १४ ॥

एवं रूपत्वादज्ञान निबन्धनश्च संसार इत्याह -**गुणप्रवाह** इति सूक्ष्मां निष्प्रपञ्चां गति मबुधा अविद्वांसः। अबुदध्वेति वा पाठः। अतोऽबोधेन देहाभिमानेन कृतैः कर्मभिः संसरन्तीति ॥ १५ ॥

एवं तयो स्तत्त्वं निरूप्य तदप्राप्त्या शोचति - यदृच्छयेति। नृतां मनुष्यतां सुकल्पां पटुतरेन्द्रियाम् ॥ १६ ॥

---

1. B.J. विकल्पकः

**वीर०** एवमप्यविकारिणो मम विकारित्वं दुर्वार मित्यत आह - **सत्त्वमिति** द्वाभ्याम्। सत्त्वादयः प्रकृतिगुणाः, तेषां वृत्तयः परिणामरूपा महदादयश्च परे ब्रह्मणि त्वय्यद्धा त्वय्येव योगमायया सङ्कल्परूप ज्ञानेन योगेन कल्पिता स्त्वयि कृता इत्यर्थः। ब्रह्मणि परे इत्यस्य प्रधानपुरुषेश्वर इत्यादिः प्रधानपुरुषौ परौ प्रधानपुरुषेश्वर इत्युपक्रमात्। एवञ्च सूक्ष्मचिदचिद्विशिष्टे त्वयि कल्पिता इत्यर्थः ॥ १३ ॥

यत एवं यस्मात्कल्पिताः सृष्टा अमीभावाः महदादयः त्वयि चिदचिद्भ्यां निष्कृष्टे त्वयि न सन्त्येव साक्षान्न सन्त्येव। महदादिभावानां प्रकृत्यादिष्वेव साक्षात्सम्भवः, त्वयि तु प्रकृत्यादिद्वारेति न विकारित्व मितिभावः। यर्हि यदा त्वयि न सन्त्येव तदा विकारेष्वन्तः प्रविश्य सदा सन्निति व्यावहारिकः शास्त्रै र्व्यवह्रियत इत्यर्थः। अस्मदुक्तेष्वर्थेषु शास्त्रमेव प्रमाणमिति तात्पर्यम् ॥ १४ ॥

**तयोस्समानीय वरासनं मुदा निविष्टयो स्तत्र महात्मनोस्तयोः ।**
**दधार पादाववनिज्य तज्जलं सबृन्द आब्रह्म [3]पुनद्यदम्बु ह[3] ॥ ३६ ॥**

---

1- -K.T.W. कृष्णौ कुरूद्वह ! 2- -2 K.T.W. रसातलं 3- -3 K.T.W. पुनात्यदोऽम्बु हि

**श्रीध०** दैत्यराट् बलिः कथम्भूतो विश्वस्याऽऽत्मभूतं दैवं सान्वयः सपरिवारः ॥ ३३-३५ ॥

सबृन्दः सपरिजनः कथम्भूतौ पादाववनिज्य यदम्बु ययो रवनेजनोदक माब्रह्म ब्रह्माणमभिव्याप्य जगत् पुनत् पवित्रयत् वर्तते, तौ ॥ ३६ ॥

**वीर० तथेति** [1]यथा गुरोः कामं कृतवन्तौ तथा ममाऽपि कामं इष्टं कुरुतं नाऽऽवां शक्तौ इति मा वोचत मित्यभिप्रायेण विशिनष्टियोगीश्वरेश्वरौ निरतिशयाश्चर्यशक्तिमन्तौ। कोऽसौ काम इत्यत आह-भोजेति भोजराजः कंसः, तेन हतान् ॥ ३३ ॥

**एवमिति**। योगमाया माश्चर्यशक्तिम् उपाश्रितौ रसातलं (सुतलं) बलिचक्रवर्तिनो लोकं विविशतुः ॥ ३४ ॥

**तस्मिन्निति**। दैत्यराट् बलिः विश्वेषा मात्मनं दैवं दैवभूतं तथा नितरा मात्मनो दैवतभूतौ तस्मिन् सुतले प्रविष्टौ उपलभ्य दृष्ट्वा तयो र्दर्शनेन य आह्लाद स्तेन परिप्लुतः व्याप्तः आशयो मनो यस्य स सान्वयः सपरिवारः सद्य स्तदैव उत्थाय ननाम ॥ ३५ ॥

**तयोरिति**। तयो रामकृष्णयोः श्रेष्ठमासन मानीयाऽऽदाय समर्प्य तत्र वरासने पादाववनिज्य प्रक्षाल्य तज्जलं सपरिवार शिरसा दधार। कुतः ? हि यस्मात्, अदः अम्बुजलं आब्रह्मब्रह्माण मभिव्याप्य कृत्स्नं जगत् पुनाति पुनद्यदिति पाठे यदम्बु पवित्रयत् वर्तत इत्यर्थः ॥ ३६ ॥

**समर्हयामास स तौ विभूतिभिः महार्हवस्त्राभरणानुलेपनैः ।**
**[1]ताम्बूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्म समर्पणेन च ॥ ३७ ॥**

**स इन्द्रसेनो भगवत्पदाम्बुजं बिभ्रन्मुहुः प्रेमविभिन्नयाधिया ।**
**उवाच [2]हाऽऽनन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरः[3] ॥ ३८ ॥**

**बलिरुवाच**

**नमोऽनन्ताय बृहते नमः कृष्णाय वेधसे ।**
**साङ्ख्ययोगवितानाय[4] ब्रह्मणे परमात्मने ॥ ३९ ॥**

**दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् ।**
**रजस्तमस्स्वभावानां यन्नः प्राप्तं[5] यदृच्छया ॥ ४० ॥**

---

1. K.T.W स्रग्धूप 2. K.T.W. चा° 3. B.G.J. रम्। 4. K.T.W. °धा° 5. B.G.J. प्राप्तौ

**श्रीध०** इन्द्रसेनो बलिः प्रेमविभिन्नया प्रेमार्द्रया धिया बिभ्रद्धारयन् ॥ ३७-३८ ॥

अनन्ताय शेषाय बृहते फणैकदेशे विश्वधारणाद्बृहत् तस्मै कृष्णाय सदानन्दरूपाय च वेधसे जगद्विधात्रे सांख्ययोगवितानायेत्यदि पदत्रयमैक्य विवक्षया ॥ ३९ ॥

योगेश्वराणा मपि दुर्दर्शौ युवामस्माभिः दृष्टावित्येतन्नातिचित्रमित्याह - **दर्शनमिति** । दुष्प्रापमपि युष्मत्कृपया केषाञ्चिददुर्लभं सुलभमपिभवति, तदाह - रजस्तमस्स्वभावानामिति। नो दर्शनं प्राप्तौ ॥ ४० ॥

**वीर०** समर्हयामासेति। स बलिः तौ समर्हयामास विभूतिभिः पुष्कलैः अमृतभक्षणममृततुल्य भक्ष्यद्रव्यं स्वगोत्रं स्वकुलं वित्तमात्मा च तेषांसमर्पणेन च समर्हयामासेति सम्बन्धः ॥ ३७ ॥

**स** इति। इन्द्रसेनो बलिः प्रेमविभिन्नया प्रेमार्द्रया धिया भगवत्पदाम्बुजं धारयन् आनन्दजलैः आकुले व्याप्ते अक्षिणी यस्य प्रहृष्टान्युदञ्चितानि रोमाणि यस्य गङ्गादीनि कुण्ठितानि अक्षराणि यस्य सः। हे नृप! उवाच ॥ ३८ ॥

तदेवाऽऽह - नम इत्यादिना विमुच्यत इत्यन्तेन ग्रन्थेन [1]अनन्ताय शेषाय बृहते फणैकदेशेन विश्वधारकाय वेधसे जगद्विधात्रे साङ्ख्ययोग विधानाय साङ्ख्ययोग प्रवर्तकाय [1]थ वितानायेति पाठे मत्वर्थीयोऽच् द्रष्टव्यः। वितानो यज्ञः सच कर्मयोगोपलक्षकः योगो भक्तियोगः, साङ्ख्यं ज्ञानयोगः ते अस्याराधन रूपतया सन्तीति तथा तस्मै कर्मज्ञानयोगानु गृहीत भक्तियोगाराध्यायेत्यर्थः। ब्रह्मणे स्वरूपेण गुणैश्च निरतिशय बृहते परमात्मनेऽन्तः प्रवेश नियमनाभ्यां लोकत्रयस्य भर्त्रे व्याप्यगतदोषास्पृष्टाय च ॥ ३९ ॥

युवामस्माभिर्दृष्टावित्येतन्नातिचित्रमिति अभिप्रेत्याह - **दर्शनमिति**। वां युवयोः दर्शनं केषाञ्चित् भूतानां दुष्प्रापं दुर्लभञ्चाऽपि केषाञ्चित् युष्मत् कृपया तु सुलभमेव। तदुपपादयति रजस्तमः स्वभावानामिति। यद्यस्मात् रजस्तमः प्रचुर स्वभावानामपि नोऽस्माकं युष्मद्दर्शनं प्राप्तम्। अतो भवत्कृपैव तत्र निदानमिति भावः ॥ ४० ॥

सामाश्राव्य सम्बोध्य ॥ २८ ॥

**वीर०** तत्र दृष्टान्त माह खमिति। यथा खादयः तत्कृतेषु आकाशादिभिः कृतेषु यथाशयं व्याप्यानुरूपं आविष्कृताल्पभूर्येकनानात्वं यान्ति। तद्वदसौ परमात्माऽपि क्वचिदाविष्कृतत्वं क्वचिदल्पत्वं क्वचिद्भूरित्वं विपुलत्वं स्वत स्तस्यैकत्वं व्याप्य बहुत्वप्रयुक्तं नानात्वं च यातीत्यर्थः। एकस्यानेकेषु व्याप्तौ तत्प्रयुक्तनानात्ववस्तुत्वैकत्वेचाऽयं दृष्टान्तः न वस्तुतो व्याप्य व्यापकयो रेक द्रव्यत्वे ज्ञेयम् ॥ २५ ॥

एवमिति। उदाहृतः उक्तः उदाहृतमिति पाठे तूक्तं वचः श्रुत्वेत्यर्थः। विनष्टनानाधीः अब्रह्मात्मक भेदबुद्धिरहितः अत एव प्रीतमना स्तूष्णीं बभूव ॥ २६ ॥

अथेति। हे कुरुश्रेष्ठ! सर्वदेवतात्मक भगवदवतारस्थानत्वात्तथाभूता देवकी आत्मजाभ्यां रामकृष्णाभ्यां गुरोस्सान्दीपनेः पुत्रमानीतं श्रुत्वा अतीव विस्मिता सती ॥ २७ ॥

समाश्राव्य सम्बोध्य वैक्लव्या [1] दैन्यादश्रूणि लोचनयो र्यस्या सा प्राह ॥ २८ ॥

1. B Omits दैन्यात्

**देवक्युवाच**

**रामरामाऽप्रमेयात्मन् कृष्ण योगे[1]श्वरेश्वर ।**
**वेदाऽहं वां विश्वसृजा मीश्वरा वादिपूरुषौ ॥ २९ ॥**

**कालवध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् ।**
**भूमेर्भारायमाणाना मवतीर्णौ [2] किलाऽद्य मे ॥ ३० ॥**

**यस्यांशांशांशभागेन विश्वोत्पत्तिलयादयाः ।**
**भवन्ति किल विश्वात्मन् तं त्वाऽद्याहं गतिंगता ॥ ३१ ॥**

**चिरान्मृतसुतादाने गुरुणा [3] किलचोदितौ ।**
**आनिन्यथुः पितृस्थाना द्गुरवेगुरुदक्षि[1]णाम् ॥ ३२ ॥**

1. K.T.W. °गी° 2. K.T.W. क्षयाय 3. B.G.J. काल 4. K.T.W. °णाः

**श्रीध०** भूमेर्भारायमाणानां राज्ञामर्थे तेषां निधनार्थं मे मयि किलावतीर्णौ ॥ ३० ॥

हे आद्य ! यस्यांशः पुरुष स्तस्यांशो माया, तस्या अंशा गुणाः तेषां भागेन परमाणुमात्रलेशेन विश्वेत्पत्त्यादयो भवन्ति तं त्वा त्वां गतिं शरणं गतास्मि ॥ ३१ ॥

आनिन्यथु रानीतवन्तौ पितृस्थानाद्यात्मसमम् ॥ ३२-३४ ॥

**वीर०** तदेवाऽऽह रामेति पञ्चभिः। हे अप्रमेयात्मन्! अपरिच्छेद्यस्वरूप ! योगेश्वराणा माश्चर्यशक्तिमता मपीश्वरौ वां युवां विश्वसृजां ब्रह्मादीना मीश्वरावादिपूरुषौ जगत्कारणपुरुषावहं वेद वेद्मि ॥ २९ ॥

तर्ह्येवम्भूतयो रावयोः किमर्थं यदुषु जन्मेत्यत आह - कालेति। कालवशेन विध्वस्तं सत्त्वं सत्त्वगुणो येषां उच्छास्त्रवर्तिनां शास्त्रीयमर्यादातिलङ्घिना मत एव भूमे र्भारायमाणानां राज्ञां क्षयाय मे मयि अस्मत्तो वाऽवतीर्णौ ॥ ३०॥

यस्य तव अंशांशांशभागेन अयुतायुतशतैककलांशकांशेन विश्वस्योत्पत्त्यादयो भवन्ति किलेति शास्त्रप्रसिद्धिः तं पूर्णब्रह्मरूपं त्वा मधुनाऽहं गतिं शरणं गताऽस्मि ॥ ३१ ॥

स्वाभिप्रायमावेदयति - चिरादिति द्वाभ्याम्। मृतसुतादाने निमित्ते गुरुणा सान्दीपनिना चोदितौ भवन्तौ पितृस्थानाद्यमसमदना दानिन्यतुः आनीतवन्तौ किल गुरुदक्षिणाः विपुलदक्षिणारूपान् पुत्रान् आनिन्यतुरिति सम्बन्धः। दक्षिणाः इति पाठे अर्पयितुमिति शेषः ॥ ३२ ॥

---

1. B.omits वेद

**तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ।**
**भोजराजहतान्पुत्रान् कामये द्रष्टुमाहृतान् ॥ ३३**

**ऋषिरुवाच**

**एवं सञ्चोदितो मात्रा रामः [1-]कृष्णश्च भारत[-1] ।**
**[2-]सुतलं [-2]संविविशतु र्योगमाया मुपाश्रितौ ॥ ३४ ॥**

**तस्मिन् प्रविष्टा वुपलभ्य दैत्यराड्विश्वात्मदैवं सुतरां तथाऽऽत्मनः ।**
**तद्दर्शनाह्लाद परिप्लुताशयः सद्यसमुत्थाय ननाम सान्वयः ॥ ३५ ॥**

श्रीशुक उवाच

[1]आकर्ण्येत्थं पितुर्वाक्यं भगवान्सात्वतर्षभः ।
प्रत्याह प्रश्रयाऽऽनम्रः प्रहसन् श्लक्ष्णया गिरा ॥ २१ ॥

श्रीभगवानुवाच

वचो वस्समवेतार्थं तातैत दुपमन्महे ।
यन्नः पुत्रा न्समुद्दिश्य तत्त्वग्राम उदाहृतः ॥ २२ ॥

अहं यूय मसावार्य [2]इमे च द्वारकौकसः ।
सर्वेऽप्येवं यदुश्रेष्ठ [3]विमृश्याः सचराचरम् ॥ २३ ॥

आत्मा ह्येकः स्वयञ्ज्योति र्नित्योऽन्यो [4]प्राकृतै र्गुणैः ।
आत्मसृष्टै स्तत्कृतेषु देहेषु बहुधे यते ॥ २४ ॥

---

1. K.T.W. निशम्ये॰ 2. K.T.W. य इमे 3. T.W. विश्वमेवं 4. B.G.J. निर्गुणे 5. B.G.J. भूतेषु

**श्रीध० वच** इति। उपमन्महे [1-]उपमन्यामहे[-1] समुद्दिश्य विषयीकृत्य तत्त्वग्राम स्तत्त्वसमूहः उदाहृतः सम्यङ्निरूपितः ॥ २१,२२ ॥

इमामेव दृष्टिं सर्वत्र विधत्स्वेत्याह - अहमिति। एवं विमृश्या ब्रह्मत्वेनैवाऽन्वेषणीयाः। किञ्च सचराचरं जगदपि ॥ २३ ॥

ननु, नानाविकारवतां कुतो ब्रह्मत्वमिति चेत् न, ब्रह्मण एवोपाधि धर्मै र्बहुधा प्रतीतेरिति सदृष्टान्त माह द्वाभ्याम् - आत्मा हीति। यथा खादिभूतानि तत्कृतेषु घटादिषु आविस्तिरोभावादिकं यान्ति, एवं असावात्माऽप्यात्मसृष्टैर्गुणैः कृत्वा तत्कृतेषु देहेषु बहुधा ईयते पुनश्च यथाऽशयं यथोपाध्याविर्भाव तिरोभावादि रूपेण प्रतीयते न वस्तुतः कुतः ऐको बहुधा स्वयञ्ज्योति र्दृश्यत्वेन नित्योऽनित्यत्वेन, अनन्योऽन्यत्वेन निर्गुणः सगुणत्वेन इत्यादि बहुधात्वं प्रपञ्चनीयम् ॥ २४ ॥

---

1--1 MI.V. उपपन्नं मन्यामहे

**वीर०** निशम्येति। प्रश्रयेण विनयेन आनम्रः श्लक्ष्णया मृद्व्या गिरा प्रत्याह ॥ २१ ॥

तदेवाऽऽह वच इति चतुर्भिः। आत्मनः परमात्मत्वं गोपयन्नाह - हे तात! वो युष्माक मेतद्वचो वाक्यं समवेतार्थं

मुपपन्नार्थम् उपमन्महे उपमन्यामहे, अभ्युपगच्छाम इति यावत्। यद्वा, समवेतार्थं समवेतः अस्मच्छिक्षागर्भितः अर्थो यस्य तथाभूत मुपलभामह इत्यर्थः। कुतः किञ्च तद्वच इत्यत आह यदिति। यद्यतः पुत्रानस्मान् समुद्दिश्य विषयीकृत्य, लक्ष्यीकृत्येति यावत्। तत्त्वग्रामः तत्त्वसमुदायः उदाहृतः सम्यक् निरूपितो येनेत्येतद्वचः सर्वं ब्रह्मात्मकं इत्येव मस्मान् ग्राहयितु मस्मानेव विषयीकृत्य उक्तमिति भावः ॥ २२ ॥

तदेवाऽऽह अहमिति। असावार्योऽग्रजः सर्वे द्वारकौकसः किं बहुना हे यदुश्रेष्ठ ! सचराचरं विश्वं कृत्स्नं जगच्चैवं परमात्मात्मकं तत्कारणकं तन्निर्वाह्यश्चेत्यर्थः ॥ २३ ॥

कुत इत्यत आह - आत्मेति। हि यस्मा दात्मा परमात्मा तावदात्मना स्वेनैव सृष्टैः प्राकृतै र्गुणै र्गुणपरिणामात्मकै र्महदादिभिः तत्कृतेषु महदादिभिः सृष्टेषु भूतेषु देवमनुष्यादिषु बहुधा ईयते व्याप्त इति प्रमाणतो ज्ञायते। कथम्भूतः स्वयञ्ज्योतिः स्वयंप्रकाशस्वरूपः अन्यः देवादिशरीर तदभिमानिजीवेभ्योऽन्यः ॥ २४ ॥

**खं वायुर्ज्योति रापो भू स्तत्कृतेषु यथाशयम्।**
**[1-]आविस्तिरो[-1]ऽल्पभूर्येक[2] नानात्वं यात्यसावपि ॥ २५ ॥**

## -:स्मरोद्गीथादि नामक देवकी षड्गर्भानयन कथाः-

**श्रीशुक उवाच**

**एवं भगवता राजन् वसुदेव उदाहृतम्[3] ।**
**श्रुत्वा विनष्टनानाधी स्तूष्णींप्रीतमना[4] अभूत् ॥ २६ ॥**
**अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता ।**
**श्रुत्वाऽऽनीतं गुरोः पुत्र मात्मजाभ्यां सुविस्मिता ॥ २७ ॥**
**कृष्णरामौ समाश्राव्य पुत्रान्[5] कंसविहिंसितान्[6] ।**
**स्मरन्ती कृपणं प्राह वैक्लव्या[7] दश्रुलोचना ॥ २८ ॥**

---

1--1 K.T.W. आविष्कृताऽल्प 2. B.G.J. °को 3. B.J.K.T.W. °तः *4.K.T.W. नादृश्यभूत् 5. MI.V.add स्व 6. MI.V.Omit "वि" 7. B.G.J. "व्या"

**श्रीध०** सुविस्मिता सती ॥ २५-२७ ॥

सर्वेऽपीत्थं किं न विदुरित्यत आह - गुणप्रवाह इति। सत्त्वादिगुणप्रवाहरूपे एतस्मिन् संसारे पतिता इति शेषः। सर्वान्तरात्मन स्तव सूक्ष्मां दुर्ज्ञेयां गतिं याथात्म्य मबुधाः अजानन्तः अबोधेन तेनैवाऽज्ञानेन तन्मूलैः कर्मभिः पुण्यापुण्यात्मभिर्हेतुभिः संसरन्ति ॥ १५ ॥

इत्थं भगवद्याथात्म्य मजानन्त मनुशोचति - यदृच्छयेति। इह लोके दुर्लभां सुकल्यां पटुतरेन्द्रियां नृतां नरत्वं प्राप्याऽपि हे ईश्वर! त्वन्मायया स्वार्थे स्वश्रेयस्साधने त्वद्याथात्म्यज्ञाने प्रमत्तस्याऽनवहितस्य पुंसो वयः आयु र्गतम् अहो! वृथा गत मित्यर्थः ॥ १६ ॥

**असावहं ममैवैते देहे चास्यान्वयादिषु ।**
**स्नेहपाशै र्निबध्नाति भवान्सर्वमिदं जगत् ॥ १७ ॥**

**युवां न नः सुतौ साक्षात्प्रधानपुरूषेश्वरौ ।**
**भूभारक्षत्रक्षपण[1-] अवतीर्णौ[-1] तथाऽऽत्थ ह[2] ॥ १८ ॥**

**तत्ते गतोऽस्म्यरण मद्य पदारविन्द मापन्नसंसृति भयापह मार्तबन्धो ।**
**एतावताऽल मलमिन्द्रियलालसेन मर्त्यात्मदृक्त्वयि परे यदपत्य बुद्धिः ॥ १९ ॥**

**सूतीगृहे ननु जगाद भवा नजो नौ सञ्जज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ।**
**नानातनू र्गगनव द्विदध ज्जहासि को वेद भूम्न उरुगाय विभूति मायाम् ॥ २० ॥**

---

1--1 K. MI.T.V.W. °णायाव° 2. K.MI.T.V.W. हि। 3. MI.V. मायाः

**श्रीध०** अहो किमिति प्रमत्तोऽसि त्वया बहुभिः पाशै र्निबद्धत्वा दित्याह - **असावह** मिति। देहे अस्य देहस्यान्वयादिषु पुत्रादिषु च ममैवेत इति ॥ १७ ॥

अहो! त्वत्पुत्रयो रावयोः किमिद मारोप्यते? अत आह - युवामिति। भूभारक्षत्रक्षपणार्थ मवतीर्णौ तथा ह निश्चित मात्थ कथयसि ॥ १८ ॥

**तदिति**। तत्तस्मादरणं शरण मापन्नानां संसृतिभय मपहन्तीति तथा तत् ननु त्वमतिसुखी वृथा किं निर्विद्यसेऽत आह - एतावतेति। इन्द्रियलालसेन इन्द्रियार्थतृष्णया यद्येन इन्द्रियलालसेन मर्त्ये शरीरे आत्मदृक् आत्मबुद्धि रहं, त्वयि च परमेश्वरे अपत्यबुद्धि रस्मि। तेनाऽलमलं पर्याप्तमिति ॥ १९ ॥

ननु कुत एतत् अहं परमेश्वर इति। तत्राऽऽह - **सूतीगृहे** इति। नौ आवयोः अनुयुगं प्रतियुग्मं यदा सुतपाः पृश्निरिति युग्मम्, यदा कश्यपो दितिश्चेति युग्मम्, अधुना वसुदेवो देवकीति युग्मम् एवं हि प्रतियुग्मम् अज एवाऽहं सञ्जज्ञे अवतीर्ण इति भवान्ननु जगाद। नन्वन्योऽसौ चतुर्भुजो देव इति तत्राऽऽह - नानातनूरिति। गगनवदसङ्ग एव त्वं भूम्नः सर्वगतस्य विभूति[1-]रूपां मायां[-1] को वेदेति ॥ २० ॥

1--1. MI.V. रूपाः मायां

**वीर०** किञ्च, असाविति। देहे, अस्य देहस्यान्वयादिषु अनुबन्ध्यादिषु पुत्रदारादिष्वसौ देहोऽहं, इमे पुत्रादयो ममेत्येवंरूपैः स्नेहपाशैः सर्वमिद माब्रह्म पश्वादिपर्यन्तं जगत् भवान् बध्नाति बद्धं करोति ॥ १७ ॥

यदुपक्रान्तं 'जाने वामस्य यत्साक्षात् प्रधानपुरुषौ परौ' (भाग.10-85-3) इति, तदुपसंस्मारयति - युवामिति। भूमे र्भारभूतक्षत्रियनिरसनार्थ मवतीर्णोऽह मित्येत दात्थ सूतिकागृहे कथितवानसि हीत्यर्थः ॥ १८ ॥

तस्मादशरणः उपायान्तर शून्योऽहं हे आर्त्तबन्धो! आपन्नानां संसृतिभय मपहन्तीति तथा तत्तव पदारविन्दं शरणङ्गतोऽस्मि। ननु त्वमतिसुखी, वृथा किमिति निर्विण्णस इत्यत आह - एतावतेति। यत् यस्मात् मर्त्ये शरीरे आत्मदृक् आत्मबुद्धि रहं त्वयि च प्रधानपुरुषेश्वरे अपत्यबुद्धि रस्मि अतः इन्द्रियार्थ तृष्णया अलमलं पर्याप्त मित्यर्थः ॥ १९ ॥

ननु कुत एतदहं परमेश्वर इति, तत्राऽऽह - सूतीगृह इति। ननु हे भगवन् भवन् सूतीगृहे जगाद, किं तत्? यत् अजः कर्मायत्तोत्पत्तिरहितोऽप्यहं निजधर्मणां स्वकृतधर्ममर्यादानां गुप्त्यै रक्षणाय अनुयुगं प्रतियुगं जज्ञे अवतरामीत्येतत्। नन्वन्योऽसौ चतुर्भुजो देव इत्यत आह - नानेति। नानातनूर्विदधत्तावद्बिभ्राणोऽजहासि गगनवत् यथा गगनं सर्वत्र व्याप्नुवदपि अजहत्स्वभावं तथा भवानपि नानातनूष्ववस्थितोऽपि अजहत्स्वभाव इति दृष्टान्तार्थः। इत्यमहं सम्भावयामि, तत्वत स्तव माहात्म्यं को वेदेत्याह। हे उरुगाय! भूम्नस्सर्वगतस्य तवविभूतीः मायाः आश्चर्य शक्तीश्च को वेद? न कोऽपि वेदेत्यर्थः ॥ २० ॥

1. B.Omis भवान् 2. B. ततः

**दैत्यदानवगन्धर्वसिद्ध[1] विद्याधरोरगाः[2] ।**
**यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥ ४१ ॥**

**विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि ।**
**नित्यं निबद्धवैरास्ते वयंचान्ये च तादृशाः ॥ ४२ ॥**

**★ प्राप्ताः सालोक्य सामीप्यं सारूप्यमथसात्मताम् ।**
**ते सर्वे पुण्डरीकाक्ष भावोहि भवकारणम् ॥ ४३ ॥**

**केचनोद्बद्ध[3]वैरेण भक्त्या केचन कामतः ।**
**न तथा सत्त्वसंरब्धाः सन्निकृष्टा स्सुरादयः ॥ ४४ ॥**

**इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ।**
**न विदन्त्यपि योगेशा[4] योगमायां कुतो वयम् ॥ ४५ ॥**

---

1. B.G.J. °र्वाः 2. B.G.J. °ध्रचारणाः ;K.T.W. धराऽपि। *This verse is found only in K.T.W. edns. 3. MI.V. °दुद्बुद्ध° 4. K.T.W. °गी°

**श्रीध०** अहो विद्विषो वयं सात्त्विकभक्तेभ्योऽपि स भाग्या इत्याह - दैत्यादिभिस्त्रिभिः ॥ ४१,४२ ॥

उद्बद्धवैरेण या भक्तिः तया केचनेति चैद्यादयः। कामतो भक्त्या गोप्यादयो यथा सन्निकृष्टाः त्वदात्मतां प्राप्ताः। तथा च सत्त्वसंरब्धाः सत्त्वाविष्टा अपि सुरादयो न सन्निकृष्टा इति ॥ ४३ ॥

ननु सात्त्विकेभ्योऽपि राजसादयः सन्निकृष्टा इति चित्रम्। तदाह - इदमित्थमिति। इदमिति स्वरूपतः, इत्थमिति विशेषतश्च ॥ ४४, ४५ ॥

**वीर०** अहो विद्विषोऽपि वयं सात्त्विक भक्तेभ्योऽपि स भाग्या इत्याह - दैत्येति त्रिभिः। दैत्यादयस्त्वयि नित्यं निबद्धं वैरं येषां तथाभूताः कथम्भूते त्वयि? विशुद्धस्य रजस्तमोभ्यामननुविद्धस्य सत्त्वस्य धाम्नि आश्रये। अनेन कामक्रोधादि प्राकृतदोष प्रतिभटत्वमभिप्रेतम्। अद्धा साक्षात् शास्त्र शरीरिणि शास्त्रवेद्यं शरीरं स्वरूप मस्यास्तीति तथा। तस्मिन् ते वयमित्थम्भूतावयमित्यर्थः तथाचाऽन्ये कंसादयश्च तादृशा नित्यं निबद्धवैरा इत्यर्थः ॥ ४१,४२ ॥

प्राप्त इति त एते सर्वे सालोक्यादिरूपां मुक्तिं प्राप्ताः। तत्र सालोक्यं नाम भगवता सह समान लोकावस्थायित्वं, सामीप्यं सान्निध्यम्, सारूप्यम् समानवेषता, सात्मता समानात्मगुणत्वं सायुज्यमिति यावत्। गुणाष्टकाविर्भाव साम्यं हि सायुज्यम्। सार्ष्टि त्वमथसात्मताम् इति पाठे सार्ष्टित्वं समानसमृद्धित्वम् सालोक्यादीनि त्रीणि सायुज्य प्रयुक्तानीति न मुक्ति तारतम्य शङ्कावकाशः। विबद्धवैराणामपि सालोक्यादि प्राप्तिः कुतः इत्यत आह - भाव इति। हि यस्मात् भावः चित्तवृत्ति विशेषः भवकारणं फलोदय कारणं त्वयि कोऽपि वा निरन्तर चित्तवृत्ति विशेषो मुक्तिकारणमित्यर्थः ॥

निदर्शयति - केचनेति। केचन कंसादयः उद्बद्धवैरेण त्वयि निबद्धवैरेण, प्राप्ता इत्यनुषज्यते। केचन भक्त्या, केचन गोपीजनाः कामतः कामात्प्राप्ताः। किञ्च यथा सन्निकृष्टाः त्वत्सात्मतां प्राप्ताः तथा सत्त्वसंरब्धाः सत्त्वाविष्टा अपि सुरादयो न प्राप्ताः यद्वा, यथोद्बद्धवैरादिना प्राप्ताः तथा सन्निकृष्ट अमि सत्त्वप्रधाना अपि नाऽनु प्राप्ता इत्यर्थः ॥ ४३ ॥

त्वत्कृपासनाथो भाव एव भवकारणम्, अन्यथा त्वन्माया याथात्म्यवेदिनां कृतस्ततो निस्तार इत्यभिप्रयन्नात्मनः कैमुत्यनयेन तस्यादुर्ज्ञेयतामाह - इदमिति। हे योगीश्वरेश्वर! योगीश्वरा अपि प्रायशः तव योगमायया इदमित्थमिति स्वरूपतः स्वभावतश्च न विदन्ति। कुतो वयं विद्मः ॥ ४४,४५ ॥

**तन्नः प्रसीदनिरपेक्ष विमृग्ययुष्मत् पादारविन्दधिषणो[1]घगृहान्धकूपात् ।**
**निष्क्रम्य निश्वशरणाङ्घ्र्युपलब्धवृत्तिः शान्तो यथैक उत सर्वस[2]खश्चरामि ॥ ४६ ॥**

**शाध्यस्मानीशितव्येश निष्पापान् कुरु नः प्रभो ।**
**पुमान्यदृच्छयाऽऽतिष्ठं श्चोदनाया विमुच्यते ॥ ४७ ॥**

**श्रीभगवानुवाच**

**आसन्मरीचेः षट्पुत्रा ऊर्णायां प्रथमेऽन्तरे ।**
**देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥ ४८ ॥**

**तेनाऽऽसुरी मगन् योनि मधुनाऽवद्यकर्मणा ।**
**हिरण्यकशिपोर्जाता नीतास्ते योगमायया ॥ ४९ ॥**

**देवक्या उदरे जाता राजन् कंसविहिंसिताः ।**

**सा तान्शोचत्यात्मजान्स्वान् त इमेऽध्यासतेऽन्तिके ॥ ५० ॥**

---

1. B.G.J.MI.V. °णान्य 2. B.G.J.MI.V. °खै° 3. MI.V. °जांस्तुत

**श्रीध०** तदेवं यद्यपि वैरभावेन त्वत्प्राप्तिर्भवे त्तथापि मां सात्त्विकं कुर्विति प्रार्थयते - तदिति। तत्तथा नः प्रसीद, यथा निरपेक्षैः आप्तकामैः अपि विमृग्यं युष्मत्पादारविन्दं तदेव धिषणमाश्रयः तस्मादन्यत् गृहं तदेवाऽन्धकूपः तस्मान्निष्क्रम्य निर्गत्य विश्वस्य शरणं रक्षितारो वृक्षाः तेषामङ्घ्रिमूलेषु स्वत एव गलितैः फलादिभिः उपलब्धा प्राप्ता वृत्तिर्जीविका येन सोऽहं शान्तस्सन्नेक एव चरामि, उत अथवा सर्वेषां सखायो महान्तस्तैस्सह यथा चरामीति ॥ ४६ ॥

कथमल्पपुण्यानामेवम् भावः सम्भवतीति चेत्तर्हि यथैतद्भवेत्तथाऽस्माननुशिक्षयेत्याह-शाधीति हे प्रभो! ईशितव्याः सर्वजीवाः तेषामीश। यत् तवाऽनुशासनमातिष्ठन्नाश्रयंश्चोदनायाः विधि निषेध लक्षणायाः सकाशाद्विमुच्यते न खलु त्वद्भक्तो विधिकिङ्करः स्यादिति भावः ॥ ४७ ॥

तदुक्तं सर्वमनुमोद्य स्वागमन कारणं सप्रपञ्चं कथयति आसन्निति पञ्चभिः। ऊर्णायां भार्यायां प्रथमेऽन्तरे स्वायम्भुव मन्वन्तरे ते देवाः सुतां वाचं यभितुं यब्धुं मैथुनेन रमयितुम् उद्यतमुद्युक्तं कं प्रजापतिं जहसुः उपहसितवन्तः ॥ ४८ ॥

तेनावद्यकर्मणा पापेनाऽसुरीं योनिमगन्, अधुना तत्क्षणमेव हिरण्यकशिपो र्जाता इत्यर्थः ॥ ४९ ॥

तेच योगमायया ततो नीतास्सन्तो देवक्या उदरे जाताः। हे राजन् बले! ते च कंसेन विहिंसिताः। साच तान् आत्मजान् मत्वा शोचति। ते च इमे तवान्तिकेऽध्यासते ॥ ५० ॥

**वीर०** तन्न इति। तत्तस्मात् त्वन्मायास्वरूपस्वभाव वेदनतरणयोः दुष्करत्वात्, केवलं प्रसीदप्रसन्नो भव, अस्माननुगृहा णेत्यर्थः। कथं यथा निरपेक्षैः निष्कामैः विमृग्ये युष्मत्पादारविन्दे धिषणा बुद्धिर्यस्य अघयुक्तं गृहमेवाऽन्धकूपः तस्मान्निष्क्रम्य विश्वस्य शरणं रक्षितारो वृक्षाः तेषामङ्घ्रिषु मूलेषु उपलब्धै स्वत एव गलितैः फलादिभिः वृत्तिः जीवनं यस्य सोऽहं शान्तः सन्नेक एव उत अथवा सर्वेषां सखायो ये महान्तः तैः सहितश्चरामि तथाऽनुगृहाणेत्यर्थः। सर्व सह पाठे शीतोष्णादि द्वन्द्वसहः ॥ ४६ ॥

प्रकृतागमनप्रयोजनबुभुत्सया स्वविषयकं शासनं प्रार्थयते। शाधीति। हे ईशितव्येश। ईशितव्या नियम्याः तेषाम् ईश! नोऽस्मान् शाधि कैङ्कर्याऽज्ञापनेन शिक्षयेत्यर्थः। किं तदित्यत आह - निष्पापानिति। हे प्रभो! ततोऽपि किमत आह - पुमानिति। तिष्ठन् त्वच्छासनमाश्रयन् चोदनायाः कर्मबन्धाद्विमुच्यते ॥ ४७ ॥

इत्थं प्रार्थितः प्राह भगवान् - आसन्निति। प्रथमान्तरे स्वायम्भुवमन्वन्तरे मरीचेः प्रजापतेः ऊर्णायां भार्यायां षट्सुताः आसन् ते देवाः सुतां सरस्वतीं यभितुं मैथुनम् कर्तुम् उद्युक्तं कं ब्रह्माणं वीक्ष्य जहसु र्हसित वन्त इत्यर्थः ॥ ४८ ॥

तेन परिहासात्मकेन दुष्टेन कर्मणा आसुरीं योनिं प्रापुः। तदैव[1] हिरण्यकशिपोर्जाताः। ते च योगमायया शक्त्या ततो नीतास्सन्तः देवक्या उदरे जाताः। हे राजन् तेन कंसेन विहिंसिताः देवकीसुतान् आत्मजान् मत्वा शोचति। ते चेमे तवान्तिकमन्तिके अध्यासते। 'अधि शीङ् स्थासां कर्म' (अष्टा.1-4-46) इत्याधारस्य कर्मत्वम् ॥ ४९, ५० ॥

---

1. B. तथैव

**इत एतान्प्रणेष्यामो मातृशोकापनुत्तये ।**
**ततः[1-] पाप वि[-1]निर्मुक्ताः लोकं यास्यन्ति विज्वराः ॥ ५१ ॥**

**स्मरोग्दीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद्[2] घृणी ।**
**षडिमे मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम् ॥५२॥**

**इत्युक्त्वा तान् समादाय इन्द्रसेनेन पूजितौ ।**
**पुनर्द्वारवतीमेत्य मातुः पुत्रा नयच्छताम् ॥ ५३ ॥**

**तान्दृष्ट्वा बालकान्देवी पुत्रस्नेह स्नुतस्तनी ।**
**परिष्वज्याऽङ्क मारोप्य मूर्ध्न्यजिघ्र दभीक्ष्णशः ॥ ५४ ॥**

**अपाययत्स्तनं प्रीता[3] सुतस्पर्शपरिस्नुतम्[4] ।**
**मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥ ५५ ॥**

**पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः ।**
**नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५६ ॥**

**ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् ।**
**मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम्[5] ॥ ५७ ॥**

1--1. B.G.J.MI.V. ततः शापाद्वि 2. MI.V. भूः घृणिः 3. K.T.W. प्रात्या 4. B.G.J. °प्लुता। 5. K.MI.T.V.W. विहायसाम्

**श्रीध०** इत इति। लोकं देवलोकम् ॥ ५२ ॥

स्मरोद्गीथः स्मरसहित उद्गीथः सद्गतिं मोक्षम्। स्मरस्यैव पूर्वंकीर्तिमानिति नाम। अतः 'कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः अर्पयामास' (भाग.10-1-57) इत्युक्तम् ॥ ५२ ॥

इतीति। अयच्छताम् अर्पयामासतुः ॥ ५३,५४ ॥

अमृतत्वे हेतुः गदाभृतः पीतशेषमिति। नारायणाङ्गसंस्पर्शेनः प्रतिलब्धम्। देवा वयमिति आत्मदर्शनम् यैस्ते ॥ ५५ ॥

धाम देवलोकम् ॥ ५६ ॥

**वीर०** तत इति। मातुर्देवक्याः शोकापहरणाय इत एतान्प्रणेष्यामः। ततः शोकापनोदनानन्तरं पापात् प्रजापत्यपहासात्मकात् विनिर्मुक्ताः, अत एव विज्वराः निर्दुःखाः लोकं तावत् पुण्यलोकं यास्यन्ति। ततो मत्प्रसादेन मदनुग्रहेण हेतुना इमे स्मरादयः षट् सद्गतिं मुक्तिं यास्यन्ति ॥ ५० ॥

स्मरोद्गीथ इति सन्धिरार्षः। स्मरसहित उद्गीथ इति मध्यमपदलोपी समासे वा ॥ ५१ ॥

इतीति। अयच्छतामर्पयामासतुः ॥ ५२ ॥

तानिति। पुत्रस्नेहेन स्नुतौ स्नवन्तौ स्तनौ यस्यास्सा अभीक्ष्णवाः पुनः पुनः मूर्ध्नि अजिघ्रत् ॥ ५३ ॥

सुतानां संस्पर्शेन स्नुसं क्षरन्तं स्तनमपाययत्। तत्र हेतुः विष्णोः मायया मोहिता। मायां विशिनष्टि यथा सृष्टिः प्रवर्तते। सृष्टिः इत्यस्य विश्वेत्यादिः ॥ ५४ ॥

पीत्वेति। तस्या देवक्याः अमृततुल्यं पयः स्यन्यं तत्र हेतुः गदाभृतः श्रीकृष्णस्य पीतशेषं पीत्वा नारायणस्य

श्रीकृष्णस्य अङ्गसंस्पर्शात् प्रतिलब्धम् आत्मदर्शनं स्वात्मपरमात्म याथात्म्यज्ञानं यैस्ते, बलं बलभद्रञ्च नमस्कृत्य सर्वभूतानां [1]मिषतां पश्यतां सतां विहायसा धाम देवलोकं ययुः ॥ ५५,५६ ॥

---

1.B. omits मिषतां

**तं दृष्ट्वा देवकी देवी मृतागमननिर्गमम् ।**
**मेने सुविस्मिता मायां कृष्णस्य [1]रचितां नृप ॥ ५८ ॥**
**एवं विधान्यद्भुतानि कृष्णस्य परमात्मनः ।**
**वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥ ५९ ॥**

**सूत उवाच**

**य इदमनुश्रुणोति श्रावयेद्वा मुरारेः चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ।**
**जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ६० ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे
मृताग्रजानयनं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

1. K.T.W. चरितां 2. K.T.W. मल

**श्रीध० तमिति।** मृतानां आगमनं निर्गमनञ्च श्रीकृष्णस्य मायां मेने तेनैव अपत्यादि रूपेण रचिताम् ॥५७,५८॥

अमृतं कीर्तिर्यस्य तस्य। व्यासपुत्रैः इति बहुवचनं पूजार्थम्। जगतामघं भिनत्तीति तथा तत् अलं निश्शेषं यथा भवति तथा न कृच्छ्रादिवदति। तदेवं मोक्षहेतुत्वञ्चोक्तं तद्भक्तानान्तु सत्कर्णपूरं परमसुखावहं कर्णाभरणमिति सुखारूपता माह। किञ्च भगवति कृतम् आवेशितं चित्तं येन स तथाभूत्वा तस्य क्षेमधाम कालादिभयरहितं लोकं यातीति ॥ ५९,६० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

**वीर०** तमिति। तं मृतानां आगमनपूर्वकं निर्गममवलोक्य सुतरां विस्मिता सती श्रीकृष्णस्य मायां मेने सर्वं तन्मायया कृतममन्यत। माया आश्चर्यशक्तिः ॥ ५७ ॥

एवमिति। हे भारत! अनन्तवीर्यस्य अनन्तकल्याणवीर्यसूचकगुणाकरस्य भगवतः इत्थम्भूतानि वीर्याणि प्रभावसूचकचेष्टितानि अनन्तानि सन्ति, न साकल्येन वक्तुं श्रोतुं वा शक्यानीति भावः ॥ ५८ ॥

उपवर्णितध्यानश्रवणादिफलमाह सूतः - य इति। व्यासपुत्रैरिति बहुवचनं गुरुत्वाभिप्रायम्। अमला कीर्तिर्यस्य मुरारेः चरितमलं निश्शेषं यथा तथा। जगतोऽघं भिनत्तीति तथा न कृच्छ्रादिवत्। यत्किञ्चिदघभिदिति भावः। तदेवं पापक्षयहेतुत्वं, अत एव मोक्षहेतुत्वञ्च उक्तम्। किञ्च तद्भक्तानां सत्कर्णपूरं परमसुखावह कर्णाभरणरूपम् इत्थम्भूतं इदं चरितं यः पुमाननुश्रुणोति श्रावयेत् वा, सः भगवति कृतं निहितं चित्तंयेन तथाभूतः तद्भगवत्सम्बन्धि क्षेमं कालादि भयरहितं धाम स्थानं याति प्राप्नोति ॥ ५९,६० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥



# षडशीतितमोऽध्यायः

## (श्रीविजयध्वजतीर्थरीत्या एकनवतितमोध्यायः)★

-सुभद्राहरणकथा -

### [1-]राजोवाच[-1]

ब्रह्मन् वेदितुमिच्छा[2]मि स्वसारं रामकृष्णयोः ।
यथोपयेमे विजयो या ममाऽसीत्पितामही ॥ १ ॥

### [3-]श्रीशुक उवाच[-3]

अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ।
गतः प्रभास मशृणोन्मातुलेयीं स आत्मनः ॥२॥

दुर्योधनाय राम स्तां दास्यतीति न चाऽपरे ।
तल्लिप्सु स्स यति र्भूत्वा त्रिदण्डी द्वारका मगात् ॥३॥

[4-]तत्र वै[-4] वार्षिकान् मासा नवात्सीत् स्वार्थसाध[5]कः ।
पौरै स्सभाजितोऽ[6]भीक्ष्णं रामेणाऽजानता च सः ॥४॥

---

★ अयमध्यायः विजयध्वजतीर्थपाठानुसारेण त्रयोदश श्लोकादारभ्यते। 1--1 श्रीविष्णुरात उवाच 2. B.G.J °मः 3--3 श्रीब्रह्मरात उवाच 4. K.T.W स तत्र 5. K.MI.V. नः 6. I.W. भिक्षु

## श्रीधरस्वामिविरचिता भावार्थदीपिका

षडशीतितमे दम्भा त्सुभद्रा मर्जुनोऽहरत्। गत्वा च मिथिलां कृष्णो नृपविप्रावनन्दयत् । पित्रोः स्वज्ञान मादिश्य सुभद्रां फाल्गुनाय च। जगाम मिथिलां कृष्णः स्वभक्तप्रियकृत्ततः ॥

देवक्या मृत पुत्रलाभवदर्जुनस्य सुभद्रालाभोऽपि रामप्रातिकूल्यात् दुर्घट इति मन्यमानः प्रसङ्गात्पृच्छति - **ब्रह्मन्निति** ॥ १,२॥

कथमशृणोत् तदाह - **दुर्योधनायेति**। अपरे वासुदेवादयो न दास्यन्तीति, तल्लिप्सु स्तस्या मातुलेय्या लिप्सुः रामं वञ्चयितुं पूज्यतमं त्रिदण्डिवेषं विधाय गत इत्याह स यति रिति ॥ ३ ॥

**तत्रेति**। स्वार्थसाधकः कन्यां प्रेप्सुः ॥ ४ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्र चन्द्रिका

वीर्याण्यनन्तवीर्यस्य सन्तीत्युक्तं तत्राऽर्जुनाय सुभद्रा प्रदापनात्मकं भगवतश्चेष्टितं श्रोतुकामः पृच्छति राजा - **ब्रह्मन्निति**। विजयः अर्जुनः रामकृष्णयोः स्वसारं भगिनीं यथा येन प्रकारेण उपयेमे तं प्रकारं वेदितुमिच्छामि। तां विशिनष्टि - या तयोः स्वसा मम पितामही बभूव ॥१॥

तं प्रस्तौति मुनिः - **अर्जुन** इत्यादिना। अथाऽन्यदपि कृष्णस्येत्यतः प्राक्तनेन। अवनीं पृथ्वीं पर्यटन् प्रभासं नाम तीर्थं प्रति गतः तत्र सोऽर्जुनः आत्मनः स्वस्य मातुलेयीं मातुलस्य सुतां तां सुभद्रां रामो दुर्योधनाय दास्यति अपरे वसुदेवादयस्तु न च दास्यन्तीत्यशृणोत् वसुदेवाद्यनुमतिमन्तरेणाऽपि रामो दातुमुद्युक्तवानिति अशृणोदित्यर्थः ॥ २ ॥

तल्लिप्सु रिति। तां मातुलेयीं लिप्सुः तां जीहीर्षुः इत्यर्थः। सोऽर्जुनः त्रिदण्डी यति र्भूत्वा रामं वञ्चयितुं त्रिदण्डियति वेषं धृत्वा॥ ३ ॥

**तत्रेति**। वार्षिकान् आषाढाद्याश्विनान्तान् चतुरो मासान् उषितवान्, तत्र हेतुः स्वार्थसाधनः स्वप्रयोजनं साधयतीति तथा। नन्द्यादित्वा त्कर्तरिल्युः। पौरै र्महात्मना रामेण चाऽभीक्ष्णं पुनः पुनः सम्मानितोऽवात्सीदिति सम्बन्धः ॥ ४ ॥

## विजयध्वजीय पदरत्नावली व्याख्या एषां श्लोकानां नोपलब्धा

**एकदा गृह मानीय आतिथ्येन निमन्त्र्यतम् ।**
**श्रध्दयोपहृतं भैक्ष्यं बलेन बुभुजे किल ॥५॥**

**सोऽपश्यत्तत्र महतीं[1-] कन्यां वीरमनोहराम्[-1] ।**
**प्रात्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥६॥**

**साऽपि तं चकमे वीक्ष्य नारीणां हृदयङ्गमम् ।**
**हसन्ती व्रीडितापाङ्गी[2] तन्न्यस्तहृदयेक्षणा ॥७॥**

**तां परं[3] समनुध्याय ह्यन्तरं प्रेप्सु रर्जुनः ।**
**न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥८॥**

**महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम् ।**
**जहाराऽनुमतः पित्रोः कृष्णस्य च महारथः[4] ॥९॥**

---

1--1 MI.V. तन्वीं यतिः कन्यां मनोहरम् ; T.W. तन्वीं कन्यां वीरमनोरमाम् ; K. महतीं कन्यां वीरमनोरमाम् 2. B.G.J. °ङ्गी 3.T.W. सदा 4.T.W. °त्मनः

**श्रीध० एकदेति**। तमातिथ्येन निमन्त्र्य गृहमानीय बलेन यच्छ्रद्धयोपहतं परिविष्टं तद्भैक्ष्यं किल अर्जुनो बुभुजे इत्यन्वयः ॥ ५ ॥

**स** इति। भावेन रत्यभिप्रायेण क्षुभितं मनोदधे ॥ ६ ॥

**सेति**। व्रीडितापाङ्गा[1] सव्रीडकटक्षा तस्मिन्नेव न्यस्तं हृदय मीक्षणे[2] च यया सा ॥ ७ ॥

**तामिति**। अन्तरं हर्तु मवसरं प्रेप्सुः प्राप्तुमिच्छुः,कामेन भ्रमच्चित्तं यस्य सः, शं रामादि सम्माननिमित्तं सुखम् ॥ ८,९॥

---

1. B.J. °ङ्गा 2. B.J. °णाश्च

**वीर० एकदेति**। बलेन रामेणैकदा आतिथ्येन हेत्वर्थे तृतीया आतिथ्यार्थं निमन्त्रितः श्रद्धयोपहृतं परिविष्टं भैक्षमन्नं बुभुजे ॥ ५ ॥

**स** इति। सोऽर्जुनः महती मद्भुतां वीराणां मनो हरतीति तथा तां प्रीत्या उत्फुल्ले विकसिते ईक्षणे यस्य सः तस्यां कन्यायां रत्यभिप्रायेण क्षुभितं मनो दधे निहितवान्। स्मरक्षुब्धमिति पाठान्तरम् ॥ ६ ॥

**सापीति**। साऽपि कन्यापि तमर्जुनं वीक्ष्य व्रीडितौ व्रीडायुक्तौ अपाङ्गौ नेत्रान्तौ यस्या स्सा तस्मिन्नेव न्यस्तं हृदय मीक्षणे च यया सा, चकमे अकामयत ॥ ७ ॥

**तामिति**। परं केवलं तां कन्यामेव ध्यायन्नन्तरं हर्तु मवसरं प्राप्तु मिच्छुः अतिबलीयसा कामेन भ्रमत् चित्तं यस्य सः शं रामादिसम्मानजं सुखं न लेभे ॥ ८ ॥

एवं स्थिते कदा चिन्महारथोऽर्जुनः पित्रोः कृष्णस्येति च कर्तरि षष्ठी, देवकीवसुदेवाभ्यां कृष्णेन चाऽनुमतः दुर्गात्प्राकारात् बहिर्निर्गतां रथस्थां कन्यां जहार ॥९॥

**रथस्थो धनुरादाय शूरांश्चारुन्धतोभटान् ।**
**विद्राव्य क्रोशतां स्वानां स्वभागं[1] मृगराडिव ॥ १० ॥**

**तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ।**
**गृहीतपादः कृष्णेन सुहृद्भिश्चाऽन्वशाम्यत ॥ ११ ॥**

**प्राहिणोत्पारिबर्हाणि वरवध्वोर्मुदा बलः ।**
**महाधनोपस्करेभ रथाश्व[2] वरयोषितः ॥ १२ ॥**

**★ अभवन् प्रीतिसंहृष्टाः बान्धवा यदुपाण्डवाः ।**
**अथाऽन्यदपि कृष्णस्य वात्सल्यं भक्तयोः शृणु ॥**

**श्रीशुक उवाच**

**[3-]कृष्णस्याऽऽसीद् द्विजश्रेष्ठः[-3] श्रुतदेव इति श्रुतः ।**
**कृष्णैकभक्त्या पूर्णार्थः शान्तः कविरलम्पटः ॥ १३ ॥**

**स उवास विदेहेषु मिथिलायां गृहाश्रमी[4] ।**
**अनीहयाऽऽगताऽहार्य[5] निर्वर्तित निजक्रियः[6] ॥ १४ ॥**

---

1. K.T.W. बलिं 2. B.G.J. नर ★ This verse is not found in B.G.J. 3- -3. M.Ma. वृष्णिष्वासीद्यदुश्रेष्ठः ; MI.T.V.W. कृष्णस्यासीत्सखाकश्चित्
4. M. Ma °मे 5. M. Ma "र्यो 6. M.Ma जप

**श्रीध० रथस्थ** इति। आ समन्ताद्रुन्धतः, आवरणं कुर्वतः ॥ १०,११ ॥

**प्राहिणोदिति**। पारिबर्हाणि वरवध्वोः प्रीतिदेयानि ॥ १२,१३ ॥

**स** इति। अनीहया अनुद्यमेनैव आगतं यदाहार्यं भोज्यं तेन निर्वर्तिताः निजाः क्रियाः येन सः ॥ १४ ॥

**वीर०** ततो रथस्थः धनुर्गाण्डीव मादाय आसमन्ताद्रुन्धतः शूरान् भटान् विद्राव्य पलायितान् कृत्वा स्वानां यदूनां क्रोशतामाक्रोशतां सतां जहारेति पूर्वेण सम्बन्धः। यथा मृगराट् सिंहः स्वबलिं स्वभागं हरति तद्वत् ॥ १० ॥

**तदिति**। तद्धरणं श्रुत्वा तावत् पर्वणि महार्णव इव क्षुभितः क्रुद्ध इत्यर्थः। ततः कृष्णेन सुहृद्भिश्च गृहीतौ पादौ यस्य सः अशाम्यत शान्तो बभूव ॥ ११ ॥

किञ्च **प्राहिणोदिति**। बलो रामः परिबर्हाणि प्रीत्यादेयानि श्रेष्ठवस्तूनि प्राहिणोत् प्रददौ। महाधना अनर्घाः उपस्कारा अलङ्काराः येषां, तान् इभान् गजान् रथानश्वान् पराः श्रेष्ठाः योषितो दासीश्च प्राहिणोदिति सम्बन्धः ॥ १२ ॥

तदा यादवः पाण्डवाश्च बान्धवाः प्रीतिसंहृष्टाः प्रीतिरानन्दः, तेन संहृष्टाः विकसित मुखाः बभूवुः। अथ भक्तवात्सल्य प्रयुक्तं भगवतः चेष्टितं प्रस्तोतुं प्रतिजानीते-अथेति। भक्तयो विषयभूतयोः यद्वात्सल्यं तच्छृणु। कावमूभक्तौ? कीदृशं वा तयो र्वात्सल्यम्? इत्यतः प्रस्तोति - कृष्णस्येत्यादिना यावदध्यायसमाप्ति। श्रुतदेव इति श्रुतः विश्रुतः कृष्णस्य भक्त आसीत्। स च कृष्णे भगवति एकया एकान्तया अनन्यप्रयोजनयेतियावत्। तया भक्त्या पूर्णार्थः पूर्णमनोरथः अत एव शान्तः कविर्विद्वान् अलम्पटः चित्तविक्षेपरहितः ॥ १३ ॥

स श्रुतदेवः विदेहेषु देशेषु तत्राऽपि मिथिलायां पुरि गृहाश्रमी सन्नुषितवान् । अनीहया अनुद्यमेनैव आगतं यदाहार्यं भोज्यं तेन निर्वर्तिताः निजाः क्रियाः [1-]अतिथिपूजनादिका[-1]: येन सः ॥ १४ ॥

1- -1 T.W. Omit

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

'यमेवैषवृणुते[?] तेन लभ्यः, इत्यादिं श्रुत्यर्थं दृढीकरणाय हरेः भक्तिप्रियत्व माहात्म्यं वक्ति। तत्र श्रुतदेव बहुलाश्वविषय मितिहासं शुकोवदति। वृष्णिष्विति। भक्तिमन्तरेण अन्यमर्थं मनाकाङ्क्षमाणः पूर्णार्थ इत्युच्यते। कृष्ण विषयगाथारचनात् कविः, अलम्पटः शब्दादि विषयेच्छारहितः ॥ १३ ॥

मिथिलायां नगर्यां गृहाश्रमे स्थितः, सभार्य इत्यर्थः। अनीहया अप्रयत्नेन आगताहार्यः प्राप्तप्राप्तव्यः प्राप्तभोज्यो वा नितरां वर्तिता सहस्रनामादि जपक्रिया येन स तथा। 'नित्यं नाम निकामयोः' (वै.ज.को.) इति यादवः ॥ १४ ॥

**[1]यात्रामात्र न्त्वहरह र्दैवा[2]दुपनमत्युत ।**
**नाऽधिकं तावता तुष्टः क्रियाश्चक्रे[3] यथोचिताः ॥ १५ ॥**

तथा तद्राष्ट्रपालो[4]ऽङ्ग बहुलाश्व इति श्रुतः ।
मैथिलो निरहम्मान उभावप्यच्युतप्रियौ ॥ १६ ॥

तयोः प्रसन्नो भगवान् दारुकेणाऽऽहृतं रथम् ।
आरुह्य [5-]साकं मुनिभिर्विदेहान् प्रययौ प्रभुः[-5]॥ १७ ॥

नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणः[6] ।
अहं बृहस्पतिः कण्वो [7-]मैत्रेय श्च्यवनादयः[-7] ॥ १८ ॥

तत्र तत्र तमायान्तं पौरा जानपदा नृप ।
उपतस्थु स्सार्घ्य[8]हस्ता [9-]ग्रहै स्सूर्य[-9] मिवोदितम् ॥ १९ ॥

आनर्तधन्व कुरु जाङ्गल [10]वङ्गमत्स्य पाञ्चाल कुन्ति मधुकेकय कोसलार्णाः ।
अन्ये च तन्मुख सरोज मुदारहास स्निग्धेक्षणं नृप! पपु र्दृशिभिर्नृनार्यः ॥ २० ॥

---

1. M.Ma यावन्मा" 2. K.T.W. नयत्युत ;M.Ma नमत्ययं ; MI.V. नतं च यत् 3. MI.V. °दिता: 4. M.Ma "भूत् 5- -5. सहितो विप्रै नीतैर्ब्रह्मवादिभिः ॥

6. B. G. J. K. M. Ma.T.W. णि: 7- -7 M. Ma. यश्च पराशर: *Following extra half verse is found in M.Ma. वशिष्ठ: कश्यपश्चैव भरद्वाजोऽथ गौतम: ।

8. M.Ma. °र्घ 9- -9 M.Ma.MI.V. लोका: सूर्य" 10. B.G.J. कङ्क ; M.Ma टङ्क

**श्रीध० यात्रामात्रमिति**। यात्रामात्रं शरीरादि निर्वाहमात्रं भोज्य मुपनमति तं प्रत्यागच्छति ॥ १५ ॥

**तथेति**। मिथिलस्य जनकस्य वंश्यो मैथिलः ॥ १६ ॥

**तयोरिति**। प्रभुरेव स्वयं विदेहान् देशान् प्रययौ ॥ १७ ॥

**नारद** इति। कृष्णो व्यासः, रामो भार्गवः, अहं शुकः एव मादिभिस्सह ॥ १८,१९ ॥

**आनर्तेति**। आनर्ताद्यर्णान्ता स्तद्देश वर्तिनो नृनार्यः [1-]पुरुषाः नार्यश्च[-1] उदारहासं स्निग्धमीक्षणं यस्मिं स्तत्। दृशिभिः नेत्रैः ॥ २० ॥

1- -1 B.J. Omit.

**वीर०** एतदेव प्रपञ्चयति - **यात्रामात्र मिति**। अयं श्रुतदेवः यात्रामात्रं शरीर निर्वाहमात्रोपयुक्त माहार्य महरहः दैवादुपनयति उपनयन्तं प्रतीक्षत इत्यर्थः। अधिकं यात्रा मात्रादधिकं नोपनयति। तावता यात्रामात्रेणैव तुष्टः उचिताः वर्णाश्रमोचिताः क्रियाः पञ्च महायज्ञादि रूपक्रियाः यथावच्चक्रे ॥ १५ ॥

**तथेति**। अङ्ग! हे राजन्! यथाऽयं श्रुतदेवः तथा तद्राष्ट्रपालः विदेहदेशाधिपः बहुलाश्व इति श्रुतः, विश्रुतः स मैथिलो जनकवंश्यः निरहम्मानः देहात्माभिमानरहितः। उभौ श्रुतदेव बहुलाश्वौ अच्युतस्य प्रियौ भक्तौ ॥ १६ ॥

**तयोरिति**। प्रसन्नः प्रसन्नो भवितुमित्यर्थः आहृत मानीतं मुनिभिः साकं मुनिभिस्सह ॥ १७ ॥

केऽमी मुनय इत्यत आह - **नारद** इति। कृष्णो द्वैपायनः रामो भार्गवः, अहं शुकः ॥ १८ ॥

**तत्र तत्रेति**। पुरेषु भवाः पौराः जन पदेषु देशेषु भवाः जानपदाः साघ्यां हस्ता येषां ते ग्रहै गुरुशुक्रादिभिः सहोदितं सूर्य मिव समायान्तं तं भगवन्त मुपतस्थुः। अभूतोपमेयम् ॥ १९ ॥

**आनर्तेति**। हे नृप! आनर्तादिदेशवर्तिनो जनाः तथा अन्ये च नराः नार्यश्च उदारो हासः स्निग्धे ईक्षणे च यस्मिंस्तत्तस्य भगवतो मुखसरोजं पपुः मुखसरोजलावण्यरूपं मकरन्दं नेत्र चषकैः पपुरित्यर्थः ॥ २० ॥

**विज०** ननु प्रयत्नाभावे कथं शरीरयात्राऽस्ये त्यत्राऽह - यावदिति। अनुदिनं यावन्मात्र मुपनमति दैवात्प्राप्तं भवति, अयं ततोऽधिकं नाऽऽकाङ्क्षते। तर्हि केनाप्यलम्बुद्धि रत्राऽऽह - तपसेति ॥ १५ ॥

यथा श्रुतदेवः ॥ १६ ॥

ततः किमायातमत्राऽऽह - **तयोरिति**। नियतै रेकान्तभक्तैः ॥ १७ ॥

मुनीनां नामानि निर्दिशति - नारद इत्यादिना ॥ १८ ॥

त उपतस्थुः निषेवयाञ्चक्रुः ॥ १९,२० ॥

**तेभ्यः स्ववीक्षण विनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरु रर्थदृशं च यच्छन् ।**
**शृण्वन्दिगन्त धवलं स्वयशोऽशुभघ्नं गीतं सुरै र्नृभि रगाच्छनकै र्विदेहान् ॥ २१ ॥**

**तेऽच्युतं प्राप्त माकर्ण्य पौरा जानपदा नृप[1] ।**
**अभीयु र्मुदिता स्तस्मै गृहीतार्हणपाणयः ॥ २२ ॥**

दृष्ट्वा तमुत्तमश्लोकं प्रीत्युत्फुल्ला[3]ननाशयाः ।
कै[4]र्धृताञ्जलिभि र्नेमुः श्रुतपू[5]र्वां स्तथा मुनीन् ॥ २३ ॥

स्वानुग्रहाय सम्प्राप्तं [6-]मन्वानौ तं[-6] जगद्गुरुम् ।
मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभो ॥ २४ ॥

न्यमन्त्रयेतां दाशार्हमातिथ्येन [7]सहद्विजैः ।
मैथिलः श्रृतदेवश्च युगपत् संहताञ्जली ॥ २५ ॥

भगवां स्तदभिप्रेत्य [8]द्वयोः प्रियचिकीर्षया ।
उभयो राविशद्गेह मुभाभ्यां तदलक्षितः ॥ २६ ॥

---

1. Ml.V.नृपाः 2. G.J. त उ° 3. M.Ma °मला° 4. M.Ma उधृता° 5. M.Ma पूर्वंयथा 6- -6 M. Ma सत्यभूतं 7. K.M.Ma.T.W. सन्न° 8. M.Ma.Ml.V. तयोः

**श्रीध० तेभ्य** इति। स्ववीक्षणेनैव विनष्टतमिस्रा दृग्येषां तेभ्यः क्षेममभयमर्थदृशं तत्त्वज्ञानञ्च ॥ ११ ॥

**त** इति। अभीयुः प्रत्युज्जग्मुः ॥ १२ ॥

**दृष्ट्वेति**। प्रीत्या उत्फुल्लानि आननानि आशयाः अन्तः करणानि येषां ते, कैः शिरोभिः ॥ १३-१५ ॥

**भगवानिति**। तदभिप्रेत्याङ्गीकृत्य तत्तदा उभाभ्या मपि ताभ्यां मद्गृहादन्यस्य गेहं याती त्यलक्षितोऽविदितः। यद्वा उभाभ्यां रूपाभ्यां तदलक्षितः ताभ्यामलक्षित इति ॥ १६ ॥

**वीर० तेभ्य** इति त्रिलोक गुरुर्भगवान् स्वदर्शनेन विनष्टा तमिस्राद्दृक् येषां तेभ्यः स्ववीक्षणमात्र निरस्ताज्ञानेभ्य इत्यर्थः। क्षेमं श्रेयो यथा भवति तथा अर्थदृशं प्रयच्छन् अपाङ्गदृष्ट्या तानवलोकयन्नित्यर्थः। अतिशुभ्रं निर्मलं दिगन्त धवलं दिगन्त व्याप्तं स्वयशः सुरै र्नृभिश्च गीतं शृण्वन् शनै र्विदेहान् देशान् अगाद्ययौ ॥ २१ ॥

**त** इति। ते वैदेहाः पौरा जानपदाश्च गृहीत मर्हणं ये स्ते पाणयो येषां ते तस्मै भगवतेऽभीयुः प्रत्युज्जग्मुः। तमभिययुरित्यर्थः। यद्वा तस्मै इत्यनेन सापेक्षस्याऽपि गृहीतार्हणेत्यस्य आर्षत्वा त्समासः। तं वा इति पाठान्तरम् ॥ २२ ॥

दृष्ट्वेति। प्रीत्या उत्फुल्ल माननमाशयश्च येषां ते विदेहदेशवासिनो जना स्तं कृष्णं तथा श्रुतपूर्वान्मुनींश्च, नतु दृष्टपूर्वान्, निबद्धाञ्जलिभिर्नेमुः 'कैर्धृताञ्जलिभि' रिति पाठे न्यस्ताञ्जलिभिः शिरोभिः इत्यर्थः ॥ २३ ॥

स्वानुग्रहायेति। मैथिलः श्रुतदेवश्च जगद्गुरुं भगवन्तं स्वानुग्रहार्थमागतं मन्वानौ प्रभोः श्रीकृष्णस्य पादयोः निष्पेततुः ॥ २४ ॥

**न्यमन्त्रयेतामिति**। सन्नतौ नमस्कुर्वन्ता वञ्जली ययो स्तौ द्विजै र्मुनिभिः सह सहितमित्यर्थः। दाशार्हं भगवन्तं आतिथ्येन आतिथ्यार्थं युगपदेव न्यमन्त्रयेतां निमन्त्रितवन्तौ ॥ २५ ॥

**भगवांस्त्विति**। तन्निमन्त्रण मभिप्रेत्य अङ्गीकृत्य द्वयोरपि प्रियं कर्तुमिच्छया तत्तदा उभाभ्या मपि ताभ्यां मद्गृहा दन्यस्य गेहं समायातीत्यलक्षितः अविदितः उभयोरपि गृहान् अविशत् ॥ १६ ॥

**विज०** सेवाफलमाह - **तेभ्य** इति। स्ववीक्षणेन दर्शनेन विनष्टं तामिस्रं यस्या सा तथा विनष्टतामिस्रा निरस्ताज्ञाना दृक् ज्ञानं येषां ते तथा तेभ्यः, तेभ्यः पौरेभ्यः क्षेमं यच्छन् अर्थदृश मपरोक्ष ज्ञानं च ददन् एकस्मिन् दिगन्तेऽपि अनन्यथा गीयमानत्वात् दिगन्तधवलम् ॥ २१,२२ ॥

'स्वधृताञ्जलिरिति' रिति पाठे के मूर्ध्नि धृताञ्जलि पुटै रित्यर्थः ॥ २३ ॥

सत्यभूतं निर्दोषानन्द ज्ञानघनम् ॥ २४ ॥

निमन्त्रयेताम् भोजनार्थक्षणं कृतवन्तौ आतिथ्येन अतिथियोग्येन कर्मणा ॥ २५ ॥

तदलक्षितः ताभ्यां रूपाभ्या मलक्षितः अज्ञातरूपद्वय इत्यर्थः ॥ २६ ॥

**श्रोतु मप्यसतां दूरान् जनकः स्वगृहागतान् ।**
**आनीतेष्वासनाग्र्येषु सुखासीनान्महा[1]मनाः ॥ २७ ॥**

**प्रवृद्ध[2-]भक्त्या उद्धर्ष[-2] हृदया[3]स्रा विलेक्षणः ।**
**न त्वा तदङ्घ्रीन् प्रक्षाल्य तदपो लोकपावनीः ॥ २८ ॥**

**सकुटुम्बोऽवहन्मूर्ध्ना पूजयाञ्चक्र ईश्वरान् ।**
**गन्धमाल्याम्बराकल्प धूपदीपार्घ्य गोवृषैः ॥ २९ ॥**

**[4]वाचा मधुरया प्रीणन्निदमाहाऽन्नतर्पितान् ।**
**पादावङ्कगतौ विष्णोः [5-]संस्पृशन् [-5]शनकैर्मुदा ॥ ३० ॥**

बहुलाश्व उवाच

भवान्हि[6] सर्वभूताना मात्मा साक्षी स्वदृग्विभो[7] ।
अ[8]थनस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः ॥ ३१ ॥

स्ववचस्तदृतं कर्तुमस्म दृग्गोचरो भवान् ।
यदाऽऽत्थैकान्त [9-]भक्तान्मे नाऽनन्तः श्रीरजः[-9] प्रियः ॥३२॥

---

1. K.T.W. "यशाः 2- -2 M.Ma भक्त्यु त्कर्ष ; MI.V. भक्तिरुद्धर्ष 3. MI.V. "यो° 4. MI.V. वाण्या 5- -5 M.Ma आमृजच्छ" 6. M.Ma. "न्वै 7. M.Ma "ग्विभुः ; MI.V. "ग्प्रभो 8. B.G.J.M.Ma. MI V. अथ 9- -9 M.Ma भक्तानामात्मानान्तोऽरजाः ।

**श्रीध० प्रवृद्धेति**। उद्धर्ष मुद्गतहर्षं हृदयं यस्य अस्रै राविले क्लिन्ने ईक्षणे यस्य सः। स च स च ॥ २७,२८ ॥

**सकुटुम्ब** इति। ईश्वरान्, ईश्वरं, तत्तुल्यांश्चेत्यर्थः ॥ २९ ॥

**वाचेति**। प्रीणन् प्रीणयन्, संस्पृशन् सम्मर्दयन् ॥ ३०॥

**भवानिति**। आत्मा चेतयिता साक्षी प्रकाशकः स्वदृक् स्वप्रकाशः अथातः कारणात् ॥ ३१ ॥

**स्ववचेति**। अनन्तो बन्धुरपि श्रीःभार्याऽपि अजः पुत्रोऽपि ॥ ३२ ॥

**वीर० श्रोतुमिति**। असतां श्रोतुमपि दूरान् स्वगृहागतान् आनीय समर्पितेषु श्रेष्ठे ष्वासनेषु सुखासीनान् नत्वेत्युपरिष्टा त्सम्बन्धः। कथम्भूतः प्रवृद्धभक्त्या उद्धर्ष मुद्गतहर्षं हृदयं यस्य अस्रैरानन्दाश्रुभिः अविले व्याप्ते ईक्षणे यस्य स चाऽसौ स च। तेषामङ्घ्री पादौ प्रक्षाल्य ताः लोकपावनी रपः मूर्ध्नावहन् गन्धादिभिः ईश्वरान् पूजयामास। आकल्पोऽलङ्कारः तत्र ईश्वरशब्दः ईश्वरात्मक परः ॥ २७-२९ ॥

**वाचेति**। ततोऽन्नेन तर्पितान् मधुरया वाचा प्रीणयन् अङ्कगतौ विष्णोः कृष्णस्य पादौ संस्पृशन् पादा वङ्के निधाप्य संस्पृशन् इत्यर्थः। मुदा हर्षेण इदं वक्ष्यमाणमाह ॥ ३०॥

तदेवाऽऽह - **भवानिति** षड्भिः। हे विभो! हि यस्मात् भवानात्मा अन्तरात्मा साक्षाद्रष्टा स्वदृक् अनन्याधीन प्रकाशश्च अथातो मदभिप्रायं जानन् त्वत्पदाम्भोजं स्मरतां नोऽस्माकं दर्शनं प्राप्तः ॥ ३२ ॥

किञ्च **स्ववच** इति। यस्मात् एकान्त भक्ता दनन्यप्रयोजन भक्तियुक्तात् ममाऽनन्तः शेषः सखाऽपि श्रीर्लक्ष्मी भार्याऽपि अजो ब्रह्मा पुत्रोऽपि न प्रिय इति यत् आत्थ उक्तवा नसि तत् स्ववचो दृढीकर्तुं भवानस्माकं दृग्गोचरो दृग्विषयो बभूव ॥ ३१ ॥

**विज०** अथ बहुलाश्वः ईश्वरं पूजयाञ्चक्रे इत्यन्वयः। तान्नत्वा कीदृशान् श्रोतु मपि दूरान् कर्णाविषयान् ॥ २७ ॥

अति वृद्धभक्त्युत्कर्ष हृदयश्चास्राविलेक्षणश्च स तथा अस्रं नेत्रजलम् ॥ २८ ॥

कैस्साधनैरत्राऽऽह - गन्धेति ॥ २९ ॥

आमृजन् संवाहनं कुर्वन् ॥ ३० ॥

सुहृदिति यदथ तस्मात् ॥ ३१ ॥

दर्शन हेतुमाह - **स्ववच** इति। भवान् 'प्रियो हि ज्ञानिनोत्यर्थ महं स च मम प्रियः' (भ.गी. 7-17) इति यत्स्ववचः, तद्दतं कर्तुं अस्मद्दृग्गोचरोऽभूदित्यन्वयः। भक्तेनाऽपि कृतज्ञेन भाव्यमिति भावेनाऽऽह - यदेति। आत्मा स्वामी अनन्तः अन्तत्रयहीनः अरजाः सात्त्विकः त्वमेकान्त भक्तानां प्रिय इति यदा यस्मात्तस्मात् ॥ ३२ ॥

**[1]कोनुत्वञ्चरणाम्भोज मेवं विद्विसृजे[2]त्पुमान् ।**
**निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः ॥ ३३ ॥**

**योऽवतीर्य यदो वंशे नृणां संसरतामिह ।**
**यशो [3-]वितेने[-3] तच्छान्त्यै त्रैलोक्य[4]वृजिनापहम् ॥ ३४ ॥**

**नमस्तुभ्यं भगवते कृष्णायाऽकुण्ठमेधसे ।**
**नारायणाय [5]ऋषये सुशान्तं तप ईयुषे ॥ ३५ ॥**

**दिनानि कतिचित्भूमन् गृहान्नो निवसन्[6]द्विजैः ।**
**समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥ ३६ ॥**

**इत्युपामन्त्रितो राज्ञा भगवान् लोक[7]भावनः ।**
**उवास कुर्वन्कल्याणं मिथिला नरयोषिताम् ॥ ३७ ॥**

**श्रुतदेवोऽच्युतं प्राप्तं स्वगृहाञ्जनको यथा ।**
**नत्वा[8] मुनीं[9]श्च संहृष्टो[9] धुन्वन् वासो ननर्त ह ॥ ३८ ॥**

---

1. K.T.W. किं नु 2. M.Ma "त्प्रभो। 3- -3 K. अचिनोत्स्वं 4. M.Ma विकृतापह:॥ 5. M. Ma स्वशान्तं ; K.T.W. सशान्तं 6. B.G.J. "स द्वि ; M.Ma "सन्नि" 7. K.पा" 8. M.Ma. मत्वा 9- -9 B.G.J. मनीन् सु संहृष्टो ; M.Ma.T.W. मुनींश्च संतु"

**श्रीध० य** इति। तच्छान्त्यै संसारोपशमाय ।। ३३-३५ ।।

**दिनानीति**। गृहान् गृहेष्वित्यर्थः ।। ३६,३७ ।।

**श्रुतदेवेति**। धुन्वन् परिभ्रमयन् ।। ३८ ।।

**वीर०** तस्मादेवं विधं त्वच्चरणाम्भोजं पुमान्विसृजेत् किन्नु ! न त्यजत्येवेत्यर्थः। किञ्च यद्यस्मात् निष्किञ्चिनानां नास्ति किञ्चन प्रार्थनीयं येषां तेषां शान्तानां जितान्तः करणानां मुनीनां त्वमात्मदः निरतिशयपुरुषार्थभूतमात्मानं ददाति स्ववशीकरोतीति तथा। तस्माच्च विसृजेत्किन्विति सम्बन्धः ॥ ३३ ॥

सत्यम्। इत्थम्भूतस्तु ईश्वरो, न त्वहमित्यत आह - **य** इति। इह प्रकृतिमण्डले संसरतां जीवानां तच्छान्त्यै सांसारिकतापत्रयोपशमनाय यदोर्वंशे अवतीर्य य स्त्रिलोकवृजिनापहं त्रैलोक्यपापहरं स्वं स्वासाधारणं यशोऽचिनोत् सम्पादितवान् तस्मै भगवते तुभ्यं नमः इत्यन्वयः। सर्वेश्वर एव त्वं लोकोज्जिजीविषया अवतीर्ण इति भावः ॥ ३४ ॥

एवं विधाय तुभ्यं न प्रतिकर्तुं शक्नुमः, किन्तु केवलं नमस्कुर्म इत्यभिप्रेत्य नमस्करोति **नम** इति। कृष्णाय लोकसुखकराय अकुण्ठ मेधसे कृतज्ञतमाय सं शान्तिं शान्तिकरं लोकक्षेमावहं तप ईयुषे प्राप्ताय अधिकुर्वत इति यावत्। नारायणाय ऋषये तद्रूपेणावस्थिताय तस्मै पूर्वोक्तविधाय भगवते तुभ्यं नमः ॥ ३५ ॥

अभिप्रेतं निवेदयति - **दिनानीति**। हे भूमन्! द्विजैर्मुनिभिः समेत स्सहित स्त्वं नोऽस्माकं गृहे कतिचिद्दिनानि निवसन् पादरजसा इदं निमेः कुलं पुनीहि पवित्रीकुरु ॥ ३६ ॥

**इतीति**। उपामन्त्रितः प्रार्थितः लोक पावन इति हेतुगर्भम्। अतो मिथिलायां पुरि नराणां योषिताञ्च कल्याणं कुर्वन् कर्तुमित्यर्थः। उवास उषितवान् ॥ ३७ ॥

**श्रुतदेव** इति। जनको जनकवंश्यत्वात् बहुलाश्वो यथा तथा श्रुतदेवोऽपि स्वगृहं (प्रति) प्राप्तमच्युतं मुनींश्च नत्वा नितरां हृष्टः, अत एव वासः उत्तरीयं धुन्वन् उत्क्षिपन् ननर्त हेति हर्षे ॥ ३८ ॥

**विज०** एवंवित् उक्तार्थज्ञः कोनु पुरुषः त्वच्चरणाम्भोजं विसृजेत् कृतज्ञश्चेन्न मुञ्चतीत्यर्थः। एकान्तभक्तप्रियोऽयं किं ददातीति तत्राऽऽह - निष्किञ्चनानामिति ॥ ३३॥

लोकोपकारायाऽवतारो न तु स्वार्थायेत्याह - य इति। तच्छान्त्यै संसारोन्मूलनाय त्रैलोक्यस्य विकृतान् विरोधिनोऽपहन्तीति त्रैलोक्य विकृतापहः। विकृतं दुष्कृतम् ॥ ३४॥

शान्तं सुखपूर्तिः तपः ज्ञानं निर्दोषपूर्णानन्दज्ञानम्, ईयुषे प्राप्तवते ॥ ३५॥

राजा स्वगृहनिवासाय भगवन्तं प्रार्थयते - **दिनानीत्यादिना** ॥ ३६॥

मिथिलायां विद्यमानानां नरयोषिताम् ॥ ३७॥

तत्र श्रुतदेवेन किन्नु कृत मत्राऽऽह - **श्रुतदेव** इति। स्वगृहान् प्राप्त मच्युतं मत्वा ज्ञात्वा ॥ ३८॥

**तृणपीठ[1-] बृसीष्वेता नानीतेषू[-1]पवेश्य सः ।**
**स्वागते नाभिनन्द्याङ्घ्रीन् सभार्योऽवनिजेमुदा ॥ ३९॥**

**तदम्भसा महाभाग आत्मानं सगृहान्वयम् ।**
**स्नापयाञ्चक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४०॥**

**[2]— [3]र्हणोशीरशिवामृताम्बुभिः मुदा सुरभ्या तुलसी कुशाम्बुजैः ।**
**आराधयामास यथोपपन्नया सपर्यया सत्त्व विवर्धनान्धसा ॥ ४१॥**

**सतर्कयामास कुतो ममान्व[5]भू द्गृहान्धकूपे पतितस्य सङ्गमः ।**
**यस्सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्या[6]त्मनिकेत भूसुरैः ॥ ४२॥**

**सूपविष्टान्कृतातिथ्यान् श्रुतदेव उपस्थितः ।**
**सभार्य स्वजनापत्य उवाचाङ्घ्र्यभिमर्शनः[7] ॥ ४३॥**

**श्रुतदेव उवाच**

**सो॰ऽद्य नो दर्शनं प्राप्तः परं परम पूरुषः ।**
**[9]य इदं शक्तिभिः सृष्ट्वा [10-]प्रविष्टोन्वात्म[-10]सत्तया ॥ ४४॥**

---

1--1 M. Ma °ठे सशिष्यांस्तानास्तृतेषू ; MI.V. °ठ बृसीष्वेतानासनेषु 2. M.Ma. सिद्धा 3. M.Ma °म्भसा° 4. M.Ma °मानया ॥ 5. M.Ma °पतत्गृ° 6. M. Ma °ध्या° 7. M. Ma °नम् ॥ 8. B.G.J. नाद्य ; M. Ma अद्य 9. B.G.J. यहीदं 10--10 B.G.J. प्रविष्टोह्यात्म° ; M. Ma विभजत्यात्म°

**श्रीध० तृणेति**। अवनिजे अवनि निजे प्रक्षालितवान् ॥ ३९,४० ॥

फलेति। फलै रामलकादिभिः अर्हणेन उशीरैः तृणविशेषमूलैः सुवासितैः शिवै रमृतवत्स्वादुभि रम्बुभिः सुरभ्या मृदा कस्तूरी प्रमुखया सपर्यया पूजया यथोपपन्नयाऽनायासेन सम्पन्नया भूतानुपद्रवलब्धत्वात् सत्त्वविवर्धनं यदन्धोऽन्नं तेन च ॥ ४१ ॥

**स** इति। यस्य श्रीकृष्णस्य आत्मा मूर्तिः तस्य निकेतैः स्थान विशेषैः भूसुरैश्च सर्वतीर्थास्पदपादरेणुभिः कृष्णादिभिः यः सङ्गमः स मम कुतोन्वभूदिति। अनु इति विस्मये। यद्वा, आ इति वितर्के तु इति विस्मये ॥ ४२ ॥

**सूपविष्टानिति**। उपस्थितः समीप उपविष्टः भार्या भर्तव्याः स्वजनाः अपत्यानि च तैस्सहितः श्रीकृष्णस्याङ्घ्रि मभिमृशति सम्मर्दयतीति अङ्घ्र्यभिमर्शनः ॥ ४३ ॥

**स** इति। यहींदं प्रविष्ट स्तदैव दर्शनं प्राप्त इति स एव सन्मात्रोनाद्यातनीभूत स्त्वमित्यर्थः। यद्वा नोऽस्मा नद्यैव प्राप्त इति न किन्तु तदैव प्राप्तो यहींदं विश्वं स्वशक्तिभिः सत्वादिभिः सृष्ट्वा स्वसत्तया अनुप्रविष्ट स्त्वम् त्वद्दर्शनन्तु परं केवलमद्यैव प्राप्तम् ॥ ४४ ॥

**वीर० तृणेति**। स श्रुतदेवः आनीतेषु तृणमयेषु पीठेषु चाऽऽसनेषु च ता नुपवेश्य स्वागतप्रश्नपूर्वक मभिवन्द्य सभार्यो मुदा हर्षेण अङ्घ्री नर्वानिजे अवनिनिजे प्रक्षालितवान्। अभ्यास लोप आर्षः ॥ ३९ ॥

**तदम्भसेति**! हे महाभाग! तदम्भसा अङ्घ्रिजलेन स्वयमेवाऽऽत्मानं देहं स्वगृहांश्च स्नपयामास कथम्भूतः? उद्धर्षः उत्कटो हर्षः यस्य सः लब्धः सर्वमनोरथो येन सः ॥ ४० ॥

**फलेति**। फलानि चार्हणानि च गन्ध पुष्पधूपदीपादीनि उशीराणि सुगन्धितृण विशेषमूलानि च शिवानि निर्मलानि अमृत

तुल्यान्यम्बूनि च तैः सुरभ्या मृदा कस्तूर्या तुलस्या कुशै रम्बुजैश्च सत्त्वविवर्धनान्धसा सत्त्ववर्धकान्नेन जात्याश्रयनिमित्ता दुष्टान्नेन च इत्यर्थः। एभिः कृत्वा यथोपपन्नया अनायासेन सम्पन्नया सपर्यया पूजया आराधयामास ॥ ४१ ॥

**स** इति। स श्रुतदेव तर्कयामास। तर्कमेव दर्शयति - कुत इति गृहमेवान्धकूपः तस्मिन् पतितस्य मम कृष्णेन तथा अस्य कृष्णस्य आत्मनो मूर्तेः निकेतैः स्थानभूतैः भूसुरैश्च कथम्भूतैः सर्वतीर्थानामास्पदान्याश्रयाः पादरेणवो येषां तथाभूतैः सः यः सङ्गमः स कुतोऽन्वभूत्। अन्विति विस्मये ॥ ४२ ॥

**सूपविष्टा** निति। कृत मातिथ्यं यैः तानुपस्थितः समीप उपविष्टः स्वगृहा नापन्नं प्राप्तं भगवन्तं अङ्घ्र्याभिमर्शनः अङ्घ्री अभिमृशन्नाह उवाच ॥ ४३ ॥

उक्तिमेवाह-**सोऽद्येत्यादिना**। तावत् तद्दर्शनेनाऽऽत्मनः कृतार्थता मभिप्रयन्नाह स इति। स तादृशः परः प्रकृतिपुरुष विलक्षणः, अतएव परमः पर उत्कृष्टो मा यस्मात् सचाऽसौ पुरुषस्त्वं नोऽस्माकं दर्शनं प्राप्तः। कीदृशः यो मायया आत्मसङ्कल्पेन इदं जगत्सृष्ट्वा आत्मसत्तया, आत्मन स्सत्ता सदैकरूपता सदैकरूपेणात्मस्वरूपेणाऽनु प्रविष्टः ॥ ४४ ॥

---

1. B. स्त्रा°

**विज०** तृणपीठे कटे अवनिजे प्रक्षालयामास ॥ ३९,४० ॥

सिद्धार्हणं सर्षपः उशीरं वालव्यजनं जया वा, शिवा श्रेयसी अमृता प्रसिद्धा एताभिर्युक्तेन जलेन सुरभ्या सुगन्धया मृदा सत्त्वेनाऽऽत्मशक्त्या विवर्धमानया ॥ ४१ ॥

सर्वतीर्थाना मास्पदपादरेणुभिः आश्रय चरणरेणुभिः सह कृष्णेन आध्यात्मा परमात्मा निकेतो निलयः आश्रयो येषां ते अध्यात्म निकेताः तैः भूसुरैः ब्राह्मणैश्च यः सङ्गमः स गृहान्धकूपे पतितस्य मम कुतोऽपतत् तस्मात्त्वत्पुण्या दभूदिति तर्कयामास अचिन्तयत् इत्यन्वयः ॥ ४२ ॥

अङ्घ्र्यभिमर्शनं पादसम्मर्दनं कुर्वन् ॥ ४३ ॥

किमाहेत्याशङ्क्य कृष्णनामा वेदान्तप्रतिपाद्यः साक्षात् श्रीनारायण एव न देवदत्तादिषु एक इति भावेनाऽऽह अद्येति। यः सत्त्वादिगुणसृष्टाभिः शक्तिभिः महदादिभिः इदं जगत् सृष्ट्वा आत्मसत्तया ब्रह्मव्यतिरिक्तेन विविधाकारेण विभजति 'तत्सृष्ट्वा तदेवाऽनु प्राविशत्' (तैत्ति.उ.2-6) इति श्रुतेः। स एवं परमपुरुषः श्रीकुष्णः अद्यनो दर्शनं प्राप्तो नाऽन्य इति शेषः ॥ ४४ ॥

**यथा शयानः पुरुषो मनसैवात्ममायया ।**
**सृष्ट्वा लोकं परं स्वाप्र[1-]मनुविश्याऽ[-1]वभासते ॥ ४५॥**

**शृण्वतां गदतां शश्व[2-]दर्चतां त्वाऽभिव[-2]न्दताम् ।**
**नृणां [3-]संवदतामन्त[-3]र्हृदि भास्यमलात्मनाम् ॥ ४६ ॥**

**हृदिस्थोऽप्य[4]ति दूरस्थः कर्मविक्षिप्तचेतसाम् ।**
**आत्मशक्तिभिरग्रा[5-]ह्योऽप्यन्त्युपेत गुणात्मना[-5]म् ॥ ४७ ॥**

**नमोऽस्तुतेऽध्यात्मविदां परात्मने ह्य[6]नात्मने स्वात्मविभक्तमृ[7]त्यवे ।**
**सकारणाकारणलिङ्गमीयुषे स्वमायया संवृत[8-]रुद्धदृष्ट[-8]ये ॥ ४८ ॥**

1- -1 M. Ma "वरुध्याऽव" 2- -2 M. Ma "दर्शिनामभिनन्द" 3- -3 M. Ma संवसतां नित्यं र्हादस्थोयोऽ° 4. M. Ma °थ° 5- -5 M. Ma ह्यो हि अर्थाकारो गुणात्मकः ॥ 6. M.Ma सर्वात्मने 7. M.Ma मूर्तये 8- -8 M. Ma दृष्टये नमः ॥

**श्रीध०** मायासृष्टि प्रवेशयोरविद्या सृष्टि प्रवेशौ दृष्टान्ततया आह - **यथेति**। आत्ममायया स्वाविद्यया यद्वा - अत्मनस्तव माययेति ॥ ४५ ॥

किञ्च शृण्वतामिति। नित्यं श्रवणकीर्तनादि पराणाम् अमलात्मनामपि हृद्येव त्वं भासि। मम तु लोचनगोचरः त्वमहोभाग्यमिति भावः ॥ ४६ ॥

ननु सर्वेषां हृदि स्थितः कथं केषाञ्चिदेव हृदि भासि मेघैः सूर्यवज्जीवोपाधिभिः आवृतत्वादिति यद्युच्यते तर्हि न कस्याऽपि भयादित्यत आह - हृदिस्थोऽपीति। कर्मभिर्विक्षिप्तं चेतो येषां तेषां आत्मशक्तिभिः अहङ्कारादिभिः अग्राह्योऽप्यवहितोऽप्युपेत गुणः प्राप्तश्रवणकीर्तनादि संस्काराऽत्मा अन्तः करणं येषां तेषां अन्ति समीपे अव्यवहितः त्वं इत्यर्थः ॥ ४७ ॥

**एतदेव** प्रपञ्चयन् नमस्यति **नम** इति। तुभ्यं नमोऽस्तु। अध्यात्मविदां निवृत्तदेहाद्यहङ्काराणां परात्मने परमात्मत्वेन प्रकाशमानाय मोक्षप्रदायेत्यर्थः। अनात्मने देहाद्यभिमानिने जीवाय परत्वेनाऽप्रकाशमानत्वात् स्वात्मनस्सकाशाद्विभक्तः सर्मर्पितो मृत्युः संसारो येन तस्मै। कुतएतत्तत्राऽऽह - सकारणं महदादिकार्यम् अकारणं प्रकृतिस्तदुभयलिङ्गमुपाधिं नियन्तृनियम्यतया ईयुषे प्राप्तवते अत उभयनियन्तुः स्वस्मात्सकाशात् उभयवश्याय जीवाय विभक्तमृत्यव इत्यर्थः।

नियन्तृनियम्यत्वे कारणं वदन्नाह - हे स्वमायया संवृतेति। अतोऽलुप्तैस्वर्यत्त्वा तन्नियन्त्रे तुभ्यं नमः। किञ्च रुद्ध दृष्टये मायावित्वादेव अन्येषां रुद्धा आवृता दृष्टिर्येन तस्मै। यद्वा - स्वमायया स्वस्याऽसंवृता अन्येषां रुद्धा दृष्टिर्येन तस्मै इत्येकं पदम् ॥ ४८ ॥

1. B.J. Omit नियन्तृ

**वीर०** तत्र दृष्टान्तः **यथेति**। अत्र पुरुषशब्दो जीवशरीरक परमात्मपरः जीवस्य स्वप्नार्थस्रष्टृत्वा योगात्। तदयमर्थः - **यथा शयानः पुरुषः** पुरुषशरीरकः परमात्मा मनसा स्वशरीर भूत जीवमनोरथानुसारिण्या अत्मनः स्वस्य मायया सङ्कल्पेन परं शयानदेहादन्यं स्वाप्नं सुषुप्तजीवकर्मानुगुणं तदेकानु भाव्यं तत्कालमात्रावस्थायिनं च लोकं देहमनुप्रविश्य तज्जीवमनोरथानुगुणेन सङ्कल्पेन अनुप्रविश्य अवभासते जीवानुभाव्य देशान्तर गमन राज्याभिषेक शिरश्छेदनादिभिः साक्षादस्पृष्ट एव प्रकाशते जगत्सर्ग तदनुप्रवेशयोः स्वाप्नसर्गतदनुप्रवेशौ। दृष्टान्तौ उभयत्र जीवद्वारकोऽनु प्रवेशो व्याप्यगत दोषास्पर्शश्च तुल्यः ॥ ४५ ॥

ननु मद्दर्शनं दुर्लभं किमिति मन्यसे इत्यत आह -शृण्वतामिति। शश्वत्सदाश्रवणादिकं कुर्वता मतएवाऽमलात्मनां परिशुद्धान्तः करणानां नृणां अन्तः हृद्येव भासि, नतु चक्षुर्विषयो भवसीति ॥ ४६ ॥

हृदिस्थ इति। कर्मणा विक्षिप्तं चेतो येषां तेषान्तु हृदिस्थोऽप्यतीव दूरस्थः। एवं कस्यापि अचक्षुर्विषयस्त्वं मद्दृग्विषयोऽसि अतो दुर्लभं त्वद्दर्शनं मया लब्धमिति भावः। ननु हृदिस्थत्व मतिदूरस्थत्वञ्च परस्परविरुद्धं कथमिव घटते इत्यत आह - आत्मशक्तिभिरिति। उपेताः गुणाः रजस्तमस्तत्कार्यकाम क्रोधमोहादयो येन सः आत्मा मनो येषां तेषामन्ति समीपस्थोऽपि आत्मशक्तिभिः देहात्माभिमान स्वतन्त्रात्माभिमानाद्यापादनद्वारा त्वद्याथात्म्यानापादकमायादिशक्तिभिः हेतुभिः अग्राह्यः। एतदेवाऽतिदूरस्थमिति न विरोधइति भावः ॥ ४७ ॥

न केवलम् अमलात्मनामन्त हृदि भासमान एव कर्मविक्षिप्त चेतसामग्राह्य एव, अपितु मोचको बन्धकश्चेति वदन्प्रणमति - नमोऽस्तु ते इति अध्यात्मविदां त्वद्याथात्म्यवेदिनां परात्मने प्राप्यायात्मने न विद्यते युक्तस्त्वयि निवेशित आत्मा येषां तेषां स्वात्मविभक्तमृत्यवे स्वात्मना स्वसङ्कल्पेन विभक्त स्समर्पितः मृत्युर्येन तस्मै। अनात्मने इति पाठे व्यापकान्तरशून्यायेत्यर्थः। ननु बन्धमोक्षहेतुत्वं वदन् मयि किं वैषम्यमापादयसीत्यतो विशिनष्टि-सकारणेति। सकारणमनुग्रह हेतुकं अकारणं अकर्महेतुकं लिङ्गं शरीर मीयुषे प्राप्तवते सर्व लोकोज्जिजीविषया स्वेच्छोपात्ताकर्ममूलदिव्य मङ्गल विग्रहाय, अतो न वैषम्य मस्तीति भावः। तर्हि सर्वान् किं न मोचयसीत्यतो विशिनष्टि - स्वमायया संवृता मोहिताः येषां

रुद्धा दृष्टिर्ज्ञानं यस्मिन् विषयभूते तस्मै त्वन्मायामोहितानां त्वद्याथात्म्यावेदिनां मुक्तिं अप्रयच्छन्नत्वं विषमः न ह्यभजतां कामा न प्रयच्छन् सुरद्रुमो विषम इति भावः ॥ ४८ ॥

**विज०** ननु सन्घटः सन्पट इति सदनु विद्धतया प्रतीतेः ब्रह्मव्यतिरिक्तं जगन्नास्तीत्याशङ्क्य सदृष्टान्तं परिहरति यथेति। यथा शयानः स्वपन् पुरुषः आत्मनः परमात्मनः मायया इच्छया प्रबोधितेन स्वमनोगत करि तुरगादि संस्कारेणैव परं स्वव्यतिरिक्तं स्वाप्नं लोकं सृष्ट्वा अवरुध्य स्वविषयी कृत्य अवभासते पृथक् प्रकाशते तथा भगवान् जगति स्थितोऽपि ततो व्यर्तिरिक्तमात्मानं प्रकाश्य तिष्ठतीत्यर्थः ॥ ४५ ॥

अलौकिक सिद्धवस्तुसत्तायां किं प्रमाणमिति तत्राऽऽह - शृण्वतामिति। यः स्वकथां शृण्वतां गदतां हृदिस्थ इत्यनेन श्रवणवचने प्रमाणत्वेन ज्ञातव्य इति दर्शितं शश्वद्दर्शिनां अभिनन्दतां संवसतां अमलात्मनां नृणां नित्यं हृदिस्थ इत्यनेन प्रत्यक्षप्रमाणं दर्शितमिति ॥ ४६ ॥

नन्वेवं तर्हि कस्मान् मादृशानां तज्ज्ञानाभाव इत्याशङ्क्य उपासनाभावात् उपासनञ्च कर्म प्रतिबद्धमिति भावेनाऽऽह - हृदिस्थ इति। उपासकैरपि न स्वप्रयत्नेन ज्ञेयः किन्तु स्वप्रसादेनैवेत्याशयेनाऽह आत्मेति। आत्मनां जीवानां शक्तिभिः प्रयत्नादिलक्षणाभिः अग्राह्यो न ज्ञेयः मुह्यन्ति यं सूरय इत्यादिस्वोक्तिं स्मारयति। हि शब्देन देवदत्त वच्छरीरीचेत् कथम ग्राह्य इत्यत्राऽऽह - अर्थाकार इति। अर्थ्यत इत्यर्थः। आनन्दः। ऋगतौ इति धातुः यद्वा अर्थशब्देन ज्ञानञ्च ज्ञानानन्ददेह इत्यर्थः। अर्थो वस्तु अप्रतिहतं तदाकार इति वा। कुत एव अङ्गीकारइत्यत्राऽऽह अगुणात्मकं इति सत्त्वादि गुणनिर्मित देहवान्नभवति। एवंविधस्त्वमस्माकं दर्शनं प्राप्त इति पूर्वेणान्वयः ॥ ४७ ॥

एवं विधत्वान्मम नमनमन्तरेण त्वदुपासनं दुस्साध्य मिति भावेनाऽऽह - **नम** इति। अध्यात्मविदां परमात्मादि तत्त्वज्ञानिनां परमात्मने अशेष पुरुषार्थ दात्रे सर्वात्मने सर्व व्यापिने स्वात्मविभक्त मूर्तये स्वात्मनैव विभक्तस्वरूपाय सकारणं जगदकारणलिङ्गम् अकारणं कारणन्तरशून्यस्वरूपं प्रधानमेवं द्वे ईयुषे व्याप्तवते स्वमायया स्व सामर्थ्येन असंवृतदृष्टये अव्यवहित ज्ञानाय ॥ ४८ ॥

**सत्वं शाधि स्वभृत्यान्नः किन्वीश करवाम ते ।**
**एतदन्तो नृणां क्लेशो यद्भवानक्षिगोचरः ॥ ४९ ॥**

**श्रीशुक उवाच**

**तदुक्तमित्युपाकर्ण्य भगवान् प्रणतार्तिहा ।**
**गृहीत्वा पाणिना पाणिं प्रहसंस्त मुवाच ह ॥ ५० ॥**

**[4-]श्रीभगवानुवाच[-4]**

**ब्रह्मं स्तेऽनुग्रहार्थाय सम्प्राप्तान् विद्ध्यमून्[5]मुनीन् ।**
**सञ्चरन्ति मयालोकान् पुनन्तः पादरेणुभिः ॥ ५१ ॥**

**देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ।**
**[6-]शनैः पुनन्ति[-6] कालेन तदप्यर्हत्तमेक्षया ॥ ५२ ॥**

---

1. B.G.J.K.T.W किं देव ; M.Ma किञ्चेष 2. B.G.J °महे। 3. J.M.Ma °क्ष 4- -4 K.T.W.Omit 5. MI.V. द्विजान् 6- -6 K.T.W पुनन्ति चिर ; M.Ma लोकान् पुनन्ति

**श्रीध० स** इति स एवम्भूतः परमेश्वरस्त्वं नोऽस्मान् स्वभृत्यान् शाधि अनुशिक्षय ॥ ४९,५० ॥

स्वस्मिन्नादरमित्यधिकं बाह्मणेषु मन्दमिव आलक्ष्य लोकसङ्ग्रहपरो भगवान् मत्तोऽपि ब्राह्मणेषु श्रद्धातिरेकं कुर्वित्येवं तमनुशास्ति ब्रह्मन्निति। सप्तभिः मया हृदि स्थितेन ॥ ५१ ॥

देवादिभ्योऽपि ब्राह्मणाः श्रेष्ठा इत्याह - **देवा** इति। ते शनैः पुनन्ति, एते तु सद्यः। किञ्च देवादीनि यत्पुनन्ति तदप्यर्हत्तमानामीक्षया ॥ ५२ ॥

**वीर०** इत्थं प्रणम्य तत्कैङ्कर्यं प्रार्थयते - स त्वमिति। स उक्तविधस्त्वं स्वभृत्यान्नोऽस्मान् शाधि। हे देव किङ्करवाम किञ्चिदिष्टंकरवामेति प्रार्थनायां लोट्। ननु मुक्तिं अयाचित्वा कैङ्कर्यमेव किमिति प्रार्थयसे इत्यत आह एतदिति। नृणां क्लेशस्ताप त्रयरूपः एतदन्तः एतत् अन्तोऽवधिर्यस्य तथाभूतः। किं तत्? यत् भवानक्षिगोचर इत्येतत् ॥ ४९ ॥

तदुक्तमिति। इतीत्थं तदुक्तं श्रुतदेवोक्तं उपाकर्ण्य प्रणतार्तिहा आश्रितार्तिहरः ॥ ५० ॥

उक्तिमेवाऽऽह - ब्रह्मन्नित्यादिभिः सप्तभिः इत्थं स्वाम्यभीष्ट करणानुरूप कैङ्कर्यं प्रार्थयमानं श्रुतदेवं प्रति मद्भक्तानां आराधनमेव निरतिशयं मत्कैङ्कर्यमिति वक्तुं तावद्भक्तान् प्रशंसति ब्रह्मन्निति षड्भिः हृदिस्थेन मया पादरेणुभिः लोकान् पुनन्तः पवित्रीकुर्वन्तः सञ्चरन्ति ॥ ५२ ॥

ननु देवादयोऽपि पुनन्त्येवेति किं विशेषेणैत एव पुनन्ति? इत्यत आह - **देवा** इति। देवा भगवत् प्रतिमाः, क्षेत्राणि अयोध्यामधुरादीनि, तीर्थानि गङ्गादीनि, चिरकालेन दीर्घकालेन पुनन्ति। किञ्च देवादीनि यत्पुनन्तीति तदपि अर्हत्तमानाम् ईक्षणात् मद्भक्तकर्तृकेक्षा प्रयुक्तमाहात्म्यादित्यर्थः ॥ ५२ ॥

**विज०** यद्यदा भवानक्षगोचरः स्यात् एतदन्तोऽयमवधिर्यस्य स तथा। नृणां क्लेशः परिश्रमः ॥ ४९,५० ॥

बह्मन् तपस्विन् ॥ ५१ ॥

देवादिभ्यो यच्छुद्धत्वं तदर्हत्तमानां पूज्यानां बाह्मणादीनां ईक्षया दर्शनेन। अपिशब्दोऽवधारणार्थः ॥ ५२,५३ ॥

**ब्राह्मणो[1] जन्मतः[2] श्रेयान्[3] सर्वेषां प्राणिनामिह ।**
**तपसा विद्यया तुष्ट्या किमु [4-]मत्कलया युतः[-4] ॥ ५३ ॥**

**न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ।**
**सर्ववेदमयो विप्रः सर्वदेवमयोह्यहम् ॥ ५४ ॥**

**दुष्प्रज्ञा अविदित्वैव मवजानन्त्यसूयवः ।**
**गुरुं मां विप्रमात्मान मर्चादाविज्य[5]दृष्टयः ॥ ५५ ॥**

**चराचरमिदं विश्वं भावा[6] ये चाऽस्य हेतवः[7] ।**
**मद्रूपाणीति चेतस्या धत्ते विप्रो मदीक्षया ॥ ५६ ॥**

---

1. M. Ma °णाः 2. B.G.J. °ना 3. M.Ma श्रेष्ठाः 4- -4 M. Ma यथापुनः। 5. M. Ma °विति 6. M. Ma °व 7. M. Ma दैवतम्

**श्रीध० ब्राह्मण** इति। मम कला परिकलनं उपास्तिस्तया युतः ॥ ५३ ॥

किञ्च बाह्मणाराधनमेव मम प्रेष्ठमित्याह-नेति। हेतुमाह सर्ववेदमयो विप्र इति। प्रमाणाधीनत्वात् प्रमेयस्य। वेदमयो विप्रो देवमयादस्मद्रूपात् प्रेष्ठ इत्यर्थः ॥ ५४ ॥

**दुष्प्रज्ञा** इति। असूयवो दोषदृष्टयः। इज्य दृष्टयः पूज्य बुद्धयः ॥ ५५ ॥

**चराचरमिति**। अस्य विश्वस्य हेतवो भावाः महदादयः मदीक्षया ममैव सर्वत्रेक्षया ॥ ५६ ॥

**वीर०** मद्भक्तात् श्रेष्ठो नास्तीत्याह - ब्राह्मण इति। सर्वेषां प्राणिनां मध्ये इह श्रेष्ठेषु नरेषु ब्राह्मणो जन्मतः श्रेयान्। ब्राह्मणेष्वपि तपसा युतः युक्तः श्रेयान्। ततोऽपि विद्यया वेदान्तविद्यया युतः। ततोऽपि तुष्ट्या[1] नित्य सन्तोषेण युतः श्रेयान्। मत्कलया कला विद्या (मम) मदुपासनेति यावत्। तया युतस्तु श्रेयानिति, किमुवक्तव्यमित्यर्थः ॥ ५३ ॥

किम्बहुनेत्याह - नैतदिति। एतद्द्विभुजं चतुर्भुजं वा मम रूपं ब्राह्मणात् मत्कलया युतात् न दयितं न प्रियम्। तत्र हेतुः - सर्वेति। ब्राह्मणाधीनत्वात् प्रमेयसिद्धेः प्रमाणभूत वेदप्रचुराद्विप्रादेवमयं वपुर्न मे दयितमित्यर्थः ॥ ५४ ॥

एवं केचित् त्वद्भक्तान् कुतोऽवमन्यन्ते, कुतो वा देवादीन् भजन्ते इत्यत आह - दुष्प्रज्ञा इति। एवमित्थम्भूतान् मद्भक्तान् अविदित्वा। तत्र हेतुः दुष्प्रज्ञाः दुरहङ्काराः, देहात्माभिमानिन इति यावत्। अत एव असूयवः सत्स्वपि गुणेषु दोषाविष्करणैक शीलाः अत एव अर्चादावेव इज्यदृष्टयः पूज्यता बुद्धिमन्तो मां मदात्मकं गुरुमात्मानं विप्रं "ज्ञानीत्वात्मैव मे मतम्" इत्युक्तविधं ज्ञानिनं विप्रं च अवजानन्ति ॥ ५५ ॥

ज्ञानिनो दृष्टिस्त्वन्यादृशीत्याह - चराचरमिति। चराचरात्मकमिदं विश्वं तथाऽस्य विश्वस्य हेतवो ये भावाः पदार्थाः महदादयः तान्येतानि सर्वाणि विप्रो मदीक्षया मद्विषयकज्ञानेन मदात्मकत्व बुद्ध्येत्यर्थः। धत्ते विषयीकरोति ॥ ५६ ॥

---

1. B. अनायासेन यत्किञ्चित्प्राप्त सन्तो°

**विज०** ब्राह्मणभक्तिजननार्थं अर्थवादमाह - **न ब्राह्मणादिति**। ब्राह्मणस्योत्तमत्वे हेतुमाह - सर्वेति। एवमप्यावयोः विशेषोऽस्तीति हि शब्देनाऽऽह ॥ ५४ ॥

असूयवः गुणेषु दोषाविष्करणशीलाः दुष्प्रज्ञा एवं गुरुं विप्रं मत्सन्निधानपात्रं अविदित्वा अवजानन्ति आत्मानं मामर्चादौ अवजानन्ति। कथम्? अर्चैव हरिरिति दृष्टयः ॥ ५५ ॥

ब्राह्मणपूजया सर्वमपि पूजितं स्यादिति भावेनाऽऽह - चराचरमिति। इदं चराचरं विश्वं भावये कल्पये, ब्रह्मणीति शेषः। अस्य ब्राह्मणस्य दैवतमहमिति शेषः। विप्रस्य सर्ववेदमयत्वमुक्तं स्पष्टयति। मद्रूपाणीति विप्रो मदीक्षया मत्प्रतिपादकत्वज्ञानेन एतस्यां 'सर्वेवेदा यत्पदमामनन्ति' (कठ.उ.2-15) इत्यादि श्रुत्या वायुना वै गौतमसूत्रेणाऽयं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्तीति श्रुतिसिद्धेः एभिः चराचरैस्सह मद्रूपाणि धत्ते ॥ ५६ ॥

तस्माद्ब्रह्मऋषीनेतान् ब्रह्मन्मच्छ्रद्धयाऽर्चय[1] ।
एवञ्चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः[2] ॥ ५७ ॥

श्रीशुक उवाच

स इत्थं प्रभुणाऽऽदिष्टः सह कृष्णान् द्विजोत्तमान् ।
आराध्यैकात्म्यभावेन मैथिलश्चाऽऽप सद्गतिम् ॥ ५८ ॥

एवं स्वभक्तयो राजन् भगावान् भक्तभक्तिमान् ।
उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे
षडशीतितमोऽध्यायः ॥ ८६ ॥

1- -1. K.T.W. ब्रह्मन्संश्रद्धयार्चय ; M. Ma. ब्रह्मशान्श्रद्धयार्चय ; Ml.V. श्रद्धयार्चय नित्यशः 2- -2. K.M.Ma.T.W. सुविभूतिभिः 3. M.Ma. °कान्त°

**श्रीध०** सतां वेदानां त्रिकाण्डविषयाणां प्रवृत्तप्रकारमादिश्य ॥ ५७- ५९ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
षडशीतितमोऽध्यायः ॥ ८६ ॥

**वीर०** अस्त्वेवं, ततः किं अत आह - **तस्मादिति**। तस्मान्मद्भक्तानाम् इत्थम्भूतत्वात्, हे ब्रह्मन्! एतान्ब्रह्मर्षीन् श्रद्धयाऽत्यादरेणाऽर्चय एवञ्चेदित्थमर्चयसि चेत् अद्धा साक्षादहमेवाऽर्चितोऽस्मि। अन्यथा मद्भक्तार्चनं विना सुविभूतिभिः पुष्कलोपचारैरर्चितोऽप्यहं नाऽर्चितः। ऋषीनेतानिति स्वभक्तमात्रोप लक्षणम् ॥ ५७ ॥

**इत्थमिति**। प्रभुणा भगवता आदिष्टः स श्रुतदेवः ऐकात्म्यभावेन परमात्मबुद्ध्या आराध्य सतां गतिं मुक्तिमवाप ॥ ५८ ॥

**एवमिति**। भक्तेषु भक्तिः प्रीतिः सा अस्यास्तीति तथा स भगवान् हे राजन्! स्वभक्तयोः श्रुतदेव बहुलाश्वयोः सन्मार्गं सतां साधूनां मार्गं अनुष्ठेयधर्मप्रकारमादिश्योपदिश्य कतिपयदिनान्युषित्वा च पुनर्द्वारवतीं ययौ ॥ ५९ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां व्याख्यायां

षडशीतितमोऽध्यायः ॥ ८६ ॥

**विज०** प्रतिपादनच्छलेन फलितमाह - तस्मादिति ॥ ५७,५८ ॥

भक्तेषु प्रसादलक्षणस्नेहवान् ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

दशमस्कन्धे उत्तरार्धे षडशीतितमोऽध्यायः ॥ ८६ ॥



# सप्ताशीतितमोऽध्यायः

(विजयध्वजरीत्या चतुर्णवतितमोऽध्यायः)

### [1-] राजोवाच [-1]

ब्रह्मन्ब्रह्मण्य निर्देश्ये निर्गुणे गुणवृत्तयः ।
कथं चरन्ति श्रुतयस्साक्षात्सदसतः परे ॥ १ ॥

### श्रीशुक उवाच

बुद्धीन्द्रियमनः प्राणाञ्जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मने[2] कल्पनाय च ॥ २ ॥

सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ।
श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिञ्चनः[3] ॥ ३ ॥

अत्र ते वर्णयिष्यमि गाथां नारायणान्विताम्[4] ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥

एकदा नारदो लोकान् पर्यटन्भगवत्प्रियः ।
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥

---

1- -1 B.G.J परीक्षिदुवाच 2. G.J. °नेऽक° 3. K. गच्छत्य° 4. M.Ma °णोदि°

## श्रीधरस्वामि विरचिता भावर्थदीपिका

सप्ताशीतितमे नारायणनारदवादतः। वेदैः स्तुतिर्गुणालम्बा निर्गुणावधि वर्ण्यते ॥

वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि। यस्याऽऽस्ते हृदये संवित्तं नृसिंहमहं भजे ॥

सम्प्रदाय विशुद्ध्यर्थं स्वीय निर्बन्धयन्त्रितः। श्रुतिस्तुतिमितव्याख्यां करिष्यामि यथामति ॥

श्रीमद्भागवतं पूर्वैः सारतः सन्निषेवितम्। मयातु तदुपस्पृषृमुच्छिष्टमुपचीयते ॥

पूर्वाध्यायान्ते - 'एवं स्वभक्तयोराजन् भगवान्भक्त भक्तिमान्। उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात्' (भाग. 10-86-59) इत्यत्र सन्मार्गं सतां स्वतः प्रमाणभूतानामप्रामाण्य कारणरहितानां वेदानां मार्गं ब्रह्मपरत्वमुपदिश्य भगवान् अगादित्युक्तं तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानः पृच्छति - ब्रह्मन्निति। तत्र तावत् मुख्यालक्षणा गुणभेदेन त्रिधा शब्दप्रवृत्तिः। यथा मुख्यापि रूढि - योगभेदेन द्विधा। रूढिश्च स्वरूपेण जात्या गुणेन वा निर्देशार्हे वस्तुनि संज्ञासंज्ञि सङ्केतेन प्रवर्तते यथा - डित्थो गौः शुक्ल इति। लक्षणा च तेनैव सङ्केतेनाभिहितार्थ सम्बन्धिनि[2] यथा गङ्गायां घोष इति। गौणी चभिहितार्थ लक्षितगुणयुक्ते तत्सदृशे, यथा - सिंहो देवदत्त इति। यथाऽऽहुः -'अभिधेयाविनाभूते[3] प्रवृत्तिर्लक्षणेष्यते। लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता' इति। योगवृत्तिस्तु एतत् त्रिविधवृत्तिप्रतिपादित पदार्थयोः प्रकृतिप्रत्ययार्थयोः वा योगेन। यथा पङ्कजमौपगवः पाचक इत्यादि। तत्र तावद्ब्रह्मणि रूढवृत्तिर्न सम्भवतीत्याह - साक्षात् कथं चरन्तीति। तत्र हेतुः - अनिर्देश्ये इति। अनिर्देश्यत्वेऽपि हेतुं वदन् गुणवृत्तिं निराकरोति - निर्गुणे गुणवृत्तय इति। गुणैर्वर्तमानाअपि निर्गुणे कथं चरन्तीत्यर्थः। निर्गुणत्वे च हेतुं वदन् लक्षणां योगं च निराकरोति - सदसतः पर इति। कार्यकारणाभ्यां परस्मिन्नसङ्गे केनचिदपि सम्बन्धाभावान्न लक्षणायोगवृत्ती सम्भवत इत्यर्थः। एवं पदार्थत्वायोगादपदार्थस्य च वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः ॥ १ ॥

उत्तरमाह - बुद्धीन्द्रियेति। बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्राद्यर्थं प्रभूरीश्वरोऽसृजत्। मीयन्ते इति मात्रा विषयास्तदर्थम्। भवार्थं भवो जन्म लक्षणं कर्म, तत्प्रभृति कर्मक रणार्थमित्यर्थः। आत्मने लोकान्तरगामिने, आत्मनः तत्तल्लोकभोगायेत्यर्थः। अकल्पनाय कल्पनानिवृत्तये, मुक्तय इत्यर्थः। अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः। जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति। प्रभुरिति ईश्वरस्योपाधिवश्यताभावेन नित्यमुक्ततां दर्शयति। अयम् अभिप्रायः - [4-]यद्यप्युक्तरीत्या कापि प्रवृत्तिः न सम्भवति, तथापि परम्परया साक्षाद्वा सर्वासां श्रुतीनां ब्रह्मणि पर्यवसानम्। किञ्च, ईश्वरो जीवानां मोक्षार्थमेव सृष्टिं करोति, न च स्वरूपोप पादनमन्तरेणोपपद्यते - अतो योग्या काचन वृत्तिः विचारणीयेत्युत्तरम्[-4]। सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियन्तारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानन्दं भगवन्तं श्रुतयः प्रतिपादयन्ति। 'यः सर्वज्ञः सर्ववित्' (मुण्ड. उ. 2-2-7) 'यस्य ज्ञानमयं तपः' (मुण्ड.उ. 1-1-6) 'सर्वस्य वशी सर्वस्येशानः' (बृह. उ. 4-4-22) 'यः पृथिव्यां तिष्ठन् पृथिव्या आन्तरः' (बृह. उ. 3-7-3) 'सोऽकामयत बहुस्याम्' (तैति. उ. 2-6) 'स ऐक्षत, तत्तेजोऽसृजत' (छान्दो. उ. 6-2-3) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.ति.उ 2-1-1) इत्याद्याः। तथाभूतेश्वरतां तावत् संसारिणो जीवस्य तन्निवृत्तये 'तत्त्वमसि' (छान्दो.उ. 6-7-8) इत्यादि वाक्यानि बोधयन्ति। तत्र च तत्त्वम्पदयोः सामानाधिकरण्यं प्रतीयते। तच्च प्रकारान्तरेणघटमानं ब्रह्मणि पर्यवसानं गमयति। तथाहि -न तावद्वैश्वदेव्याऽऽमिक्षेति वदुभयोः एकार्थाभिधानेन सामानाधिकरण्यम् घटते। यथोक्तम्

- 'आमिक्षां देवता युक्तां वदत्येवैष तद्धितः। आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम्'॥ इति कुतः? भिन्नार्थत्वात् न च अजहत्स्वार्थया निरूढलक्षणया विशेषण विशेष्यभावेन नीलमुत्पलमितिवत्। यथोक्तम् 'स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम्' इत्यादि। कुतः? विरुद्धार्थत्वेन तदयोगात् न च जहत्स्वार्थत्वेन सम्बन्धलक्षणया कुसुमित द्रुमा गङ्गेतिवत्। कुतः? एकार्थत्वस्य विवक्षितत्वात्। अतो जहदजहत्स्वार्थलक्षणया सोऽयं देवदत्त इतिवत् विरुद्धांशत्यागेनानुगतचिदंशे[5]नैकार्थेन सामानाधिकरण्येन निर्गुणे पर्यवसानम्। अस्थूलादि वाक्यानां तु साक्षादुपाधिनिषेधेन तत्पदार्थ शोधने उपयोगात् निर्गुण एव पर्यवसानम्। तथा च अत्रैवोपक्रमे 'स्वसृष्टमिदमापीय' (भाग 10-87-12) इत्यादिना विशिष्टमालम्बनं वक्ष्यति। अन्तेच 'श्रुतयः त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः' (भाग. 10-87-41) इत्युपसंहरिष्यति। उपासनादिवाक्यानां [6-]अन्यार्थ प्रवृत्त्या[-6] सृष्ट्यादि अव[7]लम्बनत्वेन ज्ञानसाधन विधानेन तत् परत्वमित्येषा दिक् ॥ २ ॥

अत्र च अनादि शिष्टपरम्परागतत्वान्न सन्देहो युक्त इत्याह - सैषेति। सैषा [8-]यथोक्तलक्षणा[-8] यथोक्तालम्बना [9]वा ब्राह्मी ब्रह्मपरा। श्रद्धया आदरेण वैतण्डिकतर्कानभिनिवेशेन यः श्रवणादिना धारयेत् स अकिञ्चनो निरस्तदेहाद्युपाधिः सन् ततः परं पदं प्राप्नुयादिति ॥ ३ ॥

एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपञ्चयितुमितिहासमवतारयति - अत्रेति। नारायणान्वितां नारायणः प्रवक्तृत्वेनान्वितो यस्यां ताम्। गाथामितिहासम् ॥ ४ ॥

---

1. MI.V. °मितां व्यां° 2. MI.V. नी 3. MI.V. ने 4--4 B.J Omit 5. MI.V. °नैकार्थसामा° 6--6 B.J क्रियार्थप्रवृत्त 7. B. J °लम्बनेन 8--8 B.J Omit 9. B.J Omit वा 10. B. j Omit ततः

## श्रीवीरराघव विदुषा लिखिता भागवतचन्द्रचन्द्रिका

'सर्ववेदमयो विप्रस्सर्वदेवमयोऽस्म्यहम्' (भाग. 7-11-20) इति वेदानां ब्रह्मप्रमापकत्वं भगवदुक्त्यैवावगतम्, तत्पुर्वध्यायेऽपि 'विशुद्ध सत्त्वधाम्न्यद्धा त्वयि शास्त्र शरीरिणि' (भाग. 10-85-42) इति बलिवचनेनाप्यवगतम्, 'तत्पूर्वध्यायेऽपि ब्रह्म ते हृदयं शुद्धम्' (भाग.10-84-19) इत्यादिना 'शास्त्रयोने स्तवात्मनः (भाग. 10-84-20) इत्यन्तेन मुनिवचसाऽप्यवगतम्, श्रूयते चैवं 'सर्ववेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति' (कठ.उ. 2-15) इति, स्मर्यते च 'वेदैश्च सर्वैरहमेववेद्यः' (भ.गी.15-15) इति। ब्रह्मणश्चिदचिद्वैलक्षण्यं बहुशः प्रतिपादितं, तत्र चिदचिद्विलक्षण ब्रह्मस्वरूप स्वभावपराणां 'सत्यं ज्ञानमनन्तम्' (तैत्ति.उ.2-1-1) यस्सर्वज्ञःसर्ववित्' (मुण्ड.उ.2-2- 7) इत्यादि श्रुतिवचसां तत्प्रमापकत्वेऽपि 'अयमात्मा ब्रह्म' (बृह.उ.2-5-19) 'तत्त्वमसि' (छन्दो.उ.6-8-7) 'सर्व खल्विदं ब्रह्म' (छान्दो.उ.3-14-1) इत्यादिना

परमात्म शब्दसमानाधिकरणतया श्रुतानां चिदचिद्वाचिशब्दानां कथं परमात्म प्रमापकत्वमिति पृच्छति राजा-ब्रह्मन्निति। हे ब्रह्मन्! गुणवृत्तय इत्यत्र गुणशब्दो विशेषणपरः, गुणेन जातिगुणक्रियान्यतमेन द्वारभूतेन वृत्तिर्बोधनं यासां ताः जात्यादिकं प्रवृत्तिनिमित्ती कृत्य तद्विशिष्टाभिधायिन्यः श्रुतयः चिदचित्पराः कथं ब्रह्मणि साक्षाच्चरन्ति प्रवर्तन्ते, न हि प्रवृत्ति निमित्त प्रहाणेन शब्दः प्रतिपादयितुमलमिति प्रश्नार्थः। न च लक्षणया चरन्तीति वक्तुं युक्तम्। उदाहृतश्रुतिस्मृतिआदिभ्योऽभि धावृत्तेरेवावगमात्। न च कतिपयश्रुतीनां तत्र मुख्यवृत्तिः, चिदचिदादिपराणां तु लक्षणा वृत्तिरिति युक्तं, सर्वे वेदा यत्पदमामनन्ति (कठ. उ. 2-15) 'वेदैश्च सर्वैरहम्' (भगी. 15-15) इति सर्वशब्द स्वारस्यात् सर्वासामपि तस्मिन् अभिधावृत्ते रेवावगमात्। अत एव साक्षादित्युक्तं, तावत् जातिशब्दानां वृत्त्यसम्भवं व्यञ्जयन् विशिनष्टिअनिर्देश्ये चेतनाचेतनसजातीयतया निर्देष्टुमशक्ये, तत्र हेतुः - सदसतः परे सच्चासच्च तयोः समाहारः तस्मात्परे चिदचिद्भ्यां परे विलक्षणे अन्यस्मिन्निति यावत्, न हि चिदचिद्गतजातिप्रवृत्तिनिमित्तकशब्दानां चिदचिद्भ्यामन्यस्मिन् मुख्यवृत्तस्सम्भवतीति भावः। अथ गुणशब्दानां वृत्त्यसम्भवं द्योतयितुं विशिनष्टि - निर्गुण इति। निर्गतत्रैगुण्ये त्रैगुण्यप्रत्यनीके यद्वा गुणशब्दानां ये ये प्रवृत्तिनिमित्तभूताः गुणाः तेभ्यः सर्वेभ्यो निर्गते निर्गुण इति निष्क्रियत्वस्यापि उपलक्षणम् ॥ १ ॥

अत्र 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा.दो.उ. 6-3-2) 'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म "सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते' (पु.सू.7) 'तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य। सच्चत्यच्चाभवत्' (तैत्ति.उ. 2-6) इत्यदि श्रुतयः स्वपर्यन्त नामरूपव्याकरणेन तत्तच्चिदचिद्वस्तुशरीरकतया तत्तच्छब्द वाच्योऽभूदिति प्रतिपादयन्त्यः परिहारमाहुरित्यभिप्रेत्य तत्र तत्र बहुशो जगत्सर्ग प्रकार वर्णनयैव प्रकृतप्रश्नस्य उत्तरं उक्तप्रायमिति च अभिप्रेत्य केवलं सृष्टिमात्रं स्मारयति बुद्धीन्द्रियेति। जनानां जीवानां बुद्ध्यादीनसृजत्, प्रभुरध्यक्षः निर्वाहक इति यावत्, अयमभिप्रायः - स्वयमन्तरात्मतया नामरूपनिर्वाहको भवितुं बुद्ध्यादि शब्दोपलक्षित समष्टिपरम्परया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनः सदसच्छब्दवाच्यचिदचिन्मिश्रदेवादि स्थावरान्त जगद्रूपतत्तच्छ ब्दवाच्यश्चाभवदिति। एवं चिदचित् पदार्थानां सर्वेषां परमात्मशरीर तैकस्वभाव्यत्तत्वेनैव तेषां वस्तुत्वादपृथक्सिद्धविशेषणत्वाच्च अपृक्सिद्ध विशेषणवाचि शब्दानामाकृत्यधिकरण न्यायेन विशेष्यपर्यन्ताभिधान स्वाभाव्यात् गवादि शब्दानां गोत्वादिकं प्रवृत्तिनिमित्तीकृत्य व्यक्तिपर्यन्ताभिधानस्य मुख्यत्ववत् सर्वेषां लोकव्युत्पत्तिसिद्ध स्वस्वार्थाभिधायिनां स्वस्वार्थान् परमात्मापृथक्सिद्धविशेषणभूतान् प्रवृत्तिनिमित्तीकृत्य परमात्माभिधानं मुख्यमेवेति, विस्तरस्तु भाष्यादिष्वनुसन्धेयः, परम कारुणिकस्यावाप्तसमस्त कामस्य स्वपरप्रयोजन निरपेक्षस्य ब्रह्मणो जगत्सर्गेण प्रयोजनं किं इत्यत आह - मात्रार्थमिति। आत्मने कल्पनाय चेति तादर्थ्यचतुर्थ्यन्तम्, मात्रार्थं देहार्थं तदुत्पादनार्थमित्यर्थः। असत्प्रायाणां जीवानां स्वाराधनोपयुक्तकरण कलेबरादिप्रदानेनोज्जीवनार्थं जगत् सर्गे प्रवृत्तिरिति परिपूर्णस्यापि परानुजिघृक्षा सङ्गतैवेति भावः। अत एव गर्भजन्मजरामरणाद्यनेक

दुःखावहजगत्सर्ग प्रयक्तनैर्घृण्यशङ्काऽपि निरस्ता, दुःखस्य तत्तज्जीवनादिकर्मप्रयुक्तत्वात् मीयन्त इति मात्राः देहाः, भवार्थमभ्युदयार्थम् आराधयितृभ्यो निश्रेयसरूपाभ्युदयप्रदानार्थं इत्यर्थः। अनेन देहोत्पादनस्यापि प्रयोजनमुक्तं, यद्वा भावार्थं त्रैवर्गिकरूपश्रेयः प्रदानार्थम्, आत्मने अध्यात्म ज्ञानर्थं मुक्तिसाधनोपासननिष्पत्तय इत्यर्थः। यद्वा आत्मार्थं जीवात्मस्वरूपसत्तालाभार्थं प्रलयावस्थायामसत्प्रायाणां जीवानां परमात्मन आत्मत्वं शेषशेषि भावज्ञानेनैव ह्यात्मसत्तालाभः अकल्पनाय कल्पनं ज्ञानैकाकारेष्वात्मसु देवमनुष्यादि कल्पनं भेद इति यावत्, तदभावाय मुक्तये उपायानुष्ठानेन देवादि भेदनिवृत्ति वृत्तिपूर्वकमुक्तयर्थं चेत्यर्थः। यद्वा सर्वमिदं सङ्कल्पमात्रेणैवोपपद्यतामित्यत आह - कल्पनाय चेति। कल्पनं क्रीडनं तस्मै, परिपूर्णस्यापि क्रीडार्थं जगद्व्यापार इति भावः ॥ २ ॥

नन्वित्थं सर्वशब्दानां ब्रह्मणि मुख्यवृत्तिः न लौकिकैः गृहीता, अपितु तत्तदर्थेष्वेव तत्कथं सार्वजनीनव्युत्पत्ति भञ्जनेन ब्रह्मणि व्युत्पत्तिः साध्यत इत्यत आह - सैषेति। सैषा उपपादिता ब्राह्मी ब्रह्मसम्बन्धिनी सर्वशब्दानां ब्रह्मण्यभिधावृत्तिः इत्यर्थः। उपनिषत् रहस्यतमा उपनिष्दर्थविचारेणावगन्तव्येति वाऽर्थः। अनधीतवेदान्तशास्त्राणां तत्तदर्थमात्रपर्यवसि तव्युत्पत्तावप्यधिगतवेदान्तार्थतदनुष्ठान निष्ठैर्ब्रह्मण्येवं व्युत्पत्तिर्गृहीता, न हि धटशब्दव्युत्पत्तिमगृहीतवतः। कस्यचित्पुंसो घटशब्दात्रदर्थानवगतावणि तस्म तद्बोधकशक्तिः विहतेति भावः। तथाहि पूर्वेषामपि पूर्वजैः वामदेवादिभिध एषा व्युत्पत्तिः धृता अवधृता निश्चितेति यावत्, वामदेव प्रह्लादादयो हि परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्यवसानं च पश्यन्तः सोऽहमिति[2] स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मननुसूर्यादीन् 'अहंमनुरभवं सूर्यस्य कक्षीवानृषिरस्मि विप्रः' (बृह.उ. 1-4-10) इति। 'सर्वगत्वादनन्तस्य स एवाह मवस्थितः। मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने' (विष्णु.पु 1-19-85) इति निर्दिशन्तस्सर्वबुद्धिशब्दान् परमात्मपर्यन्तान् प्रदर्शयन्तस्सर्वशब्दानां परमात्मन्येव व्युत्पत्तिमध्यवसितवन्त इति भावः। इत्थं गृह्यमाणाया व्युत्पत्तेः फलमाह - श्रद्धयेति। तां उक्तविधां व्युत्पत्तिं यः पुमान् श्रद्धया धारयेत्, सोऽकिञ्चनः नास्ति किञ्चन प्रार्थनीयं यस्य सः क्षेमं मुक्तिं गच्छति प्राप्नोति ॥ ३ ॥

इत्थं परस्य ब्रह्मणस्सर्वपर्यन्तसर्व बुद्धिशब्दत्वं सर्वान्तरात्मत्वं जगत्कारणत्वं परम कारुणिकत्वं मोक्षप्रदत्वं चोक्तम्, अथउक्तार्थस्य स्वमनीषोत्प्रेक्षितत्वशङ्कानिरासाय मूर्तिधरा वेदा एवोक्तानुक्तगुणविशिष्टं भगवन्तं तुष्टुवुरिति वक्तुं तावत्स्वप्रश्नपरिहारानितिहासान्तरेण संवादयति - अत्रेति। अत्र त्वत्पश्ने मदुत्तरे च संवादरूपां नारायणेन प्रवर्तकेन अन्वितां गाथां ते तुभ्यं वर्णयिष्यामि, शृण्वितिशेषः। कोऽसौ नारायणः? किं परमव्योमनिलयः? किं वा अवतारविशेषः? कश्च तस्या श्रोतेत्यत आह नारदस्येति। ऋषेः ऋषिवेषधरस्य बदर्याश्रम वासिनो नारायणस्य च संवादं प्रश्नोत्तररूपमितिहासं कथयिष्यामिति सम्बन्धः ॥ ४ ॥

संवादमेव प्रस्तोतुं तावत् नारदस्य नारायणोपसत्तिमाह - एकदेति। सनातनंपुराणम् ऋषिं नारायणं द्रष्टुं तस्याश्रमं बदर्याख्यं ययौ ॥ ५ ॥

---

1. B. °द्वाधिनां 2. B.T.W. Omit सः

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

यदनन्त निगमनिकरनिरूपितगुणगणाकरं ब्रह्म तदेव कृष्णनाम्नाऽवतीर्णं नान्यदित्यतो मुमुक्षुभिरत्र भक्तिः इतरत्र विरक्तिमूला कर्तव्येति विधीयतेऽस्मिन्नध्याये। तत्र नारद नारायण संवाद लक्षणमितिहासमुत्थापयितुं शुकं परीक्षित्पृच्छतिब्रह्मन् इत्यादिना। हे ब्रह्मन्! पूर्णकाम! 'सर्ववेदा यत्पदमामनन्ति' (कठ.उ 2-15) इति श्रूयते। तत्र श्रुतयः साक्षाद्मनन्त्युत लक्षणया वा तत्र न प्रथम इत्याह - कथमिति। साक्षात् चरन्ति वर्तन्ते वाचकत्वेनेति शेषः। तस्य काऽनुपपत्तिरत्राह - अनिर्देश्य इति। 'यत्तदद्रेश्यम्' (मुण्ड.उ. 1-6) इति श्रुतेः। न द्वितीय इत्याह निर्गुण इति। 'केवलो निर्गुणश्च' (श्वेता.उ.6-11) इति श्रुतेः। गुणैः प्रवर्तमानस्य कथं निर्गुणत्वमुपपद्यत इत्यत्राह सदसत इति। निर्गुणे गुणसमर्पकत्वेन श्रुतीनां सञ्चरणं कथमिति दौर्घट्यमापादयितुं शक्यते यादृग्वस्तु तादृशा वेदकत्वं न कोपि विरोधः इति तत्राह -गुणवृत्तय इति। गुणार्पकत्वेन गुणवृत्तिर्यासां तास्तथा। 'तु विग्रीवो वपोदरः सबाहुरन्धसोमदे गुणाः श्रुताः सुविरुद्धाश्च देवे' (ऋग्वे 8-17-8-a) इत्यादि श्रुतेः। अत एव नः संशयं छिन्धीति वाक्यशेषः ॥ २ ॥

श्रुतयः सत्त्वादिगुणराहित्येन निर्गुणे ज्ञानानन्दादि गुणगणमणिमालाङ्कृत विग्रहे ब्रह्मणि साक्षाद्वर्तन्त इति परिहारमभिप्रेत्य पीठिकामारचयति - बुद्धीति। बुद्ध्यादि सर्जनेन किं प्रयोजनमत्राह - मात्रार्थमिति। 'मात्रापरिच्छेदेऽर्थांशे प्रवृत्तौ कर्णभूषणे' (वैज.को. 6-5-62)इत्यतो मात्रा प्रवृत्तिः शब्दानामिति शेषः। तदर्थं 'मनसा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति' (ऐत.उ.1-1-2) इति श्रुतेः। किमतोऽत्राह - भवार्थंचेति'। भवो भद्रे कल्याणं पुण्यमिति यावत् तदर्थम्। 'स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः तद्धि तपः तद्धि तपः' (तैत्ति उ.1-9-1) इति श्रुतिः। च शब्दौ समुच्चयार्थौ। बुद्ध्यादीनिन्द्रियपूर्विका शाब्दी प्रवृत्तिरपि न स्वर्गादिविषया किन्तु परमात्मविषयैव पुण्यसाधनमित्यभिप्रायेणाह - आत्मन इति। सन्ध्यकरणात् सदसद्विलक्षण एवात्मा तमात्मानमुद्दिश्य शब्दराशेः प्रवृत्तिरिति भावः। ततः परमप्रयोजनमाह - कल्पनायेति। कल्पनाय परमात्मज्ञानाय 'सत्येन लभ्यस्तपसाह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' (मुण्ड.उ.3-1-5) इति श्रुतेः। अनेन वक्तृविवक्षा पूर्विकाशब्दप्रवृत्तिः इत्यतो बुद्धीन्द्रियादिमत एव सुप्रयुक्त शब्देन ज्ञातपरब्रह्म तत्त्वगुणोपसंहार ज्ञानप्रसन्न भगवत्सारूप्यादिमोक्षप्राप्तेः शब्दानां श्रीहरिविषयत्वं साक्षादङ्गीकर्तव्यमित्युक्तं भवति ॥ २ ॥

शब्दमात्रस्य ह्येकविषयत्वमुक्त्वा अधुना 'वेदान्तविज्ञान सुनिश्चितार्थाः' (म.ना.उ.8-15) इति वचनात् उपनिषद्भागस्य तद्गुणगणावेदकत्वेन मुख्यवृत्त्या विषयत्वमिति भावेनाह - सैषेति। हि शब्दो हेतौ। 'ईशबुद्धिस्थिताः सदा' इति वचनात् या श्रीमन्नारायण बुद्धिस्थिता सैषा उपनिषद्वेदान्तपरपर्याया पूर्वेषां पूर्वजैः ब्रह्मादिभिः धृता अध्ययन रूपेण न तु कृता नित्यवाक्यत्वात् 'नित्यया नित्यया स्तौमि' इत्यादेः। हि यस्मात् तस्मात् यस्तां श्रद्धया धारयेत् स क्षेमं मोक्षं गच्छेत् ब्रह्मज्ञानलभ्यस्य मोक्षस्य कथं श्रुतिधारणया मोक्षः स्यादित्यत्र ब्राह्मीति। अथ कस्मादुच्यते ब्रह्मेति 'बृंहतो ह्यस्मिन् गुणाः' इति श्रुतेः। ब्रह्मगुणावेदकत्वेन तज्ज्ञान द्वारमुक्तिहेतुत्वोपपत्तेः। ज्ञानं च विरक्त्यादिमत एव स्यादितिभावेनाह - अकिञ्चन इति ॥ ३ ॥

भवच्छिष्यत्वेन मम भवदुक्तिः प्रमाणमस्तु। इतरेषां कथमिति शङ्का माभूदिति भावेनाह - अत्रेति। अत्र श्रुतयः कथं चरन्तीति अस्मिन्नर्थे गाथां त्रिषट्पादलक्षणप्रबद्धां कथां नारायणोदितां नारायणेन कथिताम् ॥४॥

नारायणस्य सङ्गमः कथमभूत् नारदस्येत्यत्राह -एकदेति ॥ ५ ॥

**यो[1] वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् ।**
**धर्मज्ञानशमोपेत[2-] आकल्पाद[-2]ास्थितस्तपः ॥ ६ ॥**

**तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ।**
**परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥**

**[3-]तस्मा अवो[-3]चद्भगवानृषीणां शृण्वतामिमम्[4] ।**
**यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥**

**श्रीभगवानुवाच**

**स्वायम्भुव[5]ब्रह्मसत्रं जनलोकेऽभवत्पुरा ।**
**तत्रत्या[6]नां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥**

**श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदी[7]श्वरम् ।**
**ब्रह्मवाद[8-]स्सम्प्रवृत्त[-8] श्श्रुतयो यत्रशेरते ॥ १० ॥**

1. M.Ma. योऽसौ. 2- -2 B.G.J. °तमाकल्पदा° :M.Ma. त साकल्यदा° 3- -3 B.G.J. तस्मै ह्यवो° 4. B.G.J. °दम् ; M.Ma °माम् 5. M.Ma °वं 6. B.G.J. °स्था° 7. M.Ma. °मी° 8- -8. B.G.J. °दः सुसं°

**श्रीध० स्वायम्भुवेति**। ब्रह्मसत्रमिति। यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वन्ति तत्कर्म सत्रं प्रसिद्धम्। तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसन्ते तद्ब्रह्मसत्रम् ॥ ६-९ ॥

अहे तर्हि मया कथं तन्नज्ञातमित्यत आह - **श्वेतद्वीपमिति**। तदीश्वरं तत्रस्थं मामेवानिरुद्धमूर्तिम् ॥ १० ॥

**वीर०** ऋषिं विशिनाष्टि - **य** इति। नृणां क्षेमाय अभयरूपाय स्वस्तये मोक्षाय च आकल्पात् कल्पावधि तमः स्वात्मोपासनात्मकम् आस्थितः अधिकृतवानित्यर्थः। कथम्भूतः? धर्मः वर्णोचितः ज्ञानम् आत्मनः प्रकृतिपुरुषाभ्यां विलक्षणत्वेनावलोकनम्, शमो रागद्वेषादिराहित्यम् एभिरुपेतः ॥ ६ ॥

**तत्रेति**। तत्र नारायणाश्रमे कलापग्रामवासिभि - परमात्मस्वरूपध्याननिष्ठैः ऋषिभिः परीतं परिवृतं नारायणम् इदमेव त्वत्पृष्टमेव अपृच्छत् ॥ ७ ॥

तस्मा इति। तस्मै पृष्टवते नारदाय ऋषीणां शृण्वतां सतामिमं मदुक्तपरिहारगर्भं परिहारमवोचत्। तदुक्तपरिहारस्यापि साम्प्रदायिकत्वं वदन् तं विशिनष्टि - **य** इति। जनलोकनिवासिनां पूर्वेषामग्रजानां सनन्दनादीनां यस्संवादः प्रश्नोत्तररूपस्तमिममवोचदिति सम्बन्धः ॥ ८ ॥

उक्तिमेवाह - स्वायम्भुवेति। स्वायम्भुवः नारदः तस्य स्वयम्भुवः पुत्रत्वादेवं सम्बोधनम्। पुरा जनलोके तत्रत्यानां जनलोकस्थानां मानसानां ब्रह्ममानसपुत्राणाम् ऊर्ध्वरेतसां जन्मप्रभृति जितेन्द्रियाणां मुनीनां सनकादीनां सम्बन्धि ब्रह्मसत्रं परब्रह्मगुणानुभवात्मकं सत्रमभूत् ॥ ९ ॥

तर्हि, तदाऽहं क्व गतः? [2-]कथं मया न श्रुतम्[-2]? इत्यत आह - श्वेतद्वीपमिति। तं श्वेतद्वीपवासिनमीश्वरं [3-]तत्रस्थं मामेव अनिरुद्धमूर्तिमित्यर्थः। द्रष्टुं त्वयि गतवति सति तदा ब्रह्मवादः ब्रह्मणां वादः, संवृत्तः, तं विशिनष्टि - यत्र ब्रह्मवादे श्रुतयश्शेरते प्रतारणभयरहिता ऐककण्ठ्यं प्राप्ताः सुखमासत इत्यर्थः ॥ १० ॥

---

1- -1 T.W. Omit 2- -2 T.W. Omit 3- -3 T.W. Omit

**विज०** कस्मिन् खण्डे नारायणाश्रमः? तत्र किं कुर्वन् किं प्रयोजन आस्त इति तत्राह - योसाविति। तपसोङ्गवैकल्यपरिहासाय साकल्या दित्युक्तं, धर्मः सुकुतं विहिताचारो वा। ज्ञानं स्वपर पदार्थावगाहि। शमोनिष्ठा। एतैः उपेतः लोक दृष्ट्यैतदुक्तम् ॥ ६ ॥

तत्राश्रमे उपविष्टं तम् ॥ ७ ॥

तस्मै नारदायेमां गाथामवोचत्। गाथां विशिनष्टि - य इति। ब्रह्मवादः ब्रह्मविषया गाथा ॥ ८ ॥

पुरा तत्रात्यानां जनलोकस्थितानां मानसानामूर्ध्वरेतसां मुनीनां स्वायम्भुवं स्वयम्भूपुत्रैः क्रियमाणं ब्रह्मसत्रं ब्रह्मयज्ञं ब्रह्मविचारलक्षणो यज्ञो जनलोकेऽभवदित्यर्थः ॥ ९ ॥

यत्र श्वेतद्वीपे ब्रह्मणिश्रुतयः शेरते अन्यबोधकत्व व्यपारमन्तरेण तद्गुण बोधनपरा एव सन्ति तं श्वेतद्वीपं त्वयि गतवति ब्रह्मवादः सम्प्रवृत्त इत्यन्वयः ॥ १० ॥

**[1]तत्र हायमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि। ★ परिहारांश्च तान्सर्वान् वक्ष्येऽहं शृणुतेऽनघ ॥**
**तुल्यश्रुततपश्शीलास्तुल्यस्वीयारिमध्यमाः। अपि चक्रुः प्रवचनं[2]मेकं शुश्रूषवोऽपरे ॥ ११ ॥**

**सनन्दन उवाच**

**स्वसृष्टमिदमापीयशयानं सह शक्तिभिः ।**
**तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैश्श्रुतयः परम् ॥ १२ ॥**

**यथा शयानं सम्राजं वन्दिनस्तत्पराक्रमैः ।**
**प्रत्यूषेऽभ्येत्यसुश्लोकै बोधयन्त्यनुजीविनः ॥ १३ ॥**

**श्रुतय ऊचुः**

**जय जय जह्यजामजित दोषगृभीतगु[3]ण त्वमसि यदत्मना समवरुद्धसमस्तभगः ।**
**[4]अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽत्मना च चरतोऽनुचरेन्निगमः ॥ १४ ॥**

**बृहदुपलब्धमेतदवयन्त्यवशेषतया यत [6-]उदयास्तमयौ विकृतेर्मृति वाऽविकृतात्[-6] ।**
**अत ऋषयो दधुस्त्वयि मनोवचनाचरतं कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥ १५ ॥**

---

1 M.Ma. तत्रात्यय° ★ This half verse is not found in G.J.M.Ma. Edns. 2 .K.Ml.V. न रा° 3. B.G.J.Ml.V. गुणां 4. M.Ma. अज° 5- -5 M.Ma. °नानुचर° 6- -6 M. Ma. उदगास्तमस्यविकृते विकृतः।

**श्रीध०** ननु सर्वज्ञास्ते, कस्तत्र वक्ता प्रष्टा वा तत्राह - तुल्यश्रुतेति। तुल्यश्रुतादिभिः अविशेषा अरिमित्रोदासीन तुल्यत्वेन निरुपमकरुणाः, अतः सर्वे प्रवचनयोग्या अपि केनापि कौतुकेनैकं प्रवक्तारं कृत्वाऽन्ये पप्रच्छुरित्यर्थः ॥ ११॥

स्वसृष्टमिति। स्वयं निर्मितमिदं विश्वं प्रलयसमये आपीय संहृत्य शयानं योगेन निद्राणमिव वर्तमानं तदन्ते प्रलयान्ते तल्लिङ्गैः तत्प्रतिपादकैः वाक्यैः परमीश्वरं सृष्टिसमये प्रथमनिश्वासभूताः श्रुतयः प्रबोधयामासुः ॥ १२ ॥

यथेति। सुश्लोकैः शोभनाः श्लोकाः कीर्तयो येषु तैः पराक्रमैः ॥ १३ ॥

जयजयेति। भो अजित! जय जय उत्कर्ष माविष्कुरु। आदरे वीप्सा। केन व्यापारेण? अगजदोकसां, अगानि स्थावराणि जगन्ति जङ्गमानि च ओकांसि शरीराणि येषां जीवानां तेषामजामविद्यां जहि नाशय। ननु किमिति गुणवती हन्तव्येत्यत आह - दोषगृभीतगुणाम्। दोषाय आनन्दाद्यावरणाय गृ[3]भीता गृहीता गुणा यया ताम्। 'हृग्रहोर्भश्छन्दसि' (अष्टा. 3-1-84) इति भकारः। इयं हि स्वैरिणीव पर प्रतारणाय गुणान् गृह्णात्यतो हन्तव्येति। तर्हि मय्यपि दोषमावहेदिति ममापि [4-]अविद्यादमने[-4] का शक्तिः स्यादत आह - त्वमिति। यद्यस्मात्त्वमात्मना स्वरूपेणैव समवरुद्धसमस्तभगः सम्प्राप्त समस्तैश्वर्योऽसि। वशीकृतमायत्वादिति भावः। ननु स्वयमेव ते ज्ञानवैराग्यदिना किं न हन्युरि[5]त्यत आह - अखिलशक्त्यवबोधकेति। तेषां त्वमेवान्तर्यामी सर्वशक्त्युद्बोधकः। अतो न ते ज्ञानादौ स्वतन्त्रा इति भावः। नन्वहमकुण्ठ ज्ञानैश्वर्यादि गुणो जीवानां कर्मज्ञानादिशक्त्यवबोधनेनाविद्यां हन्मीत्यत्र किं प्रमाणमिति चेत्, अहमेव प्रमाणमित्याह - निगमो वेदः। नन्वेवम्भूते मयि कथं श्रुतीनां प्रवृत्तिः तत्राह - क्वचिदिति। क्वचित् कदाचित्सृष्ट्यादि समयेऽजया मायया चरतः क्रीडतो नित्यं चालुप्तभगतया सत्यज्ञानानन्तानन्दैकरसेनात्मना च चरतो वर्तमानस्य त[9]व निगमोऽनुचरेत्प्रतिपादयेत्। कर्मणि षष्ठी। 'यतो वा इमानि भूतानि जायन्ते' (तैत्ति.उ 3-1) 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। 'तमुह देवमात्मबुद्धि प्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वेता.उ. 6-18) 'य आत्मनि तिष्ठन्' (बृह.उ.3-7-22) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तैत्ति.उ 2-1-1) 'यः सर्वज्ञः सर्ववित्' (मुण्ड.उ.1-1-9) इत्यादि निगम कदम्बस्त्वामेवम्भूतं प्रतिपादयतीत्यर्थः। 'जय जयाजित जह्यगजङ्गमावृत्तिमजामुपनीतमृषागुणाम्। न हि भवन्तमृते प्रभवन्त्यमी निगमगीतगुणार्णवता तव' ॥१॥ ॥ १४ ॥

ननु कथं मामेवं प्रतिपादयन्ति यत 'इन्द्रो यातोऽवसितस्य राजा'(ऋग्वे.1-32-15A) इत्यादिभिः इन्द्रो यातो जङ्गमस्यवसितस्य स्थावरस्य च राजेति प्रतिपाद्यते, तथा 'अग्निर्मूर्धा दिवः ककुद' (ऋग्वे.8-44-15A) इत्यादिभिः च एवम्भूतत्वेनाग्न्यादयः

प्रतिपाद्यन्ते, तत्राह - बृहदुपलब्धमेतदिति। अयमर्थः - एतदुपलब्धं दृष्टमिन्द्रादिसर्वं बृहद्ब्रह्म [11]त्वमित्ये वावयन्ति जानन्ति। कथम्? बृहत एवावशेषतयाऽवशिष्यमाणत्वेन। कुतः - यतो बृहतः सर्वस्यो दयास्तमयावुत्पत्तिलयौ, सर्वोपादानत्वात्। तर्हि किं विकारित्वं बृहतः। न अविकृतात् । विवर्ताधिष्ठान त्वेनाविकारादित्यर्थः वा शब्दः उपमार्थः। यथा घटादेर्विकृतेर्मृदि उदयास्तमयौ तद्वत्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छन्दो. उ. 6-14-1) 'सर्वं खल्विदं ब्रह्म' (छन्दो.उ. 3-16-1) इत्यादिभिस्तथा प्रति पादनादित्यर्थः। अतः कारणादृषयो मन्त्रास्त द्रष्टारो वा त्वय्येव मनोवचनाचरितं दधुः, मनसा आचरितं तात्पर्यं वचनाचरितमभिधानं च धृतवन्तः। [12-]मनसा त्वामेव ध्यायन्ती, वचसा त्वामेव निरूपयन्तीत्यर्थः[-12]। न पृथग्विकारेष्विति भावः। अत्र निदर्शनम् - कथमयथेति। नृणां भूचराणां यत्र कुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि कथमयथा भवन्त्यदत्तानि भवन्दि। अतो यथा मृत्पाषाणेष्टकादिषु दत्तानि पदानि भुवं न व्याभिचरन्ति तथा यत्किमपि विकारजातं वदन्तो वेदास्त्वामेव सर्वकारणं परमार्थभूतं प्रतिपादयन्तीत्यर्थः। 'द्रुहिणवद्धिरवीन्द्रमुखामरा जगदिदं न भवेत्पृथगुत्थितम्। बहुमुखैरपि मन्त्रगणैरजस्त्वमुरुर्मूर्तिरतो विनिगद्यसे'॥ २ ॥ ॥ १५ ॥

---

1. B.J. हीनत्वेन 2. Ml.V. प्रसूताः 3. B.J Omit गृभिता 4- -4 B.J. तत्र 5. Ml.V. °रिति तत्राऽऽह। 6. B.J. द्या हन्तत्यत्र 7. B.J. Omit किंचित् 8. Ml.V. °नानन्दैक° 9. B.J.Omit तव 10- -10 Ml.V. °दीनां प्रतिपादनाच्च इति। 11. Ml.V.Omit त्वम् 12- -2 B.J.Omit 13. B.J. °त्यर्थः।

**वीर०** तत्रेति। हेति हर्षे आश्चर्ये वा, ऋषिभिः कृत एव प्रश्नस्त्वया कृतः, अहो तव बुद्धिकौशलमिति मां प्रति यं प्रष्टव्यमर्थमनुपृच्छसि स तदर्थ विषयकः प्रश्नः अभूत् प्रवृत्तः तथा परिहारश्च, तान् तत्र प्रवृत्तान् प्रश्नपरिहारान् सर्वानहं हे अनघ! ते तुभ्यं वक्ष्ये, शृणु। ननु कस्तत्र वक्ता बभूव? के वा श्रोतारः? किं वा ब्रह्मसत्रस्य लक्षणम्? इत्यत आह - तुल्येति। यद्यपि सर्वे श्रुतं शास्त्रजन्यं ज्ञानं तपः अनशनादि, यद्वा 'तपआलोचने' इति धातोः रूपं तप इति ब्रह्मोपासनात्मकं ज्ञानमित्यर्थः। शीलं तदुपयुक्ता सद्वृत्तिः आराधनाद्यात्मक स्वभावश्च, तुल्यान्येतानि येषां ते, तुल्याः, स्वीयाः अरयो मध्यमाः उपेक्ष्याश्च येषां ते, 'सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीत' (छान्दो. उ. 3-14-1) इत्युक्त विधसर्वात्म ब्रह्मोपसननिष्ठत्वात् स्वीयादिरहिता इत्यर्थः। अनेन सर्वेषामपि प्रवचनसामर्थ्यं सूच्यते,अपि तथापि प्रवचने एकं चक्रुः सनन्दनं प्रतिवक्तारं चक्रुः इत्यर्थः। अपरे सनकादयस्सर्वे शुश्रूषवो बभूवुरिति शेषः। एतदेव ब्रह्मसत्रं नाम, यत् सर्वेऽप्यधिगत परमात्मयाथात्म्या अपि एकं प्रवक्तारं कृत्वा अन्ये तु तूष्णीं शृणुयुरिति भावः ॥ ११ ॥

प्रश्नस्तु त्वत्कृत एवेत्यभिप्रेत्य तमनु क्त्वैव सनन्दनोक्तमुत्तरमाह - स्वसृष्टमित्यादिभिः। अत्र स्वविवक्षितमुत्तरं श्रुतिगीत्या संवादयितुं प्रस्तौति सनन्दनः स्वसृष्टमिति द्वाभ्याम् स्वेन आत्मना सृष्टमिदं चिदचिदात्मकं जगदापीय संहृत्य शक्तिभिः

सूक्ष्मावस्थामापन्नाभिः प्रकृतिपुरुष कालत्मिकाभिस्सह शयानं निद्राणमिव वर्तमानं प्रकृति पुरुषादीन् स्वस्मिन्विभागानर्हान् कृत्वा निरवधिक स्वानन्दानुभवपरं परमपुरुषं तदन्ते प्रलयान्ते सृष्ट्यादौ इत्यर्थः। श्रुतयः तन्निश्वासरूपाः मूर्तिधराः वेदाः, यद्वा वेदाभिमानिनो देवाः, तल्लिङ्गैः परमपुरुषासाधारण धर्मप्रकाशकैः वचोभिः बोधयाञ्चक्रुः प्रबोधयन्त्य इव तुष्टुवुरित्यर्थः ॥ १२ ॥

तत्र दृष्टान्तमाह - **यथेति**। अनुजीविनो भृत्याः वन्दिनः स्तुतिपाठकाः प्रत्यूषे प्रभाते अभ्येत्य आगत्य शोभनाः श्लोकाः येषु तैः तस्य सम्राजः पराक्रमैः पराक्रमप्रकाशकैः स्तोत्रैःबोधयन्ति, तद्वत् ॥ १३ ॥

वेदपुरुषमुखनिर्गलितानष्टाविंशति सङ्ख्याकान् श्लोकानाह - जयजयेत्यादि। जयजयेत्यादरेद्विर्भावः। जय उत्कर्षं प्राप्नुहीत्यर्थः। ननु स्वभावत एव निस्समाभ्यधिकस्यानवाप्तः को वा प्राप्य उत्कर्ष इत्यत आहुः। अजामिति। अजां प्रकृतिं जहि नाशय त्याजयेत्यर्थः। त्वयिप्रलीनानां सर्वेषां जीवानां संसृतिनिदान भूतप्रकृति सम्बन्धं त्याजयता त्वया कारुण्यातिशयावहः कश्चिदुत्कर्षः अभूतपूर्व एव प्राप्यत इति भावः। नन्वहमपि प्रकृतिवश्यः, तत्कथमजां त्याजयामीत्यतस्सम्बोधयन्ति - अजितेति। सर्वान् जितवत्या प्रकृत्याप्यजित वशीकृतप्रकृते इत्यर्थः। नन्वनादितया सा अपराधिनां जीवानां कथं त्याजयितव्येत्यतस्सम्बोधयन्ति - दोषगृभीत गुणेति। सत्स्वपि दोषेषु गृभीतो गृहीतो गुणो यादृच्छिक प्रासङ्गिकानुषङ्गिकाद्यन्यतमो येन तथाभूत, सापराधजनेष्वपि कस्यचित्गुणलेशोऽस्ति चेत् तमपेक्ष्यानुग्रहशीलः त्वम् इत्यर्थः। गृभीतेत्यत्र 'गृहेर्भश्छन्दसि' इति भकारादेशः। दोषगृभीतगुणामिति पाठान्तरम्। तदा ननु कुतः प्रकृतेः भोग्यभोगोपकरणादि रूपायाः महागुणवत्त्याः त्याजनं प्रर्थ्यत इत्यतः तां विशिंषन्ति - दोषाः जीवानां दोषावहाः गृभीताः गुणाः सत्त्वरजस्तमोरूपाः यया तां, निष्ठान्तस्य पूर्वनिपाताभाव आर्षः। जीवानां संसृतिनिदान भूत गुणाश्रयत्वात्तां जहीत्यर्थः। ननु त्यजनोप युक्त ज्ञान शक्त्यादि रहितोऽहं कथं हापयेयम् इत्यत आहुः - यद्यस्मात्त्वमात्मना स्वत एव समवरुद्धः स्वीकृतः अशेषः भगो येन सः तस्माज्जहीत्यर्थः। 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' (विष्णु.पु. 6-5-74) इति विष्णुपुराण वचनात् - भग शब्दार्थोऽवगन्तव्यः। असंकुचित ज्ञानैश्वर्यशक्तिमत्वात् वात्सल्यसागरत्वाच्च मोचयितुं क्षमः, अतो जहीति भावः। ननु य एव प्रकृतिसम्बन्धापादकः स एव त्याजयितुं प्रभुः। नत्वहमित्याशङ्कायां त्वमेव प्रकृतिपुरुषकाल शरीरकत्ववेषेण सर्वकारणतया तत्सम्बन्धापादक इति द्योतयितुमनुद्बुद्धसामर्थ्यानां प्रकृत्यादीनां परमात्म विशेषणतावेषेणापि कार्याक्षमत्वादन्यथा प्रलयानापत्तेश्च तेषां स्वस्वकार्यौन्मुख्य सामर्थ्योद्बोधकः त्वमेवेत्यभिप्रेत्य सम्बोधयन्ति-अगजगदोकसामखिल शक्त्यवबोधकेति। अगानां स्थावराणां जगतां जङ्गमानां शरीराणां चराचरात्मकशरीररूपेण करिष्यमाणानां प्रकृतिगुणानामित्यर्थः। ओकसां तादृशशरीराश्रयीभविष्णूनां जीवानां च अखिलश्शक्तयः स्वस्वकार्योन्मुख्यरूपाः तासामवबोधक उद्बोधक तत्र

जीवशक्त्युद्बोदकत्वं नाम चिच्छक्त्युद्बोधकत्वं, तेषां प्रलयदशायां अनुद्बुद्धचिच्छक्तिकत्वात्। अत एव सर्वकारणतया सर्वकार्यानन्यं त्वामेव वेदोऽभिदधातीत्याहुः - क्वचिदिति। अजया आत्मना चेति सहार्थे तृतीया, साहित्यं च विशेष्य विशेषणभावेन, तदयमर्थः - अजया आत्मना च प्रकृति पुरुषाभ्यां विशिष्टस्य त इति कर्मणश्शेषत्व विवक्षया षष्ठी। चरतः जगदाकारेण परिणममानस्य तावदधितिष्ठितश्चेत्यपि विवक्षितं, निगमः चिदचिद्वाचिराब्दसमुदायात्मको वेदभागः अनुचरेत् अनुवर्तेत, त्वामेवाभिदध्यादित्यर्थः। अनेन 'कथं चरन्ति श्रुतयः' इति प्रश्नस्योत्तरमुक्तं भवति। कारणत्वं चिदचिद्विशिष्टताकारेणेति च। तथा मोक्ष प्रदत्वं तदौपयिकगुणपूर्णत्वं शास्त्रप्रमाणकत्वं च। अगजगतोकसां स्थावरजङ्गमशरीराश्रयाणां सर्वेषां जीवानाम् अजां जहीति वा सम्बन्धः, जीवानामित्यनुक्त्वा अगजगदोकसामित्युक्तिरासन्नसृष्ट्यभिप्रायिका। एतत्स्तुति प्रवृत्तिकाले स्थावरजङ्गमात्मक शरीराणामभावात्, निगमोऽनुचरेदिति पारोक्ष्यनिर्देश्यः स्तुतेस्संसारिजीवगतत्वाभिप्रायकः, क्वचिदजयाऽऽत्मना च चरतोनुचरेन्निगमः इत्यनेन प्रकृति सम्बन्ध मोचकत्व नियततत्सम्बन्धापादकत्वज्ञापनाय सर्वकारणत्वं तस्य निर्विकारेऽनुपपन्नत्वात्तस्मिन् चिदचिद्वैशिष्ट्यं विशिष्ट कारणत्वादेव विशिष्टकारणानन्यत्वा च्छरीरात्म भावाच्च कार्यशरीरभूतचिदचिद्वाचि शब्दानां विशेष्यात्मपर्यन्ताभिधायकत्वं चोक्तम् ॥ १४ ॥

अथ कार्यकारणयो रनन्यत्वं दृष्टान्त मुखेनोपपाद्य कारणत्वनियतमुमुक्षूपास्यत्वमाहुः - बृहदिति। अवशेषतया ब्रह्मणस्सर्वोपसंहारेण व्यवस्थिततया जगत्कारणत्वादुपलब्धं सृष्टिकाले आविर्भूतमुत्पन्नमेतज्जगत् बृहत् ब्रह्मेत्यवयन्ति आमनन्ति। 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतना स्सत्प्रतिष्ठाः' 'एतदात्म्यमिदंसर्वम्' (छान्दो.उ. 6-8-7) 'सर्वं खल्विदं ब्रह्म' (छान्दो.उ. 3-14-1) इत्यादयो वेदान्ता अवगमयंतीत्यर्थः। अवत्यत्त्यवशेषतयेति पाठान्तरं, तदा उपलब्धमुत्पन्न मेतज्जगत्स्थितिकाले अवति रक्षति, अन्तकाले अत्ति संहरति, ततोऽवशेषतया [2] कारणत्वाद्बृहदेवेदं जगदिति 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छान्दो.उ. 3-14-1) इतिवत् सहेतुको निर्देशः, एतदुपपादयन्ति - यस्य विकृतेः कार्यस्य यत इति पञ्चमीसप्तम्यर्थयोः सार्वविभक्तिकस्तसिः। यत उदय उत्पत्तिः यस्मिंश्च लयः सा विकृतिः तत् [3] कारणात्मिका ततोऽनन्या मृदिवाविकृता, यथा तावदविकृता पिण्डाकारा मृत् घटशरावादिरूपविकृता तदनन्या तद्वत्, अविकृतादिति पाठान्तरम्। तदा अविकृताद्यतो यस्माद्विकृतेः कार्यस्योदयास्तमयौ सा विकृतिस्तदनन्या मृदिव यथा तावदविकृतान्मृत्पिण्डादुदिता घटशरावादिरूपा मृत् तदनन्या तद्वदित्यर्थः। 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' (छान्दो.उ. 6-1-4) इत्यादिका श्रुतिरिहानुसन्धेया। तत्र हि घटेन जलमाहरेत्यादि वाग्व्यवहारपूर्वकजलाहरणादि कार्यार्थं मृत्पिण्डस्य घटादिनाम कम्बुग्रीवादिरूपविकार संस्पर्शमभिधाय मृत्पिण्डस्य तद्विकारघटादेश्च अनन्यत्वमुक्तम् अतः सर्वकारणत्वात् त्वयि ऋषयो मनोवचनाचरितानि

ध्यानस्तुतिचेष्टितानि अदधुः। त्वामेव निदध्युः तुष्टुवुः त्वदर्थम्[4] अचेष्टन्त चेत्यर्थः। तत्र सदृष्टान्तं हेतुमाहुः - कथमिति? आकाशे विहितानि पदानि यथा मोघानि भवन्ति, पतनस्यावर्जनीत्वात् भुवि निहितानि नृणां पदानि तु कथमयथा भवन्ति, कथं मोघानि भवन्ति? मोघानि न भवन्त्येव पश्चात्पतनाभावात्। एवं मनोवाक्कायचेष्टितानि त्वदाराधनरूपाणि अमोघानि संसारिक तापनिवारकाणि, अन्यविषयाणि, ध्यानादीनि तु न तन्निवारकाणि, प्रत्युत पतनावहानि, अतः त्वय्येव दधुरित्यर्थः। यद्वा-एवं जगत्कारणत्वेन त्वदनन्यत्वाज्जगद्विषयास्सर्वे वैदिकाश्शब्दाः तात्पर्यतश्शक्त्या च त्वय्येव वर्तन्त इत्याहुः- अत इति। ऋषयो वेदाः 'तदुक्तमृषिणा' (एत.उ. 4-5) इत्यादौ ऋषिशब्दस्य वेदे प्रयोगात्, मनोवचना चरितं मनस आचरितं तात्पर्यं वचनाचरित मभिधानं च त्वय्येव दधुः धृतवन्तः। ननु तत्तदर्थविषयाणां कथमभिधायकत्व मित्याशङ्कायां दृष्टान्त मुखेन तदुपपादयन्ति - कथमिति? प्रसाद पर्यङ्कादिषु दत्तानि विहितानि नृणां पदानि कथं भुवि अयथा अदत्तानि भवन्ति प्रासादपर्यङ्कादिधारकत्वात् तस्यामेव यथा दत्तानि भवन्ति। एवं प्रतिपुरुषान्तरात्मतया तद्गतनामरूपनिर्वाहकत्वात् त्वयेव तत्तदर्थशरीरके निर्वाहके च वेदा वर्तन्त इत्यर्थः। अपृथक्सिद्धविशेषण वाचिशब्दानामाकृत्यधिकरणन्यायेन विशेष्यपर्यन्तभिधानं मुख्यमेवेत्यभिप्रायः ॥ १५ ॥

---

1. K.T.W Omit वचोभिः 2. K.T.W. करण° 3. K.W. °त्कारणिका 4. B.T.W. °दर्थे

**विज०** कथमत्राह - **तत्रेति**। मुनयः कीदृशा इत्यत्राह - तुल्येति। अरिः शत्रुः। एकं प्रवचनं प्रकृष्टं वचनं यस्य स तथा प्रवक्ता व्याख्यातेत्यर्थः। तम् अपरे शुश्रूषवः श्रोतारः योऽत्र प्रवर्तता स श्रेष्ठ इत्यत्र तात्पर्यं ज्ञातव्यम्। 'सनकाद्याः समाः सर्वे तत्र श्रेष्ठः कुमारकः' (ऋक्संहितायाम्) इति वचनात् ॥ ११ ॥

स एकः कथं प्रवोचदत्राह स्वसृष्टमिति। ब्रह्मलये स्वसृष्टमिदं जगदापीय संहृत्य शक्तिभिः श्रीभूदुर्गाख्याभिर्विभक्त प्रकृति मूर्तिभिः सह शयानं योगनिद्रां कुर्वाणं परं परमात्मानं तदन्ते ब्रह्म प्रलयावसाने श्रुतयस्तल्लिङ्गैः संसार निर्मूलनादि ब्रह्मलक्षणैः बोधयाञ्चक्रुरित्यन्वयः। अत्र इदं तात्पर्यम् - मूलप्रकृतिः श्री भूरूपाभ्यां विष्णुना सह शेते। श्रुतिनाम्ना दुर्गारूपेण विष्णुं स्तौति - जय जयेति। पुंशक्तिविषयबोधनवचनं दुर्गाख्याया अपि, तादृक्शक्तिमत्वात् तदर्थत्वेन भगवदाज्ञया गृहीतविग्रहत्वाच्च श्रुतीनामनन्तत्वे नाधिगन्तुं अशक्यत्वात् दुर्गानाम्नोपि तथात्वाच्च। कालीभद्रेत्यादि बहुरूपत्वप्रतीतेश्च श्रुतेश्चा नन्तत्वेन वाक्ये भेदा च्छ्रुतय इति बहुवचनं च युज्यते। तदुक्तम् - 'श्रीर्भूर्मिरति रूपाभ्यां प्रकृतिर्विष्णुना सह। शेते

श्रुति स्वरूपेण स्तौति ब्रह्मलये हरिम्'। एकाप्यनन्तरूपा सा वाक्यभेदात् सरस्वती। अनादि निधना नित्या स्तौति नारायणं प्रभुम्॥ (ज्योतिस्संहितायाम्) इति। अनेन इदं पौरुषेयं वाक्यत्वादितर वाक्यवदिति प्रयुक्तम्। 'यावद्ब्रह्मविष्ठितं तावतीवाक्' इति श्रुतेः। त्रिरूपायाः रमायाः शक्तिशब्दाभिधेयत्वं वैदापरपर्यायाः शक्तेश्चेतनाभिधेयत्वं विष्णोः स्वरूपभूतशक्तेः शक्यत्वगुणयोगेन युज्यते। नित्याव्यधानात् इति विशेषशक्तित्वाच्य 'विष्णोः स्वरूपशक्तेः सा शक्यत्वाच्छक्तिरेव तु नित्या। व्यवहितत्त्वात्तु विशेषा च्छक्तिनामिका' (तन्त्रभागवते) इति वचनात् सामान्य वाचिनोऽपि शक्ति शब्दस्य विशेषनिष्ठत्वं पङ्कजादि शब्दवद्युज्यते पङ्काज्जातं पङ्कजमिति शैवलादिषु वृत्तिसम्भवेऽपि पद्मे एव वर्तते। विप्रादावपि ब्रह्मशब्दस्य वृत्तियोगेपि चतुर्मुख एव। रुद्रशब्दस्य रौद्रगुणयोगे नातपे वृत्तावपि शङ्कर एव। आदित्य शब्दस्य अदितिपुत्रसामान्य वाचित्व सम्भवेऽपि सूर्यएव इत्याद्यूह्यम्। 'यथैव पङ्कजं ब्रह्मा रुद्र इत्यादिकं पदम्' (तन्त्रभागवते) इति वचनात्। उमादीनामपि प्रकृतिशब्दवाच्यत्वेन प्रसिद्धेः कथम् उच्यते अपर प्रकृतित्वं तासां लक्ष्म्या एव परम प्रकृतित्वं, तदुक्तम् - 'श्रीः परा प्रकृतिः प्रोक्ता ब्रह्माणीत्ववरा ततः। उमा शचीमुखास्तस्याः अवराः सम्प्रकीर्तिताः' (महातत्त्वविवेके) इति ॥ ११ ॥

नित्यबुद्धस्य हरेः कादाचित्कबोधनं विडम्बनमात्रं न तु सत्यमिति हृदि कृत्वा लौकिक मतमनुसरति -यथेति। अनुजीविन इत्यनेन वेदान्तानां तदेकनिष्ठत्वं सूच्यते। राजवज्जय शब्दाद्या नित्यबुद्धस्य बोधनं विडम्बमात्रं केवास्य निद्रा विद्यापतेर्हरेरिति च ॥ १२,१३ ॥

श्रुतयोऽपि लक्ष्मीविभूतयः पुराणस्य स्त्री शूद्रादिश्रुतिगोचरत्वेन श्रुत्यर्थ एव गृह्यते न तु शब्द इत्यभिप्रेत्य कथितं श्रुतय ऊचुरिति - जय जयेति। नित्यविजयाधिकरणस्य हरेर्लोकैष्यकाल विजयो नाशास्यते किन्तु विजयप्रकाशनं भक्तानुकम्पित्वेन जयं प्रकाशयेत्यर्थः सर्वदा जयतो विष्णोर्जयस्तस्य प्रकाशनमित्यादि अत्र राजवद्विशां जयो न प्रार्थ्यते। किन्तु दुस्तरं प्रकृत्यादेः इति आशयेनाह - जहीति। हे अजित। दोषैः जन्म दुखाज्ञानादिभिरानन्दज्ञानादयो जीवगुणा गृहीताः संवृता यथा सा दोषगृहीतगुणा तामजां 'अजगतिक्षेपणयो' इति धातोः जीवगुणाक्षेपिकां जहि हन तथा परमाच्छादिकां जहि गमय अपसारयेति यावत्। एते अपि प्रकृतिशब्दवाच्ये 'अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थितम्' (महातत्त्वविवेके) इत्यादेः। एतेन "जयजयेत्यारभ्य संवृताधिसंवृता" (शण्डिल्यश्रुतिः) इत्यन्ता श्रुतिर्गृहीता। अरतिं तन्द्रीं प्रकृत्याच्छन्नत्वाविशेषाज्जीवात्मनोः को विशेष इति तत्राह - त्वमसीति। त्वं यद्यस्मादात्मना स्वत एव सं अभिन्नोऽत एवावरुद्धः अनपगतः समस्तः पूर्णो भग ऐश्वर्यादिगुणो यस्य स तथा अनपगतपूर्णैश्वर्यादिगुणोऽसीत्यर्थः। 'भगो योन्यां भगोयत्ने यशोवीर्यार्कभूतिषु। कान्तीच्छाज्ञानवैराग्यधनैश्वर्य— तपस्सु च' (वैज. को.6-5-58) इति यादवः। अतः

त्वत्प्रतिबिम्बभूतस्य जीवस्य प्रकृत्याच्छादितत्वात् त्वत् प्रसादमन्तरेणैश्वर्याद्या गुणाः न प्रकाशन्ते। अनेन ह्येषहि आनन्द इत्यारभ्य स्वतोसि त्वमित्यन्ता गृहीता। इतोऽपि विशेषोऽस्तीत्याह - अजेति। अज हे विष्णो जगदोकसां जगदाश्रयभूतानां श्रीब्रह्मादीनां सृष्ट्याद्यखिलशक्त्यवबोधक रमाया इत्यारभ्य अनन्तोसीत्यन्ता अनेन सूचिता। इदानीं गुणवृत्तयः श्रुतयः निर्गुणे ब्रह्मणि कथं चरन्तीत्यस्य परिहारमाह - क्वचिदजयेति। विगमः तत्त्वनिश्चायके वेदः क्वचित्सृष्टिकाले आत्मना जीवेन अजया प्रकृत्या च अनुचरतः प्रवर्तमानस्य ते तवानुचरेत् चित्तानुवर्तित्वेन विधिनिषेधरूपेण वर्तते हरेस्तदगोचरत्वाल्लये केवलं स्तुतिरूपेण जीवानां निर्देहकत्वेन तत्प्रयोजनको नेति शेषः। 'लयस्य त्वष्टमो भागः सृष्टिकाल उदाहृतः। 'तत्रैव वेदसञ्चारो ह्यन्यदा स्तुतिमात्रकाः' (नारदीये) इति स्मृतिः। यस्माद्विधिनिषेध विषयो जीवः तस्मात् सृष्टिं कृत्वा वेदैः जीवान्बोधयित्वा तदुक्तमनुष्ठाय स्वज्ञानमुत्पाद्य त्वं प्रसन्नः तत्स्थां पिशाचवद्वर्तमानां अजां प्रकृतिं जहीति। अनेन सृष्टिकाल एव गुणमये जगति वर्तमानाः सदा निर्गुणे परमेश्वर एव वर्तन्त इति प्रश्नपरिहारो दर्शितः। यजेत न हन्तव्य इत्यादि विधिनिषेधानां स्तुतिपरत्वं युक्तम्। कथं यत्प्राप्त्यर्थं यत् नियमाद्विधिनिषेधा वर्तन्ते। सत्वमजां जहीति योजनोपपत्तेः। 'विध्यादीनां नियन्ता यः पूज्यः प्राप्यश्च तद्वताम्' (श्रुतिनिर्णये) इत्यादि स्तुति रूपेण विध्यादिश्रुतयोऽपि तु 'हरिं वदन्ति सर्वेषां तन्नामत्वादथापि च' (श्रुतिनिर्णये) इति स्मृतेः। अस्य सृजतो हि त इति प्रभृति माते क्षणोऽत्यागात् इति पर्यन्तं मूलश्रुतिरियम्। हन हिंसायाम् इति धातुः। पृथक्श्रुतित्वान्न पूर्वापरसम्बन्धः उपलक्षणत्वा दनन्तत्वात् श्रुतीनां सर्वश्रुत्यर्थोपबृंहितत्वाच्च तेषां श्लोकानां न सर्वश्रुतीनां पृथगुक्तिः। 'सर्वश्रुत्यर्थ सम्पन्नान् श्लोकान् सत्यवतीसुतः एकैकशाखा श्रुत्यर्थान् जगौ सर्वोपलक्षणान् बबन्ध तान् भागवते प्रतिश्लोकं पृथक् श्रुतिः' (तन्त्रभागवते) इत्याचार्यैरेवोक्तत्वान्नास्माभिः मिथः सम्बन्धार्थं प्रपञ्च्यते ॥ २॥१४ ॥

'बृहद्धि दृष्टमवशेषितं यत्स्वरूपमीशस्य तमोधिकस्य सर्वाधिकत्वेन तमो हि दुर्गा ततस्तथैनं विबुधा यथाऽगुरिति (औद्दालकायनश्रुतिः) औद्दालिकाय न श्रुत्यर्थनिबद्धोऽयं श्लोकः - बृहदुपलब्धमिति। तथाहि अविकृते तमसि 'तम आसीत्तमसागूहमग्र' (यजु. 2-8-9) इति श्रुतेः। नित्यतमो विषये त्वमुदगा उत्कृष्टत्वं गतः मूलप्रकृतेरपि त्वमधिकोऽसि यतः अतो बृहत्त्वेन बृह वृद्धाविति धातोः पूर्णत्वेन एतत्स्वरूपमुपलब्धम्। वेदेषु दृष्टं कथमत्राह - अवशेषतयेति। इत इदमधिकमितोपि इदमधिकतमिति सर्वाधिकत्वेन ततोऽधिकाभावेनावशेषितत्वेन परिशेष प्रमाणसिद्धित्वेनेत्यर्थः। 'स एष रसानां रसतमः परमपरार्ध्योऽष्टमो यदुद्गीथ' (छन्दो.उ.1-1-3) इति श्रुतिः। 'द्वितीयार्थे तृतीयार्थे पञ्चम्यर्थे च सप्तमी। चतुर्थ्यर्थे च संप्रोक्ताविषयेऽपि च तां विदुः'॥ (महाव्याकरणे) इति महाव्याकरणवचनात्। विषयपञ्चम्यौ युज्येते। कीदृशस्त्वम्? अविकृतः विकाररहितः अत ऋषयो ब्रह्मादि ज्ञानिनस्त्वं सर्वोत्तम इत्येतदर्थ पराणि त्वयि मनोवचनाचरितमित्येकवद्भावविवक्षयैकवचनम्। मनोवचनाचरितानि दधतामिति दधुः शिक्षां धृतवन्तः। पुंसां त्वयि तानि मन आदीनि कथ मयथा अतद्विषयाणि भवन्तीति दधुः। तत्र दृष्टान्तःनृणां पदं भूमौ निक्षिपामीति प्रवर्तमानानां दत्तानि

निहितानि पदानि यथा भूमेरन्यत्र न भवन्ति तथेत्यर्थः। जलवृक्षादेराधारशक्तिमत्त्वेऽपि भूम्यन्तर्भावान्न पृथगुक्तिः। अतः तथा बृहत्त्वेन दधुरिति वा। 'अतश्शब्दश्च हेत्वर्थे तथेत्यर्थे च वर्तते। उभयार्थे च भवति यथाशब्दविदो विदुः (शब्दनिर्णये) इति वचनात्। अनिर्देश्यमप्येकदेशेन निर्दिष्टं भवतीत्युक्तं कथमयथा भवन्तीत्यनेन यथा सर्वां भूमिमसञ्चरन्नत्येकदेश सञ्चारेण भूसञ्चारी भवति तथेति। 'निरपेक्ष बृहत्त्वस्य ज्ञानाज्ञानं भवेत्परं बृहत्वमेव तु गुणैः सर्वैरुद्दिश्यते यतः' (मान्यसंहिताम्) इति मान्यसंहितायाम् ॥ १५ ॥

इति तव सूरयस्त्र्यधिपतेऽखिललोकमल
क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनस्स्वधाम विधुताशय कालगुणाः
परमभजन्ति ये पदमजस्रसुखानुभवम् ॥ १६ ॥

दृतय [1-]इव श्वसन्त्[-1]यसुभृतो यदि तेऽनुविधा
महदहमादयोऽण्डमसृजन्यदनुग्रहतः ।
पुरुषविधो[3]ऽन्वयोऽत्र [4-]चरमोन्नमयादिषु य
स्सदसतः[-4] परं [5-]त्वमथयदेष्ववशेष[-5]मृतम् ॥ १७ ॥

उदरमुपासते य [6-]ऋषिवर्त्मसु कूर्प[-6]दृशः
परिसर पद्धतिं हृदयमारुणयो दहरम् ।
तत [7-]उदगादनन्त तव धाम[-7] शिरः परमं
पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ १८ ॥

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया।
[8]तरतमश्चकास्स्यनलवत्स्वकृतानुकृतिः ।
अथ[9] वितथास्वमूष्व[10-]वितथं तवधाम समं
विरजधियोऽन्वयन्त्यभिविपन्यव एकरसम्[-10] ॥ १९ ॥

स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिलशक्तिधृतोंशकृतम्[11]।
इति [12-]नृगतिं विविच्य कवयोनिगमावपनं
भवत उपासतेऽङ्घ्रिमभवं भुवि[-12] निश्वसिताः ॥२०॥

---

1--1. M.Ma. °वोच्छस° 2. K.MI.T.V.W. °तृपो ; M. Ma हृदो 3. M.Ma धा 4--4 M. Ma. मोत्तममध्यमादिषु यस्तव सदसतः 5--5 M. Ma प्रथयेदवि° 6--6 M. Ma यर्हि वर्त्मनि सूक्ष्म 7--7 M. Ma °गाङ्घ नन्दन पथाय 8. M. Ma भ 9. M.Ma अपि 10--10 M. Ma वितथोरु विधं मनसि निकट धियो नयन्त्यभिविपत्यतव 11. M. Ma धृतः स्व 12--12 M.Ma विमृशन्ति कवयो निगमावपनं यजन्त उपासते भव मध्यविनि°

**श्रीध०** त्वमेव सर्वनिगमगोचर इति सतां प्रवृत्त्या द्रढयति - इति तवेति। त्वमेव सर्वकारणत्वेन परमार्थ इति कृत्वा भोस्त्र्यधिपते त्रिगुणमायानटीनर्तक, सूरयो विवेकिनः तवाखिललोकमलक्षपणकथामृताब्धिं सकलजनवृजिननिरसनहेतुं कीर्तिसुधासिन्धुमवगाह्य निषेव्य तपांसि तपन्तीति तपांसि पापानि दुःखानि वा जहुस्त्यक्तवन्तः। त्वदीय कथामात्रेण यदा पापत्यागस्तदा किमु वक्तव्यं, ये पुनः स्वधामविधुताशयकालगुणाः स्वधाम्ना स्वरूपस्फुरणेनैव विधुतास्त्यक्ता आशयगुणा अन्तःकरणधर्मा रागादयः कालगुणा जरादयश्च यैस्ते, तथा हे परम ! तवाजस्रसुखानुभवमखण्डानन्दानुभवं पदं स्वरूपं भजन्ति सेवन्ते तथाभूता दुःखानि त्यजन्तीति। 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेतंविधुत पापं कर्म न श्लिष्यते' 'न कर्मणा लिप्यते पापकेन' 'तत्सुकृत दुष्कृते विधुनुते' 'एतदं ह वाव न तपति । 'किमहं साधु नाकरवम्' 'किमहं पापमकरवम्' (तैत्ति.उ.2-9) इत्यादि श्रुतेरित्यर्थः। 'सकलवेदगणेरित सद्गणस्त्वमिति सर्वमनीषिजना [2]रताः। त्वयि [3]सुभद्रश्रवणादिभिस्तव पदस्मरणेन गतक्लमाः' (श्रीधरीयश्लोकः) ॥ ३॥१६ ॥

'असुर्या नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः' (ईश.उ.3) तथा 'न चेदवेदीर्महती विनष्टिः।' [4-]ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति[-4]' (बृह.उ.4-4-14) इत्याद्याः श्रुतयः। [5-]असुर्येति श्रुतेरर्थः। ते प्रसिद्धाः लोकाः कर्मफलभूतदेवतिर्यङ्नरादिदेहाः असुर्याः असुषु रमन्त इति व्युत्पत्या असुराणां देहाभिमानिनां सम्बन्धिनः प्राप्या इत्यर्थः। ते कीदृशाः अन्धेन दृढेन तमसा आच्छादिताः ये के च ये केचित् आत्मानं ततस्वरूपभूत सत्यज्ञानानन्दतिरस्कारेण दुःखित्वाद्यारोपणेन च घ्नन्ति हिंसन्तीत्यात्महनः अविद्वांसः जनाः तान् लोकान् अभिगच्छन्ति प्राप्नुवन्ति। कर्मानुसारेण चेद्यादि इह मनुष्यजन्मनि पुरुषः नावेदीत् न विदितवान् तर्हि महती विनष्टिः विनाशः जन्ममरणपरम्परा अविच्छेदलक्षणा संसारगतिः[-5] इत्याद्याः श्रुतयः। पूर्वश्लोकोक्तोभयविधभजनहीनान्निन्दन्ति - दृतय इवेति। असुर[6]भृतो नरा

यदि ते अनुविधा अनुविदधतीत्यनुविधा अनुवर्तिनो भक्ता इति यावत्। तर्हि श्वसन्ति जीवन्ति सफलजीवना भवन्ति। इतरथा दृतय इव भस्त्रा इव, वृथाश्वासा इत्यर्थः। नन्वभक्तानामपि कामादिफलमस्त्येव। नः कार्यकारणानुग्राहकत्वेन जीवनहेतोस्तवाभजने कृतघ्नानां तदपि न सिध्येदित्याशयेनाह-महदहमादय इति। महानहङ्कारश्चादिर्येषां ते। यदनुग्रहतो यस्य तवाऽनुप्रवेशेन लब्धसामर्थ्याः सन्तोऽण्डं देहंसमष्टिव्यष्टिरूपं सृष्टवन्तः। तत्र च पञ्चापि कोशानन्नमयादीनाविश्य[8] तत्तदाकारस्सन् यश्चेतयते स त्वं तदाह - पुरुषविध इति। पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य स तथा। ननु चिदेकरसस्य कथं तत्तदाकारताऽत आह - अन्वयोऽत्रेति। अत्र एषु अन्नमयादिष्वन्वेतीत्यन्वयः। अतस्तत्तदाकारतेति। एवं तर्हि सत्यत्वमसङ्गत्वं च कथं तत्राह - चरमोऽन्नमयादिषु य इति। अन्नमयादिषूपदिश्यमानेषु यश्चरमो 'ब्रह्मपुच्छं प्रतिष्ठा' (तैत्ति.उ.2-5) इति पुच्छत्वेनोक्तः स त्वमिति सम्बन्धः। ननु तथाप्यन्नमयादिष्वन्वितत्वेऽसङ्गत्वव्याहतिरेव स्यात् तत्राह - सदसतः परं त्वमथ यदेष्ववशेषमृषमृतमिति। सदसतः स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतम्। अवशेषमवशिष्यति इत्यवशेषमबाध्यम्। अथात एव ऋतं सत्यम्। तर्हि किमर्थं तेष्वन्वय उक्तः, शाखाचन्द्रवच्छुद्धस्वरूपलक्षणार्थम्। तथा हि - 'स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः' (तैत्ति.उ.2-1-1) इत्यादिना स्थुलसूक्ष्मक्रमेण पञ्चकोशानुपदिश्य 'तस्य पुरुषविधताम् अन्वयं पुरुषविधः' (तैत्ति.उ.2-2) इति पुनः पुनः तत्तदन्वितत्वेनालक्ष्य 'ब्रह्मपुच्छं प्रतिष्ठा' (तैत्ति.उ.2-5) इति सर्वसाक्षिणःशुद्धसत्त्वस्वरूपनिरूपणमित्यनवद्यम्। 'नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः। नरहरे न भजन्ति नृणामिदं दृतिवदुच्छ्वसितं विफलं ततः' ॥ ४॥१७ ॥

एवं तावत् सर्वात्मके परमेश्वरे सर्वश्रुतिसमन्वयेन सद्भजनीयत्वमुक्त्वा अभक्तनिन्दया च तदेव दृढीकृत्येदानीमनवगाह्यमहिमनि[12] प्रथमं तावदुपाध्यालम्बनमुपासनं 'उदरं ब्रह्मेति शार्कराक्षा उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्म हैवैत इत ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत'(ऐत.उ.1-4-1) इत्याद्याः श्रुतयो विदधतीत्याह - उदरमुपासत इति। ऋषिवर्त्मसु ऋषीणां सम्प्रदायमार्गेषु ये कूर्पदृशस्ते उदरालम्बनं मणिपूरकस्थं ब्रह्मोपासते ध्यायन्ति। शार्कराक्षा इति श्रुतिपदस्य प्रतिपदं कूर्पदृश इति। कूर्पं शर्करारणो विद्यते दृक्ष्वक्षिषु येषां ते तथा रजः पिहितदृष्टयः, स्थूलदृष्टय इति यावत्। उदरस्य हृदयापेक्षया स्थूलत्वात्। यद्वा कूर्पं सूक्ष्मम्। सूक्ष्मदृश इत्यर्थः। तदा हृदयस्थं सूक्ष्मेवालक्ष्य तत्प्रवेशाय प्रथममुदरस्थमुपासत इति भावः। आरुणयस्तु साक्षाद्धृदयस्थं दहरं सूक्ष्म [13-]अनाहत चक्रस्थ[-13] मेवोपासते। हृदयविशेषणं परिसरपद्धतिमिति। परितः सरन्ति प्रसर्पन्तीति परिसरा नाड्यस्तासां पद्दतिं मार्गं प्रसरणस्थानमित्यर्थः। विशेषणस्य फलमाह - तत इति। [14]ततो हृदयात् भो अनन्त, तव धामोपलब्धिस्थानं सुषुम्नाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरो मूर्धानं प्रत्युदगात् उदसर्पत्। मूलाधारादारभ्य हृदयमध्याद्ब्रह्मरन्ध्रं प्रत्युद्गतमित्यर्थः। कथम्भूतं धाम? यत्समेत्य प्राप्य पुनरिह कृतान्तमुखे मृत्युमुखे संसारे न पतन्ति। तथा च श्रुतिः - 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका।

तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' [15-] अस्या श्रुतेरर्थः, शतं शतसंख्याकाः एका च सुषुम्ना नाम पुरुषस्यहृदयाद्विनिस्सृताः नाड्यः सिराः तासां मध्ये मूर्धानं भित्वा अभिनिस्सृता सुषुम्नानाम तया अन्तकाले आत्मानं वशीकृत्य यो जपंत् तया नाड्या ऊर्ध्वमुपरि आयन् गच्छन् आदित्यद्वारेण अमृतत्वं एति प्राप्नोति, विष्वङ् नानाविधगतयः अन्या नाड्यः उत्क्रमणे निमित्तं भवन्ति [-15] (कठ.उ.6-16) इति। उदरादिषु यः पुंसां चिन्तितो मुनिवर्त्मभिः। हन्ति मृत्युभयं देवो हृद्गतं तमुपास्महे ॥ ५॥ १८॥

नन्वीश्वरस्यापि तर्हि जीववदुदरहृदयादि सम्बन्धे तदनुप्रविष्टस्य च तारतम्ये सति केन विशेषेणोपास्यत्वमिति इमामाशङ्कां परिहरन्त्यः 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षीचेता केवलो निर्गुणश्च' (श्वेता.उ. 6-11) इत्याद्याः श्रुतयः स्तुवन्तीत्याह - स्वकृतेति। स्वयं कृतासु विचित्रासु उच्चनीचमध्यमासु योनिष्वभिव्यक्तिस्थानेषु कार्येषु देहादिषु हेतुतयोपादानतया प्रागेव विद्यामानत्वेन मुख्यप्रवेशासम्भवाद्विश न्निव वर्तमान स्तरतमतो न्यूनाधिकभावेन चकास्सि अवभाससे स्वकृता योनीरनुकरोतीति स्वकृतानुकृतिरनलवत्। अग्निर्यथा स्वतस्तारतम्यहीनोऽपि काष्ठानुसारेण [16-] न्यूनाधिक इव [-16] तथा तथा [17-] यथा उत्तमप्रकाशस्सविता द्युमण्डलमेकरूपेण प्रकाशेनापूरयन्नपि वर्षासु निकृष्ट प्रकाशइव प्रतीयते शरदि प्रकृष्ट [-17] प्रकाश इव तद्वत्। अथातो वितथासु मिथ्याभूतास्वमूषु योनिष्ववितथं सत्यं यतः सममविशेषमतः सत्यं तव धाम स्वरूपं विरजधियो निर्मलमतयोऽन्वयन्ति जानन्ति। अनु इति पृथक् पदं वा। अत्र हेतुः - अभिविपण्यव इति। अभितो विगतव्यवहारः। पण व्यवहार इत्यस्य रूपं पण्युरिति। ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः। अविशेषत्वादेवैकरसं सन्मात्रमतस्तवोपाधिकृत तारतम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमिति भावः। 'स्वनिर्मितेषु कार्येषु तारतम्यविवर्जितम्। सर्वानुस्यूतसन्मात्रं भगवन्तं भजामहे' ॥ ६ ॥ १९ ॥

अपि च कुतो न्वियमाशङ्का स्यात् भगवतो देहाद्युपाधिकृतदोषप्रसङ्ग इति, यतोऽविद्याकामकर्मभिः संसरतो जीवस्यापि भगवद्भावं लक्षणया बोधयन्त्यस्तं दोषं निषेधयन्ति 'स यश्चायं पुरुषे। यश्चासावादित्ये'। स एकः। (तैत्ति.उ. 2-8) 'तत्त्वमसि' (छान्दो.उ. 6-8) इत्याद्याः श्रुतयः। ननु क्रत्वर्थस्यात्मनः स्तुतिरियमीश्विरत्वेन क्रियते, नतु तस्येश्वरत्वं बोध्यते, नैतद्युज्यते, यतस्तत्र 'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥' (श्वेता.उ.6-23) इत्याद्याः श्रुतयः, कृतावतारस्य भगवतश्चरणाम्भोजभजनोपायं वदन्तीत्याह - स्वकृतपुरेष्विति। स्वकर्मोपार्जितेषु पुरेषु देहेष्वमीषु नरादिषु भोक्तृत्वेन वर्तमानं पुरुषमखिलशक्तिधृतः सर्वशक्त्याश्रयस्य पूर्णस्य तवांशकृतं वदन्ति । अंश इवांशः, कृत इव कृतः। त्वद्रूपं वदन्तीत्यर्थः। ननु कार्यकारणसंवृतस्य कुत एवम्भूतत्वं तत्राह - अबहिरन्तरसंवरणमिति। बहिः कार्यम्। अन्तरं कारणम्। वस्तुतस्तदावरणशून्यम्। तयोः लिङ्गस्थूलयोः असत्त्वादित्यर्थः इत्येवं नृगतिं

नुर्जीवस्य गतिं तत्त्वं विविच्य विशोध्य कवयो [19]भजनं विना इदं न प्राप्यत इति जानन्तो निगमावपनं निगमोक्त - कर्मणामावपनं आसमन्तादुप्यन्तेऽस्मिन् इत्यावपनं क्षेत्रं सर्वकर्मार्पणविषयमित्यर्थः। यत्रार्पितानि कर्माणि मुक्तिफलं फलन्ति तं भवतोऽङ्घ्रिमभवं भवनिवर्तकं विश्वसिताः कृतविश्वासाः उपासतेऽर्चनवन्दनादिभिः सेवन्ते। भुवीति मर्त्यलोके। इदमेवोचितमिति दर्शयन्ति - त्वदंशस्य ममेशान त्वन्मायाकृतबन्धनम्। त्वदङ्घ्रिसेवामादिश्य परानन्द! निवर्तय ॥ ७॥ २० ॥

---

1. B.J. मृगी 2. Ml.V. मुहुः 3. Ml.V. रमन्ति 4- -4 Ml.V. Omit 5- -5 B.J. Omit 6. Ml.v. °तृपः 7. B. J. Omit तव 8. Ml.V. add यप्राणमयमनोमर्यविज्ञानमयानन्दमया 9. B.J.Omit स्यात् 10. Ml.V. °वेद्य 11- -11 B.J. साक्षिशुद्धस्व° 12. Ml.V. प्र 13- -13 B.J. Omit 14. B.J. Omit ततः 15- -15 B.J. Omit 16- -16 B.J.Omit 17- -17 B.J. Omit 18- -18 B.J.Omit 19. B. J. °न्यथेदं

**वीर०** 'अत ऋषयः' इत्यादेः पूर्वयोजना। कैमुत्यन्यायेन भगवद्ध्यानस्य सांसारिकतापनिवर्तकत्वमाहुः - **इति तव सूरय** इति। द्वितीययोजनायां तु कारणत्वसमनियतमुमुक्षूपास्यत्वं कैमुत्यन्यायेनाहुः - इतीति। त्र्यधिपते! इति सम्बोधनम्। जगज्जन्मस्थितिविनाशनिर्वाहक, इतिर्हेतौ, अतस्सूरयो विवेकिनः तवाखिलल्लोकमलक्षपणकथामृताब्धिम् अखिलानां लोकानां जनानां शृण्वतां वदतां च मलं पापं क्षपयति नाशयतीति तथा सा कथैवामृतं तस्याब्धिमवगाह्यैव तपांसि आध्यात्मिकादितापान् जहुः तत्यजुः किं पुनर्ध्यानपरा इत्याहुः - किमुतेति। हे परम! ये स्वधाम! स्वतेजः स्वविषयकं ज्ञानं, स्वशब्दः परमात्मपरः तेन विधुताः आशयगुणाः रागादिमनोवृत्तयः कालगुणाः जरामरणादयश्च यैस्ते अजस्रसुखानुभवं नित्यज्ञानानन्दात्मकं पद्यत इति पदं स्वरूपं भजन्ति समाधिना साक्षात्कुर्वन्ति, ते तपांसि [1]जहतीति किंपुनर्वक्तव्यमित्यर्थः ॥ १६ ॥

अथ भगवद्भजनविमुखानां जन्मवैयर्थ्यमाहुः - **दृतय** इति। ते तव अनुविधाः अनुविधायिनः त्वदाश्रय णयोग्य जन्मभाजोऽपि इत्यर्थः। असुतृपस्त्वां विहाय केवलं यदि प्राणेन्द्रियतर्पणपराः शब्दादिविषयचपलाश्चेत् तर्हि दृतय इव उच्छ्वसन्ति दृतयश्चर्मभास्त्रिकाः, ता यथा वायुपूरिता उच्छ्वसन्ति तद्वत् कृतोच्छ्वासा इत्यर्थः। अनेन 'अत ऋषयो दधुः' इति आद्ययोजनायां 'कथमयथा भवन्ति' इत्यादिसूचितमन्यविषयध्यानादिमोघत्वं स्पष्टीकृतम्। ननु सति मम कारणत्वे तत्समनियतमुमुक्षूपास्यत्वसिद्धिः। कारणत्वमेव त्वनुपपन्नम्। अचेतनस्य प्रधानस्यैव महदहङ्कारादिरूपेण परिणामस्वभावस्य कारणत्वात्, तथाहि चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य [2-]वियदादिनामरूपविकार[-2]व्यवस्थितस्य जगद्रूपस्य वस्तुनः कारणभूतं वस्तु तत्स्वभावमेवेति युक्तं गुणसाम्यावस्थं प्रधानमेव कारणमिति। अत एव कार्यकारणयोरनन्यत्वोपपादकमृदादिदृष्टान्तोपपत्तिरिति ईक्षत्यधिकरणपूर्वपक्षानुसारिणीं आशङ्कामभिप्रेत्य परिहारमाहुः - महदित्यादिना यदनुग्रहत इत्यन्तेन। यस्य तव अनुग्रहतः 'तदैक्षत बहुस्याम्' (छान्दो.उ. 6-2-3) इति ईक्षात्मकसङ्कल्पाल्लब्धसत्ताकाः येनानुप्रविष्टाश्च महदहङ्कारादयः अण्डमसृजन,

अचेतनस्य ईक्षात्मकानुग्रहासम्भवान्न तस्य कारणत्वमिति भावः। न च वृष्टिप्रतीक्षाश्शालय इतिवत् गौणानुग्रहसम्भवः। 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' (छान्दो.उ.6-8-8) इति कारणस्यात्मत्वश्रवणात् स्यादेतत्, मा भूत्प्रधानं कारणं जीवस्तु भुवितुमर्हति, तस्येक्षासङ्कल्पानुग्रहापरपर्यायानुग्रह सम्भवात्, तथाहि - 'आत्मन आकाशस्सम्भूतः' (तैत्ति.उ. 2-1-1) इत्यात्मशब्देन कारणत्वं प्रकाम्य तस्य आत्मशब्दवाच्यस्य जीवातिरिक्तत्वशङ्काव्युदासाय प्रतिपर्यायं 'तस्यैष एव शरीर आत्मा' (तैत्ति.उ.2-3) इति शरीरसम्बन्ध मभिधाय आनन्दमयशब्देन स्वार्थकामयडन्तेन तस्यानन्दरूपतां चाभिधाय 'सोऽकामयत' (तैत्ति.उ.3-2-6) इति तस्येक्षापूर्वकसृष्टिराम्नायत इत्यानन्दमयाधिकरणपूर्वपक्षानुसारिणीं आशङ्कामभिप्रेत्य परिजहुः - पुरुषविध इत्यादिना। आनन्दवल्ल्यामन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु यश्चरम आनन्दमयः पुरुषविधः 'स वा एष पुरुषविध एव' (तैत्ति.उ.2-2) इत्यादिना पुरुषाकारत्वेन निरूपितः। अन्वयः - 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तर पक्षः। आनन्द आत्मा। ब्रह्मपुच्छं प्रतिष्ठा' (तैत्ति.उ.2-5) इत्युक्तशिरःपक्षपुच्छादिरूपपुरुषप्रकारान्वयवान् स त्वमेव नतु प्रत्यगामेत्यर्थः। कुत इत्यतो विशिंषन्ति यत्सदसदिति। सदसच्चिदचिदात्मक प्रपञ्चाकारं यदित्यर्थः। 'तत्सृष्ट्वा तदेवानुप्रविशत्। तदनुप्रविश्य। सच्चोत्यच्चाभवत्' (तैत्ति.उ.2-6) इति स्वसृष्टचिदिदनुप्रवेशेन तदुभयात्मक जगद्रूपेण भवनस्य चिदचिद्वाचि शब्दाभिधेयत्वस्य च श्रूयमाणस्य बद्धमुक्तोभयावस्थजीवासम्भावितस्य त्वय्येव सम्भवादिति भावः। किञ्च यदतः चिदचिदात्मकप्रपञ्चात्परं विलक्षणं निरुक्तानिरुक्तनिलयनानिलयन विज्ञानाविज्ञानसत्यानृत शब्दैः प्रकृतिपुरुषौ निर्दिश्य तदन्तरात्मतया तदनुप्रवेष्टृतया श्रूयमाणं यत्तज्जीवातिरिक्तस्त्वमेव। अथ यश्च एषु अन्नमयादिषु चतुर्षु संहृतेष्वपि अवशेषमवस्थितमानन्दमयरूपम् ऋतं निर्विकारं तत्त्वमेव, एवमुक्तधर्मसमानाधिकरणतया श्रूयमाणं ईक्षितृत्वात्मकानुगृहीतृत्वं जीवासम्भावितं त्वय्येवोपपन्नमिति समुदायाभिप्रायः, शारीरात्मत्वं च सर्वशरीरके त्वय्येवोपपन्नमिति च भावः। अत्र केचित् - अन्नमयादिषूपदिश्यमानेषु यश्चरमो 'ब्रह्म पुच्छं प्रतिष्ठा' (तैत्ति.उ.2-5) इति पुच्छत्वे नोक्तः। स त्वमिति सम्बन्धमाहुः, तथा हि -

तस्येदं ब्रह्मपुच्छं स्यात्प्रतिष्ठा हेतुरित्यतः। व्यतिरेकश्रुतेर्ब्रह्म विषयत्व प्रतीतितः ॥
श्लोकस्य वक्ष्यमाणस्य ब्रह्मप्राधान्यनिश्चयात्। प्रियमोदादिरूपेण विदितस्य जनैस्समैः ॥

इहानन्दमयस्यास्य शङ्कायाश्चात्र सङ्गतेः। सदसद्भावयोर्ज्ञानाज्ञानयोश्च निरंशिनः ॥
अंशित्वासङ्गतेर्निर्विकारस्य मयटाऽत्र वै। विकारित्वावबोधाच्च मयटो ह्यत्र सङ्गतेः ॥

तस्यैष एव शरीर आत्मेति च तदन्तरम्। आत्मान्तरं कीर्त्यमानमानन्दमयवस्तुनः ॥
ब्रह्मत्वं नावगमयेदित्यतः पुनरस्य हि। परे तस्मिन्नित्यशुद्धे शोध्यत्वानुपपत्तितः ॥
नानन्दमयशब्देन वाच्यं ब्रह्मेति निश्चितम्। पुच्छत्वेनैव यत्तत्र रूपितं तु तदिष्यते ॥

इति, तत्तुच्छम्

कृत्स्ने प्रकरणेह्यत्र पूर्वमन्नमयादिषु। स्वस्मादनतिरिक्तैस्स्वावयवैस्सुनिरूपणात् ॥
शिरः पक्षादिरूपेण पुरुषत्वस्य निश्चितम्। प्रियमोदादिभिस्स्वस्मादभिन्नैरेव रूपितः ॥

न भिद्यते ब्रह्मणोऽत्र ह्यानन्दमयशब्दितः। तत्तदन्तरभूतस्य वस्तुनो बोधकस्य वै ॥
तस्यैष एव शरीर आत्मेत्यात्मपदस्य हि। व्याख्यानन्दमये पर्यवसन्नाकीर्तनात्पुनः ॥

अन्यस्य ब्रह्मपर्यायस्यानन्दमयतस्ततः। अन्नादिमयपर्यायेषूक्तानां श्लोकरूपिणाम् ॥
वाक्यानां पक्षपुच्छादि मदर्थपरतः पुनः। पुच्छमात्र परस्यास्य श्लोकस्यास्याप्यसङ्गतेः ॥
अनन्तरे शोऽकामयतेति वाक्यश्रुतेन सः ॥

इति शब्देन पुंवस्तुबोधकेन तथा पुनः। प्रधानप्रकृतार्थस्य परामर्शनसाधुना ॥
अनन्तरस्यानन्दमयस्यत्राबोधसङ्गतेः। ब्रह्मणो व्यवधानेन तदुपस्थापन क्षतेः ॥

ब्रह्मण्यानन्दशब्दस्य ह्यानन्दो ब्रह्म इत्यतः। श्रुतेस्सम्प्रतिपन्नत्वादानन्द स्थापने क्षमात् ॥
आनन्दमयमात्मानमुपसङ्क्रम्य वाक्यतः। आनन्दानन्दमययोरैकार्थ्यस्य प्रतीतितः ॥

आनन्दमयशब्देन परब्रह्मावबोधनात्। आनन्दोब्रह्मेति व्यजानादिति पर्यायतुल्यतः ॥
आनन्दमयतुल्यार्थाच्छब्दादानन्दतः परम्। प्रतीतार्थश्रुतेः पश्चादुपपत्तेरभावतः ॥

न पुच्छमेव ब्रह्मेति किन्तु पुच्छवदिष्यते। स्वभिन्नपक्षपुच्छादि पर प्रकरणस्य वै ॥
आनुगुण्येन षष्ठ्या च निर्देशस्य तथा पुनः। अंशांशित्वेनोपपत्तेर्व्यतिरेकस्य निश्चयात् ॥

आत्माब्रह्मानन्दमयशब्दैरेकार्थ बोधनात्। तेषामन्यतमेनापि श्लोकस्य ह्युपपत्तितः ॥
आनन्दमयस्यापरिच्छित्तेः पुच्छब्रह्मपदस्य हि। आनन्दमयवाच्यस्य प्रसिद्धेरप्यभावतः ॥

सदसद्भावयोर्ज्ञानाज्ञानयोश्च तथा पुनः। शङ्कायास्सम्भवादस्यरूपणस्योपपत्तितः ॥
अंशांशिभ्यां तथानन्दमयशब्दगतस्य वै। मयटस्स्वार्थिकत्वेन प्राचुर्यार्थेऽपि वा पुनः ॥

उपपत्तेर्विकारार्थकत्वाभावाच्च ब्रह्मणः। निर्विकारत्वानिर्वाहादनन्यात्मत्ववादिनः॥
तस्यैष एव शारीर आत्मेत्यस्याविरोधतः। तद्वस्त्वनुगुणत्वेन शोधनस्य विधेः पुनः॥
प्रत्यगर्थस्य शोध्यत्वं संसृतेर्निर्हृतेः तथा। आनन्दमयशब्देन वाच्यस्य ब्रह्मणस्तथा ॥
शोध्यत्वस्य प्रपत्त्या च साध्यस्य ह्युपपत्तितः। कालुष्यशान्तिरूपस्य न पुच्छं ब्रह्म वै मतम्॥
अन्यथाऽऽनन्दमयतस्य एव ब्रह्म तु स्थितम्। इतिपुच्छब्रह्मवादिदूषणोद्धार इष्यते ॥ १७ ॥

अस्तु कारणत्वेनोपास्यत्वं, के के कुत्र कुत्र कथं कथमुपासते, कीदृशं च फलमित्यपेक्षायां उपासनभेदानभिधाय सर्वेषामप्युपासनानां मोक्षैकफलत्वमाहुः - उदरमिति। ऋषिवर्त्मसु वेदान्तविहितेषु उपासनमार्गेषु ये कूर्पदृशः सूक्ष्ममतयः तत्र केचिदारुणयः अरुणवंश्याः तदनुयायिनः दहरविद्यानिष्ठा इति यावत्, हृदयं ह्रदतं दहरं दहरशब्दवाच्यं हृदयपुण्डरीकान्तर्गताकाशरूपं त्वामुपासते केचित्तु वैश्वानरविद्यानिष्ठाः उदरम् उदरस्थजाठराग्निशरीरकं त्वामुपासते। केचित्तु परिसरपद्धतिं परितस्सरति व्याप्नोतीति तथा। सुषुम्नाख्या नाडी सैव पद्धतिर्मार्गः तं सुषुम्नामार्गस्थं त्वामुपासत इत्यर्थः। सुषुम्नायाः हृदयादारभ्य शिरःपर्यन्तव्याप्ते तदभिप्रायेण परिसरपद्धतिमित्युक्तं, तदेव स्पष्टयितुं परिसरवर्त्म विशिंषन्ति - ततः हृदयादारभ्येत्यर्थः। हे अनन्त! यत्तव परमं धाम उपासनस्थानं शिरो भ्रूमध्यं तत्पर्यन्तं यदुदगादूर्ध्वमाक्रामत् 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका' (कठ.उ. 6-16) इति श्रुत्यर्थोऽत्राभिसंहितः। तव धाम शिरः परमित्यनेन शिरोऽपि त्वदुपासनस्थानमित्युक्तं भवति। 'एष देवपथो ब्रह्मपथः' (छान्दो.उ. 4-15-6) 'तयोर्ध्वमायन्नमृतत्वमेति' (कठ.उ.6-16) एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते इत्यादि श्रुत्यर्थमभिप्रेत्य विशिंषन्ति - यत् मध्यनाडीवर्त्म शिरो वा सर्वेऽप्युपासकाः समेत्य प्राप्य पुनरिह प्रकृतिमण्डले कृतान्तमुखे मृत्युमुखे संसारे न पतन्ति, यदिति वर्त्माभिप्रायको नपुंसकनिर्देशः ॥ १८ ॥

एवमुपासनस्थानप्रसङ्गात्परमात्मनोऽशुचिदेहसम्बन्ध उक्तः। अथ कार्यान्तः प्रविष्टस्यापि तस्य निर्दोषतया परमप्राप्यत्वमाहुः - स्वकृतेति। हेतुतया सर्वोपादानत्वेन स्वेन त्वया कृताः निर्मिताः विचित्राः योनयो देहाः येषां तेषु देवमनुष्यादि विचित्रभवत्कृत शरीरकेषु जीवेष्वित्यर्थः। विशन् अन्तरात्मतया प्रविशन् यद्वा देवादिशरीष्वेवोपासकानुग्रहणोपासानार्थं विशन् तिष्ठन्, इवशब्दोऽनतिरिक्तार्थकः, विशन्नेवेत्यर्थः। तरतमतः ज्ञानाल्पत्वमहत्त्वादिभावेन स्वकृतानुकृतिः स्वकृताः योनीरनुकरोतीति तथा हृदयादिकार्यपरिमाणोत्पत्तिविनाशाद्यनुकारी चकास्सीत्यर्थः। अनलवत् यथा अग्निः स्वतस्तारतम्यहीनोऽपि तृणकाष्ठाद्यनुसारेण तथा प्रकाशते, तद्वत्। अथ यद्यप्येवमथापीत्यर्थः। अमुषु योनिषु वितथासु अविद्यमानासूपसंहतास्वित्यर्थः। अवितथमनुपसंहतं, कुतः? सममेकरूपं कार्यनुप्रवेशकृतकार्यगतदोषस्पर्शरहितं, तत्कुतः? एकरसं अविच्छिन्नानन्दं तव धाम स्वरूपं विरजधियो निर्मलमतयः अनुनयन्त्युपासते, अभियन्ति प्राप्नुवन्ति चेत्यर्थः। अन्वयन्त्यभिविपन्यव एकरसम्

इति पाठान्तरम्। तदा अभिविपन्यवः विविध त्वद्गुणवादात्मक स्तुतियुक्ताः अन्वयन्ति अन्विता गच्छन्ति प्राप्नुवन्तीति यावत्। अत्र 'सर्वज्ञस्सर्वदृक्सर्वज्ञानशक्तिबलर्द्धिमान्। अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान् वशी। क्लमतन्द्रीभयक्रोधकामादिभि रसंयुतः। निरवद्यः परः प्राप्तिर्निरधिष्ठोऽक्षरक्रमः' (विष्णु.पु.5-46-48) इत्यादि स्मृत्यर्थोऽनुसन्धेयः ॥ १९ ॥

परम भजन्ति ये पदमजस्रसुखानुभवम् उदरमुपासते अवितथं तव धाम समम् एकरसम् इत्युदरादि स्थानविशेषाधिष्ठानक दिव्यात्मस्वरूपोपासकानां तत्प्राप्तिरुक्ता। अथ दिव्यविग्रहोपासकानामपि तत्सारूप्यापत्तिरूपं फलमित्यभिप्रेत्य तदुपासकाश्च केचित्सन्तीत्याहुः - स्वकृतपुरेष्विति। अमूषु देवमनुष्यादिषु स्वेन त्वया कृतेषु पुरेषु त्वन्निवासभूतेषु देहेषु सन्तमिति शेषः। अखिलशक्तिधृतः अखिलाश्शक्तीः आश्चर्यशक्तीः धरतीति तथा तस्य तवांशकृतम् अंशेन सङ्कल्पात्मकज्ञानेन कृतं कल्पितम् उपात्तम् अबहिरन्तः अन्तर्बहिर्देशरहितम् अन्तर्बहिश्च व्याप्तिक्षममित्यर्थः। अनेन विग्रहस्यापि पुरान्तरवस्थानप्रयुक्त परिच्छिन्नत्वशङ्काव्यावृत्तिः, असंवरणं सङ्कोचहेतुरहितं पुरुषं पुरुषाकारं विग्रहं वदन्ति, वेदान्ता इति शेषः। 'अङ्गुष्ठमात्रो रवितुल्यरूपः (श्वेता.उ.5-8) 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' (कठ.उ.4-12) 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' (कठ.उ.6-17) इत्याद्याः वेदान्ताः प्रतिपादयन्तीत्यर्थः। इतीत्थम्भूतं तव पुरुषं तथा नृगतिं नरजन्म त्वदाराधनोपयुक्तमिदं नृजन्मेति च विचिन्त्य विचारपूर्वकं निश्चित्य भुवि भूमौ केचित्कवयो विवेकिनः निश्श्वसिताः प्राणायामपराः जितप्राणेन्द्रिया इत्यर्थः तवाङ्घ्रिमुपासते, कथम्भूतम्? निगमावपनं निगमानां वेदानामावपनं क्षेत्रं प्रतिपादनविषयमिति यावत्, यद्वा निगमस्य ज्ञानस्यापवनम् आ समन्तादुप्यतेऽनेनेत्यापवनम् उत्पादकं 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगम्' (भगी 10-10) इति भगवदुक्तेः। अभवं न भवस्संसारो यस्मात् सेव्यमानात् तं भुवि विश्वसिताः इति पाठान्तरं, तदा मोक्षयिष्यतीति दृढविश्वासयुक्ताः उपासत इत्यर्थः ॥ २० ॥

---

1. B विजहुरिति 2- -2 B.Omits 3. K. श्रुति

**विज०** त्यजन्ति तापं य उ ते भवत्कथा इति स्म मुक्ताः किमुते स्वरूपगाः परावरेशेशपदं भजन्तः परम्परानन्दमनारतन्ते इति इन्द्रद्युम्नश्रुति प्रथितस्य इति श्लोकस्यायमर्थः। इति शब्दो हेत्वर्थः। पुनरवधारणार्थः। 'पुनरप्रथमे प्रश्ने व्यावृत्तावधारणे' (वैज.को 8-7-24) इति। हे परमपरावरेशेश! ते तव अजस्रसुखानुभवं अनारतमजस्रं सुखं परमानन्दः अनुभवः ज्ञानं यस्य तत्तथा। तत्पदं स्वरूपं भजन्ति। अनन्याश्रयत्वात् स्वधामा परमः तेन विधुताः आशयगुणाः दुःख...ः कालगुणाः उत्पत्त्यादयो यैस्ते मुक्ताः तपांसि तापान् जहुरिति किमुत पुनः वक्तव्यमेव। हे त्र्यधिपते! त्रिलोकीनाथ! सूरयः दर्शनादिभाषाविचक्षणाः अखिललोकस्य मलं क्षपयतीति अखिललोकमलक्षपणः तं तव कथामृताब्धिम् अवगाह्यापि तपांसि जहुरिति यस्मादिति शेषः ॥ ३ ॥ १६ ॥

अनिशमनुश्वसन्त्यसुखोद्धरिताः तव रिपवो दृतिवत्तमसि प्रविष्टाः तव गुणप्रथनाः परिहाय 'तमःपर्यान्ति ते पदमजस्रमनन्तसुख'मिति (पैङ्गिश्रुतिः) पैङ्गिश्रुत्यर्थरूपस्य दृतय इवेत्यस्य श्लोकस्यायम्भावः। महदहमादयः ब्रह्मरुद्राद्यभिमन्यमानानि महदहङ्कारादितत्त्वानि यस्यानुप्रवेशलक्षणानुग्रहतो ब्रह्माण्डमसृजन् तस्यात्यन्तोपकारकस्य ते तव यद्यसुहृदः सर्वमिथ्यात्ववादिनः तर्हि ते दृतयः कारुशालायामग्निधमननिर्मितचर्मविशेषा इव उछ्वसन्ति तमसि प्रविष्टाः दुःखभराक्रान्तत्वाद्विनष्टप्राणबला दीर्घश्वासं कुर्वन्ति। अत्र चरमोत्तममध्यमादिषु चरमा मनुष्योत्तमाः उत्तमा इन्द्रादिदेवाः मध्यमा ऋषिगन्धर्वाः आदिः मुक्तसमुदाये प्रथमो ब्रह्मा एषु पुरुषेषु यस्तवाजस्रं ऋतमेकप्रकारं नित्यम् इति यावत्। अनन्तसुखं अविशेषं विषयविशेषनिमित्तक्षणभङ्गुर सुखमन्तरेण स्वरूपभूतापरिमितानन्दपूर्णं सदसतः परं प्रथयेत् जानाति। शिष्यादिषूपदिश्य प्रख्यापयति च सः पुरुषविधस्य जीवदेहगतत्वेन तदाकारस्य तवान्वयः। अनुकूलप्राप्तिः यस्य तथा। 'असक्तो देहपूर्येषजीववद्देहगोऽपियत्, अथवा पुंविधातृत्वात् पुंविधः पुरुषोत्तमः' (पुरुषोत्तमतन्त्रे) इति वचनात्। तादृशं त्वामाप्नोतीत्यर्थः। प्रथयतीति प्रथनः ॥ ४ ॥ १७ ॥

'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे तस्मात्प्रपदे इत्याचक्षते। शफाः खुरा इत्यन्येषां पशूनां तदूर्ध्वमुदसर्पत् ता ऊरु अभवतामुरु गृणीहित्यब्रवीत्। तदुदरमभवदुर्वेव मे कुर्वित्यब्रवीत्तदुदरो भवदुदरं ब्रह्मेति शार्कराक्षा उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैवताई ऊर्ध्वं त्वेवोदसर्पत्तच्छिरो श्रयत यच्छिरोऽश्रयत तच्छरोऽभवत्तच्छिरसः शिरस्त्वं ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनोवाक्प्राणः श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद' (ऐत.उ.1-3,4) इत्यादिश्रुतेः। कस्मिन्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते 'प्रतिष्ठास्यामीति सप्राणमसृजत' इति श्रुते। 'प्राण एवैनमनुप्रविशति प्राणमितरा देवता न प्राणादपरः परमनुप्रविशति। प्राण एवैनमनुभुङ्क्ते प्रविशति प्राणमितरा देवता न प्राणादपरः परमनुभुङ्क्ते प्राणमितरादेवता प्राणादपरः परमनुप्रविशति प्राण एवैनमनुप्रविशति। प्राण एवैनमन्वान्दीभवति। प्राणमितरा देवता न प्राणादपरः परमन्वानन्दीभवति तस्मादाहुः प्राणः पदुर्धाति' (हिरण्यनाभश्रुतिः) इति हिरण्यनाभश्रुतेश्चार्थप्रतिनिधिरुदरमुपासत इति तस्याभिप्रायः। 'शर्करक्षुद्रपाषाणे सुसूक्ष्मे खण्डिते गुडे' इति। 'शर्करातु शिलाभेदे ऋग्भेदाल्पकपालयोः। शर्करं तत्र देशेषु सितायां शकले गुडे' (वैज.को.7-2-26) इति च। अतः शर्कराक्षाः सूक्ष्मदृष्टयः तेषु ख्याताः शार्कराक्षाः त एव वर्त्मनि ब्रह्मणि सूक्ष्मदृष्टयः हरेरशेषविशेषान् विजानन्तो यर्हि 'यस्मात्प्राणं प्रत्युरु गृणीहि इत्यब्रवीत्' इति वचनात् उदरनामकं ब्रह्मोपासते उदरं पूर्णं ब्रह्म उद्गतः अरः परिच्छेदो यस्मात् तदुदरं पूर्णमित्येकार्थत्वात्। यस्माच्चारुणयो हृद्ययनात् हृदयनामकं ब्रह्मोपासते यस्माच्चेतरे माण्डूकेयादयो दहरमाकाशादप्यतिसूक्ष्मं परिसरो मुख्यप्राणः पदृधतिर्मार्गो यस्य यस्य स तथा परिसरस्य पदृधतिर्वा । तदुपासते तद्ब्रह्म ततः हृदः नन्दनपथा ब्रह्मनाडीद्वारा शिरः प्रत्युदगात्। अथ यत्परमं ब्रह्म पुनरिह हृदयादिषु स्थितं उपास्य तत्समीपमुपेत्य कृतान्तमुखे संसारे न पतन्तीन्वयः ॥ ५ ॥ १८ ॥

'यो जीववद्योनिषु भात्यनन्तो मूढैस्तमोगैर्भरताधिगम्यः निचाय्य तं शाश्वतमात्मसंस्थं तदिच्छवोऽऽत्मन्यदधु र्महान्तः' (कमठश्रुतिः) इति कमठश्रुत्यर्थग्राहिणः स्वकृतविचित्रेति श्लोकस्यार्थउच्यतो। स्वकृतविचित्रयोनिषु स्वनिर्मित सुरनरादिनानाविधशरीरेषु विशन्निव विशन् जीवः तद्वदज्ञानां यस्त्वं चकास्सि कथमिव? अनवत्स्वकृतानुकृतिः यथाऽनलः स्वकृतस्यानुकृतिर्यस्य स तथा। स्वकृतदार्वादेरपनयने गच्छन् तत्स्थापने तिष्ठन् अनुवर्तते। एवं स्वकृतशरीरादिएवनुवर्तसे तद्गतः सन्नित्यर्थः। ज्ञानिमतमाह - हेतुतयेति। सर्वहेतुतया भरतेन भेदज्ञानात्मके विष्णौ रतेन वायुना मतः ज्ञातः 'रतत्वाद्भात्मके विष्णौ अथवापि जगद्भृतेः। भरतोवायुरुद्दिष्टो भारती तत्सरस्वती' (नामसंहितायाम्) इति स्मृतेः। वितथासु अन्यथाभवन्तीषु अशाश्वतीष्वपि सम्भावितासु असम्भावितास्वपि अमूषु योनिषु अवितथात्वेन अनन्यथाभूत्वैव शाश्वतत्वेन ऊरुविधं बहुविधं तिष्ठन्तं निकटधियः त्वत्समीपस्थबुद्धयः महान्तस्ते तव त्वामभिविपत्य मनसाऽभिगम्य मनसि नयन्ति ध्यायन्तीत्यर्थः। 'यो निवेश्याह्वयो जीवस्त्वज्ञानां तद्वदेव तु। प्रकाशते परो देवः तेन यान्त्यधरं तमः। सर्वहेतुतयैवेशं प्राणो जानाति तत्वतः। तेन चासौ परो देवः तत्परं याति केशवम्। इन्धनानयने त्वग्निर्ययैवानीयते सह। एवं देहगतो विष्णुः सहगच्छेन्निजेच्छया। अशाश्वतेषु देहेषु शाश्वतं बहुधा स्थितम्। निचाय्य मनसा सन्तो जानन्ति निकटेच्छवः' (तन्त्रभागवते) इत्यादि तन्त्रभागवते सिद्धोऽयमर्थः ॥ ६॥ १९॥

प्रक्रमवत्स्वसत्कृतं सर्वेषु पुरुषेषु सर्वासु सुधीषु स्थित्वा त्वां तु बहिरन्तरसञ्चरणेपि। 'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम्। ना ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्चा' इत्यादिश्रुत्यभिप्रायगर्भस्य प्रक्रमवदित्यस्य श्लोकस्यायमर्थः। सर्वेषु पुरुषेषु सर्वधीषुसर्वेन्द्रियेषु च स्थित्वा श्रीब्रह्मादिषु प्रक्रमवत् प्रकृष्टप्रमयुक्तत्वेन स्वसत्कृतं स्वात्मनैव सत्कृतं त्वां वदन्ति किञ्च हे पुरुष! बहिरन्तः अण्डाद्यान्तर्बहिश्च असञ्चरणे असदमङ्गलं चरणं कर्म यस्यासौ असञ्चरणः तस्मिन्पापाचारे स्थित्वा पापाचारमपि स्वात्मनः पूजात्वेनैव कारयन्तं त्वां वदन्ति। तुशब्देन यथाकरणं तस्याधोगत्यर्थमिति सूचयति। किं बहुना? तत्सर्वं तव स्वकृतं अनन्यापेक्षया त्वयैव कृतं वदन्ति। कुत इति तत्राह - अखलेति। सर्वपुरुषेन्द्रियशक्तिप्रेरकत्वात् श्रुतिश्लोकयोः सर्वत्रैकार्थत्वभावे नैकतन्नियतत्वद्योतनाय ज्ञायते 'श्रीब्रह्मरुद्रपूर्वेषु क्रमात्स्थित्वा जनार्दनः स्वात्मानमर्चयत्यद्धा बहिरन्तरसत्सु च असतामधमाचारो हरिवृष्ट्यात्मपूजनं तस्याऽधोगमनायेति श्रुतिराहाखिलक्रियाम्' (तन्त्रभागवते) इत्यादिना। त्रिपादोऽयं श्लोकः ॥ ७॥ २०॥

---

1. Ma °षं

दु[1]रधिगमात्मतत्त्वनिगमाय[2] तवात्ततनो श्चरितमहामृताब्धिपरिवर्त पुरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ २१ ॥
त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति[3] तथोन्मुखे[4] त्वयि हिते प्रिय आत्मनि च ।
[5-]न बत[-5] रमन्त्यहो असदुपासनयाऽऽत्महनो यदनुशया भ्रमन्त्यु[6]रुभये कुशरीरभृतः ॥ २२ ॥
निभृत[7-]मरुन्मनोक्षदृढयोगयुजो हृदि यत्[-7] मुनय उपासते तदरयोऽपि ययुस्स्मरणात् ।
[8-]स्त्रिय उरगेन्द्रभोगभुजदण्ड[-8]विषक्तधियो वयमपि ते समास्[9]समदृशोऽङ्घ्रिसरोजसुधाः[10] ॥ २३ ॥
क इह [11-]नु वेद बता[-11]वरजन्मलयोऽग्रसरं यत उदगादृषिर्यमनु वेदगणा उभये ।
तर्हि न सन्नचासदुभयं न च कालजीवः किमपि न तत्र शास्त्रमपकृष्य शयीत यदा ॥ २४ ॥
जनिमसतस्सतो मृतिमु[12]तात्मनि ये च भिदां विपणमृतं[13] स्मरन्त्युप[14-]दिशन्ति त आरुपितैः[-14] ।
त्रिगुणमयः पुमानिति भिदा[15] यदबोधकृता त्वयि न ततः परत्र स भवेद[16]वबोधरसे ॥ २५ ॥

---

1. B.G.J.M.Ma. °व° 2. M.Ma. °यतवाङ्मनस° 3. M.Ma. °न्ति 4. M. Ma. °खास्त्वयि 5- -5 M. Ma. चरम 6. M.Ma. °न्त्यभवा 7- -7 M. Ma मोक्षहृदय योगयुजो हृदयं 8- -8 स्वनुराग तद्भवानुरगेन्द्रभोग 9. M. Ma. मास° 10. M.Ma सुधाम् 11- -11. M. Ma वेद नु वक्तुमपेत 12. M. Ma °मजा° 13.M.Ma ते 14- -14 विशर्ध्वानमारुवतः 15. M. Ma Omit भिदा 16- -16. M. Ma न तु भवेत्तदव°

**श्रीध०** भक्ति[1]रत्यन्तसाधनमिति वचन[2]मुचितमिव मन्वानो भक्तिं गुरूकरोति - दुरधिगमेति। भो हे ईश्वर ! दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञापनाय तवात्ततनोराविष्कृतमूर्तेः चरितमहामृताब्धिपरिवर्तपरिश्रमणाः, चरितमेव महानमृताब्धिः तस्मिन्परिवर्तो अवगाहस्तेन परिश्रमणाः परिवर्जनार्थः। श्रमणं श्रमः गतश्रमा इत्यर्थः। अपवर्गमपि केचिन्नपरिलषन्ति नेच्छन्ति, कुतोऽन्यत् इन्द्रपदादि। केचिदित्येवम्भूता भक्तिरसिका विरला इति दर्शयन्ति। न केवलं अन्यन्नेच्छन्ति किन्तु तेनैव सुखेन पूर्णास्सन्तः पूर्वसिद्धं गृहादिसुखमप्युपेक्षन्त इत्याह - तव चरणसरोजहंसकुलसङ्ग विसृष्टगृहा इति। तव चरणसरोजे हंसा इव रममाणा ये भक्तास्तेषां कुलं तेन सङ्गस्तेन विसृष्टा गृहा यैस्ते तथा। अनेन श्रवणकीर्तने दर्शिते। श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्शयति। यथाह - 'यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च' इति। व्याख्यातं च सर्वज्ञैर्भाष्यकृद्भिः, मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते इति । त्वत्कथामृतपायोधौ विहरन्तो महामुदः। कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ॥ ८ ॥ १२ ॥

'आराममस्य पश्यन्ति न तं पश्यति कश्चन' (बृह. उ. 4-3-14) 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ॥ नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति' इत्याद्याः श्रुतयोऽनुक्रोशन्त्यो जगदात्मनि ईश्वरे रतिमुपदिशन्तीत्याह - त्वदनुपथमिति। त्वदनुवर्तित्वात्त्वत्सेवौपयिकमिदं कुलायं कौ पृथिव्यां लीयते इति कुलायं शरीरम् आत्मसुहृत् प्रियवत् आत्मा च सुहृच्च प्रयश्च तद्वच्चरति। स्वाधीनतया वर्तते इत्यर्थः। तथापि त्वयि उन्मुखे हिते प्रिये आत्मनि च अप्यर्थे चकारः। एवम्भूते सुसेव्येऽपि त्वयि बताहो कष्टं न समन्ति न सख्यादिना भजन्ति। असदुपासनया देहाद्युपलालनेनात्महनः प्रमादिनः। कुतः यदनुशयाः यस्यां असदुपासनायामनुशयो वासना येषां ते कुशरीरभृतः सन्त उरुभये संसारे भ्रमन्ति परिवर्तन्ते। अत आत्महन इति भावः। 'त्वय्यात्मनि जगन्नाथे मन्मनो रमतामिह। कदा ममेदृशं जन्म मानुषं सम्भविष्यति' ॥ ९॥ २२॥

इदानीं 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृह.उ.2-4-5) 'इत्याद्याः श्रुतयो ध्यानमङ्गत्वेनोपदिशन्तीत्याह - निभृतेति। मरुत्प्राणो मनश्चाक्षाणीन्द्रियाणि च निभृतानि संयमितानि यैस्ते च ते दृढं योगं युञ्जन्ति ते दृढयोगयुजस्ते तथाभूता मुनयो हृदि यत्तत्त्वमुपासते तदेवारयोऽपि तव स्मरणाद्ययुः प्रापुः। स्त्रियोऽपि कामत उरगेन्द्रभोगभुजदण्डविषक्तधियः अहीन्द्रदेहसदृशयोर्भुजदण्डयोर्विषक्ता धीर्यासां ताः परिच्छिन्नदृष्टयः समदृशः सममपरिच्छिन्नं त्वां पश्यन्त्यो वयं श्रुत्यभिमानिन्यो देवता अपि ते समा एव कृपाविषयतया। अङ्घ्रिसरोजसुधाः अङ्घ्रिसरोजं सुष्ठु धयन्त्यः। अयम्भाव :- इत्थम्भूत स्तव स्मरणानुभावो, ये योगिनस्त्वां हृद्यालम्बनमुपासते, याश्च वयं त्वां समं पश्यामो, याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायन्ति ये च द्वेषेण सर्वानपि तांस्त्वामेव प्रापयतीति। 'चरणस्मरणं प्रेम्णा तव देव सुदुर्लभम्। यथाकथञ्चिन्नृहरे मम भूयादहर्निशम् ॥ १०॥ २३॥

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (तैत्ति.उ. 2-9) 'को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः। अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव' (बाष्कलमन्त्रा.उ.10) 'अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन् पूर्वमर्शत् । तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति' (ईशा.4) इत्याद्याः श्रुतयो भगवत्तत्वं दुर्ज्ञेयं वदन्त्यो भक्तिमेवोररीकृत्य स्तुवन्तीत्याह - क इह नु वेदेति। बत अहो हे भगवन्निह जगत्यग्रसरं पूर्वमेवसिद्धं त्वामवरजन्मलयोऽर्वाचीनोत्पत्तिनाशवान् को नु पुमान् वेद जानाति। ईश्वरस्य पूर्वसिद्धावन्यस्य च अर्वाचीनत्वे प्रमाणं वदन् ज्ञानकारणाभावमाह - यत उदगादिति। यतस्त्वत्त ऋषिर्ब्रह्मा उत्पन्नो यं ब्रह्माणमनु उभये आध्यात्मिकाधिदैविका देवगणा उत्पन्नास्ततोऽप्यर्वाचीनाः सर्वे। यदा तु भवान्सर्वमवकृष्योपसंहृत्य शयीत तर्हि तदा अनुशायिनां जीवानां ज्ञानसाधनं नास्ति, यतस्तदा न सत्स्थूलमाकाशादि। न चासत्सूक्ष्मं महदादि। न चोभयं सदसद्भ्यामारब्धं शरीरम्। न

च कालजवस्तन्निमित्तभूतं कालवैषम्यम्। एवं सति तत्र तदा न किमपीन्द्रियप्राणाद्यपि। न च ज्ञापकं शास्त्रमपि। अयमभिप्रायः- अर्वाक्सृष्टिगतानां देहाद्युपाधिकृतान्तराणां कालवशेन च मलिनसत्त्वानां न तावद्भगवज्ज्ञान सामर्थ्यम्. तथा च श्रुतिः - 'न तं विदाथ य इमा जजानान्यद्युष्माक मन्तरं बभूव' इत्याद्याः। यदा तु प्रलयसमये न बह्वन्तरमस्ति तदापि साधनभावान्न भगवज्ज्ञा न् सामर्थ्यम्। अतस्त्वदेक शरणतया श्रवणकीर्तनादि भक्तिरेव सुकरेति। 'क्वाहं बुद्ध्यादिसंरुद्धः क्व च भूमन्महस्तव। दीनबन्धो! दयासिन्धो! भक्तिं मे नृहरे दिश' ॥ ११ ॥ २४ ॥

इतोऽपि न ज्ञानं सुशकम्,उपदिशतामपि भ्रमबाहुल्यादित्याह - जनिमसत इति। असतो जगतो जनिमुत्पत्तिं ये वैशेषिकादयो वदन्ति। सत एव ब्रह्मतत्त्वस्योत्पत्तिं वदन्ति ये च पातञ्जलादयः। सत एवैकविंशतिप्रकारस्य दुःखस्य नाशं मृतिं मोक्षं वदन्ति ये नैयायिकाः। उतापि ये च साङ्ख्यादय आत्मनि भिदां भेदं च। ये च मीमांसका विपणं कर्मफलव्यवहारं ऋतं सत्यं स्मरन्ति वदन्ति ते सर्वे आरूपितैरारोपितैः भ्रमैरेवोपदिशन्ति न तत्त्वदृष्ट्या। 'सदेव सोम्येदमग्र आसीत्'(छान्दो.उ.6-2-1) 'ब्रह्मैव सन्ब्रह्माप्येति' (बृह.उ.4-4-6) 'अनीशया शोचति मुह्यमानः'(मुण्ड. उ. 3-1-2) 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः। जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः॥' (कठ.उ.2-5) 'एकमेवाद्वितीयं ब्रह्म (छान्दो.उ.6-2-1)' एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥'(त्रिपुर-तापि.उ.5-12) इत्यादिश्रुतिविरोधात्। किञ्च वस्तुतः पुरुषस्य त्रिगुणमयत्वे सर्वमिदं सङ्गच्छेत, नतु तदस्तीत्याह - त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयीति। त्रिगुणमयः पुमानित्यनेन हेतुना या भिदा। उपलक्षणमेतद्भिदादि। सा यस्मात्त्वयि विषये अबोधकृता त्वद्विषयाज्ञानविजृम्भिता। तर्हि किमज्ञानमस्ति, वस्तुतः पुंसि नैवेत्याह - ततः अबोधात्परत्र परेऽसङ्गेऽवबोधरसे ज्ञानघने स अबोधो न भवेन्न सम्भवतित्यर्थः'। मिथ्यातर्कसुकर्कशेरित महावादान्धकारान्तर भ्राम्यन्मन्दमतेरमन्दमहिमंस्त्वज्ज्ञानवर्त्मस्फुटम् । श्रीमन्माधव वामन त्रिनयन श्रीशङ्कर श्रीपते गोविन्देति मुदा वदन् यदुपते मुक्तः कदास्यामहम् ॥ १२॥ २५॥

---

1. B.J. °रल्प° 2. B.J °नमनु° 3. B.J. °विगा° 4. MI.V. Omit इन्द्रपदादि 5--5 MI.V.Omit 6. B.J. धारयन्त्यः 7. MI.V. °म्बोनोपा 8--8 MI.V. मतां नराणां 9. MI.V. adds

**वीर०** केचिदुभयविधमप्युपासनं विहाय केवलं त्वद्गुणामृतपानसुखिता मोक्षमपि नेच्छन्तीत्याहुः-दुरधिगमेति। दुरधिगमं दुःखेनाप्यवगन्तुमशक्यं यत् आत्मनस्तव तत्त्वं याथात्म्यं तस्य निगमाय प्रकाशनायात्ता उपात्ता तनुः रामकृष्णादिरूपा

येन तस्य तव चरितमेव महान् अमृताब्धिस्तस्मिन् परिवर्तेन अवगाहनेन परिश्रमणाः, परिरत्रवर्जने, परिविधूताः श्रमाः आध्यात्मिकादितापाः येषां ते। हे ईश्वर! ते तव चरणसरोजसम्बन्धिनो हंसा भागवताः तत्कुलसङ्गेन विसृष्टास्त्यक्ताः गृहाः गेहदेहाद्यानुरागा यैस्ते अपवर्गं मोक्षसुखमपि न परिलषन्ति न काङ्क्षन्ति ॥ २१ ॥

नृगतिं विचिन्त्येत्यनेन देहस्य भगवत्सेवोपयुक्तत्वमभिप्रेतम्। तदेव स्पष्टयन्त्यः तथैव सति तस्य साफल्यमन्यथा तु न साफल्यं, प्रत्युतानर्थहेतुत्वं चेत्याहुः - त्वदनुपथमिति। कुलायं नीडतुल्यमिदं नृशरीरम् त्वदनुपथं त्वदनुवर्ति त्वदाराधनप्रवणं चेदित्यर्थः। तर्ह्यात्मादिवच्चरति, आत्मादिभिस्तुल्यं स्यादित्यर्थः। तथाप्यसदप्युपासनया शब्दादि विषयसेवया हेतुभूतया आत्महनः आत्मघातिनः विषयसेवायाः अन्ततः स्थावरत्वापादकतया आत्मनोऽसत्प्रायतापादकत्वात्तत्सेवापरा आत्मघातिन एवेति भावः। त्वय्यहो न रमन्ते, अहो निरतिशयगुणवदिदं शरीरं प्राप्यापि त्वां न भजन्त इति खेदः, कथम्भूते? [1] यथोत्सुके यथावस्थितोत्कूलानन्दे अत एव प्रिये अत एव च हिते उन्मुख इति पाठे ईषदानुकूल्येनाप्यभिमुखीभवितुमुद्युक्त इत्यर्थः। कुतस्तान्प्रति खिध्यध्वे इत्यत आहुः - यद्यस्मादनुशयाः प्रतिजन्मभुक्तावशिष्टोत्तरोत्तर देहनिमित्त कर्मयुक्ताः उरु बहु भयं यस्मिन् तस्मिन् संसारे भ्रमन्ति। अतः ते कुशरीरभृतः कुत्सितदेहभाजः केवलं शोच्या एवेति भावः। भुक्तावशिष्टं कर्मानुशयः, स एषामस्तीत्यर्श आद्यच् ॥ २२ ॥

आस्तां त्वयि न रमन्त इति, अहो बत त्वयि द्वेषादिकमपि न कुर्युः, यतस्त्वयि विलक्षणविषये तस्यापि त्वत्प्राप्तिसाधनत्वमिति सदृष्टान्तं सोदाहरणं सोपपादनं चाहुः - निभृतेति। मरुतः प्राणाः मनश्चाक्षाणीन्द्रियाणि च निभृतानि संयमितानि मरुदादीनि यैस्ते च दृढम् अविचाल्यं योगमुपासनात्मकं युञ्जत इति तथा ते मुनयः हृदि यत्त्वत्स्वरूपमुपासते तदेवारयः शत्रवोऽपि स्मरणात् अप्रीतिपूर्वकस्मरणात् ययुः प्रापुः। तथा स्त्रियः गोप्योऽपि उरगेन्द्रस्याहीन्द्रस्य देहसदृशयोर्भुजदण्डयोर्विशेषण सक्ता धीर्यासां ताः तदेव ययुरित्यन्वयः। विषयस्य विलक्षणत्वादिति भावः। किं बहुना? वयं वेदाभिमानिनो देवा अपि अङ्घ्रिसरोजमेव सुधा तद्वद्भोग्यं येषां ते त्वच्चरणसरोजप्रकाशका वयमपीत्यर्थः। यद्वा अङ्घ्रिसरोजं सुष्ठु धयन्ति पिबन्ति अनुभवन्तीति यावत्। 'धेट्पाने' धातो रूपमिदम्। त्वयि प्रमाणतया त्वदन्तरङ्गभूता स्त्वत्स्वरूपादिप्रकाशका वयमपीत्यर्थः। ते तव समास्तुल्याः मुनिप्रभृतय इव त्वामेव विषयभूतं तात्पर्यतोऽर्थतश्च प्राप्नुम इत्यर्थः। तत्र हेतुत्वेन विशिंषन्ति समदृश इति। समा दृक् यस्य अनादृतनिम्नोन्नतभावस्य वैषम्यनैर्घृण्यादिपरिहाराय व्याजमात्रावलम्बिनस्सर्वानुजिघृक्षोस्तव सर्वेऽपि तुल्यकक्ष्या इति भावः ॥ २३ ॥

अङ्घ्रिसरोजसुधा इत्यनेन भगवत्स्वरूपस्वभावादिप्रकाशकं वेदाख्यं शास्त्रमेवेत्यभिप्रेतम्। अतस्तेन विना भगवतो दुरवगमत्वं सहेतुकमाहुः - क इहेति। अवरजन्मलयः अर्वाचीनोत्पत्तिनाशवान् इह लोके को नु पुमान् अग्रसरं सृष्टेः पूर्वभाविनं

सूक्ष्मचिदचिद्विशिष्टत्वेन कारणतयाऽवस्थितं त्वां वेद? शास्त्रेण विना न कोऽपि वेदेत्यर्थः बतेति विस्मये। 'यतो वाचोनिवर्तन्ते'(तैत्ति.उ.2-4) इत्युक्तरीत्या वाङ्मनसापरिच्छेद्यस्वरूपस्वभावं तं वेत्तुमुद्युक्तोऽविस्मीयते, सर्वेषामवरजन्मलयत्वमुपपादयन्तियतस्त्वतः ऋषिर्ब्रह्मा उदगादुद्बभूव, यमनु पश्चाच्चतुर्मुखोत्पत्त्यनन्तरमित्यर्थः। उभये निवृत्तिनिष्ठास्सनकादयः प्रवृत्तिनिष्ठाः मरीच्यादयश्च देवा उदगुः। मनुजादयस्तेभ्योऽप्यर्वाचीना इति किमु वक्तव्यमिति भावः। अग्रसरत्वमुपपादयन्ति - तर्हीति। यदा भवान् शास्त्रमपकृष्य स्वहृदये निधाय शयीत शयितवान् तर्हि तदा सृष्टेः पूर्वकाले सत्कार्यावस्थं चिद्वस्तु असत्कार्यावस्थमचिद्वस्तु उभयं मिश्ररूपं कार्यं च कालजवः कालप्रवृत्तिः सर्गादिविषया नासीत्, किं बहुना? तत्र तदा न किमप्यासीदित्यर्थः। अत्र 'नासदासीन्नोस दासीत्' (यजु.आर 2-8-9) 'एको ह वै नारयण आसीन्न ब्रह्म नेशानो नेमे द्यावापृथिवी' (म.ना.उ.1-1) इत्यादिश्रुत्यर्थो अनुसंहितः। अवरजन्मलयोऽग्रसरमिति च हेतुगर्भम्। यद्यप्यवरजन्मा पुत्रादिरग्रसरं पित्रादिकम् अयमित्थम्भूत इति जानात्येव। तथाप्यत्र भगवतो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावत्वे अवरजन्मलयानां तन्मायामोहितत्वेन तदनुग्राह्यज्ञानत्वेन च तद्वेदनाऽक्षमत्वे च तात्पर्यम्। तर्हि न सन्नचासत् इति सृष्टेः पूर्वं सच्छब्दवाच्यकार्यावस्थचिदचिन्निषेधेन नामरूपविभागानर्हकारणावस्थचिदचिद्विशिष्टस्य ब्रह्मणोऽग्रसरत्वोक्त्या सूक्ष्मचिदचिद्विशिष्ट ब्रह्मात्मकस्य सत एव द्रव्यस्य स्थूलचिदचिद्विशिष्टतारूपकार्यावस्थायोगित्वलाभात् सत्कार्यवादः फलितः ॥ २४ ॥

अथ तद्विरुद्धमसत्कार्यवादं विरुद्धवादप्रसङ्गान्मतान्तराणि चानूद्य दूषयन्ति - जनिमिति। असतो द्रव्यस्य जनिमुत्पत्तिं सत्तायोगमिति यावत्, सतश्च द्रव्यस्य पश्चान्मृतिं नाशं च ये तार्किकाः स्मरन्तीत्यसत्कार्यवादोऽनूदितः। उतेति पक्षान्तरे। आत्मनि भिदां स्थूलत्वकृशत्वमनुष्यत्वमृगत्वादिरूपां भिदां ये केचित् स्मरन्तीति चार्वाकमतानुवादः। ते हि देहमेवात्मानं मन्यन्ते। विपणं देवमनुष्ययोरन्योन्योपकार भावजनितं वाणिज्यफलतुल्यं स्वर्गादिफलम् ऋतं सत्यं ये मीमांसकाः स्मरन्तीति कर्मफलनित्यत्ववादानुवादः, न केवलं स्मरन्ति किन्तु ते तार्किकादयः आरूपितैरारोपितैर्युक्त्याभासैः उपदिशन्ति च। तमारुपितैरिति पाठे तं स्वमतसिद्धं युक्त्याभासैरुपदिशन्ति चेत्यर्थः। तथा पुमान् त्रिगुणमयः सत्त्वादिगुणत्रयप्रचुरो जीव एव न तु तदतिरिक्त ईश्वराख्य इति निरीश्वरसांख्यमतानुवादः तत्र साधारणं दूषणमाहुः - इतीत्यादिना। इति भिदा इत्थम्भूतो मतभेद इत्यर्थः। यदबोधकृता यस्य तवाबोधकृता याथात्म्याज्ञानप्रयुक्ता चिदचिद्विशिष्टत्वद्रूपस्य सत एव द्रव्यस्य जगदात्मकस्थूलावस्थारूपकार्यता योगित्वं पूर्वपूर्वसंस्थानत्यागात्मिकां मृतिमावृत्ति विधादिभिः कर्मफलस्य तारतम्यम् अत एव अनित्यत्वं ब्रह्मज्ञानफलस्य नित्यत्वं जीवासम्भावितसार्वज्ञ्यसत्यसङ्कल्पत्व करणाधिपत्वादिस्वभावं परमात्मानं देवमनुष्यादिदेहविलक्षणं प्रत्यगात्मानं चाजानतामित्थं मतभेदः प्रवृत्त इत्यर्थः। ननु बुद्धिशब्दान्तरादिभेदात् कार्यकारणयोर्भेदः। अत एवासदेव कार्यपूर्वमुत्पद्यत इति युक्तम्। किञ्च कारणमेव चेत्कार्यं, कारकव्यापारवैयर्थ्यं, सर्वस्य सर्वदा सत्त्वेन कार्यस्य नित्यानित्यविभागश्च न स्यात्। अथ कार्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेणाभिव्यज्यते। अतः कारकव्यापारार्थवत्त्वं नित्यानित्यविभागश्चोच्येत, तदसत्-

अभिव्यक्तेरभिव्यक्त्यन्त रापेक्षत्वेऽनवस्थानात्। अनपेक्षत्वे कार्यस्य नित्योपलब्धिप्रसङ्गात्। तदुत्पत्त्यभ्युपगमेऽसत्कार्यवादप्रसङ्गात्। अतोऽसतः कार्यस्योत्पत्तिहेतुत्वेनैव कारकव्यापारार्थवत्त्वम्। अतश्च सत्कार्यवादासिद्धिः। नन्वसत्कार्यवादिनोऽपि कारकव्यापारो नोपपद्यते, प्रागुत्पत्तेः कार्यस्यासत्वात्, कार्यादन्यत्र कारकव्यापारेण भवितव्यं, तत्रान्यत्वाविशेषात्तन्तुगतकारकव्यापारेण घटोत्पत्तिरपि प्रसज्येत, नैवं - यत्कार्योत्पादनशक्तं यत्कारणं तद्गतकारकव्यापारेण तत्कार्योत्पत्तिसिद्धेः। अत्रोच्यते - सत एव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धिशब्दान्तराद्युपपत्तेर्न तावन्मात्रेणासत्कार्यवादप्रसङ्गः, तत्तदवस्थस्य तस्यैव द्रव्यस्य ते ते शब्दाः तानि तानि च कार्याणीति द्रव्यस्य तत्तदवस्थतायाः कारकव्यापारायत्तत्वेन तस्यार्थवत्त्वोपपत्तिः, अभिव्यक्त्यनुबन्धीति चोद्यानि तस्या अनभ्युपगमादेव परिहृतानि, उत्पत्त्यभ्युपगमेऽपि सत्कार्यवादो न विरुध्यते। सत एवोत्पत्तेः। ननु विप्रतिषिद्धमिदमभिधीयते-पूर्वमेव सत् तदुत्पद्यते चेतीति चेत् न, द्रव्यस्योत्तरोत्तरसंस्थानयोगो हि पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः। स्वावस्थितस्य तु उत्पत्तिः, अतः सर्वावस्थस्य द्रव्यस्य सत्वात् सत्कार्यवादो न विरुध्यते, संस्थानस्यासत उत्पत्तावसत्कार्यवादप्रसङ्ग इति चेत् - असत्कार्यवादिनोऽपि उत्पत्तेरनुत्पत्तिमत्वे सत्कार्यवादप्रसङ्गः। उत्पत्तिमत्वे च अनवस्था, अस्माकं तु अवस्थानामुत्पत्तिस्थानीयानां पृथक् प्रतिपत्तिकार्ययोगानर्हत्वात् अवस्थावत एवोत्पत्त्यादिकं सर्वं निरवद्यमिति। एवं ममायं देहः, शिरसि मे दुःखं, पादे मे वेदनेत्यपरोक्षमेव देहात्मनोर्व्यतिरेकप्रतीतेः।[2] 'नित्यो नित्यानां चेतनश्चेतनानाम्' (कठ.उ.5-13) इत्यादि शास्त्राच्च तदवगतेः। 'पुमान्न देवो न नरः' इत्यादिना देवत्वादिप्रतिषेधाच्चात्मनां भिदावादोऽज्ञानमूलः। 'तद्यथेह कर्मचितो लोकः क्षीयते। एवमेवामुत्र पुण्यचितो लोकः क्षीयते। नास्त्यकृतः कृतेन' (छान्दो.उ. ८-1-6) इत्यादिश्रुतेः। 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' इत्यावृत्तिविधानाच्च कर्मफलानित्यत्वावगतेः तन्नित्यत्ववादोऽप्यज्ञानमूलः। "यस्सर्वज्ञस्सर्ववित्" (मुण्ड.उ.2-2-7) 'सत्यकामस्सत्यसङ्कल्पः' (छान्दो.उ.८-1-5) 'परास्य शक्तिर्विविधैव श्रूयते। स्वाभाविकी ज्ञानबलक्रिया च'(श्वेता.उ.6-८) 'करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वेता. उ. 6-9) इत्यादीनि बहुप्रमाणानि ईश्वरेऽवगन्तव्यानि, इत्थमेषां वादानामज्ञानमूलत्वमुक्तम्। अथ भगवज्ज्ञानवतां तादृशभ्रमाभावमाहुः - त्वयीति। ततः पूर्वप्रस्तुतसदसच्छब्दवाच्यप्रकृतिपुरुषाभ्यां परत्र परस्मिन् विलक्षण इति यावत्। अवबोधरसे ज्ञानस्वरूपे त्वयि यथावद्विज्ञाते यातीति शेषः। सः अबोधः तन्मूलो वादभेदश्च नास्तीत्यर्थः ॥ २५ ॥

---

1. B. यथोन्मुखे 2.T.W. °कर

**विज०** हे दुरवगम! आत्मतत्त्व! दुर्ज्ञेयनिजस्वरूप! चरितलक्षणमहामृताब्धेः परिवर्तनेन मथनेन परिश्रमणाः चरगतिभक्षणयोः इत्यतः त्वत्तत्त्वावगतिहेतुर्वेदश्चरितशब्देनोच्यते। स एव महासमुद्रः तस्य परिवर्तनं परिलोडनं मथनमिति यावत्। तेन परिश्रान्ता इति यतः अतो भवमध्याद्विनिश्वसिताः मुक्ताः निगमानामावपनं स्थानं निगमानां ततोऽभिव्यक्ते तत

एव फलप्रदत्वाद्विषयत्वाच्च निगमावपनं त्वां विमृश्य यज्ञादिभिः यजन्ते उपासते सजातीयविजातीयप्रत्ययानन्तरितत्वेन ध्यायन्ति। कीदृशः ? निगमविषयेषु आयतवाङ्मनसः विस्तृतवाङ्मनोव्यापारा इत्यनेन वेदेनैव विज्ञातभगवत्तत्त्वा इत्युक्तं भवति। 'न किञ्चिदभिवाञ्छन्ति यतयः सुसदाश्रयाः प्रेष्ठस्य रमणस्याप्त्यै प्रियवद्देहदृष्टयः' (विमदश्रुतिः) इत्यर्थद्योतकस्य न परिलषन्तीत्यस्यायम्भावः - ईश्वरेत्यनेन श्रुत्यन्तरमत्राप्यनुकूलं लक्षयति केचिद्यतयः किञ्चिदपवर्गलक्षणमुपासनाफलमपि न परिलषन्ति न वाञ्छन्ति। तत्र निमित्तमाह - चरणेति। चरणसरोजसेविनां हंसानां सन्न्यासिनां कुलस्य समूहस्य सङ्गेन सेवालक्षणेन विसृष्टगृहाः गृह्यन्ति त्यक्तुं न मुञ्चन्तीति गृहाः भार्यापुत्रादयो विसृष्टाः संत्यक्ता यैस्ते। अनेन सुसदाश्रया इति विवृतम् ॥ ८॥ २१ ॥

किञ्च त्वदनुपथं त्वन्मार्गानुकूलमार्गं त्वत्प्राप्त्यनुसारित्वादिदमात्मनः स्वस्य सुहृदनिमित्तबन्धुभूतं कुलायं शरीरं, प्रियवर्ज्ञिच्छरीरवञ्चरन्ति पश्यन्ति। प्रिये सर्वतः प्रियतमे आत्मनि सर्वदानकर्तरि त्वयि तथाहि ते तत्तत् प्राप्ताऽऽपत्परिहारेण उन्मुखाः अभिमुखाः। 'असुर्या नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' (ईशा.उ.3) इति श्रुतिसूचिताभिप्रायस्य न च रमन्त्यस्यायमर्थः। असदुपासनयाऽन्यथोपसनया ब्रह्माहमित्याद्युपासनया आत्महनः आत्मानं घ्नन्तो जनाः असुर्यान् सुष्ठ्वारमणरूपत्वादसुरप्राप्तत्वाच्च नित्यनिरतिशयदुःखान्निरस्तसमस्तसुखान् लोकानाप्नुवन्तीत्येतन्न च रमन्त्यहो इत्यनेन लक्ष्यते। सुखलक्षणारतिरेव नास्तीति न, किन्तु नित्यदुःखमनुभवन्ति च। अहो आश्चर्यं, अन्यथोपासकानां अनर्थपरम्परा। किञ्च सदनुशयाः यस्मिन्ननुशयो येषां ते तथा। यत्रानुशयानाः तमस्येव भ्रमन्तीत्यर्थः। कुतोऽत्राह - अभवा इति। तत उत्थाय पुनर्जन्मवर्जिताः जन्माभावेन देहाभावे दुःखभोगाभाव इति तत्राह - कुशरीरभृत इति। नित्यदुःखभोगसाधनं कुत्सितं निन्द्यं शरीरं बिभ्रतीति ॥ ९॥ २२ ॥

न केवलं भगवद्द्वेषिणामेतादृशलोकप्राप्तिः अपि तु तद्भक्तद्वेषिणामपि तल्लोकावाप्तिरिति भावेनाह- निभृतेत्यादिना। निभृतं परिपूर्णं मोक्षार्थं हृदयं ज्ञानं यस्य स निभृतमोक्षहृदयो वायुः तेन योगेन नियोगेन युजो युक्ताः नियमितास्सन्तः ये मुनयो ज्ञानिनः हृद्ययनात् हृदयं भगवन्तमुपासते तेषां मुनीनामरयो द्वेषिणोपि तदेव श्रीनारायणद्वेषिप्राप्यं तमो ययुरित्यन्वयः। 'नित्यदुःखसुसम्पूर्णं निरस्तानन्दमव्ययं तमो यान्त्यन्यथा ज्ञानद्वेषाद्वा हरिसंश्रये' (प्रमाणसंहतायाम्) हरिभक्तजने - 'निभृतो मोक्षवित्प्राणः तद्योगात्तत्प्रसादतः। जानन्ति परमं देवं नान्यथा तु कथञ्चन' (भागवत संहितायाम्) इति स्मरणात् इत्युत्तरश्लोकान्वयि। 'त्वं वेत्थ नापरस्ते स्वरूपं न नित्यवाङ्नागभोगप्रियस्य कुतो ब्रह्मा प्राप्तलोकश्च देवास्तथा प्राप्ता जनिमन्तो यतोऽस्मात्' (साङ्कृतिश्रुतिः) इति साङ्कृतिश्रुत्यर्थभूतस्यायमर्थः। हे स्मरणात्, स्वनुरागः सुष्टु अनुरागः स्नेहो यस्य स तथा तस्य सम्बुद्धिः स्वनुरागेति। स्मरणादेव अनुरक्त इत्यर्थः। यत्तव सच्चिदानन्दलक्षणं तत्ते स्वरूपं भवान् वेद नान्यो वेत्ति। अनेन त्वं वेत्थ नापरस्ते स्वरूपमिति विवृतम्। भवत्यो मत्स्वरूपं विदन्ती हीति तत्राहुः - उरगेन्द्रेति। उरसा गच्छन्तीति उरगाः तेषामिन्द्र

उरगेन्द्रः तस्य भोग एव दण्डः तस्मिन् विषक्ता धीर्यस्य स तथा तस्य ते तव अङ्घ्रिसरोजसुधामुद्दिश्य वयं नित्यवाचोपि समा समदृशः सर्वमाहात्म्यस्य वेदैरपि वक्तुमशक्यत्वादसमदृशः माहात्म्योपमितज्ञानाभावाः। वेदागम्यमाहात्म्यस्यापि वेदैरेव गम्यत्वात् समदृशः तुल्यज्ञानाः ॥ १० ॥ २३ ॥

अत इह जगति अन्यः को नु पुमान् माहात्म्यं वक्तुं वेद। अमुना नित्यवाङ्नागभोगप्रियस्य कुत इत्येतद्विवृतं को ह्यस्मान् वेदान् त्वां च ऋते अपेतजन्मलयः उत्पत्तिनाशरहितः यतस्त्वत्तः ऋषिर्ब्रह्मा उदगादुत्पन्नः। अतो जन्मादिरहितो न भवति। देवगणा अपि उक्तगुणा नेत्याहुः - ब्रह्मणोन्वनन्तरं उभये प्राप्तपदाः प्राप्यपदाश्च देवगणाः। अनेन कुतो न 'ब्रह्माप्राप्तलोकाश्च देवास्तथाप्राप्तार्जानिमन्तो यतोऽस्मात्' (साङ्कृतिश्रुतिः) इति श्रुतिर्व्याख्याता। महिम्नः सर्वशोनुक्तेः वेदाश्चसमदर्शिनः तस्यापि वेदगम्यत्वात् तथैव समदर्शिन इति वाक्यं चानुगृहीतम्। 'नासदासीन्नोसदासीत्तदानीन्नासीद्रजोनो व्योमापरो यत्। किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्' (यजु.आर.2-8-9) इत्यादिश्रुत्यर्थानुरूपस्य तर्हिन सन्न चासत इत्यस्य श्लोकस्य भावः कथ्यते। यदा भवान्प्रलये शास्त्रं अध्यापकपरम्पराप्राप्तं वेदमपकृष्य आत्मनि निधाय शयीत अध्येत्रभावे शास्त्रप्रवृत्त्यभावात् तर्हि तदा सत्स्थूलमण्डादिकं नासीत्। असत्सूक्ष्मं महदादिकं च नासीत्। उभयम् अग्निरापश्च न च कालजवः जराद्यापादक लक्षणः किं बहुना? तत्र किमपि वस्तु नासीदित्यर्थः ॥ ११ ॥ २४ ॥

हे अज! असतः सूक्ष्मरूपात् त्वत्तः सतः स्थूलरूपस्य जगतः परमेश्वरपर्यन्तं यथाक्रमं जनिं मृतिं च सर्वस्मात्परमात्मनि भिदां भेदं च विपणो व्यवहारः। त्वत्सेवालक्षणधने दत्ते सुखपदार्थलक्षणफलं देयमिति सङ्कल्पलक्षण, इत्यतः फलं लक्ष्यते विशिष्टफलापेक्षामृते ये स्मरन्ति तेषां ध्वनिं उपाविश वाचि सन्निहितत्वेन तदुक्तविद्यया ज्ञातुं शक्योऽसीत्यर्थः. तत्रेत्थम्भावमाहुः - आरुवतः वेदादिभिः स्तुवतो वायोः प्रसादात् तथा स्मरन्ति नान्यथेत्यर्थः। सर्ववेदादिरूपेण प्राणस्यारुवतः सदा प्रसादाद्ये विजानन्ति सूक्ष्मात्स्थूलजनिं क्रमाति मृतिं च सर्वजीवादेरीशस्य व्यतिरिक्ततां जानन्ति। ये निराकाङ्क्षास्तेषां वाचि जनार्दन इति सूक्ष्माणि महदादीनि स्थूलान्यण्डादिकानि च, 'उभयं त्वग्निरापश्च न किञ्चित्प्रलयोऽभवत्' (प्रकाशिकायाम्) इति वचनादस्य श्लोकस्यायमेवार्थः। न सदसद्वैलक्षण्यार्थ इति। 'सत्त्वादिकं देहमथो मनश्च सत्त्वादिबद्धं च वदन्त्यसन्तः। परं पुमांसं न सुरास्तु तैर्हि जीवाः सुदृष्टाः परमार्थरूपाः' (सुरायणश्रुतिः) इति श्रुत्यर्थोपिनिबद्धस्य त्रिगुणमय इत्यस्यायमर्थः -पुमान् जीवः त्रिगुणमयः सत्त्वादिगुणबद्ध इति जीवस्यापि त्रिगुणबद्धता अबोधकृता अज्ञानकृता यतस्तस्मादवबोधरसे त्वयीति सप्तमी षष्ठ्यर्थे ॥ १२ ॥ २५ ॥

1- -1 B. omits

सदिव मनस्त्रिवृत्त्वयि [1-]विभात्यसदामनुजा[-1] त्सदभिमृषन्त्यशेषमिदमात्मतयाऽऽत्मविदः[2] ।
न हि विकृतिं[3] त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम्[4] ॥ २६ ॥

तव परि ये चरन्त्यखिलसत्त्व[5] निकेततया [6-]त उत[-6] पदाक्रमन्त्यविगणय्य शिरोनिर्ऋतेः ।
परिवयसे पशूनिव गिराऽविबुधानपि तां स्त्वयि कृत[7] सौहृदाः खलु[8] पुनन्ति न ये[9] विमुखाः ॥ २७ ॥

[10-]त्वमकरण[-10]स्वराडखिलकारक शक्तधर स्तव बलिमुद्वहन्ति [11-]समदन्त्यजया[-11]निमिषाः ।
वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥ २८ ॥

स्थिरचरजातयस्स्युर जयोत्थ[12]निमित्तयुजो विहर[13] उदीक्षया[14] यदि परस्य विमुक्त ततः[15] ।
न हि परमस्य कश्चिदपरो न परश्च भवे द्वियत[16] इवापदस्य तव शून्यतुलां[17] दधतः ॥ २९ ॥

अपरिमिता ध्रुवास्तनुभृतो यदि [18-]सर्वगता स्तर्हि न[-18] शास्यतेति नियमो [19-]ध्रुव नेतरथा[-19] ।
[20-]अजनि च यन्मयं तदविमुच्यनियन्तृभवे[-20] त्सममनुजानतां[21] [22-]यदमतं मतदुष्टतया[-22] ॥ ३० ॥

---

1--1 M. Ma भवत्यसतामनुजादभो विमृ॰ 2. M. Ma ॰तं॰ 3. M.Ma ॰तं 4. M. Ma ॰रसितम्॰ 5. M. Ma ॰त॰ 6--6 M. Ma ननु ते 7. M.Ma दृढ 8. M.Ma ननु 9. M.Ma ते 10--10 K.T.W. त्वमकरण॰ ; M. Ma त्वमेकः 11--11 M. Ma दन्ति च ये 12. M. Ma ॰येत्व॰ 13. M.Ma विरह 14. M.Ma ॰येद्यदि 15. M.Ma सतः 16. M .Ma ॰त्रय॰ 17. M. Ma ॰ल संद॰ 18--18 M. Ma ॰ततो नहि न 19--19 ध्रुवते च तथा 20--20 M. Ma अजनपरिमुच्यतेऽत्र भवात्सततात् 21. K.T.W. ॰वि॰ 22--22 M. Ma ॰ता ततमनन्तम॰

**श्रीध०** ननु यद्यसन्नोत्पद्यते, यदि च त्रिगुणमयः पुरुषो न भवति, तर्हीदं प्रपञ्च जातं पुरुषश्च पृथङ्नास्तीत्युक्तं स्यात्। कथं तर्हि तयोः सत्वेन प्रतीतिरत आह - सदिव मन इति। मनो मनोमात्रविलसितमिदं त्रिवृत् त्रिगुणात्मकं प्रपञ्चजातमसदेव सदिव विभाति। कथमिति चेत् तत्राह - त्वयीति । त्वय्यधिष्ठाने अधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः। न केवलमिदमहङ्कारास्पदं किन्तु आमनुजात्। मनुजः पुरुषः। अभिविधावाकारः पुरुषमभिव्याप्येति। पुरुषस्यापि पृथक्सत्वप्रतीतिः मनोमात्रविलसितेत्यर्थः। तथा च श्रुतिः - 'असतोऽधिमनोऽसृजत' "मनः प्रजापतिमसृजत। प्रजापतिः प्रजा असृजत। तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किञ्च" इति। नन्वात्मविदामपि विश्वं सदेव स्फुरत्यतः कथमसत्स्यादत आह सदभिमृशन्तीति। आत्मविदस्त्वशेषमिदं भोक्तृभोग्यात्मकं विश्वमात्मतयैव सदभिमृशन्ति सदिति जानान्ति। आत्मकार्यत्वान्न पृथगित्यर्थः। तथाहि यदुपादानकं यत्कार्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति। लोकाचारेण

दर्शयति - न हि विकृतिमिति। कनकस्य विकृतिं कुण्डलादिकं कनकार्थिनो न त्यजन्ति। अत्र हेतुः - तदात्मतया कनक रूपत्वेनेत्यर्थः। अतः स्वकृतमिदं विश्वमनुप्रविष्टं च पुरुषरूपात्मतयैवावसितं निश्चितम्। '[1]यत्सत्तयाः सदाऽऽभाति जगदेतदसत्स्वतः। सदाभासमसत्यस्मिन्भगवन्तं भजाम तम्" ॥ १३॥ २६॥

ननु 'सत्यं ज्ञानमनन्तं ब्रह्म' (तैत्ति.उ.2-1-1) 'नेह नानास्ति किञ्चन' (बृह.उ.4-4-9) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (कठ.उ.4-10) इत्यादिश्रुतिभिरेवम्भूतस्य भगवतः प्रतिपादनात्तज्ज्ञानं सुकरमेवेति कृतं भक्त्या अत आह - तव परि ये चरन्तीति। तवेति कर्मणि षष्ठी। त्वां ये परिचरन्ति छन्दसि व्यवहिताश्चेति यच्छब्देन व्यवधान मदोषः। केन रूपेण? अखिल सत्त्वनिकेततया अखिलानि सत्त्वानि निकेतो यस्य स तथा तस्य भावस्तत्ता तया सर्वभूतावासतयेत्यर्थः। उत अत एव अविगणय्य तिरस्कृत्य त एव निर्ऋतेः मृत्योः शिरो मूर्धानं पदा पादेनाक्रमन्ति मृत्योर्मूर्ध्नि पदं दधति। ते तरन्ति मुच्यन्त इत्यर्थः। ये पुनर्विमुखा अभक्तास्तान् गिरा वाचा पशूनिव विबुधान् विदुषोऽपि परिवयसे बध्नासि। कुतः? त्वयि कृतसौहृदाः त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितं पुनन्ति पवित्रयन्ति। आत्मानमन्यानपीति शेषः। नेतरे। तथा च श्रुतिः - "तस्य वाक्तन्तिर्नामानि दामानि। तस्येदं वाचा तन्त्या नामाभिर्दामभिः सर्वं सितम्" इति। अयमभिप्रायः - सत्यमेवम्भूतमात्मानं श्रुतयः प्रतिपादयन्ति तत्र च यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते। तथा प्यसम्भावना विपरीतभावनातिरस्कृतत्वात् मलिनचित्तेषु परोक्षमिव भवतीति नापरोक्षसंसारभ्रम निवृत्तिसामर्थ्यम्। भगवत्परिचर्यया तु सम्यगमलचित्तानां तत्प्रसादेन लब्धापरोक्षज्ञानानामयत्नत एव करकलितो मोक्ष इति च। तथा श्रुतयः -'देहान्ते देवः परं ब्रह्म तारकं व्याचष्ट' 'यमेवैष वृणुते तेन लभ्यः' (कठ.उ.2-22) 'यस्य देवे परा भक्तिः' (श्वेता.उ.6-23) इत्यादयः। 'तपन्तु तापैः प्रपतन्तु पर्वतादटन्तु तीर्थानि पठन्तु चागमन्। यजन्तु यागैर्विनयन्तु योगैर्हरिं विना नैव मृतिं तरन्ति" ॥ १४॥ २७॥

ननु यद्यखिलसत्त्वे निकेतत्वेन भगवतः सेव्यत्वमुच्यते तर्हि तत्करणसम्बन्धात् कर्तृ भोक्तृत्वे प्रसज्येयाताम्, न वस्तुतस्तथा त्वमिति चेत् तर्हि जीवानामपि तत्तुल्यत्वमिति केन विशेषेण पुनः सेव्यसेवकत्वमिति इमामाशङ्कां परिहरन्त्यः "[3-]न तस्य कार्यं करणं च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते, स्वाभाविकीज्ञानबलक्रिया च[-3]' (श्वेता.उ.6-8) "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्रयं पुरुषं पुराणम्" (श्वेता.उ.3-19) इत्याद्याः श्रुतयः स्तुवन्तीत्याह - त्वमकरण इति। करणसम्बन्धरहित एव अखिलकारकशक्तिधरः अखिलानां प्राणिनां यानि कारकाणीन्द्रियाणि तेषां शक्तीः धारयति प्रवर्तयतीति तथा। कुतः? स्वराट् यतः स्वेनैव राजसे दीप्यसे। न हि स्वतस्सिद्धज्ञानशक्तेरिन्द्रियापेक्षेत्यर्थः। अतस्तव बलिमुद्वहन्ति पूजां कुर्वन्ति। अजयाऽविद्यया सहितास्तया वृता इत्यर्थः। अनिमिषा देवा इन्द्रादयस्तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि। यथा सस्त्रीका एव किङ्कराः स्वामिनं सेवन्ते

तथा अविद्यायुक्ता देवादयस्त्वामिति लोकोक्तिः। समदन्ति च मनुष्यैर्दत्तं हव्यकव्यादिलक्षणं बलिं भक्षयन्ति। अत्र दृष्टान्तः - वर्षभुजोऽखिलक्षितिपतेरिवेति। यथा वर्षभुजः खण्डमण्डलपतयोऽखिलक्षितिपतेर्महा मण्डलेश्वरस्य स्वप्रजादत्तबलिभुजो बलिमुद्वहन्ति तद्वदिति। कथं बलिं वदन्ति तदाह - विदधति यत्र ये त्वधिकृता भवतश्चकिता इति। त्वत्तो भीताः सन्तो यस्मिन् कर्मणि ये नियुक्तास्ते तत्तत्कुर्वन्तीति। त्वदाज्ञापालनमेव बल्युद्वहनमित्यर्थः। तथा च श्रुतिः - "भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः"। (तैत्ति.उ.1-8) इति। "अनिन्द्रियोऽपि यो देवः सर्वकारकशक्तिधृक्। सर्वज्ञः सर्वकर्ता च सर्वसेव्यं नमामि तम्" ॥ १५॥ २८॥

तदेवं करणप्रवर्तकमीश्वरं करणपरतन्त्रा नरा भजन्तीत्युक्तम्, न केवलमियदेव कारणं तत उत्पन्नत्वेनापि तत्परतन्त्रत्वात् इति वदन्ति "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे श्लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति" (बृह.उ.2-1-20) इत्याद्याः श्रुतय इत्याह- स्थिरचरजातय इति। हे विमुक्त! नित्यमुक्त! यदि तवाऽजया मायया विहरो विहारः क्रीडा भवति तदा स्थिरचरजातयः स्थिराश्च चराश्च जातयो जात्यालिङ्गिता देहा येषां ते जीवाः स्युः भवेयुः। कथम्भूतस्य ? ततोऽजातः परस्य दूरे वर्तमानस्यासङ्गस्येत्यर्थः। कथं विहारः उदीक्षया ईक्षणलेशेन । ननु मयि लीनानां जीवानां कथं जन्म स्यात्तत्राह - उत्थनिमित्तयुज इति। ईक्षयैवोत्थान्यु त्थितान्याविर्भूतानि निमित्तानि कर्माणि तद्युक्तानि लिङ्गशरीराणि वा तैर्युज्यन्त इति ते तथा। ननु किं निमित्तोत्थानेन मदिच्छयैव भवन्तु, न त्वयि वैषम्याभावाविष्टमसृष्टेरयोगादित्याह - परमस्येति। तव परमस्योत्तमस्य परमकारुणिकस्य वियत इवाकाशसदृशस्य, समस्येत्यर्थः। कश्चिदपरः स्वीयः परोऽस्वीयश्च न भवेत्। न सम्भवतीत्यर्थः। "असद्वा इदमग्र आसीत् ततो वै सदजायत" (तैत्ति.उ.2-7) इत्यादिश्रुत्या शून्य पूर्वकत्वमिव प्रतीयते तदर्थं पुनर्विशिनष्टि। शून्यतुलां दधतः शून्यसाम्यं भजतः। तदेव दर्शयितुं पुनर्विशिनष्टि - अपदस्येति। न पद्यत इत्यपदस्तस्य वाङ्मनसयोरगोचरस्येत्यर्थः। "तदीक्षणवशक्षोभमायाबोधित कर्मभिः। जातान्संसरतः खिन्नान्नृहरे पाहि नः पितः" ॥ १६ ॥ २९॥

एवं तावत्परमात्मनः सकाशात् अविद्याकृतकार्योपाधयस्तदंशा एव जीवा जाताः संसरन्तो भवन्तीत्युक्तम्। तत्र यद्येकाऽविद्या तदा सर्वजीवस्याप्येकत्वादेकमुक्तौ सर्वमुक्ति प्रसङ्गः। अथ नानाऽविद्यास्तर्हि तस्यैवांशान्तरेण संसारानपगमादनिर्मोक्ष इत्यादि वितर्कबलेन वस्तुत एव जीवाः जात्यानानात्मानस्तत्र च तेषामणुत्वे देहव्यापि चैतन्यं न स्यात्। देहपरिमाणत्वे च मध्यमपरिमाणानां सावयवत्वेनानित्यत्वं स्यात् । अतः सर्वगता नित्याश्चेति केचन मन्यन्ते। तत्र न तावदुक्तदोषप्रसङ्गः। अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्था सम्भवात्। ईश्वरस्य तु न केनाप्यंशेन

संसारशङ्केत्युक्तमेव। प्रसिद्धं चात्मैक्यं सर्वश्रुतिषु। किञ्च इमं पक्षमन्तर्यामि ब्राह्मणमपि न सहत इत्याह - अपरिमिता इति। वस्तुत एवानन्ता ध्रुवास्तेनैव रूपेण नित्याः सर्वगताश्च तनुभृतो जीवा यदि स्युः तर्हि तेषां समत्वाच्छास्यता न घटत इति कृत्वा हे ध्रुव! नियमो नियमनं त्वया न स्यात् इतरथा तु घटेत। कथम्? यन्मयमुपाधितो यद्विकारप्रायं यज्जीवाख्यमजनि जातं तत्तस्य स्वविकारस्य नियन्तृ नियामकं भवेत्। अविमुच्य कारणतयाऽपरित्यज्य। किं तत्? सममनुस्यूतम्। ननु किं यत्तच्छब्दैर्ज्ञायते चेत् उच्यतामिदं तदित्यत आह - अनुजानतां यदमतमिति। जानीम इति वदतां यदमतमविज्ञातप्रायम्। अविषयत्वात्। तथा च श्रुतिः - 'यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञात मविजानताम्' (केन.उ. 2-3) 'अवचेनेनैव प्रोवाच' सह तूष्णीं बभूव इत्यादिः। किञ्च मतस्य ज्ञातस्य दुष्टतया दोषश्रवणात्। तथा च श्रुतिः - "यदि मन्यसे सुवेदेति दह्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेषु' (केन.उ.2-1) इत्यादि। तस्माद्यत्तच्छब्दानवद्योत्यम[7-] तर्क्यं[-7] किमपि सर्वानुस्यूतत्वेन समं नियन्तृ भवेदित्यर्थः 'अन्तर्यन्ता सर्वलोकस्य गीतः श्रुत्या युक्त्या चैवमेवावसेयः। यः सर्वज्ञः सर्वशक्तिर्नृसिंहः श्रीमन्तं तं चेतसैवावलम्बे' ॥ १७ ॥ ३० ॥

---

1. B .J. सत्त्वत: 2- -2 विवदन्तु वादे: 3- -3 B. J. Omit 4. Ml.V. परिपा° 5. Ml.V. बलिवह° 6- -6 B. J. Omit 7- -7 Ml. V. "ब्दाबोध्यम°

**वीर०** किमबोधनिदानमित्यपेक्षायां मनोदोष एवेति। किं तन्निवृत्तिनिदानमित्यपेक्षायां भगवदुपासनात्मकयोग एवेति, विशुद्धान्तःकरणास्तु सर्वमिदं जगत् भगवदात्मकतया सूक्ष्म चिदचिद्विशिष्टभगवत्कार्यतया च तदन्यदेव पश्यन्तीति वदन्त्यः सत्कारणवादरूपदूषण परिहारपूर्वकमसत्कारणवादासाधारणानुपपत्तिमाहुः-**सदिवेति**। आमनुजात् मनुजपर्यन्तात् मनुष्य पर्यन्तानां देहिनामित्यर्थः। त्रिवृत् त्रिगुणात्मकं मनस्सदिव सत्त्वमर्थक्रियाकारित्वं कार्यकरमिव प्रतीयमानमपि त्वय्यसद्भाति कार्यकरं न भवति। चिदचिदात्मक जगद्विशिष्टं तदात्मानं त्वां न प्रकाशयतीत्यर्थः। आत्मानं त्वां विदन्त्युपासत इत्यात्मविदः त्वदुपासनात्मक योगपरिशुद्धान्तःकरणास्तु अशेषं कृत्स्नमिदं जगत् आत्मतया आत्मशब्दः परमात्मपरः 'अजयाऽऽत्मना च चरतः' इत्युक्तप्रकारेण सदभिमृशन्ति, सच्छब्दवाच्यसूक्ष्मचिदचिद्विशिष्टं कारणं ब्रह्मैव कार्यजगद्रूपेणावस्थितम्। अतः ततोऽनन्य दित्येवमुपास्य परब्रह्मविशेषणतया उपास्य कोट्यन्तर्गतत्वाज्जगदुपादेयमेव पश्यन्तीत्यर्थः। ब्रह्मात्मकत्वेन जगतो हेयत्वाभावे दृष्टान्तमाहुः नहीति। कनकस्य विकृतिं विकारं कटक मकुटादिकं न हि त्यजन्ति। किन्तु तदात्मतया प्रकृतिभूतकनकानन्यतया उपाददत एवेति शेषः। कार्यावस्थायामपि कनकाव्यतिरेकादिति भावः। यदि कार्यं कारणादन्यत्, तदा कनकस्य विकृतिं त्यजेयुरित्यसत्कार्यवादेऽनुपपत्तिरभिसंहिता। एवं जगदुपादेयमेवेत्याहुः

- स्वकृतमिति। स्वरूपपरिणामशङ्काव्यावृत्त्यर्थमनु प्रवेशोक्तिः। अनेन स्वपक्षे दूषणोद्धारः, स्वशब्दः परमात्मपरः, स्वकृतं जगत् तेन परमात्मना अनुप्रविष्टं व्याप्तम्। 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तैत्ति.उ.2-6) इति हि श्रुतिः। अत इदं जगदात्मतया अवसितम् उपास्य परमात्मशब्दवाच्यवस्त्वन्तर्गततया सुखरूपं निश्चितमित्यर्थः। 'तदात्मानं स्वयमकुरुता' (तैत्ति.उ.2-7) यद्वै तत्सुकृतम्। "रसो वै रसः" (तैत्ति.उ.2-7) इति हि श्रुतिः। यद्वा आत्मतया अन्तः प्रविश्य धारकतया अन्तः प्रविश्य धारकत्वं ह्यात्मशब्दार्थः। तेन अवसितं व्याप्तम्। अनेन आकाशादिवन्न तूष्णीं व्याप्तिः। किन्तु धारकतयेत्युक्तम्। अनेनेदं सदभिमृशन्तीत्युक्तं सामानाधिकरण्यं शरीरात्मभाव निबन्धनमिति फलितम् ॥ २६ ॥

नन्विदमात्मविदस्सदभिमृशन्तु, ततः किमत आहुः - **तवेति**। इत्थमिदं सदभिमृशन्त एव मृत्युं तरन्तीति भावः। तथाहि - अखिलसत्त्वानां सर्वेषां जन्तूनां निकेततया धारकतया ये तव परिचरन्ति अखिलान्तरात्मत्वेन त्वां सेवन्ते उपासत इति यावत् त उत त एव निर्ऋतेः मृत्योः शिरो मूर्धानमविगणय्य अनादृत्य पदा पादेन आक्रामन्ति मृत्योर्मूर्ध्नि पदं दधति ततो मुच्यन्त इत्यर्थः। तर्हि इत्थमनभिमृशतां का गतिरित्यत आहुः - परिवयस इति। अविबुधानिति च्छेदः, अविदुषः सार्वात्म्य ब्रह्मोपासनरहितान् गिरा शास्त्रात्मकसम्यगुपदेशेन परिवयसे अय पय इत्यादिदण्डकपठितस्य वयतेः' वी गति व्याप्ति' इत्यस्य ण्यन्तस्य वा इदं रूपम्। अस्य गत्यर्थकस्य ज्ञानार्थकत्वात् बोधयसीत्यर्थः। यद्वा - परिवयसे गमयसि सन्मार्गं नयसीत्यर्थः। पशूनिव यथा दुर्दमान् पशून् नासिकासूत्रादिभिः सम्यक् शिक्षयन्ति, तद्वत्, शास्त्रात् त्वामित्थम्भूतं ज्ञात्वा क्रमेणोपासीना मुच्यन्त इति भावः। परिवयस इति लण्मध्यमपुरुषेण निरतिशयकृपावत्त्वं सर्वानुजिघृक्षुत्त्वं च सूचितम्। तर्हि शास्त्रानधिकारिणां का गति रित्यत आहुः - तानिति। ये त्वयि न विमुखाः वैमुख्यरहिताः अत एव कृतं सौहृदं यैस्ते त्वद्भक्ताः तानज्ञान् शास्त्राधिकाररहितानपि पुनन्ति खलु, भागवतसेवया तेऽपि मुच्यन्त इति भावः। येषां सत्सेवाऽपि न रोचते, तेषामधोगतिरेवेति तात्पर्यम् ॥२७॥

ननु सर्वकारणत्वान्मदनन्यत्वेन अभिमृशन्त एव मृत्योश्शिरः पादेनाक्रमन्तीति सत्यं, यदि कारणत्वोपास्य त्वनियतसार्वज्ञ्यसर्वशक्तित्व परत्वादि गुणपौष्कल्यं स्यादित्यपेक्षायां तत्पौष्कल्य माहुः - त्वामिति। अरं शीघ्रं सङ्कल्पमात्रेण करोतीत्यरकरः सङ्कल्पमात्रपरिक्लृप्त विश्वः जगत्सर्गोपादकसङ्कल्पात्मकज्ञानाश्रय इति यावत्। अनेन सार्वज्ञ्यं फलितम्। त्वमकरण इति पाठान्तरम्। तदा करणायत्त ज्ञानरहितः 'पश्यत्यचक्षुस्सशृणोत्यकर्णः' (श्वेता.उ.3-19) "न तस्य कार्यं करणं च विद्यते" (श्वेता.उ.6-8) इति हि श्रुतिः। कार्यं शरीरं करणमिन्द्रियं च न विद्यते, प्राकृत शरीरेन्द्रियतदायत्तज्ञानरहितः नित्यनिरूपाधिक सार्वज्ञ्याश्रय इति तदर्थः। सार्वज्ञ्यस्य निरुपाधिकत्वस्फोरणाय स्वराडित्युक्तम्। स्वराट् स्वतन्त्रः अकर्मवश्यः कर्मवश्यानां प्रेरकश्च स्वातन्त्र्यस्य सप्रतियोगिकत्वात्, अखिलकारकशक्तिधरः निमित्तोपादानकारणसम्प्रदानापादानाधिकरणाद्यात्मकानि

कारकाणि तच्छक्तीश्च धरतीति तथा सकलकारक तच्छक्तिनिर्वाहक इत्यर्थः। अथ परत्वमाहुः - तवेत्यादिना। अजया अजाशब्दाभिधया प्रकृत्या सहिता इति शेषः। प्रकृति परतन्त्राः अनिमिषा देवाः वायुसूर्याग्नीन्द्रादयः विश्वसृजः प्रजापतयश्च ये ये यत्र यत्र व्यापारे अधिकृतास्ते सर्वे भवतश्चकिताः भीतास्सन्तः तव बलिं स्वस्वाधिकारानुवर्तनात्मिकां पूजाम् उद्वहन्ति विदधति, समदन्ति त्वया दत्तान् भोगाननुभवन्ति च। यथा वर्षभुजो भारतादिवर्षभोक्तारः अखिलक्षितिपतेस्सार्वभौमस्य बलिं विदधति, तद्वत्। अत्र 'भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः (तैत्ति.उ.1-8) इति। "भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" (तैत्ति.उ.1-8) "यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति" (कठ.उ.6-2) इति श्रुत्यर्थोऽनुसन्धेयः। प्राणशब्दनिर्दिष्टे परमात्मनि स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्सञ्जातमहाभयनिमित्तमेजनं कम्पनमस्ति। तच्छासनाति वृत्तौ किं भविष्यतीति महतो भयाद्वज्रादिवोद्यतात् कृत्स्नं जगत्कम्पत इति तदर्थः। महद्भयं वज्रमुद्यतमिति पञ्चम्यर्थे प्रथमा ॥ २८ ॥

इत्थं कल्याणगुणपौष्कल्यमुक्तं तर्हि किं हेया अपि गुणास्सन्तीत्यपेक्षायां ते न सन्तीति वदन्त्यः कथमवर्जनीयप्रकृतिसम्बन्ध निवृत्तिरित्यपेक्षायां हेय प्रत्यनीकभगवत्कटाक्षादेवेत्याहुः - **स्थिरेति**। स्थावरजङ्गम संस्थानास्सर्वे प्राणिनः अजयोत्थनिमित्तयुजः प्रकृतिकार्यदुःखनिमित्तशरीरयुक्तास्स्युः सर्वेषामजासम्बन्धोऽवर्जनीय इति भावः। ततस्तत्र केषाञ्चिदेवम्भूतानां विरहो यदि कदाचित्प्रकृतिमोक्षस्सम्भवति चेत् परस्य तव उदीक्षया कटाक्षादेव मोक्षः स्यादित्यर्थः। उपायनिष्पत्तिस्त्वत्कटाक्षमूलैवेति भावः। नन्ववर्जनीय प्रकृतिसम्बन्धेषु कांश्चित्ततस्त्याजयन्नहं किं वैषम्यनैर्घृण्यादिहेयगुण इत्यतस्सम्बोधयन्ति - विमुक्तेति। हेयाद्विशेषेण मुक्त हेयप्रतिभटेत्यर्थः। एतदेव विशदीकुर्वन्ति - न हीति। परमस्य परः उत्कृष्टः कारुणिकः मा न विद्यते यस्मात् तस्य परमकारुणिकस्य तव कश्चिदपरः करुणाविषयः परस्तदविषयश्च नास्ति सर्वात्मनां शरीरभूतत्वादरक्षणीयो नास्ति, अतस्सर्वरक्षकस्त्वम् अतो न वैषम्यादि हेय सम्भावनाऽपि। तथापि व्याजमात्रावलम्बित्वान्न सर्वान् रूपमोचयसीति भावः। न केवलं वैषम्यनैर्घृण्यरूपहेयाभाव एव, अपि तु सर्वे हेयगुणा न सन्तीत्यभिप्रायेण सदृष्टान्तं विशिंषन्ति - वियत इत्यादिना। वियत इव आकाशस्येव अपदस्यास्थानस्य हेयानाश्रयस्य यथा सर्वत्र व्याप्य स्थितस्याप्याकाशस्य व्याप्यगतदोषानाश्रयत्वं, तद्वद्धेयानाश्रयस्योत्यर्थः। अत एव शून्यतुलां शून्योपमां दधतः सर्वव्यापिनोऽपि व्याप्यगतदोषस्पर्शाभावेनाविद्यमानतुलस्येत्यर्थः। विहर उदीक्षयेति पाठान्तरम्। तदाऽयमर्थः। ननु यद्यहमकरणः तर्हि जगत्स्रष्टृत्वाद्यनुपपत्तिः, स्वराजो जगद्व्यापारानुपपत्तिश्च। सकरणानां कर्मवश्यानां चैव कर्तृत्वव्यापारवत्त्वादि दर्शनादित्यत आहुः - स्थिरेति। यदि यदा विहरः विहारः, चिक्रीडिषोदेतीत्यर्थः। तदा परस्य प्रकृतिपुरुषाभ्यां विलक्षणस्य तव उदीक्षया 'बहु स्याम्' (तैत्ति.उ.2-6) इत्युक्त सङ्कल्पमात्रेणैव अजायाः

प्रकृतेस्सकाशादुत्थान्युदितानि तैर्युज्यन्त इति तथा। स्थिरचरजातयः स्थावरजङ्गमसंस्थानास्सर्वे प्राणिनस्स्युः उदीक्षयेत्यनेन कारणायत्तकर्तृत्व व्युदासः, विहर इत्यनेन कर्मायत्तव्यापारवत्त्वव्युदासः। अत एव जगत्सर्गरूप व्यापारस्य जीवव्यापारवत्सुखदुःखनिमित्तार्थत्त्वव्युदासश्च फलितः। तत्र हेतुत्वेन सम्बोधयन्ति विमुक्तेति। अस्य यथोक्त एवार्थः। जीवानां तु असर्वज्ञत्वासर्वशक्तित्वासत्यसङ्कल्पत्वादिहेयास्पदत्वान्न सङ्कल्पमात्रेण घटादि कर्तृत्वमिति भावः। कस्तर्हि ममोदीक्षितेत्यत आहुः - ततः यत एवं ततः परमस्य सर्वोत्कृष्टस्य परः पूर्वभावी उदीक्षिता नास्ति। परमकारणत्वादिति भावः। अत एव अपरः आकार्यभूतः कश्चिदपि नास्ति। सर्वस्य त्वदात्मकत्वादिति भावः। यद्वा अपरः अन्यः अशरीरभूतः कश्चिदपि नास्ति, सर्वस्य त्वदात्मकत्वादिति भावः। तर्हि व्याप्यगतदोषप्रसक्तिरित्यतस्सदृष्टान्तं विशिंषन्ति-वियत इवेत्यादि। यथोक्त एवार्थः ॥ २९ ॥

"स्थिरचरजातयस्स्युः इत्यनेन चराचरात्मक स्थूलसूक्ष्मशरीरान्तः प्रवेशयोग्यं जीवानां स्वाभाविकमणुस्वरूपत्वं सूचितं, तद्विरुद्धं जीवस्वरूप विभुत्ववादं दूषयन्ति - अपरिमिता इति। हे ध्रुव ! तनुभृतो जीवाः अपरिमिता असङ्ख्येयाः ध्रुवाः नित्याश्च ते यदि सर्वगताः, तर्हि न शास्यता, सर्वेषां तुल्यत्वात्परमात्मना जीवान्तरेण वा शास्यता नियाम्यता नोपपद्यते, इतीत्थं नियमः उत्क्रान्तिगत्यादिविषयः नित्यं श्रूयमाणो नोपपद्यते, उत्क्रान्तिस्तावच्छ्रूयते - 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' (बृह.उ.6-4-2) इति। गतिरपि 'ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छान्ति' (कौषि.उ. 1-2) इति। आगतिरपि 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' (बृह.उ. 4-4-6) इति। इतरथा अणुत्वे तु शास्यतानियमादय उपपद्यन्त इत्यर्थः। यद्यपि शरीरवियोगरूप त्वेनोत्क्रान्तिशरीरस्थितस्याप्यात्मनः कथञ्चिदुपपद्यते। गत्यागती तु न कथञ्चिदुपपद्येते। अतस्ते स्वात्मनैव सम्पाद्ये इत्यभिप्रायेण नियमशब्दः प्रयुक्तः। तथा च शारीरकं सूत्रं 'स्वात्मना चोत्तरयोः' (ब्र.सू.2-3-20) इति। चशब्दोऽवधारणे। तनुभृत इत्यनेन सर्वेषां सर्व शरीरसम्बन्धाविशेषा त्सर्वशरीरानुचरपुण्यपापानां सर्वसाधारणत्वेन व्यवस्थितफलदानायोगाच्छासनं नोपपद्यत इत्यात्मविभुत्ववादेऽनुपपत्तिरुद्घाटिता। अपरिमिता इत्यनेन जीवैक्यवादव्युदासः। तत्र बन्धमोक्षशिष्याचार्य ज्ञत्वाज्ञत्वादि व्यवस्थानुपपत्तिः दूषणमभिप्रेतम्। नन्वणुत्वपक्षेऽपि जीवानां परमात्मशास्यत्ता किं भृत्यानां राजशास्यतेवेत्यपेक्षायामन्तः प्रविश्यैवेत्याह - अजनि चेति। यन्मयमजनि व्यापकेन येन प्रचुरं जगदजनि जातं तद्ब्रह्म अविमुच्य अन्तस्स्थित्वैव नियन्तृ इति सम्यगजानतां यन्मतं तस्य मतस्य दुष्टत्वात् अमतम् अनभिमतं प्रामाणिकानामिति शेषः। सममनुजानताम् इति पाठान्तरम्। तदा समशब्दः सर्वपर्यायः समं सर्वं तत् जगत् अविमुच्य अन्तस्स्थित्वैव नियन्तृ इत्यनुजानतां प्रामाणिकानां यदमतमनभिमतं तदनादरणीयमित्य ध्याहारः। कुतः ? तस्य मतस्य दुष्टतया प्रमाणविरुद्धतयेत्यर्थः। जगदजनीति प्रकृतिपुरुषात्मक जगत उत्पत्तिः उक्ता ॥३०॥

**विज०** त्रिवृत् त्रिगुणात्मकं मनः त्वयि तवापि सदिव विद्यत इत्यर्थः। असतां पक्षो भवति न तु सतां - 'सतां पक्षस्त्वयम्' इत्याहुः मनुजादय इति। आत्मविदः सम्यक् परमात्मतत्त्वज्ञानिनः मनुजानामादयो देवाः। भवतः त्रिगुणातीतत्वाद्भवानेव परमानन्दः त्वदन्यदिदमशेषं जीवजातम् आर्ततया स्थितमित्येव विमृशन्ति जानन्ति।

त्रैगुण्यदेहेन्द्रियकमासुरा जानते हरिम्। 'त्रिगुणातीतमीशेशमतः पूर्णसुखंसुराः। जानन्ति गुणबुद्धत्वात् जीवानार्तांश्च कृत्स्नशः। अनार्तस्य प्रसादेन तेषामार्तिविनाशनम्' इति चैतन्यविवेके। 'सर्वगं ये प्रपश्यन्ति ब्रह्मानन्दमजक्षरम्। एकमेवाद्वयं नित्यं निर्ऋते स्ते शिरोगताः'(सौकरायनश्रुतिः) इति श्रुत्यर्थेन प्रथितस्य न हि विकृतमित्यस्य श्लोकस्यायम्भावः - यथा कनकस्य विकृतिं विविधकृतं कुण्डलादि रूपं कनकं विना परित्यक्तुं न शक्यते। नेदं कनकं सर्वमिति । तत्र हेतुः - तदात्मतयेति। कनकस्वरूपत्वेन प्रमाणसिद्धत्वात् तथा स्वकृतमिदं जगदनुप्रविष्टो भवान् मूलरूपं विना परित्यक्तुं न शक्यः। तत्र हेतुरात्मतयेति। एकस्वरूपत्वात् कीदृशं जगत्प्रविष्टः रसितं लसितं, आत्मना प्रकाशितं जगत्प्रविष्टः तस्मात्सर्वगतो विष्णुरिति ज्ञातव्य इति तात्पर्यार्थः ॥ १३ ॥ २६ ॥

एवं विधज्ञानेन किं प्रयोजनं तदह - **तवेति**। ये तव अखिलतत्त्वानि सर्वपदार्थाः अधिष्ठानतया निकेतानि अधिष्टानतया आश्रयो यस्य स तथा तस्य भावः तत् ता तया, स्वरूपं ज्ञात्वा परिचरन्ति पूजयान्ति। यद्वा अखिलतत्त्वानां निकेततया ते ज्ञानिनः ऋतात्मकब्रह्मप्राप्तिविरुद्धत्वान्निर्ऋताख्यस्य संसारस्य शिरः स्फुटं पदाक्रमन्ति। ननु किं कृत्वा? अविगणय्य संसारमितिशेषः। आचार्यैरत्र या याः श्रुतयोऽध्येतृपरम्परासिद्धाः तास्ता एवोदाह्रियन्ते न त्वन्याः लोकप्रत्ययार्थं तत्र श्रुत्युक्ताधिकार्थे पुराणानि चोपात्तानि। 'यथैव कुण्डलं त्यक्त्वा नादातुं कनकांशकं, तस्यैव तदवस्थत्वात् केवलाभेदतः स्फुटम्। एवं सुरासुरनरेष्वास्थितो भगवान् हरिः। नैव भेदेन मन्तव्यो जीवभेदे तु सत्यपि। ये तथाभिन्नंमीशेशं पश्यन्ति परमर्षयः। ऋतप्राप्ति विरुद्धत्वात्संसारनिऋतेः शिरः 'अगणय्य पदाक्रम्य वैष्णवं निलियं ययुः' इति गारुडे। परिवयस इति श्लोकस्यायम्भावः - ये ते देवाः त्वत्पादैकाश्रयाः तान्विबुधानपि गिरा वैदिकवाचा परिवयसे परितो बध्नासि। वेदोक्त कर्मानुष्ठानेन प्रवर्तयस इत्यर्थः। वय बन्धन इति धातोः कानिव दाम्ना पशूनिव त्वयि दृढसौहृदाः गाढबद्धस्नेहपाशाः पुरुषाः पुनन्ति। ननु जगदिति शेषः। ते तव विमुखाः द्वेषिणो न पुनन्ति प्रत्युतमलीमसं कुर्वन्तीति शेषः। अनेन - 'वयति, गा इव यः सुरादिकांस्तन्मनसो जगदपुनन् शुचयो न परे' (आरुणिश्रुतिः) इति विवृतम् ॥ १४ ॥ २८ ॥

कुतः? शुद्धिरपि त्वन्नियतेत्यत्राहुः **त्वमिति**। अखिलकारकशक्तिधरः त्वमेक एव नान्यः। कुतः? स्वराट् चक्रवर्ती अस्मत्स्वामी किमस्मानाज्ञापयसीति प्रतीक्ष्य सर्वदा विवृतनयनत्वात् ये अनिमिषाः देवाः ते तव बलिमुद्वहन्ति मनुजैः दीयमानं सम्यगदन्ति च। अनेन - "स एक ईशः परिपूर्णशक्तिः बलिहरा इतरे स्युः सुराः सुखिनः" (आरुणि श्रुतिः) इत्येतत् व्याख्यातम्। "समभेदे समीचीने सुष्ठु पूजा सुखेषु सु"(वैज.को. 8-7-8) इति यादवः। तत्र तत्र पुराणवाक्योदाहरणेनै तच्छ्रुत्यर्थत्वेन श्लोको ग्रथित इति निश्चीयते। सा श्रुतिरपि प्रमाणी क्रियते। वर्षभुज इत्यस्य श्लोकस्यायम्भावः - ये यत्र यस्मिन्पदे त्वधिकृताः अधिकारं प्राप्ताः विश्वसृजस्ते भवतश्चकिताः भीताः तत्र स्थित्वा भवतो विदधति बलिमिति शेषः। कस्मै? के इव वर्षभुजः खण्डेशाः अखिलक्षितिपतेः चक्रवर्तिन इव ॥ १५ ॥ २८ ॥

यदि पुरुषो विमुक्तास्सन्तो यस्मात् सविमुक्तस्सन् तस्य विमुक्तसतः परस्य सकाशात् विरहे मुक्तौ उदीक्षयेत्। परमात्मन एव मुक्तिरिति पश्येत्। "तमेवं विद्वानमृत इह भवति। नान्यः पन्थाऽयनाय विद्यते' (पु.सू.1-7) इति श्रुतेः। हे अज! तर्हि ये स्थिरचरजातयः स्थिरत्वं चरत्वं च जातिर्येषां ते तथा ते अनिमित्तयुजः स्युः। अः परमात्मानिमित्तं युक् योगो संसारस्य येषां ते तथा भगवन्नियोगदेव संसारभाज इत्यर्थः। मुक्तेस्तन्नियतत्त्वात्। बन्धोपि तदधीन इति भावः। 'खण्डाधीशाः सार्वभौमस्य यद्वद्ब्रह्मेशाद्याः कुर्वते तेऽनुशास्तिं। त्वं मक्तिदो बन्धदोऽतोमतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णोः' इति शाण्डिल्यश्रुतेः। 'आत्मानं मुक्तिदं विष्णुं यदि पुंस उदीक्षयेत्। सुप्रसन्नस्तथा बन्धस्तत एवेति सेत्स्यति' (ब्राह्मे) इति स्मृत्यनुगृहीतश्लोकस्यार्थमनुवदतीति। न हि परमस्येति श्लोकस्यायम्भावः - अनात्प्राणात् परस्योत्तमस्य सर्वं सन्दधतः यस्य परमस्य ते तव काश्चिदपरः स्वतन्त्रो न भवेत्। हे शून्यतुल! समानवर्जित! यस्य अत्र जीवसमुदाये व्ययतः सर्वं जानतः सर्वज्ञस्येत्यर्थः। अय गताविति धातोः गत्यर्थानां ज्ञानार्थत्वात्। इव यथा प्राणस्य नापरः स्वतन्त्रा [1-]तद्वत्प्राणश्रीरन्यो वा त्वां विना स्वतन्त्रो[-1] नास्ति। त्वमेव स्वतन्त्रः ॥ २६॥ २९॥

हे सर्वपूर्ण! यदि ततः तस्मात् प्राणात्तनुभृतो जीवाः ध्रुवाः प्राणाधीनाः जीवाः कियन्तः सन्तीत्यर्थः। तर्हि सत्यम्। ते अपरिमिताः असंख्याताः। नन्वेवं चेत् 'एकमेवाद्वितीयम्' (छन्दो.उ.6-2-1) इत्यादि श्रुतिवाक्यविरोध इति तत्राह - न हीति। श्रुतेरयं नियमोऽर्थो जीवानां शास्यता अधीनता नेत्यत्रार्थे न हि किन्तु स्वगतभेदस्य ईश्वरान्तरस्य तत्तन्त्रस्य च निषेधो नियमः। तत्र किं प्रमाणमत्राह - ब्रुवत इति। अतोऽन्यदार्तं 'नेह नानास्ति किञ्चन'। (बृह.उ.4-4-9) न तत्समश्चाभ्यधिकश्च दृश्यते'। (श्वेता.उ.6-8) इत्यादि श्रुतिस्मृतयः तथा ब्रुवते च। तव स्वतन्त्रो नापरो यद्वदत्रप्राणान्नान्यस्तुल्यशून्यस्य सन्धिन् प्राणाधीना अमिता जीवसङ्घाः 'प्राणोवशे ते प्रकृतिश्च भूमन्' (महाशालीन श्रुतिः) इति श्रुतिरनेन गृहीता। 'स्वतन्त्रो नापरः कश्चिद्विष्णोः प्राणपतेः प्रभोः' (तन्त्रभागवते) इत्यादि स्मृतेः। श्रुतिरपि सत्यार्थेत्यर्थः। "मुच्यते तत्त्वसम्बुद्धा दाचार्यत्पुरुषो भवात् एतावेव स्वतोऽबुद्धौ परमः प्रकृतिस्तथा"। (वामने) इति कलापश्रुत्यर्थतया 'देशतः कालतश्चैव समव्याप्तावजावुभौ। ताभ्यामुभययोगाभ्यां जायन्ते पुरुषाः परे' (कौटरव्यश्रुतिः) इति कौटरव्यश्रुत्यर्थतया च ग्रथितस्य अजन परिमुच्यते इत्यस्यायम्भावः - हे अजन! लोकविलक्षण! जन्मरहितेति वा। समं एकप्रकारतया ततं व्याप्तम्। अनन्त मदुष्टतया निर्दोषत्वेन अनुजानता सम्यक् ज्ञानावताचार्येण उपदिष्टमार्गेण। अत्र जगति ज्ञानवान् पुरुषः सततात्सन्ततमज्ञानकल्पिताद्भवात् संसारात् परिमुच्यते सम्यक् मुक्तो भवति ॥ २८॥ ३०॥

---

1- -1B. Omits.

**न घटत उद्भवः प्रकृति पूरुषयोर जयो रुभय युजा[1] भवन्त्यसुभृतो जलबुद्बुदवत् ।**
**त्वयि त इमे ततो विवि[2]धनामगु[3]णैः परमे[4] सरित इवार्णवे मधुनि लिल्युरशेषरसाः ।। ३१ ।।**

**नृषु तव मायया [5-]भ्रमममीष्ववगत्य भृ[-5]शंत्वयि सुधि[6-]योऽभवे दधति भावमनुप्रभवम्[-6] ।**
**कथमनुवर्[7]ततां भवभयं तव य[8]द्भ्रुकुटिः सृजति [9-]मुहुस्त्रिणेमिरभवच्छरणेषु भयम्[-9] ।। ३२ ।।**

**विजितहृषीकवायुभिरदान्तमनस्तुरङ्गं य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।**
**व्यसन शतान्विता स्स[10]मपहाय गुरोश्चरणं वणिज [11-]इवविशन्[-11]त्यकृतकर्णधरा जलधौ ।। ३३ ।।**

**स्वजनसुतात्मदार धनधामधरासुरथै स्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।**
**इति सदजानतां मिथुनतो रतये चरतां सुखयति कोन्विह स्व[12]विहते स्वनिरस्तभगे ।। ३४ ।।**

**भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा स्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रि जलाः ।**
**दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ।। ३५ ।**

**सत इदमुत्थितं सदिति चेन्न तु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।**
**व्यवहृतये विकल्प इषितोऽन्धपरम्परया भ्रमयति भारतीत ऊरुवृत्तिभिरुक्थजडान् ।। ३६ ।।**

---

1. M. Ma °जो: 2. M. Ma °बु° 3. M. Ma °णा:° 4. M. Ma अमृत 5--5 M. Ma स्वगतया कुशलं 6--6 M. Ma °योऽङ्गभेद मनुधातु मनुप्रभवः। 7. M. Ma °र्तिनां 8. M. Ma भ्रुकुटी 9--9 M. Ma मुहुः नृणाम्। अत्र विजयध्वजानुसारि पाठः 33 तम श्लोकादारभ्य 36 श्लोक पर्यन्तं एवं विधा व्यत्यस्ता दृस्यते - इहभवञ्चरणेषु सुजातभुर्वोजितहृषीक वायुभि रुदात्तमहत्तुरगैः। य इहं यतंत्यनतिलोलमुपायविदो व्यसनशताब्धि तारमपहायगुरोश्चरणम्॥ वणिज इवोच्छ्वसंत्यकृतकर्णधरा जलधौ स्वजन सुतात्मदारधनधामधराः। सुखशान्ति मतित्वयिहि सन्ति न तानि नृणां विभव उद्यतिश्रयत आत्मनिसर्वरसे॥ इति सदजानतां मिथुनतोरतयेचरतां सुखयतिकोन्विहाद्यविजनेस्वनिरस्तभणे। भुविपुण्यतीर्थसदनाह्यृषयोनिविशंत्यतस्त्वानु भवतः पदाम्बुजं हृदाघभिदं दधति। सकृन्मनस्त्वयिचिदात्मनि नित्यरवेन पुनरुपासते पुरुषसारहरावसथम्॥ इदमप्यथो वदन्ति चेन्ननुतर्काव्यभिचरन्ति क्वचिन्मृषाच। ततोभयहग्व्यवहितये विकल्प उषितोन्वहमन्ध परम्परया भ्रमति भारती च तवोरुवृत्तिभिरन्दजवा॥ 10. B. G. J. °मव° ;Ml.V. °मुप° 11--11 °वाज सन्त्य° 12. K. °पिहि°

**श्रीध०** ननु यदि च परमात्मनो जीवा जायन्त इति नियन्तृनियम्यभाव उच्यते तथा सति जीवानामनित्यत्वप्रसङ्गेन प्रतिदिनं कृतनाशाकृताभ्यागमप्रसङ्गः स्यात्। किञ्च तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात्। न चैतद्युक्तम्।

स्वप्रकाशानन्दात्मनोऽविद्याकृतानर्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमादित्याशङ्क्योपाधि जन्मनैव जीवानां जन्मोच्यते न स्वतः अघटनादित्याह - **न घटत** इति। तत्र किं प्रकृतेर्जीव रूपेणोद्भवः स्यात् पुरुषस्य वा उभयोर्वा। आद्ये जीवानां जडत्वापत्तिः। द्वितीये पुरुषस्य विकारित्वप्रसङ्गः। अत एव तृतीय इत्याशयेनोक्तं प्रकृतिपुरुषयोरुद्भवो न घटत इति श्रुत्याऽजत्वप्रतिपादनादपीत्याह - अजयोरिति। तथा च श्रुतिः- 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (म.ना.उ.8-4) इति। उभययुजा तु भवन्ति, उभयं च तद्युज्यत इति युक् सम्बद्धम्। परस्पराध्यस्तमिति यावत्। तेनासुभृतः प्राणाद्युपाधयो जीवा जायन्त इत्यर्थः।[1-] तत्र च प्रकृति पारतन्त्र्यापारतन्त्र्याभ्यां जीवेश्वरविभागः[-1] जलबुद्बुदवदिति। यथा केवलेन जलेनानिलेन वा जलबुद्बुदा[2] न भवन्ति, किन्तु मिलिताभ्यां तद्वत्। तत्र यथाऽनिलो निमित्तं जल मुपादानमेवमत्रापि प्रकृतिर्निमित्तं पुरुष उपादानम्। 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तैत्ति.उ. 2-1) 'सोऽकामयत बहु स्यां प्रजायेय' (छान्दो.उ.6-2-3) इति। "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मदात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानो व्युच्चरन्ति" (बृह.उ.2-1-20) इत्यादि श्रुतिषु चेतनाचेतनप्रपञ्चस्य परमात्मोपादानकर्तृत्व[3]श्रवणात्। न च विकारित्वम्, परिणामानङ्गीकारता केचित्पुनः परिणाममङ्गीकृत्यात्मनो विकारभिया विपरीतं निमित्तोपादानभावमिच्छन्ति। सर्वथा तावत्प्रकृतिपुरुषैक्याद्भवतीति सिद्धम्। तत्र 'एकमेवाद्वितीयं ब्रह्म' (छान्दो.उ.6-2-1) 'अजामेकाम्' (बृह. उ. 4-5-14) इत्यादिश्रुतिबलादनुत्पत्ति श्रवणाच्च जीवानामौपाधिकमेव जन्म न वस्तुत इत्युक्तम्। उपाधिलयेन परमात्मनि पुनर्लयश्रवणादपि न वास्तवं जन्मेत्याह त्वयि त इति। यतो वास्तवं जन्म तस्माद्विविधनामगुणैरनेकप्रकार[4]कारण कार्योपाधिभिः सह लिल्युर्लीना बभूवुः। तत्र सुषुप्तिप्रलययोर्मधुन्यशेषरसा इव लीयन्ते। यथा मधुनि सकल कुसुमरसा विशेषतोऽनुपलक्ष्यमाणा अपि सामान्येनोपलक्ष्यन्ते। एवं स्वप्रादौ विशेषमात्रलया त्कारणस्य विद्यमानत्वात् सामान्यतो वर्तन्ते। मुक्तौ तु कारणस्यापि लयात् त्वयि परमे निरुपाधौ सरित इवार्णवे लीयन्त इति विवेकः। तथा च श्रुतयः- 'यथा सौम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां सङ्गमयन्ति' (छान्दो.उ.6-9-1) 'ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्य मुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे' (छान्दो.उ.6-9-2) इति। 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् '(मुण्ड.उ.3-2-8) इत्याद्याः।' यस्मिन्नुद्यद्विलयमपि यद्भाति विश्वं लयादौ जीवोपेतं गुरुकरुणया केवलात्मावबोधे। अत्यन्तान्तं व्रजति सहसा सिन्धुवत् सिन्धुमध्ये मध्ये चित्तं त्रिभुवनगुरुं भावये तं नृसिंहम् ॥ १८ ॥ ३१ ॥

नन्वेवं तावत् परमेश्वराज्जीवा जायन्ते तद्वशेन च कर्माणि कुर्वन्ति, पुनस्तत्र लीयन्त इति संसार चक्रे परिभ्रमणमुक्तम्। इदानीं तन्निवृत्तये 'परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च' (म.ना.उ. 2-7)

उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश इत्याद्याः भगवदनुवृत्तिं विदधतीत्याह - नृषु तव माययेति। नृषु जीवेष्वमीषु तव मायया भ्रममुक्तलक्षणमवगत्य ज्ञात्वा सुधियो भृशं त्वय्यभवे भवनिवर्तके भावं स्वभावमनुवृत्तिं दधति कुर्वन्ति। कीदृशं भ्रमम्? अनुप्रभवं अन्वनु प्रभवो यस्मिन् तं भ्रमम्। ततः किमत आह - कथमिति। अनुवर्ततामनुवर्तमानानां त्वामेव शरणं भजतां भवभयं संसारभयं कथं भवेत्। न कथञ्चिदित्यर्थः। कुतः? यद्यस्मात्तव भ्रुकुटिः भ्रूभङ्गरूपस्त्रिणेमिस्तिस्रो नेमय इवावच्छेदाः शीतोष्णवर्षाकाला यस्य संवत्सरात्म कस्य कालस्य सः। अभवच्छरणेषु न भवान् शरणं रक्षिता येषां तेष्वेव भयं जन्ममरणादि लक्षणं सृजति करोति। अत एवम्भूतं संसारमाकलय्य तन्निवृत्तये सुधियस्त्वयि भावं दधतीति। "संसारचक्र क्रकचैः विदीर्णमुदीर्णना नाभवतापतप्तम्। कथञ्चिदापन्नमिह प्रपन्नं त्वमुद्धर श्रीनृहरे नृलोकम्" ॥ १९ ॥ ३२ ॥

स च भगवति भावो मनो नियमे सति भवति। सोऽपि गुरूपसदनादिति गुरूपसदनं विदधति 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' (मुण्ड.उ.1-2-2) 'आचार्यवान्पुरुषो वेद' (छान्दो.उ.6-14-2) 'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठा' (कठ.उ.2-9) इत्याद्याः श्रुतय इत्याह- **विजितेति**। विजितानि हृषीकाणि इन्द्रियाणि वायुः प्राणाश्च यैस्तैरप्यदान्तमनस्तुरगमदान्तमदमितं मन एव तुरगो दुर्दमत्वसाम्यात्तं ये यन्तुं नियन्तुं यतन्ति प्रयतन्ते। अतिलोलमतिचञ्चलम् गुरोश्चरणं समपहायाऽनाश्रित्य ते उपायेषु खिद्यन्ते क्लिश्यन्तीत्युपायखिदः सन्तो व्यसनशतान्विता बहुव्यसनाकुला इह संसारसमुद्रे [5-]आविशन्ति सन्तिष्ठन्ति[-5]। दुःखमेव प्राप्नुवन्तीत्यर्थः। हे अज! अकृत कर्णधारा अस्वीकृतनाविका वणिजो यथा तद्वत्। [6-]उक्तं च - 'नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम्। मयानुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा' (भाग. 11-20-17) इति। प्राकृतैः संस्कृतैश्चैव गद्यपद्याक्षरैस्तथा। देशभाषादिभिः शिष्यं बोधयेत्स गुरुः स्मृतः"। गुरुणोपदर्शित भगवद्भजन सुखानुभूतौ तु स्वत एव मनो निश्चलं भवति नान्यथेति भावः। यदा 'परानन्दगुरो भवत्पदे पदं मनो मे भगवँल्लभेत। तदा निरस्ताखिलसाधनश्रमः श्रयेय सौख्यं भवतः कृपावशात् ॥ २० ॥ ३३ ॥

"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" (मुण्ड.उ.1-2-12) तथा "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि [7]स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" (कठ.उ.6-14) इत्याद्या वैराग्यमङ्गं विदधतीत्याह - स्वजन सुतेति। आत्मा देहः। धाम गृहम्। असुः प्राणः। स्वजनादिभिः द्वन्द्वनिर्दिष्टैः किम् सर्वरसे सर्वे रसाः सुखानि विद्यन्ते यस्मिंस्तस्मिंस्त्वयि परमानन्दे 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृह.उ.4-3-32) इति श्रुतेः। श्रयतस्त्वां सेवमानस्य पुंस आत्मनि सति नृणां तुच्छैरेतैः किं क उपयोग इति सत् सत्यं परमार्थसुखमजानतामत एव मिथुनतः स्त्रिया। मिथुनीभूय रतये मायासुखाय चरतां प्रवर्तमानानाम् कर्मणि षष्ठी। अजानतश्चरतः पुरुषान् कोन्वर्थः सुखयत्यानन्दयति। न कोऽपीत्यर्थः। इह संसारे। कथम्भूते स्वविहते? स्वत एव नश्वरे। स्वनिरस्तभगे स्वत एव

गतसारे। पाठान्तरे तु को न्वित्यस्यैतद्विशेषणद्वयम्। अतः त्वद्भजनमेवोचितमित्यर्थः। भजतो हि भवान्साक्षात्परमानन्दचिद्घनः। आत्मैव किमतः कृत्यं तुच्छदारसुतादिभिः ॥ २१॥ ३४॥

एवं गुरूपदेशेन तत्त्वमवगम्य सारासारविवेकेन च सर्वतो निर्विद्य तदेव महत्सङ्गेनोपपत्तिभिः सम्यगवधारयितुं तीर्थसदनानि [8-]सत्पुरुषदर्शनाय[-8] मुनयः पर्यटन्तीति 'श्रोतव्यो मन्तव्यः' (बृह.उ.6-5-6) इत्यादि श्रुत्यर्थमाह - भुवीति। ते उक्तलक्षणा ऋषयो विमदा निरहङ्कारा यतो भवत्पदाम्बुजहृदः भवतः पदाम्बुजं हृदि येषां ते। अतः स्वयमेवाघभिदङ्घ्रिजलं येषां ते उत अपि तथाविधा अपि [9-]भुवि पृथिव्यां पुरूणि बहनि पुण्यानि तीर्थानि सदनानि च क्षेत्राणि तान्येवोपासते सेवन्ते प्राय स्तत्रैव महत्सङ्गो भवतीति। अथवा पुरु अधिकं भगवद्भजनलक्षणं पुण्यं येषां तानि च तानि तीर्थानि च गुरवो महान्त इत्यर्थः। तेषां सदनान्याश्रमान् यथाऽऽह अमरसिंहः - 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' (अम.को.शे 3-243) इति। न पुनः पुरुषसारहरावसथानुपासते। पुरुषाणां सारं विवेकस्थैर्यधैर्यक्षमाशान्तिप्रमुखं हरन्तीति तथा, ने च ते आवसथा गृहास्तान्। न च तेषां गृहादिभव कुत्सितसुखापेक्षेत्याह - दधति सकृन्मन स्त्वयि य आत्मनि नित्यसुखे इति। सकृदपि त्वयि ये मनो दधतीति तेऽपि गृहाद्यासक्ता न भवन्ति। किं पुनरेवम्भूता इत्यर्थः। 'मुञ्चन्नङ्गतदङ्गसङ्गमनिशं त्वामेव सञ्चिन्तयन् सन्तः सन्ति यतो यतो गतमदास्तानाश्रमानावसन्। नित्यं तन्मुखपङ्कजाद्विगलितत्वत्पुण्यगाथामृतस्रोतः संप्लवसंप्लुतो नरहरे न स्यामहं देहभृत् ॥ २२॥ ३५॥

ननु 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' 'तद्भूतानां क्रियार्थेन समन्वयः' (जैमिनी. सू. 1-1-20) इति। तत्र तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानादुपनिषदामपि तदेव युक्तम्। यथोक्तं तन्त्रवार्तिककृता - "एतेन क्रत्वर्थकर्तृ [10]प्रतिपादनेनोपनिषदां नैराकाङ्क्ष्यं व्याख्यातम्" इति चेत् न। "एकमेवाद्वितीयं ब्रह्म" (छान्दो.उ. 6-2-1) "विज्ञानमानन्दं ब्रह्म" (बृह.उ. 3-9-28) 'अचक्षुरश्रोत्रम्' (मुण्ड.उ. 1-1-6) इत्येवं तद्विपरीतात्मप्रतिपादनात्। न हि अद्वितीय परमानन्दरूपस्य कर्माङ्गत्वं युज्यते। अनुनमतं चैतद्वार्तिककृतः। कथम् "सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते। पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम्'॥ इति तेनैवोक्तत्वात्। एतदर्थमेव मननाय मुनयः पर्यटन्तीत्युक्तम्। तत्र तावद्द्वैतस्य सत्यत्वे भवेदप्येवं तदेव तु न सम्भवतीति प्रश्नोत्तराभ्यां मननेन तत्त्वावधारण प्रकारमाह - सत इति। इदं विश्वं धर्मि। सदिति साध्यो धर्मः। सत उत्पन्नत्त्वाद्धेतुः। यद्यत उत्पन्नं तत्तदात्मकमेव दृष्टम्। यथा कनकादुत्पन्नं कुण्डलादि, तदात्मकं तद्वदिति। तत्र यदि सदभेदः साध्यते तदाऽ[11]पादानत्व निर्देशेनैव भेद प्रतीतेर्विरुद्धो हेतुरित्याह ननु तर्कहतमिति। ननु नाभेदं साधयामः किन्तु तदुत्पन्नत्वेन कुण्डलादिवद्भेदं प्रतिषेधयामः। तत्राभेद एव स्यात् इत्याशङ्क्यानैकान्तिकत्वेन दूषयति - व्यभिचरति क्व चेति। पितृपुत्रादिषु मुद्गरघटप्रध्वंसादिषु च तथा दर्शनादिति भावः। ननु तदुत्पन्नत्वं नाम तदुपादानत्वं, न तु तन्निमित्तत्वमतो नानैकान्तिकत्वमित्याशङ्क्य दूषयति क्व च मृषेति। गुणोपादानस्यापि फणिनो न

गुणत्वं, किन्तु मिथ्यात्वम्। अन्यथा कुण्डलादिवदबाधप्रसङ्गात्। अतः पुनरप्यनैकान्तिकत्वमेवेति भावः। ननु न तत्र केवलं गुणमात्रं फणिन उपादानं, किन्त्वविद्यायुक्तम्। तथाभूतस्यावस्तुत्वाद्युक्तं फणिनो मिथ्यात्वमित्याशङ्क्य तत्तुल्यमत्रापीति दूषयति। न तथोभययुगिति अयमर्थः - अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वम्। एवम्भूतस्य च न वस्तुसत्त्वम्।[12] प्रपञ्चस्येति। ननु मा भूदनेन हेतुना प्रपञ्चस्य सत्त्वं, हेत्वन्तरेण तु साधयामः। तथाहि - सदिदमर्थक्रियाकारित्वात् यदर्थक्रियाकारि तत् सत्। न यदेवं न तदेवं, यथा शुक्तिरजतमिति तत्राह - व्यवहृतये विकल्प इषित इति। व्यवहारायार्थक्रियार्थं विकल्पो भ्रम इषित इष्ट एव, कूटकार्षापणादिनापि क्वचिद्व्यवहारदर्शनात्। नन्वेकत्र सतोऽन्यत्रारोपो भ्रमः प्रसिद्धोऽत्यन्तासत्त्वे कथं प्रपञ्चः भ्रमः स्यात् सत्त्वे वा नाद्वैतसिद्धिः। उक्तं च भट्टैः - 'अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि। प्रज्ञातगुणसत्ताकमध्यारोप्येत वा न वा' इति। नेत्याह - अन्धपरम्परयेति। अन्धपरम्परया यो विकल्प इत्यन्वयः। अयम्भावः - संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमात्रमपेक्षते, न वस्तुसत्त्वम्।[14] प्रतीतौ सत्यां वस्तुसत्त्वाभावेन[15] ब्रह्मव्यतिरेकादर्शनात्।[16] अतोऽनादित्वात् पूर्वपूर्वभ्रम दृष्टस्योत्तरोत्तर आरोपो भविष्यति। अन्धपरम्परा न्यायेन [17-]तेन च वस्तु[-17]व्यवहारः सेत्स्यतीत्यप्रयोजको हेतुरिति। ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' 'अपाम सोमममृता अभूम' (अथ. शिख. उ. 3-2) इत्यादिभिः कर्मफलस्य नित्यत्व प्रतिपादनादसत्त्वं न घटते न हि नित्यं वस्त्वसद्भवति, तस्माद्वेदप्रतिपादितत्त्वाद्द्वैतं सदेवेत्याशङ्क्याह - भ्रमयतीति। हे भगवन्! ते तव भारती वेदलक्षणा[18] ऊरुवृत्तिभिर्बह्वीभिर्गौणलक्षणादिवृत्तिभिरुक्थजडान् कर्मश्रद्धाभराक्रान्तमन्दमतीन् भ्रमयति मोहयति। अयम्भावः - न हि वेदः कर्मफलं नित्यमभिप्रैति, किन्तु लक्षणया प्राशस्त्यमात्रम् विध्येकवाक्यत्वात्, अन्यथा वाक्यभेदप्रसङ्गात्। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छान्दो.उ.8-1-6) इति न्यायोपबृंहितश्रुत्यन्तरविरोधाच्च। अतः कर्मजडानामिदं भ्रममात्रमिति। एतेनैव 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तैत्ति.उ.2-1-1) इत्यादीना मप्यन्यपरत्वं दर्शितं भवति। उद्भूतं भवतः सतोऽपि भुवनं सन्नैव सर्पः स्रजः कुर्वत्कार्यमपीह कूटकनकं वेदोऽपि नैवं परः। अद्वैतं तव सत्परं तु परमानन्दं पदं तन्मुदा वन्दे सुन्दरमिन्दिरानुत हरे मा मुञ्च मामानतम् ॥ २३ ॥ ३६ ॥

---

1--1 B. J. Omit 2. Ml. V. °दानि 3. B. J. Omit क 4. B. J.Omit कारण 5--5 B.J. सन्ति ति° 6--6 B. Ml. V. Omit 7. B. J. श्रिताः 8--8 B. J. Omit 9. B. J. Omit भुवि पृथिव्यां 10. Ml. V. °नात् अनेन 11. Ml. V. उपा 12. Ml. V. वस्तुत्वं 13. Ml. V. तत्राह 14. Ml. V. सत्यत्वम् 15. Ml. V. सत्यत्वा° 16. Ml. V. भ्रम 17--17 B. J. Omit तेन च वस्तु 18. Ml. V. °वाक्

**वीर०** ननु प्रकृतिपुरुषयोः नित्ययोरुत्पत्त्यनुपपत्तिः? अत आहुः - न घटत इति। यद्यप्यजत्वात्प्रकृतेः पुरुषस्य च नोत्पत्तिः तथाऽपि विद्यमानानामेवाऽप्यानामवयवानां वायुप्रेरितानां परस्परसंयोगाज्जले बुद्बुदोत्पत्तिवत्, उभययुजा प्रकृतिपुरुषयोस्संयोगेन असुभृतो प्राणिनः विविधैर्नामभिः रूपैश्चोपलक्षिताः त्वय्याधारभूते भवन्ति, दैवमनुष्यादिशरीरविशिष्टरूपेणोत्पत्तिः युज्यत इत्यर्थः। ततः त इमे असुभृतः परमे त्वयि निलिल्युः प्रलयदशायां नामरूपे विहाय त्वय्यविभक्ततामापुरित्यर्थः। यथा सरितोऽर्णवे यथा च मधुनि माक्षिके अशेषाः रसाः मकरन्दाः तद्वत्। द्रव्यस्योत्तरोत्तरसंस्थानयोगो हि पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः। स्वावस्थावस्थितस्य तूत्पत्तिः। अतः अवस्थानामनित्यत्वेऽप्यवस्थाश्रयस्य द्रव्यस्य नित्यत्वात्तस्य पूर्वोत्तरावस्थात्यागोपादानात्मकविनाशोत्पत्त्यविरोध इति भावः, अत्रार्णवादिस्थानीयं चिदचिद्विशिष्टं ब्रह्म ॥ ३१ ॥

तर्हि उत्पत्तिविनाशाद्यात्मकसंसारनिवृत्यनुवृत्त्योः किं निदानमित्यपेक्षायां त्वद्भक्तितदभावौ एवेत्याहुः - **नृष्विति**। अनु पृष्ठतः प्रभवः संसारो यस्मात्तम्, अमीषु नृषु तव मायया त्वदीयया प्रकृत्या भ्रमं देहात्माभिमानस्वतन्त्रात्माभिमानादि रूपम् अवमृश्य अयमेव संसृतिहेतुरिति निश्चित्य सुधियः त्वयि भृशं भक्तिं दधति, अनुवर्ततां त्वां भजतां भवभयं संसृतिभयं कथं भवेत्? न भवेदेवेत्यर्थः। कुतः? यद्यस्मादभवच्छरणेषु, न भवान् शरणं येषां तेष्वेव तव भ्रुकुटिः भ्रूभङ्गरूपः त्रिणेमिः तिस्रो नेमयः शीतोष्णवर्षकालात्मिकाः यस्य सः। संवत्सरात्मकः कालः इत्यर्थः। भयं संसृतिभयं सृजति। अभवच्चरणेष्विति पाठे न भवतः चरणं येषां तेषु उपायोपेयभावेन भवतश्चरणमनाश्रितेषु इत्यर्थः ॥ ३२ ॥

कुतस्तर्हि मयि भाव इत्यपेक्षायां मनोनिग्रहादेव वैराग्यात्मकात्, स च गुरूपासनादेव, न तु उपायान्तरेभ्य इत्यभिप्रेत्याहुः - **विजितेति**। अतिचञ्चलम् अत एव विजितानि हृषीकाणि इन्द्रियाणि वायवः प्राणाश्च यैः तैरप्यदान्तं दुर्निग्रहं मन एव तुरगमश्वं, ये पुरुषाः यन्तुं नियन्तुं गुरोश्चरणं विहाय उपायान्तरेषु क्लिश्यन्तो यतन्ते ते व्यसनशतान्विताः बहुव्यसनाकुलाः इह संसारसागरे आसजन्ति सज्जन्ते सन्निविशन्ते दुःखमेव प्राप्नुवन्तीत्यर्थः। हे अज! अकृतकर्णधराः अलब्धकर्णधराः वणिजः यथा जलधौ मज्जन्ति, तद्वत् ॥ ३३ ॥

ननु मयि भृशं भावं विदधतु, ततः किमित्यपेक्षायां निरतिशयानन्दजलधिमग्नानां वैषयिकसुखान्तरनैरपेक्ष्यम्। इतरेषां तु सुखं विषमिश्रपयःपानतुल्यमित्यभिप्रेत्याहुः - **स्वजनेति**। सर्वरसे सर्वविधसुखमये आत्मनि च त्वयि 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति। को ह्येवान्यत् कःप्राण्यात्। यदेष आकाश आनन्दो न स्यात्' (तैत्ति.उ.2-7) इत्युक्तरीत्या निरतिशयसुखस्वरूपे तदावहे च प्रियतमे त्वयि सति विद्यमाने नृणां मध्ये कस्यचिदुक्तविधं त्वां भजतः पुंसः

स्वजनादिभिः किं न किञ्चिदपि सुखमित्यर्थः। आत्मा देहः, धाम गृहं, धरा भूमिः, असुः प्राणः, रथशब्दो वाहनोपलक्षकः, इतीत्थं सत् निरतिशयपुरुषार्थभूतत्वत्स्वरूपमजानताम्, अत एव रतये सुखार्थं मिथुनत श्चरतां मिथुनीभूय वर्तमानानां स्वविहते स्वप्रकृतिसम्बन्धतिरोहिते अत एव स्वनिरस्तभगे स्वः स्वासाधारणः निरस्तो भगो ज्ञानैश्वर्यादिर्यस्य तस्मिन् स्वरूपे सति इह लोके को नु अर्थकामेषु सुखयति अर्थकामान्यतरो न कोऽपि सुखयतीत्यर्थः। स्वविहतिस्वनिरस्तभगे स्वयाथात्म्यानुभवविघातः तेन स्वनिरस्तस्वाभाविकज्ञानैश्वर्ये स्वरूपे सतीत्यर्थः ॥ ३४ ॥

ननु इत्थमात्मानं सर्वरसं ये मामाश्रयन्ते ते किं मिथुनतो न चरन्तीत्याहुः - **भुवीति**। ये त्वयि नित्यसुखस्वरूपे आत्मनि च सकृदपि मनो दधति, ते पुनः पुरुषाणां सारं ज्ञानवैराग्यादिरूपं हरन्तीति तथा, तानावसथान् गृहान्नोपासते न सेवन्ते न गृहेषु मिथुनतश्चरन्तीत्यर्थः। अपि तु भुवि पृथ्व्यां पुण्यानि तीर्थानि गङ्गादीनि सदनानि क्षेत्राणि च उपासते, तीर्थान्यपि तीर्थीकर्तुं पुण्यक्षेत्राण्यपि निरतिशयपुण्यावहानि कर्तुं तान्युपासत इति भावः। तत्र हेतुत्वेन तान् विशिंषन्ति - ऋषयः द्रष्टारः स्वात्मपरमात्मयाथात्म्यविद इत्यर्थः। अत एव विमदाः देहात्माभिमानस्वतन्त्रात्माभिमानादिरूपमदरहिताः, उत अपि च भवतः पदाम्बुजं हृदि येषां ते भवतः पदाम्बुजे हृत् येषां त इति वा, अत एव अघं भिन्दन्तीति तथा तान्यङ्घ्रिजलानि येषां ते । अनेन भगवद्भक्तानां पादस्पर्शोऽपि पावन इत्यभिप्रेतम्। आत्मनीत्यनेन कृत्स्नस्य चिदचिदात्मक प्रपञ्चरूपकार्यस्य तच्छरीरत्वम् अत एव परमार्थत्वं चाभिप्रेतं, न हि मिथ्याभूतं किञ्चित् कस्यचिच्छरीरभूतं दृष्टमित्यर्थः ॥३५॥

इत्थं कार्यस्य सत्यात्वाभ्युपगममभिप्रेत्य अथ यः कार्यसत्ता प्रतिक्षेपेण कार्यमिथ्यात्ववादः तं चोद्यमुखेन प्रस्तुत्य प्रतिक्षिपन्ति - **सत** इति। सत इत्यादिना तर्कहतमित्यन्तेन कार्यमिथ्यात्ववादिमतानुवादः। व्यभिचरतीत्यादिना तत्प्रतिक्षेप इति विभागः, तथाहि - सतः परमार्थभूतात्परस्माद्ब्रह्मणस्सकाशादुत्पन्नमिदं जगत् सत् परमार्थभूतं सत्यमिति यावत्। न तु नैतद्युक्तमित्यर्थः। कुतः? यतस्तर्कहतमिति चेत् यद्यपि यद्यस्मादुत्पन्नं तत्तदात्मकमेव। यथा मृद्धिरण्यादेरुत्पन्नं घटमकुटादि कार्यं, तथाऽपि चेतनात्पुरुषाज्जातानां केशदन्तनखलोम्नामचेतनत्वदर्शनादचेतनात् गोमयाज्जातानां वृश्चिकानां चेतनत्वदर्शनाच्च कार्यकारणयोस्सालक्षण्य व्याप्त्यभावात् परमार्थस्वप्नादपरमार्थगजतुरगादीनां तथा परमार्थशुक्तिशकलाद परमार्थरजतस्य चोत्पत्तिदर्शनात्। एतदुत्पत्तिवैयर्थ्याच्च कार्यं सदित्येतत्तर्कहतम्। अतः कार्यं मिथ्यैवेति चेदित्यर्थः। तर्कश्चात्र युक्तिः। का पुनरत्र युक्तिरिति चेदुच्यते। मृद्द्रव्यमात्रस्यानुवर्तमानत्वं तदतिरिक्तस्य च व्यावर्तमानत्वं, रज्जुसर्पादिषु ह्यनुवर्तमानस्याधिष्ठानभूतस्य रज्ज्वादेस्सत्यता। व्यावर्तमानस्य सर्पभूदलनाम्बुधारादेरसत्यता दृष्टा। तथा अनुवर्तमान मधिष्ठानभूतं मृद्द्रव्यमेव सत्यं, व्यावर्तमानास्तु घटशरावादयः असत्यभूताः, तथा निर्विशेषसन्मात्रात्सर्वाधिष्ठानभूता

ब्रह्मणोऽन्यः अहङ्कारादिव्यवहारालम्बनः कृत्स्नः प्रपञ्चः मिथ्या, कारणभूतं सन्मात्रं ब्रह्मैव सत्यं, किञ्च सत आत्मनो विनाशायोगादसतश्शशविषाणादेरुपलब्ध्यभावादुपलब्धिविनाशयोगे कार्यं सदसद्भ्यामनिर्वचनीयमिति गम्यते। अनिर्वचनीयं च शुक्तिकारजतादिवन्मृषैव, तस्य चानिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धम्। प्रतीयते हि। प्रपञ्चः प्रत्यक्षेण - 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' (छान्दो.उ.6-8-7) 'नेह नानास्ति किञ्चन। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' (बृह.उ.4-4-9) 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृह.उ.2-4-14) 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृह.उ.4-5-16) इत्यादिभिर्वेदान्तैः बाध्यते चेति। ननु तर्कहतम् इति पाठान्तरम्। तदा ननु सत उत्पन्नमिदं सदिति चेत् तर्कहतमित्यन्वयः। इत्थमनूदितं कार्यमिथ्यात्वपक्षं प्रतिक्षिपन्ति व्यभिचरतीत्यादिना। कार्यं सदित्ययमर्थः क्व च व्यभिचरति? क्व चेति काकुः। न क्वचिद्व्यभिचार इत्यर्थः। केशपुरुषादिष्वपि अचेतनांश एव कार्यकारणभावादिति भावः। तथाऽपि स्वप्नार्थे शुक्तिकारजतादौ मिथ्यात्वेन व्यभिचार इत्यत्राहुः - क्व च मृषेति। क्व च मृषा? न क्वचिदपि कार्यं मृषेत्यर्थः। स्वप्नार्थानामपीश्वरसृष्टत्वान्न मृषात्वं, शुक्तौ रजतसद्भावादन्यथाख्यानाद्वा न मृषात्वमित्यभिप्रायः। सत उत्पत्तिवैयर्थ्यं परिहरन्ति - न तथोभययुगिति। व्यभिचरतीत्यनुषङ्गः। क्वचिदपि मृत्सुवर्णादिद्रव्ये उभयावस्थान दर्शनात् न व्यभिचरति। कार्यत्वकारणत्वरूपावस्थावदेव मृत्सुवर्णादिकं दृश्यते, अतस्सतोऽवस्थान्तरप्राप्तिस्सफलेत्यर्थः। विकल्पः घटशरावाद्यवस्थाभेदः, स च व्यवहृतये घटेन जलमाहरेत्यादिवाक्यपूर्वकव्यवहारार्थम् इषितः इष्टः। यद्वा नन्वसच्चेन्न प्रतीयते, सचेन्न बाध्यते, प्रतीयते बाध्यते च शुक्तिकारजतवत् प्रपञ्चरूपं कार्यम् । अतः सदसद्भ्यामनिर्वचनीयं कार्यं मृषैवेत्यत आहुः - न तथोभययुगिति। तथा तथाभूतमनिर्वचनीयम्। उभययुक् सत्त्वविलक्षणत्वरूपधर्मद्वययोगि द्रव्यं स नास्त्येवेत्यर्थः। ननु शुक्त्यादिषु रजतादिप्रतीतेः प्रतीतिकालेऽपि तन्नास्तीति बाधेन च अन्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात्प्रतीयत इति कल्पनीयमिति चेन्न, तत्कल्पनायामप्यन्यस्यान्यथा भानस्यावर्जनीयत्वात् अन्यथा भानाभ्युपगमादेव ख्यातिप्रवृत्ति बाधभ्रमत्वाना मुपपत्तेरत्यन्तापरिदृष्टाकारणकवस्तु कल्पनायोगात् कल्प्यमानं - हि इदमनिर्वचनीयं न तदानीमनिर्वचनीयमिति प्रतीयते, अपि तु परमार्थरजतमित्येव। अनिर्वचनीयमित्येव प्रतीतं चेत् भ्रान्तिबाधयोः प्रवृत्तिरप्यनुपपत्तिः। अतोऽन्यस्यान्यथा भानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेः तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेण भासत इति भवता अभ्युपगन्तव्यम्। किञ्च अनिर्वचनीयमपूर्वं रजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यं, न तावत्तत्प्रतीतिः। तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात्। निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम्। अथेन्द्रियादिगतो दोषः? तन्न, तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात्। नापीन्द्रियाणि, तेषां ज्ञानकारणत्वात्। नापि दुष्टानीन्द्रयाणि। तेषामपि स्वकार्यभूते ज्ञान एव विशेषकरत्वात्, अनादिमिथ्या

ज्ञानोपादानत्वमनवस्थादिदोषनिरस्तं, किञ्च अपूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिशब्दाभ्यां, कथमिव विषयीक्रियते? न घटादिबुद्धिशब्दाभ्यां रजतादिसादृश्यादिति चेत्तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्याताम्। रजतत्वादिजातीयायोगादिति चेत् सापि किं परमार्थभूता उत अपरमार्थभूता? न तावत्परमार्थभूता । तस्या अपरमार्थान्वयायोगात्, नाप्यपरमार्थभूता, परमार्थान्वयायोगात्। अपरमार्थे परमार्थबुद्धि शब्दयोर्निर्वाहकत्वायोगाच्च। यत्पुनरुक्तं रज्ज्वादिवन्मृन्मात्रस्य कारणस्यानुवर्तमानत्वात्पारमार्थ्यं सर्पादीनामिव घटशरावादि कार्याणां मिथो व्यावर्तमानत्वादपारमार्थ्यम्। अहङ्कारादि व्यवहारालम्बनास्सर्वे पदार्थाः मिथो व्यावर्तमानत्वात् अत एव बाधितत्वादपरमार्था इति, तत्तुच्छं द्वयोः ज्ञानयोः विरोधे हि बाध्यबाधकभावः। बाधितस्यैव व्यावृत्तिः। अत्र घटादिषु देशकालभेदेन विरोध एव नास्ति, यस्मिन्देशे यस्मिन्काले यस्य सद्भावः प्रतिपन्नः तस्मिन्देशे तस्मिन्काले तस्याभावः प्रतिपन्नश्चेद्विरोधाद्बलवतो बाधकत्वं, बाधितस्य च व्यावृत्तिः, देशान्तरकालान्तरसम्बन्धितयाऽनुभूतस्यान्य देशकालयोरभावप्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः। अन्यत्र निवृत्तस्यान्यत्रवृत्तिर्वा कथमुच्यते? रज्जुसर्पादिषु तु तद्देशकालसम्बन्धितयैवाभावप्रतीतेर्विरोधे बाधकत्वं व्यावृत्तिश्चेति देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रं पारमार्थ्ये हेतुः। यत्त्वनुवर्तमानत्वात्परमार्थ इति तत्सिद्धमेवेति न साधनमर्हति। अतो न सन्मात्रमेव वस्तु, सत उत्पत्तिवैयर्थ्यं परिहरन्ति व्यवहृतये विकल्प इषित इति। अस्य यथोक्त एवार्थः। अतस्सतोऽवस्थान्तरप्राप्तिस्सफलेत्यर्थः। ननु तर्कहतत्वाभावेऽपि 'नेह नाना' इत्यादिश्रुतिरेव कार्यमिथ्यात्वं प्रमापयतीत्यत आहुः - भ्रमयतीत्यदिना। ते तव भारती वाग्रूपा 'नेह नाना' (बृह.उ.4-4-9) इत्यादिश्रुतिः। उरुवृत्तिभिः उक्थजडान् अन्धपरम्परया भ्रमयतीति सम्बन्धः। उक्थजडाः कर्मजडाः, अनादिपापवासनादूषिताशेषशेमुषीकाः, तान्। अयं भावः - न केवलं कार्यमिथ्यात्वबोधनात्मिकैव 'नेह नाना' (बृह.उ.4-4-9) इत्यादि त्वद्भारत्या वृत्तिः। अपि तु अब्रह्मात्मकस्वतन्त्रवस्तुनिषेधबोधनात्मिका,ब्रह्मस्वरूपे देवमनुष्यादि भेद निषेधादि बोधनाद्यात्मिकाश्च बह्व्यो वृत्तयस्सन्ति। एवं तदर्थबुभुत्सवोऽप्युक्थ जडास्तद्विपरीताश्च। तत्र ये कर्मजडाः तान् प्रथमबुभुत्सुकुबुद्धिपरिकल्पित कार्यमिथ्यात्वकारण सत्यत्वपरत्वदिरूप बहुवृत्तिभिः प्रथमप्रतिपत्तृ कुबुद्ध्यनुवर्तिनां कर्मजडानाम् अन्धपरम्परया कार्यमिथ्यात्वभ्रमं जनयति। औपनिषदपरमपुरुषवरणीयता हेतुगुणविशेषगुण विशिष्टानां तु अब्रह्मात्मकस्वतन्त्रवस्तुनिषेधादि विषयां प्रमितिं जनयतीति किमस्माभिः विधेयमिति ॥ ३६ ॥

**विज०** कथमनुजानतेति तत्राह - **नेति**। अजशब्दस्यानेकवृत्तित्वेनानिश्चय इत्यतः *प्रकृतिपूरुषयोरिति तयोरुद्भव* उत्पत्तिः **न घटत इति** यतस्ततः प्रकृतिपूरुषौ विनाऽन्यो बन्धरहितो न विद्यते। मुख्यतोऽजशब्दप्रवृत्तिनिमित्तान्यथानुपपत्त्या

न घटत इत्युक्तं भवति। तदुभययोः प्रकृतिपूरुषयोः युजोः योगयोः असुभृतो जीवा भवन्ति देशतः कालतश्च यत्र परमस्तत्र प्रकृतिः यत्र प्रकृतिः तत्र परम इत्युभययुजोः। तत्र दृष्टान्तः- जलबुद्बुदवत्। जलबुद्बुदानि यथोत्पद्यन्ते तथेति। 'सम्यग्ज्ञानवदाचार्यान्मुच्यते पुरुषो भवात्, द्वावेव नित्यमुक्तौ तु परमः प्रकृतिस्तथा' (वामने) इति स्मृतेः। 'योनः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा यो देवानां नामधा एक एव तं संप्रश्नं भुवनायन्त्यन्या। त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जनितारो न भूता असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि' (आद्याश्रुतिः) इत्यादि श्रुतेः। ब्रह्मेशेन्द्रादि संनाम्नां येऽर्थभूता गुणा मताः पूर्तीशितृत्वद्रष्टृत्वप्रमुखास्ते हरेः सदेति। 'अतस्तु सर्वनामासौ सर्वकर्ता च केशवः' (पाद्मे) इत्यादिस्मृतीनां च अर्थत्वेन संदृब्धस्य त्वयि त इम इति श्लोकस्य अयं भावः - मधुनि निलिल्युरिति वक्तव्ये मधुनिलिल्युरिति पाठो गाथाभङ्गभयात् 'समाने लोप' इति न्यायाच्च कृतः। ततो इति पाठोऽपि वैलक्षण्यज्ञापनाया कारि तत तात पितरित्यर्थः। 'ततेति तात' इति श्रुतिः। 'अ उ आनन्दपूर्णत्वादनामा सर्वस्मादुत्कृष्टत्वादुनामा 'आनन्दत्वानामासावुत्कृष्टत्वादुनामकः एतन्नामद्वयं विष्णोर्ज्ञात्वा पापैः प्रमुच्यत' (स्कान्दे) इति स्मृतेः। तयोः सन्धिः। ओ इत्यनेन नाम्नोर्नामिनश्चाभेदः। 'उनाम्नः सम्बुद्धिरसूचि ये गुणाः श्रुताः सुविरुद्धाश्च देवे सन्ति' इत्यादिश्रुतौ प्रतीताः। त इमे विबुधनामगुणाः विबुधानामिन्द्रादीनां नाम्नामर्थभूताः परमैश्वर्यादिगुणाः अमृते नित्यमुक्ते परमे त्वयि निलिल्युः निलीनतया स्थिताः। कस्मिन् के इव? मधुन्यर्णवे मकरन्दमधुलक्षणसमुद्रे अशेषपुष्परसा इव ॥ २८ ॥ ३९॥

यतोऽशेषगुणाकरो भवान् अतो नृषु सुधियः। निर्धारणे सप्तमी। नृणां मध्ये सम्यग्ज्ञानिनः स्वगतया सुष्ठन्यैरनवगतया मायया स्वेच्छया त्वयि भेदं समस्तादन्यो विशिष्टगुणः परः इति भेददर्शनलक्षणम्। कुशलमनुविधातुमनुप्रभवः सम्यक्समर्थाः। अनेन अज्ञानिनां निलीनाः ज्ञानिनामभिव्यक्ताः गुणा इत्यतः तेषां सद्भावो दर्शित इति। तदुक्तम् - 'अन्याविज्ञातया विष्णोः शक्त्यैव कुशलं जनाः। कुर्वन्ति कुशलेषूच्चभेद दर्शनमेव तु । पूर्णानन्दादिसम्पत्तिं विष्णोर्ज्ञात्वेतरेषु च। तदपेक्ष्य विष्णुमात्रज्ञानं तद्भेददर्शनम्। अनाद्यनन्तो भेदोऽयं स्वभावः परजीवयोः। स्वतो वा परतो वापि न कदाचित्प्रणश्यति। एवं ज्ञानवतां विष्णुर्बहुजन्म न दास्यति । अनुवृत्तिर्यद्यनल्पा स हि सर्वेश्वरः प्रभुः' (प्रमाणसंहितायाम्) इति। अनेन कथमनुवर्तिनां भवभयं तव भ्रुकुटी सृजति। मुहुर्नृणामित्येतदर्थो विवृतः। तथाहि - यथा तव गुणविधान सामर्थ्यं तथा अनुकूलभूत त्वत्प्रसादानुवर्तिनां मुहुर्निरन्तरं सेवमानानां तव भ्रुकुटी भवभयं कथं सृजति? न कथमपि, प्रत्युत निर्मूलयतीत्यर्थः। 'यः पिता जनिता चैव कल्पको नित्यपोषकः। प्रापकः सर्वदेवानां पदानां पुरुषोत्तमः । सर्वदेवाभिधा वाच्यो भूत भव्यभवत्प्रभुः। विचार्यः सर्वदेवेशैस्तं ब्रह्माद्या यजन्ति च। त्रिगुणात्मकस्रष्टारस्तथापि न यजन्ति तम्। यतः

पूर्णेशशक्त्यैव तेषां यजनमिष्यते। अतः सर्वेश्वरो विष्णुरेक एव महागुणः' (प्रधानसंहितायाम्) इत्यनेन ब्रह्मादी नामखण्ड गुणत्वं स्वातन्त्र्येण सर्वकर्तृत्वमित्यादिकं दूरतोऽपहस्तितमिति ज्ञातव्यम् ॥ १९ ॥ ३२ ॥

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनः' (श्वेता.उ.6-23) इति श्रुतेः। 'देवा अपि सुयोगाद्या यतन्ते सर्वसाधनैः। पुत्रदारादिभिः सार्धं नोच्छ्वसन्ति इह संसृतौ। गुरोरनुग्रहमृते साधनं न हरेः प्रियम्। गुरूपदेशात्तु हरिं प्राप्नोत्येव न संशयः॥' (तत्त्वोद्योगे) इति स्मृत्यनुगृहीतायाः श्रुतेः अभिप्रायगर्भस्य 'इह भवच्चरणेषु' इत्यादि श्लोकद्वयस्य अयमभिसन्धिः। हे अजित! भक्तभक्त्यावशीकृत! जयो विष्णोश्चावयोः चावयोश्च भक्त्या तत्प्रीतिसाधनम्। 'जगदीशयोः कुतो ह्येनोः सर्वशक्त्योर्बलाज्जयः' (पवनविजये) इति वचनात्। भक्तलक्षणसाधनसामग्र्या विष्णोः प्रसादो जयो नाम हे हरे! इह संसारे व्यसनशताब्धितारं गुरोश्चरणमपहाय हृषीकवायुभिः उदात्तमहत्तुरगैः कर्मणि यतन्तीत्यन्वयः। व्यसनानां शतमेवाब्धिः व्यसनशताब्धिः तं तारयतीति यः तं षण्णवत्यङ्गुलो यस्त्वित्यादि लक्षणोपेतस्य गुरोश्चरणमिति सेवेह लक्ष्यते। तां सेवां त्यक्त्वा उदात्तः सारथिः। 'रथोपरि स्वीकरणादुदात्तःसारथिर्मतः' (व्यासनिरुक्तिः) इति वचनात्। वायुरेवादात्तो येषां ते तथा। पृथग्पदत्वं छान्दसं, हृषीकाण्येव माहांस्तुरगा महत्तुरगाः महादेशाभावः छान्दसः। तैस्ते उच्छ्वसन्ति निश्वसन्तीत्यन्वयः। अत्र दृष्टान्तः - जलधावकृतकर्णधराः अकृतकर्णधरः कर्णधारो यैस्ते तथा। वणिजः सांयात्रिका इवेत्यर्थः ॥ २० ॥ ३३ ॥

यतमानाः कीदृशाः? स्वजनसुतात्मदारधनधामधराः स्वजनसुतादि भरणोपेताः आत्मा देहः धाम गृहं जितहृषीक इत्येकं वा पदम्। उक्तमेव विवरणम्। ये च देवकल्पाः पुरुषाः भवच्चरणेषु भवद्विषयसुकर्मसु सुजातभुवः सुष्ठुजातस्थानाः उत्तमयोग्यतायुक्ताः हृषीकलक्षणवायुसारथियुक्ततुरगैरमतिलोलं बुद्धिचाञ्चल्यं विना निष्कामत्वेन यतन्ति ते स्वजनादियुक्ता उच्छ्वसन्ति उत्कृष्टं श्वसन्ति प्राणन्ति जीवन्तीत्यर्थः। 'श्वस प्राणने' इति धातुः। किं कृत्वा? गुरोश्चरणमपहाय हानं त्यागमपाकृत्य गुरुचरणनिषेवणं कृत्वेत्यर्थः। 'नास्त्यकृतः कृतेन' (मुण्ड.उ. 1-2-12) इति श्रुतेः। अकृतो भगवानेव कर्णधारो येषां ते तथा। दैवानुकूलकर्णधारा इत्यर्थः। ते उपायविदः सुयोगज्ञाः किन्तु नृणां यानि विहितानि साधनानि सुखशान्तिमति त्वयि सुखस्यापि सुखं सुखशं दुःखमिश्ररहितसुखमित्यर्थः। तस्यान्तिमति पूर्तिमति पूर्णसुखे इत्यर्थः। यस्मिंस्त्वयि न सन्ति हि गुर्वभावात् तस्माद्विभवे विगतसंसारे देहाभिमानरहिते जीवन्मुक्ते गुरावुद्युति उपदिशति साधन जातमुपदिशति सति सर्वरसे सर्वस्मात् सारभूते आत्मनि परमात्मनि श्रयत एव तत्साधनसर्वस्वं तत्प्रीतिजनकत्वेन श्रीहरिं विषयीकरोतीत्यर्थः। षण्णवत्यङ्गुलो यस्तु तालास्यो दशतालकः दशप्रादेशकः सप्तपदो हस्तचतुष्टयः 'कलमत्रयाङ्गुलश्चैव वाग्मीसन्देहवर्जितः। वासुदेवैकशरणो गुरुरित्युच्यते बुधैः। गुरुलक्षणसम्पूर्णः साक्षादेकश्चतुर्मुखः। ततः शेषेन्द्रवह्न्याद्याः क्रमादेव प्रकीर्तिताः'॥ (गुरुविवेके) इत्यादिवाक्यमत्र प्रमाणम्। 'देवा योग्यतया जाता विष्णुपादाम्बुजाश्रयाः। तथापि

साधनैस्तेषां तत्प्राप्तिर्गुर्वनुग्रहात्' (तत्त्वोद्योगे) इति च। 'ब्रह्मा ज्ञात्वेति लोकप्रवृत्तिं प्रवर्ततां को नु मोक्षं ददति । अतो "ब्रह्मोपासते साधु धीरा नाहं भावस्तेषु रुद्राधिवासः" (महारवश्रुतिः) इति श्रुतेः। 'महाभाग्यं तु कैवल्यमज्ञानाङ्कः प्रदास्यति। अतस्सन्तो विजानन्ति हरिं ते त्वनहङ्कृता' (स्कान्दे) इति स्मृत्यर्थसङ्ग्राहिण्या अर्थरूपस्य। इति सदजानतामित्यस्य श्लोकस्यायमर्थः। इतिशब्दः प्रकारवचनः। इति लोके दृश्यमानप्रकारेण सद्ब्रह्म अजानतां ब्रह्माज्ञानिनां मिथुनतः स्त्रीपुंसभावेन रतये ग्राम्यधर्माय चरतां प्रवर्तमानानां को नु पुरुषः अद्य इह विजने मोक्षविषये सुखयति न कोऽपि मोक्षं ददातीत्यर्थः। कीदृशे विजने? स्वनिरस्तभगे सुष्ठु अनिरस्तो भग ऐश्वर्यादिगुणो यस्मिन् स तथा तस्मिन् र स्त्वदज्ञानिनां परमानन्दलक्षणमोक्षभावः ॥ २१ ॥ ३४ ॥

अतः भुवि स्थाने पुण्यं शुद्धिकरं तीर्थं शास्त्रमेव सदनं शरणं येषां ते तथा। ते ऋषयो देवादयः त्वामेव सन्तं ज्ञात्वा भवतः पदाम्बुजं हृदा निविशन्ति। कीदृशम्? अघभिदं पापनाशनं किञ्च मनो मननसमर्थमन्तःकरणं नित्यसुखे चिदात्मनि त्वयि दधति च। अत्र प्रधानसाधनमाहुः - हे पुरुषसार! पुरुषोत्तम ! पुनश्च पश्चात् हरस्य रुद्रस्यावसथं अहङ्कारं सकृदपि नोपासते न कुर्वन्तीत्यर्थः ॥ २२ ॥ ३५ ॥

यज्जीवमीशं प्रवदन्ति तर्कैः तच्चेश्वरो वचनं सन्दधाति। 'नासीदादौ मरणे नो भविष्यन्मृषा ततो हि ईशितृत्वं स्वपेषु' इति श्रुत्यर्थद्योतकस्य स्मृत्यनुगृहीतस्य इदमप्यथो वदन्ति चेदित्यस्य श्लोकस्य इदं तात्पर्यम् -इदं जगत् न पातीत्यपः। 'पा पालने' इति धातुः सोऽस्यास्तीत्यपि अनीश्वरमित्यर्थः। अपि गर्हितमसत्यम्। अत एव अप्रतिष्ठमिति वा। 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' (स्कान्दे) इत्यादेः। न मत्तोऽन्य ईश्वरश्चेतनत्वादित्यादि तर्कैः वदन्ति चेत् अथो तस्मात् कुतः? सर्वात्मना एतदपि वचनं भगवत्प्रेरणयेत्यवगन्तव्यम्। तर्हि तर्कः प्रामाणिकः स्यादिति तत्राह-नन्विति। तर्का व्यभिचरन्ति नन्वित्यन्वयः। अत्र व्यभिचारित्वं पक्षधर्मत्वादिलक्षणाभावः। तथा हि विशिष्टपक्षीकारस्य सिद्धान्तविरुद्धत्वादनुपपत्तिः निर्विशेषेश्वरपक्षीकारे हेतोरसिद्धिः इत्यादिदूषणमुपेक्ष्याचार्यैः कालात्ययापदिष्टत्वं प्रादर्शि। वेदोक्तो जीवव्यतिरिक्तेश्वरो न तर्कैरपनेतुं शक्यः। यतस्तर्का व्यभिचारिण इति। "अनश्नन्नन्यो अभिचाकशीति" (मुण्ड.उ. 3-1-1) इति श्रुतेः। जीवेश्वरौ विरुद्धधर्माक्रान्तत्वेन भिन्नो छायातपवदित्यादेश्च दूषणान्तरमाह क्वचिदिति। अभेदस्य सिद्धावसिद्धौ च तर्कस्य विशेषानापादकत्वेनाप्रयोजकत्वात्। अपिपासोः पयः पानवत् । भोजनस्येष्टसाधनत्वतर्को ज्वरितादौ व्यभिचार्यत्वेन व्यर्थश्च सर्वशरीरसमवेतसुखदुःखानुसन्धातृत्वेन कायपरिमाणो जीव इति क्षपणकदर्शनपरिकल्पितः तर्कोऽपि मृषैव। अणुशरीरस्थस्य कर्मादिवशाद्धस्त्यादिशरीरप्राप्तौ विकारित्वापत्तेः। ननु तर्हि तर्केभ्यः किं प्रयोजनमत्राह - तत इति। यतो दुष्टास्ततो भयदृग्व्यवहितये भयबुद्धीनां बुद्धिव्यवधानाय तर्का भवन्ति। न तु धीराणां विदुषाम्। ननु किमिति प्रवृत्ता इति तत्राह - विकल्प इति। 'वि निषेधे पृग्भावे' (वैज.को. 8-7-6) इति वचनात्। विकल्पो वेदविरुद्ध

कल्पना जगतो मिथ्यात्वं जीवस्य ब्रह्मणोऽभेदो जगत् क्षणिकं षड्गुण ईश्वर इत्यादिलक्षणान्धपरम्परयैवान्वहमुषितः प्रवर्तितः 'अन्धेनैव नीयमाना यथाऽन्धाः' (कठ.उ.2-5) इति श्रुतिः। अन्धपरम्परायाश्च कोऽवलम्ब इति तत्राह भ्रमतीति। भारती वेदवाणी च भ्रमति बहुधा वक्ति। तात्पर्यार्थावबोधाकुशलानज्ञानुद्दिश्येति शेषः। इति यस्मात् तस्मादन्धपरम्परा। 'बहूक्ति रन्यथाज्ञप्तिः परिवृत्तिश्च कथ्यते। भ्रम इत्येव विद्वद्भिस्तथा चङ्क्रमणं क्वचित्' (शब्दनिर्णये) इत्यतो भ्रमस्य बहूक्तित्वं सिद्धम्। वेदस्य बहुधोक्तेः किं कारणमत्राह - तवोर्विति। उरुशब्देनानन्तत्वं वृत्तिशब्देन गुणकर्माणि विवक्ष्यन्ते। भवतो गुणकर्मणामनन्तत्वात् तानि वक्तुमूढजवा त्वरावती वेदवाणी। अतो वेदेऽपि बहुधा वचनात् तदर्थनिर्णयशक्त्यभावात् योग्यतावशाद्विपरीतप्रतीतेश्च विरुद्धकल्पनायुक्ता अन्धपरम्परयाऽसुराणाम् ॥ २३ ॥ ३६ ॥

**न यदिदमग्र आस न भविष्यदतो [1-]निधनादनुमितम[-1]न्तरा त्वयि विभति मृषैकरसे ।**
**अत [2]उपमीयते द्रविणजातिविकल्प पथैर्वितथमनो [3]विलासमृतमित्यव[4]यन्त्यबुधाः ॥ ३७ ॥**

**[5-]स यदजया त्वजामनुशयी[-5]त गुणांश्च जुषन्भजति सरूपतां तदनु [6-]मृत्युमपेत भगः ।**
**त्वमुत जहासि तामहिरिव त्वचमात्तभ[-6]गो महसि महीयसे[7]ऽऽष्टगुणितेऽपरिमेय भगः ॥ ३८ ॥**

**यदि न समु[8]द्धरन्ति यतयो[9] हृदि कामज[10]टा दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।**
**[11]असुतृपयोगिना[12-]मुभयतोऽप्यसु[-12]खं [13]भगवन्ननपगतान्तकादनधिरूढपदाद्भवतः ॥ ३९ ॥**

**❖ त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयो र्गुणविगुणान्वयांस्तर्हि न देहभृतां च गिरः ।**
**अनुयुगमन्वहं सगुणगीतपरम्परया श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥**

**द्युपतय एव तेन ययुरन्तमनन्ततया त्वमपि यदन्तराऽण्डनिचयाननु सावरणाः ।**
**ख इव रजांसि वान्ति वयसा सह यच्छ्रुत स्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥ ४१ ॥**

---

1- -1 M. Ma निमित्तकम° 2. M. Ma °गी° 3. M. Ma °मिद° 4. M. Ma °न्ति बुधाः 5- -5 M. Ma उदगात्पुमाननुगीतमात्त° 6- -6 M. Ma त्वमुत जहासि जिहासताम् अहिरव त्वचं परभगां 7. M. Ma °णोऽप° 8. M. Ma °ञ्च 9. M. Ma °योऽपि 10. M. Ma °डा 11. M. Ma °नुतृप्त° 12- -12 M. Ma °मभयो 13. M. Ma व ❖ These verses appears in vija like this:-

तदवगमार्थ सितासितयोर्गुणविद्रुमयोर्न हि देहभृतां स गिरः। अनुययुरत्र हंसकुलगीतपरम्परया न तुषावरणा इव रजांसि वान्ति ॥ वयसा सह यच्छ्रुतयस्त्वयि सफलं पतन्ति बन्धनाः ॥

**श्रीध०** तदेवं प्रपञ्चस्य सत्त्वे साधकं नास्तीत्युक्तम्। इदानीमसत्त्वे सृष्टिप्रलयश्रुतयो 'यतो वा इमानि भूतानि जायन्ते' (तैत्ति.उ. 3-1) इत्याद्याः तन्मूलं चानुमानं प्रमाणमित्याह - नेति। यद्यस्मादिदं विश्वमग्रे सृष्टेः पूर्वं न आस नासीत्। 'सदेव सोम्येदमग्र आसीत्' (छान्दो.उ.6-2-1) "आत्मा वा इदमेवाग्र आसीत्" (एत.उ. 1-1-1) इत्यादि श्रुतेः। "न च निधनात् प्रलयादनु अनन्तरं भविष्यत् भविष्यति"। नासदासीन्नो सदासीत्तदानीम् (यजु. अ.2-8-9) इत्यादि श्रुतेः। अतः कारणात् अन्तरा मध्येऽप्येकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभातीति मितं निश्चितम्। यत एवं हि अतः श्रुत्या द्रविणजातिविकल्पपथैः द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पा भेदा घटकुण्डलादयः तेषां पन्थानो मार्गाः प्रकाराः तैरुपमीयते सदृशतया निरूप्यते। यथा तत्र कार्याकाराणां नामधेयमात्रता कारणं मृदाद्येव तु सत्यं, तथा अत्रापि आकाशादीनां नाममात्रता ब्रह्मैव सत्यम्[1]। तथा च श्रुतिः - 'यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति' (छान्दो.उ.6-1-6) 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छान्दो. उ. 6-4-1) 'यथा नाम एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्' (छान्दो.उ.6-1-5) 'यथा एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसम्' (छान्दो.उ.6-1-6) इत्यादि। तस्मादस्य सत्त्वे प्रमाणाभावादसत्त्वे प्रमाणस्य विद्यमानत्वात् वितथमनो विलासमृतं सत्यमिति ये अवयन्ति जानन्ति तेऽबुधाः। अज्ञा इत्यर्थः। अत्रैवं प्रयोगः - विवादाध्यासितं न सत्। आद्यान्तयोरविद्यमान त्वाद्विकारित्वाद्दृश्यत्वाच्च शुक्तिरजतादिवत् इत्यन्वये दृष्टान्तः - आत्मवच्चेति। व्यतिरेके दृष्टान्तः। मुकुटकुण्डलकङ्कणकिङ्किणीपरिणतं कनकं परमार्थतः। महदहङ्कृतिखप्रमुखं तथा नरहरेर्न[2] परं परमार्थतः ॥ २४ ॥ ३७ ॥

ननु यदि प्रपञ्चो नाम नास्त्येव तदाऽसता तेन न चैतन्यस्य सम्बन्धगन्धोऽपि तर्हि किमपराद्धं जीवेन यतोऽयं संसरति किं वा बहुपुण्यमीश्वरस्य यतो नित्यमुक्तः किंविषयं च तदा कर्मकाण्डमित्यपेक्षायां जीवेश्वरविशेषं 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' (मुण्ड. उ. 3-1-1) इति। 'अजामेकां लोहिताशुक्लकृष्णाम्' (म. ना. उ. 8-4) इत्याद्या वदन्तीत्याह - स इति। स तु जीवो यद्यस्मादजया मायया अजा मविद्यां अनुशयीत आलिङ्गेत् ततो गुणांश्च देहेन्द्रियादीन् जुषन् सेवमानः आत्मतयाध्यस्यंस्तदनु तदनन्तरं सरूपतां तद्धर्मयोगं च जुषन् अपेतभगः पिहिताऽऽनन्दादिगुणस्सन् मृत्युं संसारं भजति प्राप्नोति। तद्विषयमेव च कर्मकाण्डमिति भावः। त्वमुत त्वं तु जहासि तामजां मायाम्। ननु स मय्येवास्ति, कथं त्यागस्तत्राह - अहिरिव त्वचमिति। अयं भावः - यथा भुजङ्गः स्वगतमपि कञ्चुकं गुणबुद्ध्या नाभिमन्यते तथा त्वमजाम् न तु निरन्तराह्लादि संवित्कामधेनुवृन्दपतेः अजया कृत्यमिति तामुपेक्षस इति। कुत एतत्तदाह - आत्तभगो नित्यप्राप्तैश्वर्यः। महसि परमैश्वर्येऽष्टगुणितेऽणिमाद्यष्टविभूतिमति महीयसे पूज्यसे विराजसे। कथम्भूतः? अपरिमेयभगोऽपरिमितैश्वर्यः। न ह्यन्येषामिव देशकालादिपरिच्छिन्नं तवाष्टगुणितैश्वर्यम् अपि तु परिपूर्णस्वरूपानुबन्धित्वादपरिमितमित्यर्थः। नृत्यन्ती तव वीक्षणाङ्गणगता कालस्वभावादिभिः भावान्

सत्त्वरजस्तमोगुणमयानुन्मीलयन्ती बहून्। मामाक्रम्य पदा शिरस्यतिभरं सम्मर्दयन्त्यातुरं माया ते शरणं गतोऽस्मि नृहरे त्वामेव तां वारय ॥ २५॥ ३८॥

एवं तावदुक्तसाधनकदम्बेन ये भगवन्तं भजन्ति ते मृत्युं तरन्ति इतरे संसरन्तीत्युक्तम्। इदानीं ये बहिस्सङ्गं परित्यज्य भगवन्मार्गे प्रवृत्ता अपि कथञ्चिदन्तर्वान्ताशिनः कामान्न मुञ्चन्ति न भगवन्तं प्राप्नुवन्ति न चेह सुखं लभन्ते केवलं कुयोनीरेव प्राप्नुवन्ति तान् शोचन् 'कामान् यः कामयते मन्यमानः सः कर्मभिर्जायते तत्र तत्र' (मुण्ड.उ.3-2-2) इत्यादि श्रुत्यर्थमाह - यदीति। हे भगवन्! ये यतयो हृदि स्थिताः कामजटाः कामस्य जटा मूलाज्ञानवासना यदि न समुद्धरन्ति नोत्पाटयन्ति तेषामसतां भवान् हृदि गतोऽपि दुरधिगमो दुष्प्रापः। कथम्? अस्मृतकण्ठमणिः विस्मृतो यः कण्ठमणिः तत्तुल्यः। स यथा कण्ठे वर्तमानोऽप्यस्मृतश्चेदप्राप्त इव भवति तद्वदिति। न केवलमेतावत् किन्त्वसुतृपयोगिनामिन्द्रियतर्पणपराणां योगच्छद्मनामुभयतोऽप्यसुखमिहामुत्र च दुःखमेव तदाह- अनपगतान्तकादनिवृत्तान्मृत्योः। लोकाराधनधन ज ˉनादि क्लेशाद्भोग वैभवप्राकट्यभयाच्च इह तावद्दुःखम् भवत ईश्वरादपि दुःखम्। कथम्भूतात्? अनधिरूढपदात् अनधिरूढं पदं स्वरूपं यस्य तस्मात्। त्वत्स्वरूपप्राप्त्यभावादविद्यावद्विषयत्वेन प्राप्तनिजधर्मा[5]तिक्रमनिबन्धन त्वद्दण्डरूपनरकप्राप्तेः अमुत्राप्यसुखमित्यर्थः। 'दम्भन्यासमिषेण वञ्चितजनं भोगैकचिन्तातुरं सम्मुह्यन्तमहर्निशं विरचितोद्योगक्लमैराकुलम्। आज्ञालङ्घिनमज्ञमज्ञजनतासम्माननाः [6]दुर्मदं दीनानाथ! दयानिधान! परमानन्द! प्रभो! पाहि माम् ॥ २६॥ ३९॥

ननु यतेर्न किमपि कृत्यमस्ति प्रारब्धमपि सुखोपभोगेनापक्षी[7]यते अतः किमिति वृथा शप्यते उभयतोऽप्यसुखमिति। श्रूयते च - 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' (बृह.उ.4-4-23) इत्यादि तत्राह - त्वदवगमीति। हे सगुण! षड्गुणैश्वर्ययुक्त! त्वदवगमी त्वज्ज्ञानवान् भवदुत्थशुभाशुभयोः भवतः कर्मफलदातुरीश्वरादुधेतो रुत्थयोराविर्भूतयोः शुभाशुभयोः प्राचीनपुण्यापुण्य कर्मणोः फलभूतान् गुणविगुणान्वयान् सुखदुःखसम्बन्धान् न वेत्ति नानुसन्धत्ते तर्हि तदानीं च देहभृतां देहाभिमानिनां प्रवृत्तिनिवृत्तिकरीर्गिरो विधिनिषेधलक्षणा न वेत्ति। विगतदेहाभिमानतया कार्याकार्यबोधाभावान्न नियुज्यत इत्यर्थः। युक्तं चैतत्। यतः कारणान्मनुजैरन्वहं श्रवणभृतः अनुदिनं श्रवणेन चेतसि धृतस्त्वं तेषामपवर्गगतिः अपवर्गरूपा गतिः भवसि। कथम्? श्रवणभृतः अनुयुगं प्रतियुगं या गीतपरम्परा उपदेशसन्ततिस्तया, सत्सम्प्रदायानुसारेणेत्यर्थः। एतदुक्तं भवति - ये [8]तावत् तत्त्वज्ञानिनो न तेषां कर्माधिकारशङ्कापि ये च अनवरतं त्वत्कथाश्रवणादि निष्ठाः तेषामप्यासन्नभवत्पदानां न विधिनिषेधबाधः। इतरेषां [9-]तु योगच्छद्मना इन्द्रियलालसानामुभयतो[-9]ऽप्यसुखमिति। अवगमं तव मे दिश माधव स्फुरति यन्न सुखासुखसङ्गमः। श्रवणवर्णनभावमथापि वा न हि भवामि यथा विधिकिङ्करः ॥ २७॥ ४०॥

त्वदवगमी न वेत्ति सुखःखे न च विधिनिषेधावित्युक्तं तत्र ननु कथमवगन्तुं शक्यते दुरधिगमत्वस्योक्तत्वादित्येव

माशङ्क्य सत्यमेवमनवगाह्यमहिम्नो अवाङ्मनसागोचरत्वा दविषयत्वेनैव ज्ञानमिति दर्शयन् 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं भवच्च भविष्यच्च' (बृह.उ. 3-8-4) इत्यादि श्रुतिप्रतिपादितमपरिमितं महिमानमाह - **द्युपतय एवेति**। हे भगवन्! ते अन्तं द्युपतयः स्वर्गादिलोकपतयो ब्रह्मादयो न ययुः न प्रापुः। तत्कुतः? यदन्तवद्वस्तु तत्किमपि त्वं न भवसि। आस्तां तावत्[1] द्युपतयो न ययुरिति। यद्यस्मात् त्वमप्यात्मनोऽन्तं न यासि । कुतस्तर्हि सर्वज्ञता सर्वशक्तिता वाऽत आह - अनन्ततया अन्ताभावेन। न हि शशविषाणाज्ञानं सार्वज्ञ्यं तदप्राप्तिर्वा शक्तिवैभवं विहन्ति। अनन्तत्वमेवाह - यदन्तरेति । यस्य तवान्तरा मध्ये ननु अहो सावरणा उत्तरोत्तरं दशगुणसप्तावरणयुक्ता अण्डनिचया ब्रह्माण्डसमूहा वान्ति परिभ्रमन्ति। वयसा कालचक्रेण खे रजांसीव, इह एकदैव न तु पर्यायेण। हि यस्मात् एवमतः श्रुतयस्त्वयि फलन्ति तात्पर्यवृत्त्या पर्यवस्यन्ति। न तु साक्षाद्वदन्त्ययमेतावानिति। सगुणस्य गुणानन्त्यान्निर्गुणस्य चागोचरत्वात्। कथं तर्हि अपदार्थे तात्पर्यमिति। तत्र विधिमुखवाक्ये भवेदयं नियमः पदार्थस्यैव वाक्यार्थत्वमिति। निषेधमुखे तु नायं नियम इत्याह - अतन्निरसनेनेति। 'अन्यदेव तद्विदितादथो "अविदितादधि" (केन.उ.1-4) 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रा स्मात्कृताकृतात्' (कठ.उ.2-4) "अस्थूलमनणु" (बृह.उ.3-8-8) इत्यादिप्रकारेण लक्षणया च 'तत्त्वमसि' (छान्दो. उ. 6-7-8) इत्यादयः पर्यवस्यन्ति। न च वाच्यं निषेधैः शून्यमेव ज्ञाप्यत इति। यतो भवन्निधनाः भवति त्वयि निधनं समाप्तिर्यासां तास्तथा। न हि निरवधिनिषेधः सम्भवति अतोऽवधिभूते त्वयि फलन्तीत्यर्थः। द्युपतयो विदुरनन्तमनन्त ते न च भवान्न गिरः श्रुति मौलयः। त्वयि फलन्ति यतो नम इत्यतो जय जयेति भजे तव तत्पदम् ॥ २८॥ ४१॥

---

1. Ml.V. add इति निरूप्यते इत्यर्थः 2. Ml.V. पृथक् 3. B. J. Omit जटाः 4. B.J. मूलानि वा" 5. Ml.v. कर्मांति 6. B. J. सन्मदं 7. B. J. क्षय्यते 8. B. J. Omit तावत् 9- -9 B.J तु तानतादित्यतो

**वीर०** ननु 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् (छान्दो. उ. 6-1-4) इत्यादिमृदादिदृष्टान्तेषु मृदादिकारणानामेव 'मृत्तिकेत्येव सत्यम्' इत्यादिभिः सत्यत्व प्रतीतेः विकाराणां नामधेयानां च वाचारम्भणमित्यनेन वागालम्बनं व्यवहारमात्रं न तु पारमार्थ्यमिति मिथ्यात्वप्रतिपादनाच्च दार्ष्टान्तिकेऽपि सन्मात्रस्य ब्रह्मणः पारमार्थ्यं, कार्यस्य तु मिथ्यात्वमकामेनाऽपि स्वीकार्यमित्याशङ्कायां मृत्पिण्डकार्यादि दृष्टान्तानां कार्यमिथ्यात्वपरत्ववर्णनमविदुषामेव रोचते, न विदुषामित्याहुः - **न यदिति**। अत्र विकल्पपथैरित्यन्तेन कार्यमिथ्यात्वपरत्ववर्णनानुवादः। वितथेत्यादिना तत्प्रतिक्षेप इति विभागः। तथाहि - यत् यस्मात् इदं विश्वम् अग्रे सृष्टेः पूर्वं नास नासीत्। 'सदेव सोम्येदमग्र' (छान्दो. उ. 6-2-1) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐत.उ.1-1-1) इति श्रुतेरिति भावः। निधनात् प्रलयात् अनु अनन्तरं न भविष्यत् न भविष्यति। 'नासदासीन्नो सदासीत्तदानीम्' (यजु.उ.2-

8-9) इत्यादिश्रुतेरिति भावः। अतः कारणादन्तरा मध्येऽपि एकरसे केवले त्वयि, मृषा मिथ्यारूपमेवेदं विभातीति मितं निश्चितं यत एवम् अतः श्रुत्या द्रविणजातिविकल्पपथैः द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पाः भेदाः घटकुण्डलादयः तेषां पन्थानः मार्गाः प्रकाराः तैरुपमीयते सदृशतया निरूप्यते यथा तत्र कार्याकारणां नामधेयमात्रता कारणं मृदाद्येव सत्यम् । तथा अत्राप्याकाशादीनां नामधेयमात्रता। ब्रह्मैव सत्यमिति निरूप्यत इत्यर्थः। तथा च श्रुतिः - 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणंविकारो नामधेयं मृत्तिकेत्येव सत्यं यथा सोम्यैकेन लोहर्मणिना विज्ञातेन सर्वं लोहमयं विज्ञातं स्यात्। यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसम्' (छान्दो. उ. 6-1-6) इत्यादि। अथैतद्दूषयन्ति - वितथेति। कुदृष्टीनां वितथमनोविलसितमेतत्कार्यमिथ्यात्वपरत्ववर्णन मित्यर्थः। प्रतिपन्नोपाधौ बाधादर्शनादिति भावः। तस्मात् कुदृष्ट्यभिमतं कार्यमिथ्यात्वम् ऋतं प्रामाणिकमिति अबुधाः - 'यथा सोम्यैकेन मृत्पिण्डेन' (छान्दो.उ.6-1-6) इत्यादिदृष्टान्तवाक्यार्थानभिज्ञाः अवयन्ति जानन्ति, न तदर्थाभिज्ञा इत्यर्थः। अयं भावः - अत्र हि न कार्यमिथ्यात्वं कारणसत्यत्वं च प्रतिपाद्यते। किन्तु कार्यकारणयोः अनन्यद्रव्यत्वं,तथाहि - 'स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यात्' (छान्दो. उ. 6-1-3) इति कृत्स्नस्य जगतो ब्रह्मैककारणत्वं कारणात्कार्यस्यानन्यत्वं च हृदिनिधाय कारणभूतब्रह्मज्ञानेन कार्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य सूक्ष्मचिदचिद्विशिष्टब्रह्मैककारणतामजानता शिष्येण - 'कथन्नु भगवस्स आदेशः' (छान्दो.उ. 6-1-3) इत्यन्यज्ञानेनान्यस्य ज्ञातत्वासम्भवं चोदितो ब्रह्मैककारणतामुपदेक्ष्यन् लौकिकप्रतीतिसिद्धं कारणात्कार्यस्यानन्यत्वं तावत् 'यथा सोम्यैकेन' (छान्दो. उ. 6-1-6) इत्यादिना दर्शयति। यथैकमृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्त द्रव्यतया तज्ज्ञानेन ज्ञाततेत्यर्थः। अत्र काणादवादे कारणात्कार्यस्य बुद्धिशब्दान्तरादिभिः द्रव्यान्तरत्वमाशङ्क्य लोकप्रतीत्यैव कारणात्कार्यस्यानन्यतोपपाद्यते - वाचेत्यादिना। आरभ्यते आलभ्यते स्पृश्यत इत्यारम्भणं, 'कृत्यल्युटः' (अष्टा.3-3-113) इति कर्मणि ल्युट्। वाचा वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः। हेतुत्वं च अत्राध्ययनेन वसतीतिवत्। घटेनोदकमाहरेत्यादिवाक्पूर्वको हि उदकाहरणादि व्यवहारः, तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादि लक्षणो विकारः संस्थानविशेषतत्प्रयुक्तं च घट इत्यादिनामधेयं स्पृश्यते। उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयभाग्भवति। अतो घटाद्यपि मृत्तिकेत्येव सत्यं, मृत्तिकाद्रव्यमित्येव सत्यं, प्रमाणेनोपलभ्यत इत्यर्थः। न तु द्रव्यान्तरत्वेन। अतस्तस्यैव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धिशब्दान्तरादय उपपद्यन्ते। यथैकस्य देवदत्तस्यावस्थाभेदात् बालो युवा स्थविर इति बुद्धिशब्दान्तरादयः कार्यविशेषाश्च दृश्यन्ते, तद्वदिति। एवं चैकमेव चिदचिद्विशिष्टं ब्रह्म सृष्टेः प्राक् निधनानन्तरं च नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टत्वेनावतिष्ठते । अन्तरा तु तद्विभागार्हस्थूल चिद चिदात्मकप्रपञ्चाकारोणावतिष्ठत इत्यवस्थानामनित्यत्वेऽपि तदाश्रयस्य द्रव्यस्य उभयावस्थायोगनः

पारमार्थ्यमेवेति बुधा अवयन्तीति 'नासदासीन्नो सदासीत्' (यजु.अ. 2--8-9) इत्यस्य स्थूलावस्थमचिद्द्रव्यं चिद्द्रव्यं च प्रलयदशायां नासीत्। किन्तु तमः निरतिशयसूक्ष्मदशापन्नमचिद्द्रव्यं तमसा तमस्सदृशे नाचिद्द्रव्येण गूढं तिरोहितं प्रकेतं सूक्ष्मावस्थं चिद्द्रव्यं चासीदित्यर्थः। उक्थजडानबुधाः इत्यनेन जीवानामज्ञत्वसम्भावना सूचिता ॥ ३७ ॥

ननु भगवत इव तेषामपि नित्यत्वैकरसत्वप्रकृतिस्थत्वाद्यविशेषेऽपि कथं तेषां तत्सम्भावना तव सम्भावनया अप्यभाव इत्याशङ्कायां प्रकृतिवश्यत्वतदभावाभ्यामेवेत्याहुः - **स यदजयेति**। स जीवो यत् यस्मात् अजया त्वन्मायया' मोहित इति शेषः। अजां प्रकृतिपरिणामात्मिकां देवमनुष्यादिमूर्तिम् अनुशयीत आलिङ्गति बिभर्तीति यावत्। ततो गुणान् शब्दादिविषयान् जुषन् सेवमानः सरूपतां स्थूलत्वकृशत्वादिदेहधर्मतां भजति, देहात्माभिमानी भवतीत्यर्थः। तदनु तदनन्तरं मृत्युं मरणं भजति प्राप्नोति। इत्थं जन्ममरणादिरूपसंसृतिभाक्त्वात् अपेतः भगः ज्ञानैश्वर्यादिर्यस्य तथाभूतो भवति। त्वमुत त्वं तु सर्पस्त्वचं कञ्चुकमिव तामजां जहासि। नियमेन तत्परतन्त्रतया सम्बन्धरहितोऽसि। अहिदृष्टान्तः त्यागमात्राभिप्रायकः। अत एवात्तः नित्यं परिगृहीतः भगः येन तथाभूतः - 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ' (विष्णु. पु. 5-74) इति भगशब्दार्थोऽवगन्तव्यः। तथापि किं जीव इव अहमपि परिच्छिन्नभगः, नेत्याहुः - अपरिमेयभगः अपरिचछिन्नैश्वर्यादिमान् अष्टगुणिते अपहतपाप्मत्वादयोऽष्टौ गुणाः ते अस्य नित्यं सञ्जाता इत्यष्टगुणितं, तारकादित्वादितच्। तस्मिन् नित्याविर्भूतापहतपाप्मत्वादिगुणाष्टकयुक्ते महसि अपरिच्छिन्ने स्वयंप्रकाशस्वरूपे महीयसे महसि स्थित्वा पूज्यस इत्यर्थः ॥ ३८ ॥

इत्थमपेतभगस्य पुनस्तत्प्राप्तौ किं निदानमित्यपेक्षायाम् अनन्यप्रयोजनं त्वदुपासनमेवेत्यभिप्रेत्य तावत् भगवत्प्रावण्ये सत्यपि कामहतानामनर्थमाहुः - **यदीति**। यतयः मुनयः मनःप्रणिधानशीला अपि यदि हृदि स्थिताः कामजटाः कामानां मूलानि वासना ईति यावत्। न समुद्धरन्ति नोत्पाटयन्ति। तर्हि तेषामसतां हृदि गतः स्थितोऽपि त्वं दुरधिगमः दुर्ज्ञेयः अस्मृतकण्ठमणिः कण्ठे स्थितोऽप्यस्मर्यमाणो मणिरिव स यथा कण्ठे वर्तमानोऽप्यस्मृतश्चेदज्ञातप्राय एव हि भवति। किञ्च हे भगवन्! तेषामसुतृपयोगिनां प्राणेन्द्रियतर्पणपराणां योगिनामुभयतः इह परलोके च असुखं दुःखमेव। तदेवाहुः - अनपगतान्तकात् अनिवृत्तात् मृत्योः इह परलोके च असुखं दुःखमेव। भोगपौष्कल्येऽपि मरणभयं दुःखमस्त्येवेति भावः। परलोके तु अनधिरूढपदाद्भवतस्सकाशात् दःखम् अनधिरूढम् अप्राप्तम् पदं त्वत्स्थानं येन तस्मात् भावप्रधानो निर्देशः। अप्राप्तत्वत्पदत्वात् त्वत्पदाप्राप्तेरिति यावत्। भवतः निजधर्मातिलङ्घिनां शास्तुर्यमरूपात्त्वत्तो दुःखमित्यर्थः ॥ ३९ ॥

अथानन्यप्रयोजनानां भगवद्भक्तानां तु उभयतस्सुखमेवेत्याहुः - **त्वदवगमीति**। त्वामवगच्छतीति त्वदवगमी त्वद्याथात्म्यज्ञानवान् 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च' (भ.गी.7-14) इत्युक्तिषु तुरीय इत्यर्थः। भवतीति भवः संसारः

तस्मिन्नुत्थयोरुपस्थितयोः फलजननाय समुत्थितयोः इत्यर्थः। तयोः शुभाशुभयोः पुण्यपापात्मकयोः कर्मणोः गुणविगुणान्वयान् फलभूतसुखदुःखसम्बन्धान् तर्हि तदानीं च देहभृतां गिरः स्तुतिनिन्दावाक्यान्यपि न वेत्ति नानुसन्धत्ते, कुतः? यतः त्वमपवर्गगतिः तस्य देहान्ते अपवर्गसाधनभूतः, अनेन परलोके सुखमुक्तम्। इह तु मनुजैस्तावकैस्सह अनुयुगं प्रतियुगम्। अनुवर्तिन्या सगुणगीतपरम्परया सगुणस्य अनन्तकल्याणगुणयुक्तस्य तव गीतपरम्परया कथामृतपरम्परया अन्वहं श्रवणभृतः श्रवणेन चेतसि धृतः यतस्त्वत्कथामृतपानमत्तः ततो न वेत्तीत्यर्थः ॥ ४० ॥

इत्थं यथामति संस्तुत्य अथ त्वन्माहात्म्यस्यापरिच्छिन्नत्वात् साकल्येन स्तोतुं न शक्नुम इति निगमयन्ति -**द्युपतय इति**। द्युपतयः स्वर्गादिलोकपतयः महेन्द्रब्रह्मादय एव ते तावन्तं स्वरूपस्वभावपारं न ययुः न जानीयुरित्यर्थः। किं पुनर्मनुजादय इति भावः। किं बहुना, त्वमपि न यासि,कुतः? अनन्ततया स्वरूपस्वभावयोः अपरिच्छिन्नतया, न चैतावता तव सर्वज्ञत्वभङ्गः, यथावस्थितवस्तुविषयकज्ञानस्यैव सर्वज्ञत्वावहत्वात् अपरिच्छिन्नस्य परिच्छिन्नत्वज्ञानस्याज्ञत्वावहत्वाच्चेति भावः। महिम्नोऽपरिच्छिन्नत्वमेव प्रतिपादयन्ति - यदन्तरेत्यादिना। यस्य तव अन्तरा मध्ये एकैकस्मिन् रोमकूपे सावरणाः सप्तभिरावरणैस्सहिताः अण्डानां ब्रह्मण्डानां निचयास्समूहाः वान्ति सञ्चरन्ति। यथा खे आकाशे रजांसि, वयसेति जात्यभिप्रायमेकवचनम्। पक्षिभिस्सह वान्ति तद्वत्। यत् यस्मादेवं हि ततः श्रुतयः, पारोक्ष्यनिर्देशः स्तुतेः अन्यगतत्वाभिप्रायकः, त्वयि अतन्निरसनेन तस्मादपारमहिम्नस्त्वत्तः अन्यत् प्रकृतिपुरुषादिवस्तु तन्निरसनेन तत्साजात्यप्रतिषेधेन तत्पूर्वकमित्यर्थः। भवन्निधनाः भवति निधनं निष्ठा पर्यवसानमिति यावत्, तद्यासां ताः शब्दवृत्त्या तात्पर्यवृत्त्या च प्रकृतिपुरुषसाजात्यनिरसनेन तद्विलक्षणं त्वां बोधयन्तीत्यर्थः। फलन्ति सफला भवन्ति कृतार्थानि भवन्तीत्यर्थः। समस्तचेतनाचेतनसाजात्यनिरसनेन तद्वैलक्षण्यमात्रं बोधयन्ति न तु साकल्येन, त्वत्स्वरूपस्वभावादिकं बोधयितुं शक्नुवन्तीति भावः ॥ ४१ ॥

---

1. B.T.W भयजं

**विज०** जीवस्येश्वरत्वे बाधकमाह - **नेति**। इदमीश्वरत्वमग्रे उत्पत्तेः पूर्वं जीवेषु गर्भस्थेषु नाऽऽस नास्ति न भविष्यत् यदि गर्भस्थ ईशो भवेत्तर्हि उत्तरत्रापि अभविष्यत्। न च तथेति। यस्मादतो निधनात् मरणादनन्तरमपि नरकादिगमनान्न विद्यत इत्यर्थः। ननु अस्येशोऽहमिति किन्निमित्ताप्रतीति रत्राह-अनिमित्तकमिति।अः विष्णुः निमित्तं यस्य तत्। अनिमित्तकं भगवन्निमित्तकमेव तस्य जन्ममरणयोरन्तरा मध्ये त्वयि जीवे मृषैवेशितृत्वं भाति न तु वस्तुतः त्वं जीवः कुतः? एकरसे प्रधानसारे न च वस्तुतः जीवः सर्वोत्तमसारः मृषैव तथा मन्यते। अतो भ्रान्तिरेव तथा ज्ञाने प्रयोजकेत्याह - अत इति। यतो जीवः सर्वसारो न भूयादतो द्रविणजातिविकल्पपथैः जीव उपगीयत इत्यन्वयः। भ्रन्त्या जीवो द्रविणवान् अभिजातिमानित्यादि

साक्षिविरुद्ध कल्पनामार्गैः कथ्यते, अज्ञैरिति शेषः। विद्वद्भिस्तु भवानेव द्रविणादिमानित्युच्यते। कुतः ? यतस्तपोदमाद्या अभिजन्मकारणभूताः गुणाश्च भवत एव कथमेतदिति तत्राह - वितथेति। यतोऽभिजात्यादिगुणास्तव मुख्याः, अत इदं जीवस्येश्वरत्वं बुधाः तत्वज्ञानिनो वितथमनोविलासं मिथ्यामनोविकारमित्यवयन्ति जानन्ति। गुणा एव अभिजात्याख्या स्तद्वानेवाभिजातिमान्। 'अतोऽभिजात्यवान्विष्णुस्तदन्ये तूपचारतः' (शब्दनिर्णये) इति वचनात्। 'ये जगत्प्रवदन्त्यज्ञा जीवादन्येशवर्जितम्। तेषामपि तु तां वाचमीश एव ददात्यजः। न च तर्कैर्भवेदीशो जीवो वेदविरोधतः॥' (तन्त्रभागवते) इत्यादिस्मृत्यर्थत्वेन श्रुत्यन्तरमप्यूह्यम् ॥ २४ ॥ ३७ ॥

'स्मरन् ब्रह्मगुणान्नित्यं मुक्तौ ब्रह्मसरूपताम्। दुर्भगां प्रकृतिं त्यक्त्वा हत्वा चान्यां दुरन्वयाम्। याति तच्च परेशानात्स हि पूज्योऽथ पूजकः। तस्यैकस्य स्वतन्त्रत्वात् स चानन्तगुणो विभुः' (खातिलश्रुतिः) इति श्रुत्यर्थरूपस्य उदगात्पुमानित्यस्यायमर्थः। अनुशब्दो विकल्पार्थः। श्रुतिष्वनुगीतगुणान्। चशब्दात्तव कर्माणि च जुषन् तदनुगुणस्मरणमनु उदगात्संसारादिति शेषः। अस्मात्संसारान्मुक्तो भवतीत्यर्थः। तव सरूपतां च भजति। कश्चित्सायुज्यं कश्चित्सारूप्यं कश्चित्सालोक्यं च। यद्वा गुणस्मरणमनुगुणाननुकूलान् प्रातरादिकालविशेषान् जुषन् यश्चायं पुमान् परमेण त्वया आत्तभगां अपहृतप्रयत्नलक्षणशक्तिं प्रातिस्विकीं पूर्वोक्तां द्विविधां नीचां तां प्रकृतिं जहाति त्यजति। जिहाति हन्ति च। तदुभयमपि त्वमेव जहासि उत जिहसि च। उत त्यागवधयोः समुच्चयार्थः। 'जिहाति रावणं सङ्ख्ये राघवः परमास्त्रवित्' (स्कान्दे) इति च। 'स्वातन्त्र्यात् प्रकृतित्यागकर्ता नारायणः परः। यद्यप्येषा जीवसंस्था हन्ता च भगवान्प्रभुः' (गारुडे) इति च। किञ्च महसि असुरजनमोहनाय शिवादीन्पूजयसि। महीयसे च सुरजनेन पूज्यसे च अणिमाद्यष्टगुणः व्याप्तगुणो वा। 'अशू व्याप्तौ' इति धातुः। अपरिमेयभगः दुर्ज्ञेयपरमैश्वर्यादिगुणः ॥ २५ ॥ ३८॥

**यदि न समुद्धरन्तीत्य**स्यायमर्थः। यदि यतयोऽपि हृदिकामजडात् जडशरीराविष्टकामात् न समुद्धरन्ति सम्यक् नोद्गच्छन्ति नोत्थिता भवन्ति विषयकामाः स्युरित्यर्थः। तर्हि हृदि गतोऽपि तेषामसतामप्रशस्तकर्मणां पुंसां दुरधिगमो दुर्ज्ञेयः। अस्मृतकण्ठमणिरिति लुप्तोपमा। विस्मृतकण्ठमणिः पुरुषो यथा कण्ठस्थितं मणिं न जानाति तथेत्यर्थः। अनेन स यथा कामो भवति तत्क्रतुर्भवति। तत्कर्म कुरुते तदभिसम्पद्यते इति कामयमान इत्येतद्विवृतम्। हे भगवन्! अनुतृप्तयोगिनाम् अनुतृप्तानां विद्ययाऽलम्बुद्धिं प्राप्तानां निष्कामानामित्यर्थः। निवृत्तमार्गस्थानां पुंसां भवतोऽधीनात् अनधिरूढपदात् अनारूढवैकुण्ठादिब्रह्मस्थानादज्ञानामनवगमात् अज्ञातादन्तकात् कालादिलक्षणादभयोऽभयप्रदः पूर्णानन्दादिलक्षणां मुक्तिं ददातीत्यर्थः। इन्द्रियाभिमानि देवानां वियोगाभावलक्षणां च अमुना च 'अथा कामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रमन्ति ब्रह्मैव सन् ब्रह्माऽप्येति' इति श्रुतिव्याख्यानम्। अस्याः श्रुतेः विशेषार्थः। 'निषिद्धकामयुक्तानामसतां तु विशेषतः। दुर्ज्ञेयो भगवान्विष्णुर्हृदिस्थोऽस्मृतहारवत्' (ब्रह्मतर्के) इत्यादिवाक्यादेव अवगन्तव्यः। 'देवाश्च ऋषयश्चैव सुभक्त्या कामिनोऽपि तु' इत्यादिना कामित्वे यतित्वमप्रयोजकमित्युक्तम् ॥ २६॥ ३९॥

सकलश्रुतिस्मृतिभावसङ्ग्रहात्मनः तदवगमार्थ सितासितयोरित्यस्यायम्भावः। देहभृतां जीवानां सगिरः गिरा वाचा सहिताः श्रोत्रादयः गुणविगुणयोः तदवगमार्थसितासितयोः नानुययुर्हि इत्यन्वयः। द्वितीयार्थे षष्ठी। गुणरूपा श्रीः विगुणो निर्गुणो विष्णुः तौ पूर्वं प्रस्तुतो विष्णुः तच्छब्देन परामृश्यते। तस्य हरेरवगमो यस्यास्सा तदवगमा तया श्रियाऽर्थ्यते ज्ञायते सम्यगित्यर्थः। परमस्तेन सिता बद्धा सर्वदा तदधीनत्वेन वर्तते इति श्रीः। असितोऽबद्धो नित्यमुक्तो विष्णुस्तौ श्री श्रीधरौ नानुययुः आनुकूल्येन यथास्थितरूपगुणविषयत्वेन न प्रापुः तद्विषयीकरणोपायमाह - अत्रेति। अत्र जीवराशौ हंसकुलगीतपरम्परयेति। हंसनां ब्राह्मणानां कुलेन गीतस्य उपदिष्टस्य ज्ञानस्य परम्परया इन्द्रियाण्यानुययुश्च श्रुतयश्चानुययु रित्युपसंख्यानं कर्तव्यम्। अत्र रजांसीति रजश्शब्दोपादानात् रजोगुणप्रधाना मनुष्या उपलक्ष्यन्ते। तुषा आवरणं कवचं येषां ते तुषावरणाः तुषावरणाः तण्डुलपदार्थाः। रजांसीव यथा धूली(लीःन) न्न वान्ति न स्पृशन्तीत्यर्थः। तथा च श्रुतयः- वयसा महता कालेन सह रजोरूपान्मनुष्यान्न वान्ति प्राप्तफलान्न कुर्वन्तीति यदतो बध्नन्तीति बन्धनाः। विधिनिषेधरूपेण पुरुषं बध्नन्त्यः श्रुतयः सात्त्विकानामर्थे त्वयि सफलं पतन्ति। त्वद्गुणगणान्प्रकाश्य त्वदुपासकानां पुरुषार्थहेतवो भवन्ति, राजसानां बुद्धिव्यामोहकत्वेन त्वयि न पतन्ति पुरुषार्थहेतवो न स्युरित्यर्थः। अनेन "जानाति प्रकृतिर्विष्णुं ज्ञेयो विष्णुश्च निर्गुणः। तावुभौ न विजानन्ति ऋते ब्रह्मपरम्पराम्" (महोपनिषत्) इति महोपनिषद्विवृता। "अन्ये सर्वे श्रियाबद्धाः श्रीर्बद्धा विष्णुनैव तु। बन्धश्च विष्णुतन्त्रत्वं मुक्तानां च श्रियस्तथा" (गारुडे) इत्यादि गरुडपुराणार्थोऽपि सङ्गृहीतः ॥ २७॥ ४०॥ ४१ ॥

**श्रीभगवानुवाच**

**इत्येतद्ब्रह्मणःपुत्रा आश्रुत्यात्मानुशासनम् ।**
**सनन्दनमथानर्चुस्सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥ ४२ ॥**

**इत्यशेष समाम्नाय पुराणोपनिषद्रसः ।**
**समुद्धृतः पूर्वजातै[1]र्व्योम[2-]यानैर्म[-2]हात्मभिः ॥ ४३ ॥**

**त्वं चैतद्ब्रह्मदायादश्रद्धयाऽऽत्मानुशासनम् ।**
**धारयंश्चरगां कामं कामानां [4]भर्जनं नृणाम् ॥ ४४ ॥**

**[5-]श्रीशुक उवाच[-5]**

**एवं [6-]स गुरुणा[-6]ऽऽदिष्टं[7] गृहीत्वा श्रद्धयाऽऽत्मवान् ।**
**पूर्ण[8]श्श्रुतधरो राजन्नाह वीरव्रतो[10] गुरुम् ॥ ४५ ॥**

1. B. G. J. Ml.T.V.W. °जैस्तै° 2- -2 M. Ma मायन महा° 3. M.Ma °यन्भज 4. M. Ma Ml.V निधनं 5- -5 M. Ma Omit 6- -6 Ml. T.V.W स्वगुरुणा ; B. G. J स ऋषिणा 7. M. Ma °ष्टो 8. M. Ma °स्सद्यस्ततो 9. M. Ma °न्प्राह 10. B. G. J मुनिः ॥

**श्रीध०** **इतीति**। इत्यशेषसमाम्नायपुराणोपनिषद्रस इति, सर्वश्रुतिपुराणरहस्यतात्पर्यमित्यर्थः ॥ ४२ ॥ ४३ ॥

**त्वमिति**। ब्रह्मदायादेति ब्रह्मैव दायमिव अयत्नप्राप्यमत्ति सेवत इति तथा। ब्रह्मपुत्रेति वा ॥ ४४ ॥

**एवमिति**। पूर्णः कृतकृत्यः। श्रुतधरः श्रुतमर्थं मनसि धारयन् वीरव्रतो नैष्ठिकः ॥ ४५ ॥

**वीर०** इत्थं श्रुतिगीतसंवेदेन सनन्दनोक्तमुत्तरमवधार्य तं बहुमेनिरे इत्याह भगवन्नारायणः - **इत्येवमिति**। इति श्रुत्युक्तप्रकारेण एवं सनन्दनोक्तमात्मानुशासनम्, आत्मा अनुशिष्यते येन तदात्मानुशासनम् उत्तरमाश्रुत्य ब्रह्मणश्चतुर्मुखस्य पुत्राः मरीच्यादयः सिद्धाः, आत्मनः परमात्मनो गतिं प्रकारं याथात्म्यं ज्ञात्वा निश्चित्य अथ सनन्दनमानर्चुः ॥ ४२ ॥

**इतीति**। सर्वश्रुतिपुराणोपनिषत् तात्पर्यमेवं समुद्धृतमिति प्रकृतवेदस्तुतिप्रशंसा ॥ ४३ ॥

**त्वमिति**। हे ब्रह्मदायाद ! ब्रह्मपुत्र ! दायभोक्तृत्वात्पुत्रस्य तस्मिन्दायादशब्द उपचर्यते। एतदात्मानुशासनं नृणां ये कामास्तेषां भर्जनं दाहकं श्रुतिस्तवनं धारयन् कामं यथेष्टं गां भूमिं तदुपलक्षितान् लोकान् चर पर्यट ॥ ४४ ॥

कथमेतत्त्वया विदितमित्यपेक्षायां तद्वक्तुं प्रस्तौति मुनिश्चतुर्भिः - **एवमिति**। गुरुणा बदर्याश्रमवासिना श्रीनारायणेन आदिष्टम् उपदिष्टं श्रद्धया गृहीत्वा तस्मिन्न[1]ेवाहितमनाः पूर्णः निवृत्तसंशयत्वात्पूर्णमनाः श्रुतं यथाश्रुतं धरतीति तथाभूतः वीराणां जितेन्द्रियाणां व्रतं यस्य सः नैष्ठिको नारदः हे राजन्! गुरुं श्रीनारयणं प्राह ॥ ४५ ॥

1. B.T.W °न्नविहित°•

**विज०** इतिशब्दः आदिवचनः। एवमादि श्रुत्या गीतमात्मानुशासनं ब्रह्मज्ञानमाश्रुत्य श्रुत्वा हृदि कृत्वा आत्मनः परमात्मनः गतिं स्वरूपस्थितिं ज्ञात्वा ॥ ४२ ॥

व्योमयनमहात्मभिः ब्रह्माश्रयेषु उत्तमैः तैः पूर्वजैः सनकादिभिः अशेषाणां समीचीनानाम् आम्नायानां पुराणानामुपनिषदां च रसः सार इति समद्धृतः ॥ ४३ ॥

ब्रह्मदायाद! ब्रह्मपुत्र! नारद! काम्यानां निधनं नाशकरं, यद्वा कामानामभीष्टानां फलानां निधनं कुलं गृहं वा। 'निधनोऽस्त्री कुले नाशे निस्त्रिंशे क्रूरखड्गयोः' (वैज.को.7-5-51) इति यादवः ॥ ४४ ॥

पूर्णः स्वतस्तृप्तः ॥ ४५

### श्रीनारद उवाच

नमस्तस्मै भगवते कृष्णायामल[1]कीर्तये ।
यो [2]धत्ते सर्वभूताना[3-]मभवायोशती[-3]: कलाः ॥ ४६ ॥

### [4]श्रीशुक उवाच

इत्याद्यमृषिमा[5]मन्त्र्य तच्छि[6-]ष्यांश्च महात्मनः[-6] ।
ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥ ४७ ॥

सभाजितो भगवता कृतासनपरिग्रहः ।
तस्मै तद्वर्णयामास नारायणमुखा[7]च्छ्रुतम् ॥ ४८ ॥

[8]तथैतद्वर्णितं राजन्य[9]न्नः प्रश्नः कृतस्त्वया ।
[10]यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत् ॥ ४९ ॥

[11-]योऽस्योत्प्रेक्षक[-11] आदिमध्यनिधने [12]योऽव्यक्तजीवेश्वरो
यस्सृष्ट्वेदमनुप्रविश्य [13]ऋषिणा चक्रे [14-]पुरश्शास्ति ताः[-14] ।
यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं [15]यथा
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे
उत्तरार्धे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

1. M. Ma मू॰ 2. M. Ma धाता 3- -3 M. Ma °मभयो यस्य ते ; Ml.V. °मभयायसतीः ; T.W °मभयायोशतीः 4- -4 B. G. J. M. Ma Omit 5. B. G.J °मानम्य 6- -6 K. Ml.T.V.W °श्चामलात्मनः ; M. Ma °श्चामलात्मकान् 7. K °श्च्यु 8. B. G. J इत्येत° ; K.T.W तदेत° 9. M. Ma °श्च 10. M. Ma येन 11- -11 M. Ma यो ह्यात्मा जगदादि 12. M. Ma °नो 13. M. Ma इ 14- -14 पुनस्संहिताम् 15. M. Ma तथा

**श्रीध० नम** इति। श्रीकृष्णावतारतया नारयणं नमस्यति। उक्तं हि - 'एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्' (भग.1-3-28) इति ॥ ४६ ॥

**इतीति**। साक्षात्पितुरिति। योनिव्यवधानं विना जनकस्य अग्निमन्थनावसरे कथञ्चिदरणौ रेतः पतितं ममन्थ व्यासस्तदैव तत उत्पन्नः शुक इति हि वदन्ति ॥ ४७ - ४९ ॥

समस्तवेदस्तुत्यर्थं सङ्गृह्यानुस्मारयति - य इति। योऽस्य विश्वस्योत्प्रेक्षकः। एवमनुशायिनां समस्तपुरुषार्थसिद्‌धये सृष्टिस्थिति[1-]प्रलयादि प्रापणीय[-1]मित्यालोचक इत्यर्थः। अनेन निमित्तत्वमुक्तम्। एवमालोच्यास्यादिमध्यनिधने आदिर्जन्म [2]मध्यः पालनं निधनमन्तः एतेषु कर्मसु यो वर्तते। अनेनोपादानत्वमुक्तम्। ननु प्रकृतिपुरुषयोरुपादाननिमित्तत्वे प्रसिद्‌धे, सत्यम्। तयोरपि तत एवोद्भूतत्वान्मूलकारणं स एवेत्याह - योऽव्यक्तजीवेश्वर इति। प्रवेशनियमने दर्शयति - य इति। पूर्वोक्तप्रकारणेदं सृष्ट्वा यदर्थमेतत्सृष्टं तेन ऋषिणा सृष्टे कार्योऽहमिति दर्शनात् ऋषिः जीवः तेन सहानुप्रविष्टः पुरः शरीराणि तस्य भोगायतनानि चक्रे ताः पुरः शास्ति तस्य भोग्यं ददत्परिपालयति। उपासकस्य च कैवल्यरूपो भवतीत्याह - यं सम्पद्येति। यं सम्पद्य प्राप्यानुशयी अन्वनु दण्डवत्प्रणामैः चरणमूले शेते इति तथा स जीवोऽजां कार्यकारणरूपामविद्यां त्यजति। ननु ब्रह्मसम्पन्नस्यापि जीवस्य तत्सम्बन्धो दृश्यतेऽत आह - सुप्तः कुलायं यथेति। अयं भावः - यथा सुप्तं शरीवन्तमन्ये पश्यन्ति स तु नात्मानं तथा पश्यति एवं जीवन्मुक्तमप्यन्ये देहवन्तं पश्यन्ति स तु न किञ्चत्पश्यतीति तं हरिम् अजस्रमनवरतं ध्यायेत्। किमित्यत आह - अभयं न भयं यस्मात् भयनिवर्तकमित्यर्थः। कुत एतत् ? कैवल्यनिरस्तयोनिं कैवल्येनाप्रच्युतस्वरूपावस्थानेन निरस्ता तिरस्कृता योनिर्मूलकारणं माया येन तम्। "सर्वश्रुतिशिरोरत्ननीराजितपदाम्बुजम्। भोगयोगप्रदं वन्दे माधवं कर्मिनम्रयोः"। ईक्षन्तामिच्छया सन्तः क्षमन्तां मम साहसम्। मया हि स्वीयबोधाय कृतमेतन्न सर्वतः ॥ ५० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे

श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

1--1 MI.V °लया: प्रापणीया: 2. MI.V मध्यं * This verse in not found in B.J. edns.

**वीर०** उक्तिमेवाह - **नम** इति । कृष्णाय सर्वलोकसुखकराय तदुपयुक्ता अमला अकर्मवश्या मूर्तिर्यस्य तस्मै तुभ्यं नमः। केन कारणेन कृष्ण इत्यतस्तं विशिनष्टि - य इति। यो भगवान् सर्वभूतानामभवाय अपवर्गाय उशतीः कमनीयाः निर्मला इति यावत्। कलाः विद्याः धत्ते अपेक्षित विद्योपदेशेन सुखकर इति भावः ॥ ४६ ॥

इतीत्थमाद्यमृषिं नारायणम् अमलम् अन्तः करणं येषां तान् तस्य शिष्यांश्चामन्त्र्य प्रणामपूर्वकमापृच्छ्य साक्षात्स्वयं द्वैपायनस्याश्रमम् अगाज्जगाम ॥ ४७ ॥

**सभाजित** इति। ततो भगवता द्वैपायनेन सभाजितः पूजितः कृतः आसनस्य परिग्रहो येन सः तस्मै द्वैपायनाय नारायणस्य मुखाच्च्युतं निर्गतं श्रुतिस्मृत्यात्मकं वचो वर्णयामास उपदिदेशेत्यर्थः। स तु मह्यमुपदिष्टवानिति तु प्रसिद्धत्वात् नोक्तम् ॥ ४८ ॥

एवं च त्वत्प्रश्नस्योत्तरमागतमित्याह - **तदेतदिति** । हे राजन्! नः अस्मान् प्रति यः प्रश्नस्त्वया कृतः तत् तत्र प्रश्ने एतच्छ्रुतिवचः वर्णितम् उत्तरत्वेन कथितमित्यर्थः। येनोपवर्णितेन अनिर्देश्ये निर्गुणेऽपि ब्रह्मणि श्रुतयश्चरेयुरिति मनश्चरेत् प्रसरेत् निस्संशयं मनो भवेदित्यर्थः ॥ ४९ ॥

'अशेषसमाम्नयपुराणोपनिषद्रसः' इत्युक्तम्। कोऽसौ समाम्नायादीनां रसः, यः श्रुतिगीत्या समुद्धृत इत्यपेक्षायामाह- "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा" (भारत.13 App.13-20 pr) इत्युक्तरीत्या जगदुदयविभवलयलीलः सर्वान्तरात्मा बन्धमोक्षदो भगवानुपास्य इत्येष एवेति वक्तुं स्रष्टृत्वाद्युपयुक्तैर्गुणैर्भगवन्तं विशिंषन् तद्ध्यानं विधत्ते - **योऽस्येति**। अस्य जगतः आदिमध्यनिधने सृष्टिस्थितिलये निमित्ते उत्प्रेक्षकः 'तदैक्षत बहुस्याम्' (छान्दो.उ.6-2-3) इत्युक्तविधेक्षिता, यच्छब्दानां कैवल्यनिरस्तयोनिमित्यनेन सम्बन्धः। यश्च अव्यक्तजीवयोः प्रकृतिपुरुषयोः कारणावस्थयोः ईश्वरः अन्तःप्रविश्य नियन्ता। अनेन कारणावस्थायां सूक्ष्मचिदचिद्वैशिष्ट्यं तस्योपादानत्वं तदुपयुक्तं सर्वशक्तित्वं च फलितम्। उत्प्रेक्षक इत्यनेन निमित्तत्वं तदुपयुक्तं सार्वज्ञ्यं च। यश्च इदं महदादिपृथिव्यन्तसमष्टि तत्त्वजातं सृष्ट्वा ऋषिणा चतुर्मुखाख्यजीवेनानुप्रविश्य जीवद्वाराऽनुप्रविश्येत्यर्थः। पुरः शरीराणि चक्रे निर्ममे। ततः ताः पुरः शास्ति नियमयति पूर् शब्दोऽत्र सजीवदेवादिशरीरपरः, ऋषिणा चक्रे पुरस्संहिता इति पाठान्तरम्। तदा पुरः प्रथमम् ऋषिणा चतुर्मुखेन संहिताः वेदसंहिताः चक्रे प्रावर्तयदित्यर्थः। अनेन हितकृत्त्वमुक्तम्। शास्त्रप्रवर्तनं हि हितार्थम्। अनुशयो भुक्तावशिष्टं कर्म, सोऽस्यास्तीत्यनुशयी कर्मवश्यो जीवः, यं सम्पद्य अजां जहाति प्रकृति सम्बन्धं[1] त्यजति[2] आविर्भूतगुणाष्टको भवति मुक्तो भवतीति यावत्। तथा च श्रूयते "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छान्दो.उ.8-12-2) इति। तत्र दृष्टान्तः - सुप्तः कुलायं यथेति। यथा शकुनिः नीडे कञ्चित्कालं सुप्तः तद्विहायोड्डीयते तद्वदजायां स्थितः अनुशयो जीवः यं सम्पद्य तां जहातीत्यर्थः। कैवल्यनिरस्तयोनिं संसारिणां मोक्षप्रदानेन निरस्ता योनिः प्रभवदुःखं येन तं, न विद्यते भयं यस्मात्तं हरिम् आश्रितार्तिहरम् अजस्रं नित्यं ध्यायेत् ॥ ५० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

1. T.W.Omit सम्बन्धं 2. T.W जहाति

**विज०** सर्वभूतानां धाता धृतिपोषणयोः कर्ता यः सर्वभूतानाम् इति प्रस्तुताः ते जीवाः यस्य तव कलाः प्रतिबिम्बांशाः ॥ ४६ ॥

ऋषिरूपत्वादृषिः ॥ ४७ ॥

अत्र नारदेन व्यासाय कथाकथनं स्तुत्यर्थं न तु ज्ञापनाय। "कथाः कथयती शस्य व्यासस्यान्ते स नारदः। स्तुत्यर्थं तस्य देवस्य ज्ञापनाय न तु क्वचित्" (ब्राह्मे) इत्यादि ॥ ४८ ॥

त्वया यः प्रश्नः कृतः तत्प्रश्नवचनमुद्दिश्यैतत्परिहारवचनं वर्णितम्। येन वर्णितप्रकारेणानिर्देश्ये निर्गुणे ब्रह्मणि मनश्चरेत् तर्थोत ॥ ४९ ॥

उपासनार्थं स्वलक्षणैर्लक्षयति - **यो हीति**। आत्मा जगदादिमध्यनिधनानि उत्पत्तिस्थितिसंहाराः यस्मात् स तथा, यश्च अव्यक्तजीवयोः प्रकृतिचेतनयोरीश्वरः। यश्चेदं सृष्ट्वाऽनुप्रविष्टः यश्च ऋषिणा ऋषिरूपेण पुराणसंहितां चक्रे। अनुशयी जीवः। यं पुनः सम्पद्य प्राप्य अजां बन्धकशक्तिं जहाति। सुप्तः कुलायं शरीरादावभिमानं च यथा त्यजति तं कैवल्यनिरस्तयोनिं समाधिकभावेन निराकृतकारणं तं हरिम् अजस्रं निरन्तरं ध्यायेदित्यन्वयः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्ताशीतितमोऽध्यायः ॥ ८७ ॥



# अष्टाशीतितमोऽध्यायः

(विजयध्वजरीत्या द्विनवतितमोध्यायः)

**राजोवाच**

**देवासुर मनुष्येषु ये भजन्त्यशिवं शिवम् ।**
**प्रायस्ते धनिनो [1]भोजा न तु लक्ष्म्याः पतिं हरिम् ॥ १ ॥**

**एतद्वेदितुमिच्छामस्सन्देहोत्र महान्हि नः ।**
**विरुद्धशीलयोः प्रभ्वोः विरुद्धा भजतां गतिः ॥ २ ॥**

**श्रीशुक उवाच**

**शिवशक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः ।**
**वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ३ ॥**

**ततो विकारा अभवन् षोडशामीषु [2]कञ्चन ।**
**उपधावन् विभूतीनां सर्वासामश्नुते गतिम् ॥ ४ ॥**

**[3]हरिर्हि निर्गुणस्साक्षात् [4]पुरुषः प्रकृतेः परः ।**
**ससर्वदृक् उपद्रष्टा तं भजन् निर्गुणो भवेत् ॥ ५ ॥**

---

1. M. Ma. Ml.V. ब्रह्मन्  2. M.Ma पञ्चसु  3. M. Ma °स्तु 4. K.T.W. भगवान्

## श्रीधरस्वामि विरचिता भावार्थदीपिका

अष्टाशीतितमे विष्णुभक्तः कैवल्यमश्नुते। ततोऽर्वाग्देव भक्तस्तु विभूतिमिति वर्ण्यते ॥

हरिर्भजतां मुक्तिद इत्युक्तं 'अभयं ध्यायेदजस्रं हरिंम्' (भाग.10-87-50) इति। तत्र शङ्कते - **देवासुरेति**। अशिवं अवधीरित भोगं [1-]त्यक्तविषयं[-1] [2]धनिनः [3]भोजाः भोगिनः लक्ष्म्याः पतिं सर्वभोगयुक्तम् ॥ १,२ ॥

**शिव इति**। अन्योन्योपमर्दन तमसः त्रैविध्यात् त्रिलिङ्गः त्रिलिङ्गत्वमेवाह वैकारिक इति। अहं अहङ्कारः॥ ३ ॥

**तत** इति। विकाराः मन इन्द्रियभूतरूपाः षोडशेति इन्द्रियदेवानामभेदविवक्षया कश्चनेति। यत्किञ्चित् विकारोपाधिकं भजन् उपाध्यनुरूपाणां विभूतीनां [2] गतिं स्वरूपं प्राप्नोति ॥ ४ ॥

**हरिरिति**। उपद्रष्टा साक्षी सन् यतः सर्वदृक् सर्वं पश्यति अतः प्रकृतेः पर इति अत्रेदं तत्त्वं 'वस्तुनो गुणसम्बन्धे रूपद्वयमिहेष्यते। तद्धर्माऽयोगयोगाभ्यां बिम्बवत् प्रतिबिम्बवत्। गुणास्सत्त्वादयश्शान्त घोरमूढास्स्वभावतः। ब्रह्मविष्णु शिवानां च गुणयन्तृस्वरूपिणाम्। नातिभेदो भवेद्भेदो गुणधर्मैरिहांशतः। सत्त्वस्य शान्त्या नो जातु विष्णोर्विक्षेपमूढते। रजस्तमो गुणाभ्यां तु भवेतां ब्रह्मरुद्रयोः। गुणोपमर्दनाद्भूय (मर्दतो भूय) स्तदंशानां च भिन्नता। अतस्समग्र सत्त्वस्य विष्णोः मोक्षकरी तनुः (मतिः)। अंशतो भूतिहेतुश्च तथाऽऽनन्दमयी स्वतः। अंशतः तारतम्येव (न) ब्रह्मरुद्रादिसेविनाम्। विभूतयो भवन्त्येव शनैर्मोक्षोऽप्यनंशतः। इदमेवाभिप्रेत्य तत्र तत्रोच्यते 'श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः" (     ) इति। तथा 'सत्त्वं यस्य प्रिया मूर्तिः" (     ) इति। तथा "सत्त्वं तत् तीर्थसाधनम्" (     ) इति। तथा "त्रयाणां एकभावानां यो न पश्यति वै भिदाम्" (     ) इति। तथा "न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते" (     ) इत्यादि। एवञ्च सति न किञ्चिदसमञ्जसं तत्तद्भक्तानां तु कलहो मोहमात्रमिति ॥ ५ ॥

---

1--1 B. J. Omit 2. B. J. Omit धनिनः 3. Ml.v. Omit भोजाः ; J. भोगाः 4. B.J.Omit गतिं

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रिका

'यं सम्पद्य जहात्यजां तं कैवल्य निरस्त योनिम्' (     ) इति जगत्कारणत्वादिवत् मोक्षदत्वमपि हरेरेवासाधारणो धर्म इत्युक्तम्। अनेन रुद्रादीनां न मोक्षदत्वं किन्त्वर्थकामादि प्रदत्वमिति सूचितम्। तत्र सन्दिहानः पृच्छति राजा - **देवासुरमनुष्येष्विति**। देवादीनां मध्ये ये जनाः अशिवं अमङ्गलरूपमपि शिवं भजन्ति, ते प्रायशः प्रायेण धनिनः आढ्या भवन्ति। भोजा इति पाठे भोगिनो भवन्तीत्यर्थः। हे ब्रह्मन्! लक्ष्म्याः पतिं तु ये भजन्ति ते न तु नाढ्याः। लक्ष्म्याः पतिमित्यनेन विपरीतमिदमित्यभिप्रेतं लक्ष्मीपतिभक्तैरेव आढ्यैर्भवितव्यमित्यभिप्रायः ॥ १ ॥

**एतदिति**। एतद्वैपरीत्यनिदानं वेदितु मिच्छामः अत्र वैपरीत्ये नोऽस्माकं महान् सन्देहो वर्तते। विरुद्धं शीलं स्वभावः ययो स्तयोः प्रभ्वोः हरिहरयोः कर्मणि षष्ठी तौ भजतां गतिः फलं विरुद्धा विसदृशीत्यर्थः। एकस्वभावौ भजतां कथं विसदृशं फलमिति शङ्कार्थः ॥ २ ॥

एकस्वभावतैव नास्ति तत्कृतः फलमेकरूपं स्यादिति परिहरति - **शिव** इत्यादिभिः त्रिभिः। शिवः शक्त्या उमया युक्तः

शश्वत् सदा त्रिलिङ्गः वक्ष्यमाणाधिष्ठेयत्रैविध्यात्त्रिलिङ्गस्त्रिविधाहङ्कारप्रचुरमूर्तिः गुणेन तमोगुणेन संवृतः तमः स्वभाव इत्यर्थः। अधिष्ठेयस्य त्रैविध्यमेवाह - **वैकारिक** इति। अहमहङ्कारः वैकारिकादि भेदेन त्रिधा ॥३॥

ततस्त्रिविधाहङ्कारात् षोडश विकाराः एकादशेन्द्रियाणि पञ्चभूतानि सतन्मात्राणीति षोडश विकारा जाता इत्यर्थः। तत्र तामसादहङ्कारात् सतन्मात्राणि पञ्चमहाभूतानि, वैकारिकात्तु एकादशेन्द्रियाणि राजसाहङ्कारस्तूभयोरनुग्राहक इति विवेकः। त्रिविधोप्यहङ्कारो रुद्राधिष्ठेय इत्यर्थः। "अहङ्कारोऽध्यात्मं अहङ्कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्" (     ) इति हि श्रुतिः। अस्त्वेवं, ततः किमत आह - अमीष्विति। अमीषु अहङ्कारतद्विकाराधिदैवेषु रुद्राधिगमाभिमानिवातार्कप्रचेतो अश्विवह्नीन्द्रोपेन्द्र मित्रप्रजापत्यादिषु मध्ये कञ्चनान्यतममर्माधिदैवतं उपधावन् भजन् पुरुषः सर्वासां विभूतीनां ऐश्वर्याणां गतिं प्रकारमश्नुते नानाविधानि तत्तदधिदैवतेन दातुं शक्यान्यैश्वर्याणि प्राप्नोतीत्यर्थः ॥ ४ ॥

**हरिर्हीति**। निर्गुणः सत्त्वादि प्राकृतगुणवश्यतारहितः साक्षाद्भगवान् समग्र ज्ञानैश्वर्यादि षाड्गुण्यपूर्णः प्रकृतेः "भूमिरापोऽनलो वायुः" (भ.गी.7-4) 'अपरेयमितस्त्वन्या' (भ.गी.7-5) इति श्लोकद्वयोक्तोभयविधायाः प्रकृतेः विलक्षणः सर्वदृक् सर्वज्ञः अत एव उपद्रष्टा गुणदोषानुमन्ता रुद्रादयस्तु उक्त विपरितस्वभावा इति भावः। हि यस्मादेवं तस्मात्तं भजन्निर्गुणो भवेत् प्राकृतगुणसम्बन्धरहितो मुक्तो भवेदित्यर्थः। अयं भावः - ब्रह्मरुद्रादीनां रजस्तमः प्रचुरस्वभावत्वात् गुणवश्यत्वादषाड्गुण्यपूर्णत्वात् जीवत्वात् असर्वज्ञत्वाच्च न मोक्षप्रदाने सामर्थ्यं, किन्तु स्वशक्त्यानुसारेणार्थकामादि प्रदान एव। भगवतस्तु यद्यपि चतुर्विधपुरुषार्थप्रदत्व शक्तिरस्त्येव, तथापि स भगवान् सर्वज्ञः परमकारुणिको यद्यहं स्वभक्ताय त्रैवर्गिकफलं प्रयच्छेयं तर्ह्ययं तदन्ते पुनःपुनर्याचमानो मां नित्यदरिद्र एवावतिष्ठते। अतस्तमनुगृह्णामीत्यालोच्य प्रायशः स्वभक्तेभ्यो मुक्तिमेव प्रयच्छतीति कस्मैचिन्निर्बन्धात्त्रैवर्गिकमपि प्रयच्छतीति ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

शिवं भजन् तामसाद्यान्यतमं विष्णुं निषेवमाणः सात्त्विक एव शिवस्याप्यन्यापरिहार्यापत्ति समुच्छित्तिकरो नारायणः किमुतेतरेषां इत्यर्थसारं वृकासुर आख्यायिकया आख्यापयति तत्र राजा आख्यायिकामुत्थापयितुं पृच्छति **देवासुरेति**। दिगम्बरत्वेन लोकदृष्ट्या अशिवमशुद्धवत् प्रतीयमानं निर्धनं वा 'शिवो लोके पद्मरागे हरे कीले शिवे जले' (     ) इत्यतः पद्मराग राहित्येन निर्धनत्वं लक्ष्यते अशिवमकीलं अनर्गलं सर्ववरप्रदमित्यर्थः। लक्ष्मीपतिमित्यनेन धनित्वमुपलक्षयति तथापि तद्भक्ता धनिनो न भवन्ति ॥ १ ॥

**एतद्धनित्वाऽधनित्व सन्देहे तन्निरासप्रयत्नो घटते तदभावे व्यर्थ इत्यत्राह सन्देह इति। न च अयं औपचारिक इत्याह महानिति। सन्देह बीजान्तरमाह विरुद्धेति। श्मशाने पिशाचगणैः परिवृतत्वेन अटनशीलं रुद्रस्य, इन्द्रादि देवैः**

परीतत्वेनावस्थानं हरेः असुरादीनामपि वरदानेच्छावत्वेन गतित्वमाश्रयत्वं ईशानस्य, देवादीनां समृद्धि चिकीर्षुत्वेन हरेः तथा चात्र प्रभ्वोः समर्थयोर्विषये महानस्माकं सन्देहोस्ति हि यस्मात् तन्निरसनप्रयासः सार्थक इत्यर्थः ॥ २ ॥

जीवानां त्रैविध्यं केनाप्यनभिभूतं प्रमितं देवासुरमनुष्येषु इत्यनेन सूचितम्। तत्र शिवः स्वल्प सम्पृक्त सत्त्वेन बहुलेन तमसा रजसा स्पृष्टत्वेन तदनुसृतस्वभावत्वेन हरिनियत प्रकृति बद्धत्वेन तत्तत्प्राणिस्वभाव सेवानुगुण फलदान क्लृप्तत्वेनावश इव तादृशं फलं वितरति हरिस्तु स्वाधीन सत्त्वादिगुणत्वेन तत् प्रवर्तकत्वेन तच्छक्त्यनुपहत शक्तित्वेन प्रकृति परत्वेन तन्निर्मित शरीररहितत्वेन तत्स्वभावाभावेन कूटस्थत्वेन नित्य निर्दोषज्ञानानन्द तनुत्वेन स्व सेवकेभ्यः स्वानुगुणं फलं प्रयच्छतीति भावेन परिहरति शिव इत्यादिना। शक्तियुतः प्रकृतिसम्बद्धः अत एव शश्वत् त्रीणि लिङ्गानि वैकारिकादीनि यस्य स तथा। ननु प्रकृतेरेकत्वेन तत्सम्बन्धेनैकविध्यमेवोचितं न त्रैविध्यं अन्यथा चातुर्विध्यं किं न स्यादित्यत उक्तं गुणसंवृत इति। गुणानां त्रित्वात् तत्सम्बन्धेन त्रित्वं युक्तं न चातुर्विध्यादिकं सूचितं त्रैविध्यं स्पष्टयति वैकरिक इति। अहं अहङ्कारात्मको रुद्रः ॥ ३ ॥

ततः अहङ्कारात् षोडश विकारा, अभवन्निति शेषः। पञ्चभूतानि दशेन्द्रियाणि एकं मनः। ननु किमायातं प्रकृत इति तत्राह अमीष्विति। यो भूतानां मध्ये अमीषु पञ्चस्वाकाशादिषु अधिष्ठान प्रकारेषु निधाय्य शिवमुपाधावत् सेवमानो भवति स पुरुषः तस्मात् सर्वासां विभूतीनां गतिं सेवानुसारेण फलमश्नुते। अत्र ग्रन्थबाहुल्यभयात् विशेष विशदीकरणादुपरम्यते ॥ ४ ॥

तुशब्देन सत्त्वादिगुणराहित्यमेव न तु ज्ञानादि गुणराहित्यं विवक्ष्यते। तथात्वे सर्वदृगित्याद्यनुपपन्नं स्यात्, हरिरविनश्वरं अनन्तकालीनं फलं ददाति रुद्रस्तु अनित्यं दुःखोदर्कं ददातीत्यादि विशेषं वा दर्शयति 'उपद्रष्टा साक्षी सर्वेभ्यो द्रष्टृभ्योऽधिकद्रष्टा न अन्योऽतोऽस्ति द्रष्टा' इति श्रुतेः ॥ ५ ॥

**निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः ।**
**शृण्वन् भागवतान्[1] धर्मानपृच्छदिदमच्युतम् ॥ ६ ॥**

**स आह भगवांस्तस्मै प्रीतःशुश्रूषवे प्रभुः[2] ।**
**नृणां निश्श्रेयसार्थाय योवतीर्णो यदोः कुले ॥ ७ ॥**

**श्रीभगवानुवाच**

**यस्याह मनुगृह्णामि हरिष्ये तद्धनं शनैः ।**
**ततोऽधनं त्यजन्त्यस्य स्वजना दुःख दुःखितम् ॥ ८ ॥**

स [3] यदा वितथोद्योगो निर्विण्णस्स्याद्धनेहया[*] ।
मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम् ॥ ९ ॥
[4-] तद्ब्रह्म [-4] परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् [5] ।
ततो मां सुदुराराध्यं हित्वाऽन्यान् भजते [6] जनः ॥ १० ॥

---

1. B.G.K.M Ma T.W.भगवता 2. MI.V. विभु: **mut धनिम:** 3. K.T.W. तदा * अनीहया इति वीरराघवादृतः पाठः 4- -4 K.T.W. तस्मै ब्रह्म परं 5. MI.V. °रम् 6. M.Ma. पुनः

**श्रीध० यस्येति**। यस्याहमनुगृह्णामीति अयमर्थ- यो विषयान् परिजिहीर्षुरपि कथञ्चित् विद्यमानेषु विषयेषु सज्जते क्लिश्यति च तस्य विषयापहार एवानुग्रह इति। यथा श्रुतन्त्वे ध्रुवादीनामैश्वर्यविरोधात्। अथवा प्रथमं विभूतीः कामानुरूपा दत्वा शनैः विषयोपभोगावसाने तस्य निर्वेदमुत्पाद्य हरिष्यामि परमानुग्रहं कर्तुमिति तदुक्तं भगवतैव - 'न मय्यावेशितधियां कामः कामाय कल्पते' (भा.ग.10-22-26) इति दुःख दुःखितमिति दुःखादनु पुनर्दुःखित मिव प्रतीयमानमित्यर्थः ॥ ६-८ ॥

**स** इति। स पुनर्बन्धूनामनुग्रहेण धनेहया प्रवृत्तोऽपि मदनुग्रहेण यदा निष्फलोद्यमो निर्विण्णः स्यात् तदा मदनुग्रहमिति। मम असाधारण मनुग्रहम् ॥ ९ ॥

तमेवाह - **तद्ब्रह्मेति**। जनः पश्चादपि मोक्ष मरोचयन् अत्यासक्तः अन्यान् (अन्यं) भजते इत्यर्थः ॥ १० ॥

**वीर०** न केवलमयं त्वत्प्रश्नस्य परिहारोऽस्मद्बुद्धि परिकल्पितः किन्तु भगवतैवोक्त इति वक्तुं प्रस्तौति - निर्वृत्तेषु परिसमाप्तेषु सत्सु, राजा युधिष्ठिरः भगवतः श्रीकृष्णात् सकाशात् धर्मान् शृण्वन् तमच्युतं प्रति इदं त्वत्पृष्टमपृच्छत् ॥ ६ ॥

**स** इति। स पृष्टो भगवान् श्रोतुमिच्छवे तस्मै युधिष्ठिराय प्रीतः प्राह - तत्र हेतुत्वेन तं विशिनष्टि - नृणामिति । निश्रेयसार्थाय निरतिशय पुरुषार्थ प्रदान तत्साधन ज्ञापनायेत्यर्थः ॥ ७ ॥

**यस्येति**। यस्य यमित्यर्थः कर्मणश्शेषत्वविवक्षया षष्ठी। ननु धनापहारो नानुग्रहः प्रत्युत निग्रह एव स्यात् अत आह तत इति। अधनमिति च्छेदः। तो धनापहारादधनं निर्धनमत एव दुःखपरम्पराग्रस्तमस्य ये स्वजनाः ते त्यजन्ति ॥ ८ ॥

ततोप्ययं महान्निग्रह इत्यत आह - **स** इति। वितथोद्योगः व्यर्थोद्यमः निर्धनस्य सर्वोप्युद्योगो व्यर्थ एवेति भावः। अत एव निर्विण्णो भवेत् तदा अनीहया निराशया वैषयिकं सुखं सर्वथा मम दुर्लभमित्येवं तत्र आशां अपोह्येति भावः। मत्परैः मद्भक्तैस्सह कृतं मैत्रं यस्य तस्य मदनुग्रहं करिष्ये। मदसाधारणोऽनुग्रहः मदनुग्रहः तम् अतो न पौनरुक्त्यम् ॥ ९ ॥

तमेवानुग्रहं दर्शयति - **तस्मा** इति। तस्मै मत्परैः कृतमैत्राय यद्ब्रह्म तद्दर्शयामीति शेषः। **असौ** एव मदनुग्रह इति भावः। कथम्भूतं ब्रह्म ? परं प्रकृतिपुरुषाभ्यां विलक्षणं सूक्ष्मं सर्वान्तःप्रवेशयोग्यं चिन्मात्रं ज्ञानस्वरूपमात्रम्। मात्र शब्देन क्वचिदपि जडत्वव्यावृत्तिः अनन्तकं त्रिविध परिच्छेदशून्यम्। अत्र सत्यज्ञानादिवाक्यार्थ उपक्षिप्तः अतस्तावद्दुःखावहत्वात् सुदुराराध्यं मां हित्वा हि गतौ गत्यर्था बुद्ध्यर्थाः ज्ञात्वेत्यर्थः। अन्यान् रुद्रादीन् तावत्सुखदानन्ततस्तु दुःखदान् स्वयमपि दुःखितान् ज्ञात्वा केवलं सुखदानित्येवं बुद्ध्वा भजत इत्यर्थः ॥ १० ॥

**विज०** न धनित्वं फलं ददातीत्यस्य कथं परिहार आगतः तं वक्तुमुपक्रमते **निवृत्तेष्विति** ॥ ६ ॥

भूभार हरणाय प्रवृत्तेन धर्मकथनं क्वोपयुज्यत इत्यत्राह **नृणामिति**। अनेन न केवलमवतार प्रयोजनं भूभार हरणमपि तु नृणां संसारनिर्मूलन लक्षण निश्श्रेयसं चेत्युक्तं भवति ॥ ७ ॥

अनुग्रहं कर्तुं शनैः यावत् यावत्प्रेम वर्धते तावत् तावत् हरिष्ये धनस्य मदहेतुत्वात् एतद्धरणं तत्फलमाह तत इति। अस्याधनस्य स्वजनाः दुःख दुःखितं दुःखातिशयोपेतं एनमधनं त्यजन्ति ॥ ८ ॥

ततो धनाभावात् स यदा धनेहया वितथोद्योगो निर्विण्णः स्यात् तदा मत्परैः कृत मैत्रस्य तस्यानुग्रहं मुक्तिलक्षणं करिष्ये इत्यन्वयः ॥ ९ ॥

यतोऽहं भजमानस्य धनं हरिष्यामि अतस्तत्परमं ब्रह्म वेदान्तवेद्यं सूक्ष्मं नित्याव्यक्तं चिन्मात्रं प्रकृति प्राकृत वैकृत ज्ञानशून्यं सत्प्रशस्तं अनन्तकं अन्तत्रय वर्जितं सुदुराराध्यं मां हित्वा अन्यान् भजते परब्रह्मत्वादयः सुदुराराध्यत्वे हेतवः ॥ १० ॥

**ततस्त आशु तोषेभ्यो लब्धराज्यश्रियोद्धताः ।**
**1- मत्ताः प्रमत्ता वरदान् -1 विस्मरन्त्यवजानते ॥ ११ ॥**

**श्रीशुक उवाच**

**2 शापप्रसादयोरीशा ब्रह्मविष्णु शिवादयः ।**
**सद्यश्शाप प्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः ॥ १२ ॥**
**3- अत्रैवो -3 दाहरन्तीममितिहासं पुरातनम् ।**
**वृकासुराय गिरिशो वरं दत्वाऽऽप सङ्कटम् ॥ १३ ॥**

**वृको नामासुरः पुत्रः शकुनेः पथि नारदम् ।**
**दृष्ट्वाऽऽशु तोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥ १४ ॥**
**स [4]आदिदेश[4] गिरिश [5]मुपधावास्वसिद्धये[5] ।**
**सोऽल्पाभ्यां गुणदोषाभ्यां आशु तुष्यति कुप्यति ॥ १५ ॥**

---

1. M. Ma प्रमत्ताः वरदान् देवान् 2--2 K.T.W. कोप° 3--3 B.G.J.MI.V अत्र चोदा° 4--4 B. G.J. स आह देवं 5--5 B.G.J. °वाशु सिद्ध्यसि :K.T.w. वाशु तुष्यति

**श्रीध०** एतदेव इतिहासेन स्पष्टयितु माह - **शापप्रसादयोरिति**। ब्रह्मा चेत्यन्वयः ॥ ११ - १३ ॥

**वृक इति**। शकुनेः पुत्रः ॥ १४, १५॥

**वीर० तत** इति। ततो भजनानन्तरं ते भक्ताः आशु तृप्यन्तीत्याशुतोषाः तेभ्यो रुद्रादिभ्यस्सकाशात् अनेनात्मनि चिरात्तोषत्वं सूचितम्। लब्धं राज्यं यैस्ते, श्रिया सम्पदा उद्धताः उत्पथाः मत्ताः गर्विताः प्रमत्ताः अनवहिताश्च वरदान् देवानेव विस्मरन्ति अवजानते अवज्ञां कुर्वन्ति च। इत्थं स्वोक्त परिहारो भगवदुक्त्या संवादितः ॥ ११ ॥

अथ "अव्यवस्थितचित्तस्य प्रसादोपि भयङ्करः। क्षणे रुष्टः क्षणे तुष्टः" (   ) इति न्यायेन देवतान्तराणामव्यवस्थितचित्तानां भजनमात्मघातायैव पर्यवस्यतीति इतिहासेन स्पष्टयितुमाह - कोपप्रसादयोरिति। यद्यपि ब्रह्मादयः सर्वे देवाः कोपप्रसादयोः निग्रहानुग्रहयो र्दक्षास्तथापि अङ्ग! हे राजन्! शिवो ब्रह्मा च सद्य एव शापः प्रसादश्च यस्य तथाभूतः अच्युतस्तु नैवं विधः, किन्त्वनुग्रहैकस्वभावः क्वचिन्निग्रहोप्यन्ततो वरेणैव तुल्य इति भावः ॥ १२ ॥

**अत्रैवेति**। सद्यश्शापप्रसादत्वे निदर्शनतया इतिहासमुदाहरन्तीत्यर्थः। कोसावित्यतः तं वर्णयति वृकासुरायेति। सङ्कटं दुःखमवाप इत्यर्थः ॥ १३ ॥

कथं तदित्यतो विस्तरतो वर्णयति - **वृको नामेति**। शकुनेः पुत्रः त्रिषु देवेषु मध्ये आशु तोषं पप्रच्छ यतः स दुर्मतिः ॥ १४ ॥

स नारदः आदिदेश शशंस। किमिति? गिरिशमुपधाव भज स आशु तुष्यति। किञ्च स इति। स गिरिशः ॥ १५ ॥

**विज०** अन्योपासकास्ते मत् ध्यानतः तान् देवान् अपि जहतीति भावेनाह - **तत** इति। यतो मामवज्ञायान्यानुपासते अत एव दोषात् ॥ ११ ॥

देवेषु के शापप्रसादसमर्थास्तत्रापि सद्यःशापप्रसादाः क इति तत्राह शापेति ॥ १२ ॥

शिवः सद्यः शापप्रसाद इत्येतत् कथमित्यत्र इतिहासं वक्ति **अत्रेति** ॥ १३ - १५ ॥

**दशास्य बाणयोस्तुष्टः स्तुवतोर्वन्दिनोरिव ।**
**ऐश्वर्यमतुलं दत्वा तत आप सुसङ्कटम् ॥ १६ ॥**

**इत्यादिष्टस्तमसुर उपाधावत्[1]स्वगात्रतः ।**
**केदार आत्मक्रव्येण जुह्वानो[2]ऽग्निमुखं[3] हरम् ॥ १७ ॥**

**देवोपलब्धिमप्राप्य निर्वेदात्सप्तमेऽहनि ।**
**[4-]शिरोऽवृश्चत्स्वधितिना तत्तीर्थ[-4] क्लिन्नमूर्धजम् ॥ १८ ॥**

**तदा महाकारुणिकस्सधूर्जटिः यथा [5]रणावग्नि[-5]रिवोत्थितोऽनलात् ।**
**निगृह्य दोर्भ्यां भुजयोर्न्यवारयत् तत्स्पर्शनात् भूय [6]उपस्कृताकृतिः ॥ १९ ॥**

**तमाह चाङ्गालमलं वृणीष्व मे [7]यथाभिकामं वितरामि ते वरम् ।**
**[8-]प्रीयेय तोयेन[-8] नृणां प्रपद्यता महो त्वयात्मा भृशमर्द्यते वृथा ॥ २० ॥**

---

1. M.Ma °त्सुयन्त्रितः 2. M.Ma °न् अ° 3. V. भवम् 4- -4 M.Ma शिरोजिहीर्षुरसिना सतीर्थक्लिन्नमूर्धजः 5- -5 B.G.J. वयं चाग्नि° ; M. Ma °ऽवय व्यग्नि° :V. °र्वदिष्टोग्नि° 6. M.Ma उपाकृ° 7. K. M. Ma.T.W. निकामं 8- -8 M. Ma शिवेन जीवेन

**श्रीध० दशास्येति**। सुसङ्कटमाप कैलासोत्पाटनं पुरीपालनं च। सुकण्टकमिति वा पाठः ॥ १६ ॥

**इतीति**। स्वगात्रतः उपाधावत् [1-]स्वदेहेन याजयामास[-1]। कथम्? आत्मक्रव्येण स्वमांसेन जुह्वान इति ॥ १७ ॥

**देवेति**। अवृश्चत् च्छेत्तुमुद्यतः ॥ १८ ॥

**तदेति**। [1-]स्वयं च अग्निरिव[-1] मूर्तिमानग्निः इव देदीप्यमान इत्यर्थः। वयं अधुना कथाभिर्यथाकथञ्चिद्दुःखेन मर्तुकामं वारयामः तद्वदिति। स च उपस्कृताकृतिः परिपूर्ण देहोऽभवत् तं न्यवारयच्च ॥ १९ ॥

एवमाह च **तमिति**। तोयेनापि भजतां प्रीतः स्यां त्वया तु देहो वृथा पीड्यते इति ॥ २० ॥

---

1- -1 B. J. Omit 2- -2 B.J. Omit

**वीर०** तथाहि दशास्यबाणयोः रावणबाणासुरयोर्वन्दिनोरिव स्तुतिपाठकयोरिव स्तुवतोरतुल मैश्वर्यं दत्वा ताभ्यां सकाशादेव सङ्कटं कैलासोत्पाटन पुरपालन[1] दुःखमवाप इत्यर्थः॥ १६ ॥

**इतीति**। इत्थमादिष्टोऽसुरः सुष्ठु मन्त्रितः प्रचोदितश्च तं गिरिशमेवोपाधावत् आराधितवान्। स्वगात्रत इति पाठे स्वदेहेन स्वदेहमांसहोमेन आराधितवानिति यावत्। आत्मनः स्वस्य क्रव्यं मांसं तेन हविषा अग्निमुखस्थं हरं जुह्वानोऽपि देवस्य हरस्योपलब्धिं दर्शनमप्राप्य सप्तमेऽहनि क्लिन्ना आर्द्रा मूर्धजाः केशा यस्मिन् तदात्मनः शिरः स्वधितिना अवृश्चत् च्छेत्तुमारब्धवानित्यर्थः। स्वधितिः पशुपुरोडाशादि च्छेदनार्थः खड्गविशेषः ॥ १७, १८ ॥

**तदेति**। धूर्जटिः रुद्रः मूर्तिमानग्निरिव देदीप्यमानः अग्नेरुत्थितः स्वदोर्भ्यां तद्भुजयोः प्रगृह्य न्यवारयत् तस्य धूर्जटेः स्पर्शनात् प्रभावात् पुनः उपस्कृता निर्व्रणा आकृतिः शरीरं यस्य तथाभूतो बभूवेत्यर्थः ॥ १९ ॥

**तमिति**। तं वृकासुरमाह - किमिति। अङ्ग! हे वृक! अलमलं होमेनेति शेषः। यथानिकामं यथेच्छं वरं वृणीष्व तुभ्यं वितरामि प्रयच्छामि तोयेनापि प्रपद्यतां भजतां नृणां प्रीतस्स्यां त्वया तु वृथा आत्मा देहो भृशमर्दितः पीडितः ॥ २० ॥

---

1. B. °नात्मक

**विज०** अग्निमुखमुद्दिश्य जुह्वन्निति च्छान्दसः। जुह्वन् होमं कुर्वन् ॥ १७ ॥

देवोपलब्धिं देवदर्शनं असिना शिरो हर्तुकामोऽभूत् ॥ १८ ॥

करचरणाद्यवयवी उपाकृताकृतिः उत्पन्नस्वरूपः ॥ १९ ॥

यथानिकामं नितरां काममनतिक्रम्य नृणां यत्प्रियतमं वस्तु स जीवः जीवनं प्राणधारणं तेन जीवेन प्रपद्यतां प्रपन्नो भवतु, भवानिति शेषः। केनेत्यत उक्तं शिवेन मयेति। किञ्च जीवोऽसुधारण तत्परः अनेन 'पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत्" (      ) इति वचनात् जीवनं सर्वस्मात् अभीष्टमित्युक्तं भवति। किञ्च अत इति। तत्राह अहो इति। आत्मा शरीरं अर्द्यते हिंस्यते अहो यस्मात् तस्मात् ॥ २० ॥

**[1]देवं स वव्रे पापीयान् वरं भूत भयावहम् ।**
**यस्य [2]यस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥ २१ ॥**

**तच्छ्रुत्वा भगवान् रुद्रो दुर्मना इव भारत ।**
**ओमिति प्रहसंस्तस्मै [3-]ददेऽहे[-3]रमृतं यथा ॥ २२ ॥**

**स तद्वर परीक्षार्थं शम्भोर्मूर्ध्नि किलासुरः ।**
**स्वहस्तं धातुमारेभे सोऽभिभ्यत्स्वकृताच्छिवः ॥ २३ ॥**

**तेनोपसृष्टस्सन्त्रस्तः पराधावत्सवेपथुः ।**
**यावदन्तं दिवो[4] भूमेः [5-]काष्ठानामुदगादुदक्[-5] ॥ २४ ॥**

**अजानन्तः प्रतिविधिं तूष्णीमासन् सुरेश्वराः ।**
**ततो वैकुण्ठमगमत् भास्वरं तमसः परम् ॥ २५ ॥**

---

1. K. M. Ma. Ml.T.V.W. देवात्स 2. M. Ma पुंसः 3- -3 ददौ वर 4. Ml.V. दिशो 5- -5 M. Ma कोष्ठानामधरम्भुवः

**श्रीध० तदिति**। दातुमनर्हमपि ददे[1] दत्तवान् अहेः[2] सर्पस्य अमृतं क्षीरमिव ॥ २१-२३ ॥

**तेनेति**। उपसृष्टः अनुगतस्सन् उदगात् [3-]उत्तरतः अगात् ऊर्ध्वमगच्छद्वा उदक् ऊर्ध्वमञ्चन्[-3] ॥ २४ ॥

**अजानन्त** इति। वैकुण्ठम्, श्वेतद्वीपम् ॥ २५ ॥

---

1. B. J. Omit ददे 2. B. J.Omit अहेः 3- -3 B.J. अधावत् उदक् उत्तरतः

**वीर० देवादिति**। स पापीयान् वृकः देवात् रुद्रात् भूतभयावहं वरं वृतवान् वरमेव दर्शयति - यस्येति। यस्य शीर्ष्णि अहं करं धास्ये स म्रियतामित्येवं विधं भूतभयावहमिति सम्बन्धः ॥ २१ ॥

**तदिति**। हे भारत! स्थाणुः शिवः तद्वरणं श्रुत्वा तावद्दुर्मना इव दुःखितमना भूत्वा इवशब्दो अनतिरिक्तार्थकः। प्रसभं बलात् तस्मै ओं इत्यङ्गीकृत्य ददे दत्तवान्। यथा अहेः सर्पस्यामृतं क्षीरं तद्वत् ॥ २२ ॥

**स इति**। असुरः वरस्य परीक्षार्थं किमयं वरः सत्यं उत मिथ्या वेति परीक्षार्थमित्यर्थः। स शिवः स्वकृतादपराधात् स्वयमबिभ्यत् ॥ २३ ॥

तेनासुरेणोपसृष्टोऽनुगतः स शम्भुः जातवेपथुः कम्पितगात्रः त्रस्तः पराधावत्। सोऽपि पृष्टतो अन्वधावदित्यनुक्तमपि योज्यम्। काष्ठानां दिशां उदगात् उत्तरतः अगात् ऊर्ध्वमगच्छत् वा। उदक् ऊर्ध्वमञ्चन् ॥ २४,२५ ॥

**विज०** ओमित्युक्त्वा प्रहसन् आत्मनो दैन्यमप्रकाशयन् ॥ २१,२२ ॥

अबिभेत् भीतवान् ॥ २३

उपसृष्टः उपद्रुतः दिवोन्तमवसानं यावदस्ति भूमेः कोष्ठानां विवराणां अवसानं च यावत्भुवोऽधरमधस्थलं पातालं च यावत्तावत् पर्यन्तं पराधावत् ॥ २४ ॥

तल्लोकवासिनः शून्यप्रायाः किमत्राह - **अजानन्त** इति। प्रतिविधिं प्रतिक्रियाम् ॥ २५ ॥

**यत्र नारायणः साक्षात् [1]न्यासिनां परमा गतिः।**
**शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः ॥ २६ ॥**

**तं तथा व्यसनं दृष्ट्वा भगवान् वृजिनार्दनः ।**
**दूरात् [2-]प्रत्युदियाद्भूत्वा वटुको[-2] योगमायया ॥ २७ ॥**

**मेखलाजिन दण्डाक्षै[3]स्तेजसाग्निरि[4]व ज्वलन् ।**
**[5-]अभिवादयामास च तं[-5] कुशपाणिर्विनीतवत् ॥ २८ ॥**

**श्रीभगवानुवाच**

**शाकुनेय भवान् व्यक्तं श्रान्तः किं दूरमागतः ।**
**क्षणं वि[6]श्रम्यतां पुंस आत्मायं सर्वकामधुक् ॥ २९ ॥**

**यदि न श्रवणायालं युष्मद्व्यवसितं प्रभो ।**
**भण्यतां [7-]प्रायशस्सर्वैः धूर्तै[-7]स्स्वा[8]र्थान् समीहते ॥ ३० ॥**

---

1. Ml.V योगिनां 2- -2 M. Ma °दितो भूप दारको 3. M. Ma °द्यै° 4. Ml.V. °वो° 5- -5 K. तं आशीर्वादयामास 6. M.V. °श्रा° 7- -7 B.G.J.K. प्रायशः पुम्भिः धृतै° ;T.W. प्रायशः पुम्भिर्भृतै° ; M.Ma पुरुषः साधो पुम्भिः 8. K. M. Ma.T.W. °र्थम्

**श्रीध० तमिति**। तं वृकासुरं तथा व्यसनं तादृग्व्यसनं यस्य तम्। शिवं वृजिनार्दनः दुःखहन्ता दूरत एव दृष्ट्वा ॥ २६,२७ ॥

**मेखलेति**। मेखलादिभिरुपलक्षितः प्रत्युदियात् सम्मुखमागतः ॥ २८ ॥

**शाकुनेयेति**। व्यक्तं निश्चितं किं किमर्थं आत्मा देहः सर्वपुरुषार्थ हेतुः अतो मा पीडयेति ॥ २९ ॥

**यदीति**। प्रायशः पुम्भिर्धृतैः भवान् स्वार्थान् समीहते साधयितुमिच्छति, अथवा जनः पुम्भिः सहायैः स्वकार्याणि साधयति अतो नः कथ्यतामिति ॥ ३० ॥

**वीर० अजानन्त** इति। सुरेश्वराः चतुर्मुखेन्द्रादयः प्रतिविधिं प्रतिक्रियामजानन्तः ततः वैकुण्ठमण्डान्तर्वर्तिनं कञ्चिद्विष्णुलोकं न तु परमस्थानं मुक्तप्राप्यं भास्वरं प्रकाशबहुलं तमसःपरं प्रकृतिकार्यरहितं यत्र वैकुण्ठे गतः प्राप्तः न्यस्तदण्डानां भूतद्रोहरहितानां सर्वभूतसुहृदामित्यर्थः, गतो यतो नावर्तते श्रीविष्णुलोकगतानां श्वेतद्वीपवासिनां च पुनर्जन्माभावात् , तं वैकुण्ठमगमदिति सम्बन्धः ॥ २६ ॥

**तमिति**। तं वृकासुरं तथा तादृशं व्यसनं दुःखम्। यस्य तं रुद्रं च दृष्ट्वा वृजिनार्दनो दुःखापहारी भगवान् योगमायया आत्मीयाश्चर्य शक्त्या वटुको भूत्वा मेखलादिभिरुपलक्षितः तेजसा विग्रहकान्त्या अग्निरिव ज्वलन् दूरादेव प्रत्युदियात् तदभिमुखमाजगाम। कुशपाणिः पवित्रपाणिः अभिवादयामास, आह चेति शेषः ॥ २७.२८ ॥

तदेवाह - **शाकुनेयेति**। हे शाकुनेय! शकुनेस्सुत॥व्यक्तं नूनमयमात्मा देहः पुंसः सर्वान्कामान् दोग्धीति तथाभूतः किं किमर्थं दूरमागतः अहो श्रान्तस्त्वं अतो माऽऽयासयेति भावः ॥ २९ ॥

**यदीति**। युष्मद्व्यवसितं यदि नोऽस्माकं श्रवणायालं श्रोतुं योग्यं तर्हि हे प्रभो! भण्यतामुच्यतां पुमान् स्वार्थं चिकीर्षितं स्वप्रयोजनं पुम्भिः आप्तैस्सह समीहते आलोच्य करोति अतो भण्यतामित्यर्थः ॥ ३० ॥

**विज०** दारको बाल ब्रह्मचरी ॥ २६-२८ ॥

आत्मा शरीरम् ॥ २९ ॥

पुम्भिरर्थितम् ॥ ३० ॥

**श्रीशुक उवाच**

**एवं भगवता पृष्टो वचसाऽमृतवर्षिणा ।**
**गतक्लमो[1]ऽब्रवीत्तस्मै यथापूर्वमनुष्ठितम् ॥ ३१ ॥**

**श्रीभगवानुवाच**

**एवं चे[2]त्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि ।**
**यो दक्ष शापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट् ॥ ३२ ॥**

★ यदि ते[3] तत्र विस्रम्भो दानवेन्द्र जगद्गुरौ ।
तर्ह्यङ्गाशु[4] स्वशिरसि हस्तं न्यस्य प्रतीयताम् ॥ ३३ ॥

यद्यसत्यं वचश्शम्भोः कथञ्चिद्दानवर्षभ ।
[5]तथा त्वं जह्यसद्वाचं न [6]यद्वक्ताऽनृतं पुनः ॥ ३४ ॥

इत्थं भगवतश्चि[7-]त्रैर्वचोभि[-7]स्तु सुपेशलैः ।
भिन्नधी[8]र्विस्मितशीर्ष्णि स्वहस्तं कुमतिर्व्य[9]धात् ॥ ३५ ॥

---

1. K.T.W. श्रमो 2. MI.V. तर्ह्यङ्ग * The following extra verse is found only in M.Ma editions रुषाक्रान्त शरीरोऽसौ न सत्यं वदते हरः । क्रोधयुक्ते कुतः सत्यं मूढोऽसि त्वं महासुर ॥ 3. B. G. J. K. M. Ma.T.W. °वस्तत्र 4. M. Ma. °पि 5. B.G.J. तदैनं ;T.W. तदन्ते 6. T.W. त° 7- -7 B.G.J. °भि स्स सु K.T.W. भि स्स्मय 8. B. G. J. K. M. Ma.T.W. °स्मृत 9. K. MI.T.V.W. °न्र्यधात् M. Ma. °भिश्च सु° ;

**श्रीध० एवमिति**। पैशाच्यं पिशाचानामिव वृत्तिम् ॥ ३१-३३ ॥

**यदीति**। यत् यथा वक्ता वदिष्यति ॥ ३४ ॥

**इत्थमिति**। चित्रैर्भ्रामकैः सुपेशलैः अतिरम्यैः भिन्नधीः भ्रंशितमतिः ॥ ३५ ॥

**वीर० एवमिति**। तस्मै भगवते अब्रवीत् कथयामास ॥ ३१ ॥

इत्युक्तः प्राह भगवान् - **एवं चेत्तर्हीति**। अङ्ग ! हे वृक! तद्वाक्यं रुद्रवाक्यं वरदानात्मकं न श्रद्दधीमहि न विश्वसिमः। तत्र हेतुत्वेन रुद्रं विशिनष्टि य इति। यो रुद्रः दक्षशापात् पिशाचतां प्राप्तः प्रेतानां, पिशाचानां च राडधिपतिः बभूव न हि पिशाचवचो विश्वसनीयमिति भावः ॥ ३२ ॥

**यदीति**। हे दानवेन्द्र ! जगद्गुरौ जगद्गुरुतया त्वदभिमानविषये तत्र रुद्रे यदि वो युष्माकं विस्रम्भो विश्वासः तर्ह्यङ्ग ! हे वृक ! स्वस्य शिरसि न्यस्य निधाय प्रतीयतां परीक्ष्यताम् ॥ ३३ ॥

हे दानवर्षभ ! यदि शम्भोर्वचः कथञ्चिदसत्यं स्यात्तर्हि तदन्ते तदनन्तरं असद्वाचमनृतवाचं रुद्रं जहि नाशय अन्यथा रुद्रः। पुनस्तथा अनृतं वदन् वञ्चयिष्यति अतः तं जहीत्यर्थः ॥ ३४ ॥

**इत्थमिति**। चित्रैर्भ्रामकैः स्मयेन पेशलैः अतिरम्यैः वचोभिः भिन्नधीः भ्रंशितमतिः कुमतिरसुरः विस्मृतः स्वशिरसि स्वहस्तं न्यधात् निहितवान् ॥ ३५ ॥

**विज०** तस्य रुद्रस्य वाक्यं पैशाच्यं कर्म श्मशान अटन लक्षणम् ॥ ३१-३५ ॥

**अथाप तद्भिन्नशिरा वज्राघहत इव क्षणात् ।**
**जयशब्दो नमश्शब्दस्साधुशब्दोऽभवद्दिवि ॥ ३६ ॥**

**मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ।**
**देवर्षि पितृ गन्धर्वा मोचितस्सङ्कटाच्छिवः ॥ ३७ ॥**

**मुक्तं गिरिशमभ्याह भगवान् पुरुषोत्तमः ।**
**अहो देव महादेव पापोऽयं स्वेन पाप्मना ॥ ३८ ॥**

**हतः कोनु महत्स्वीश जन्तुर्वैकृतकिल्बिषः ।**
**क्षेमी स्यात्किमु विश्वेशे [1-]यः कृतागा[-1] जगद्गुरौ ॥ ३९ ॥**

**य एव मव्याकृत शक्त्युदन्वतः परस्य साक्षात् परमात्मनो हरेः ।**
**गिरित्र मोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिः तथारिभिः ॥ ४० ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

1--1 B. G. J. K.T.W. कृतागस्को ; M. Ma कृतपापो

**श्रीध० हत** इति। किमु वक्तव्यं विश्वेशे त्वयि [1]कृतागाः कृतापराधः इति ॥ ३६-३९ ॥

**य** इति। अव्याकृतशक्त्युदन्वतः अवाङ्मनसगोचर शक्ति समुद्रस्य गिरित्र मोक्षं शिवमोचन रूपं चरित्रं संसृतिभिः नाना योनि सञ्चारैः ॥ ४० ॥

❖ भक्तसङ्कटमालोक्य कृपापूर्ण हृदम्बुजः ।
गिरित्रं चित्रवाक्यात्तु मोक्षयामास केशवः ॥

इति श्रीमद्भागवते दशमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
अष्टाशीतितमोऽध्यायः ॥ ८८॥

1. B. J. कृतागस्कः ❖ श्रीधरीयोऽयं श्लोकः

**वीर०** अथ निधानानन्तरमेव वज्रेणाहत इव भिन्नं शिरो यस्य सः क्षणादपतत्। जय शब्द इति स्पष्टोर्थः ॥ ३६ ॥

देवादयः पुष्पवर्षाणि मुमुचुः इत्थं शिवः सङ्कटात् युक्त्या उपायेन मोचितः ॥ ३७ ॥

ततो भगवान् गिरिशमभ्येत्य प्राह - **महादेवेति**। पापात्मा अयं वृकासुरः स्वेनैव पाप्मना हतः किल। हे ईश! महत्सु कृतकिल्बिषः कृतापराधः को वा जन्तुः क्षेमी स्यात्। किमुत जगद्गुरौ जगद्धितकारिणि विश्वेशे त्वयि कृतापराधः क्षेमी स्यादिति महादेवत्वेशत्व विश्वेश्वरत्वजगद्गुरुत्वव्यपदेशाः तदन्तरात्मभूतस्वात्माभिप्रायापन्नाः ॥ ३८, ३९ ॥

प्रकृतेतिहास प्रवचन श्रवणादिफलमाह - **य** इति। एवमित्थं वाङ्मनसावेद्य विविधविचित्रानन्त शक्तिसागरस्य प्रकृतिपुरुष विलक्षणस्यान्तःप्रवेशनियमन व्याप्यगतदोषास्पर्शैः लोकत्रयधारकस्य आश्रितार्तिहरस्य भगवतो गिरित्रकर्ममोक्षण प्रतिपादकं इतिहासं यः पुमान् कथयेत् यो वा शृणोति सः संसृतिभिः सांसारिक दुःखैः शत्रुभिश्च विमुच्यते ॥ ४० ॥

इति श्रीमद्भागवते दशमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्र चन्द्रिकायां
व्याख्यायां अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

**विज०** आख्यायिका कथनादि फलमाह - **य** इति। आख्याकृत नित्यशक्ति समुद्रस्य संसृतिभिः पुत्रमित्रादि बन्धनलक्षणाभिः ॥ ३६-४० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे उत्तरार्धे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
(विजयध्वजरीत्या द्विनवतितमोऽध्यायः)

# एकोननवतितमोऽध्यायः

(विजयध्वजरीत्या त्रिनवतितमोऽध्यायः)

**श्रीशुक उवाच**

**सरस्वत्यास्तटे राजन् ऋषयः सत्रमासत ।**
**वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥ १ ॥**

**तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ।**
**तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद्ब्रह्मणः सभाम् ॥ २ ॥**

**न तस्मै ब्रह्मणे[1] स्तोत्रं चक्रे सत्त्वपरीक्षया ।**
**तस्मै चुक्रोध भगवान् प्रज्वलन् स्वेन तेजसा ॥ ३ ॥**

**स आत्मन्युत्थितं मन्युमात्मजायात्मना प्रभुः ।**
**अशीशमद्यथा वह्निं स्वयोन्या वारिणाऽऽत्मभूः[2] ॥ ४ ॥**

---

1. B.G.J. प्रह्वणं 2. K.M.Ma.T.W प्रभुः ।

## श्रीधरस्वामि विरचिता भावार्थदीपिका

नवाशीतितमे देवः को महानिति संशये। परीक्ष्य विष्णोरुत्कर्षं मुनिभ्योऽवर्णयद्भृगुः ॥

इति हासान्तरमाह - **सरस्वत्या** इति ॥ १-३ ॥

**स** इति। स्वयोन्या स्वस्यैव रूपान्तरेणाभिव्यक्ति स्थानेन स्वकार्येणेत्यर्थः। तेन यथा कश्चित् वह्निं शमयति तथा स्वकार्येण पुत्रेण निमित्तेन क्रोधं शमयामास इत्यर्थः ॥ ४ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**तस्येति**। तस्य महत्त्वस्य जिज्ञासया ते ऋषयः, हे नृप! ब्रह्मणश्चतुर्मुखस्य सुतं भृगुं तज्ज्ञप्त्यै महत्त्वं वेत्तुं इत्यर्थः। प्रेषयामासुः स भृगुस्तावत् ब्रह्मणश्चतुर्मुखस्य सभामभ्यगात् ॥ १,२ ॥

सत्त्वपरीक्षार्थं तस्मै ब्रह्मणे स्तोत्रं न कृतवान् ततस्तस्मै भृगवे भगवान् ब्रह्मा चुक्रोध ॥ ३ ॥

**स** इति। स ब्रह्माऽऽत्मजाय भृगवे आत्मनि मनस्युत्थितं मन्युं क्रोधमात्मना विवेकात्मिकया बुद्ध्याऽशामयत् यथा स्वयोन्या स्वस्यैव स्वरूपान्तरेण अभिव्यक्तिस्थानेन स्वकार्येणेति यावत् तेन वारिणा यथा कश्चिद्वह्निं शमयति तथा स्वकार्येण पुत्रेण निमित्तेन क्रोधं शमयामासेत्यर्थः। यद्वा स्वस्याग्नेर्योनिररणिः तस्या उत्थितं वह्निं जलेन कश्चिच्छमयति तथा भृगोरुत्पत्तिस्थानभूतात् स्वस्मात्तदुत्थितं क्रोधं बुध्याऽशामयदित्यर्थः ॥ ४ ॥

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

विष्णोः समः अधिकोऽस्तीति (वा) संशयनिरासाय तस्य भक्तानुकम्पित्व प्रकटनाय च, मुमुक्षुभिः क्षमागुण एवापाद्यः तत्प्रसादजनक इति द्योतनाय च तस्मिन्निरतिशय भक्तिजननाय च अस्याध्यायस्य प्रारम्भः। तत्रादौ मुनीनां सत्र समये जिज्ञासाप्रकारं वक्ति- **सरस्वत्या** इति। वितर्को जिज्ञासा त्रिषु ब्रह्मादिषु अधीशेषु अधिकेश्वरेषु च महानुत्तमः ॥१॥

तस्य अधिकस्य वा इत्यनेन लोक संशयनिरासाय मन्दाधिकारिणां दृढनिश्चयाय न स्वार्थं परिज्ञात वेदान्तार्थत्वात् स्वेषामिति निर्धारयति ॥ २,३ ॥

आत्मनः स्वस्यात्मनि मनस्यात्मजाय भृगवे उत्थितं मन्युमशीशमत् शान्तं कृतवान्। प्रभुः समर्थः प्रभुः भृगोः पितृत्वेन स्वामी ॥ ४ ॥

**ततः कैलासमगमत्स तं देवो महेश्वरः ।**
**परिरब्धुं समारेभ उत्थाय भ्रातरं मुदा ॥ ५ ॥**
**नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह ।** [1-] [-1]
**शूलमुद्यम्य तं हन्तु मारेभे तिग्मलोचनः ॥ ६ ॥**
**पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा । ★**
[2] **मुनिर्जगाम वैकुण्ठं यत्र देवो जनार्दनः ॥ ७ ॥**

**शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् ।**
**तत उत्थाय भगवान् सह लक्ष्म्या सतां गतिः ॥ ८ ॥**

---

1--1 M.Ma °त्तमशुभाचार इति ; MI.V. त्वमशुभाचारस्ततो ; T.W. त्वमत्त्युत्पथग इति। * The following extra verse is found in M. Ma. MI.v. cdns. इति कृच्छ्रात् ततो मुक्तः कैलासात् रजताचलात्। 2. B.G.J.K.T.W अथो ज°

## श्रीधरीय व्याख्या नास्ति

**वीर० तत** इति। स भृगुः कैलासं जगाम। तं भृगुं परिरब्धुमालिङ्गितुम् ॥ ५ ॥

**नैच्छदिति**। त्वमुत्पथग इति वदन् परिरम्भणं नैच्छदित्यर्थः। देवो रुद्रः तस्मै चुकोप किञ्च तीक्ष्ण दृष्टिस्सन् शूलमुद्यम्य तं भृगुं हन्तुमारब्धवान् ॥ ६ ॥

**पतित्वेति**। देवी गिरा सान्त्वोक्त्या तं रुद्रं, अथेति वैकुण्ठशब्दः पूर्ववद्विष्णु लोकपरः श्रियो लक्ष्म्याः उत्सङ्गे शयानं वक्षसि पादेन अताडयत्। तत इति सतां गतिरिति हेतुगर्भम् ॥ ७,८ ॥

**विज०** महेश्वर इति साङ्केतिकं नाम, अन्वर्थाङ्गीकारे प्रकृतानुपपत्तेः भ्रातरं मुदेति भ्रातृशब्द प्रयोगाच्च ॥ ५ ॥

श्मशान वासित्वेनाशुभाचार इति मत्वा ॥ ६-८ ॥

**स्वतल्पादवरुह्या[1]ऽऽशु ननाम शिरसा मुनिम् ।**
**आह ते स्वागतं ब्रह्मन् निषीदात्रासने क्षणम् ॥**
**अजानता[2-]मागतान् वः क्षन्तुमर्हथ नः प्रभो[-2] ॥ ९ ॥**

**★ अतीव कोमलौ तात चरणौ ते महामुने ।**
**इत्युक्त्वा विप्रचरणौ मर्दयन् स्वेन पाणिना ॥ १० ॥**

**पुनीहि स लोकं मां लोकपालांश्च मद्गतान् ।**
**पादोदकेन [3-]भगवंस्तीर्थानां[-3] तीर्थकारिणा ॥ ११ ॥**

**अद्याहं भगवंल्लक्ष्म्या आसमेकान्त भाजनम् ।**

**वत्स्यत्युरसि मे लक्ष्मी र्भवत्पादहतांहसा ॥ १२ ॥ ▲**

---

1. B.G.J. ह्याथ 2- -2 M. Ma सं व: क्षन्तुमर्हसि मानद। ★ This verse is not found in K. M. Ma Ml.T.V.W 3- -3 B.G. J. M. Ma. Ml.V भवतस्त्री॰
4. B. G. J. K. M. Ma.T.W. भूति। ▲ The following extra half verse is found in M.Ma. editions only - श्रीवत्समिति नामापि जायतां पादलक्षण:।

**श्रीध० पुनीहीति**। तीर्थकारिणा तीर्थत्व निमित्तेन ॥ ९-१२ ॥

**वीर०** अत: स तल्पादाश्ववरुह्य मुनिं भृगुं शिरसा ननामाऽऽह च किमिति। हे ब्रह्मन्! ते त्वया स्वागतं कुशलमागतं खलु अत्रास्मिन् आसने क्षणं निषीद उपविश। हे प्रभो! युष्मानागतानजानतां नोऽस्माकमपराधमिति शेष:। क्षन्तुमर्हथ ॥ ९,१० ॥

**पुनीहीति**। सह लोकं स वैकुण्ठं मां मद्व्रतान् मदावेशित चित्तान् मद्धार्यान् इति वा। लोकपालांश्च हे भगवन्! पादोदकेन पुनीहि कथम्भूतेन? तीर्थानां गङ्गादीनामपि तीर्थकारिणा पवित्रत्वकारिणा ॥ ११ ॥

**अद्येति**। हे भगवन्! अद्य अधुना अहं लक्ष्म्या एकान्तभाजनं नियताश्रय आसं तत्र हेतुत्वेनात्मानं विशिंषन्नाह - भवत: पादेन पादताडनेन हतमंह: पापं यस्य तस्य ममोरसि भूतिर्लक्ष्मी: वत्स्यत्यनपायितया वर्तिष्यतीति ॥ १२ ॥

**विज०** ते तुभ्यं निषीदोपविश आगसमपराधम् ॥ ९,१० ॥

अहमेव गतं गति: आश्रयो येषां ते मद्व्रतास्तान् तीर्थकारिणा शुद्धिकारिणा "तीर्थं मन्त्राद्युपाध्याय शास्त्रेष्वम्भसि पावने" (वैज.कौ.6-3-13) इति यादव: ॥ ११ ॥

असुरजनमोहनार्थमाह - **अद्येति**। अद्याहं लक्ष्म्या: श्रिय एकान्तेन नियमेन भाजनं पात्रमासं भूतिर्लक्ष्मी: "भूति: श्रीजन्म भस्मस्विति" च। नित्यकृतवासापि अद्य प्रभृति वत्स्यति स्पष्टवासं करिष्यति, भवता नित्यशक्तेन पादेन ज्ञानेन हतं नष्टं अंहो यस्मिन् तत् तथा नित्यसत्ता ज्ञानात्मकत्वेन दोषरहितमिति वा, तस्मिन्निति तथा। बाह्यार्थ: कथा यदि वाक्यार्थ: ॥ १२ ॥

**श्रीशुक उवाच**

**एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा ।**
**निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्[1]कण्ठोऽश्रुलोचनः ॥ १३ ॥**

**पुनश्च[2-] सत्रमाव्रज्य[-2] मुनीनां ब्रह्मवादिनाम् ।**
**स्वानुभूतमशेषेण राजन्! भृगुरवर्णयत् ॥ १४ ॥**

**तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ।**
**भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥ १५ ॥**

**धर्मस्साक्षाद्यतो ज्ञानं वैराग्यञ्च [3]तदन्वितम् ।**
**ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥ १६ ॥**

---

1. K. M.T.V.W. °न्कण्ठा श्रु 2- -2 K.T.W. पुनःस्सत्रं समाव्रज्य ; M. Ma पुनःस्वसत्रमासाद्य 3. M.Ma चतुर्विधम्।

**श्रीध० एवमिति**। तस्य मन्द्रया गम्भीरया गिरा निर्वृतस्तूष्णीं, बभूवेति शेषः ॥ १३,१४ ॥

**तदिति**। विस्मिता अपराधातिरेकेऽपि निर्विकारित्वेन भूयांसं श्रद्दधुः महत्तमं निश्चितवन्तः यतो यस्मिन् ॥ १५ ॥

**धर्मेति**। वैराग्यञ्च चतुर्विधमितिपाठे तच्चातुर्विध्यमेवं द्रष्टव्यम् विषयांस्त्यक्तुमशक्नुवतोपि सम्मानेच्छात्याग आद्यं वैराग्यम्। ततो विषयाणां मध्ये लवणादि व्यतिरेकेणापि वृत्ति र्द्वितीयम्। तथा वृत्तावपि मनसि राग शैथिल्येन बाह्येन्द्रियैरेव विषयसेवनं तृतीयम्। तत्रापि औदासीन्यं चतुर्थम्। यथाहुः - "वैराग्यमाद्यं यतमान संज्ञं क्वचिद्विरागो व्यतिरेक संज्ञम्। एकेन्द्रियाख्यं हृदि राग सौक्ष्म्यं - तस्याप्यभावस्तु वशीकृताख्यम्" ( ) इति ॥ १६ ॥

**वीर० एवमिति**। तस्य भगवतो मन्द्रया गम्भीरया आशयगर्भया गिरा निर्वृतः [1]सुखितः तर्पितश्च भक्युत्कण्ठया भक्युद्रेकेणाश्रूणि लोचनयोर्यस्य सः तूष्णीमास ॥ १३ ॥

**पुनरिति**। आव्रज्यागत्य हे राजन्! स्वेनात्मनाऽनुभूतमशेषेण ऽवर्णयत् ॥ १४ ॥

**तदिति**। तद्भृगुणोपवर्णितं निशम्य मुक्तसंशयाः [2-]गतसंशयाः[-2] अत एव निर्वृताः सुखिताः विष्णुमेव भूयांसं सर्वोत्कृष्टं श्रद्दधुः निश्चितवन्तः परत्वोपयुक्त गुणाविष्कारपूर्वक निश्चय प्रकारानेवाह यतः शान्तिरित्यादिना। यच्छब्दाना

त्रिविधाकृतयस्तस्येत्युपरिष्टात् सम्बन्धः। यतः यस्मिन् शान्तिः यतः सेव्यमानादभयं मुक्तिः यद्वा यतो यदुपासनादेव शान्तिरिति एवमुत्तरत्रापि ॥ १५ ॥

धर्मोऽत्र ब्रह्मण्यता ज्ञानं, सर्व विषयकं वैराग्यं विषयाऽनभिलाषः, तदन्वितं शान्त्यादिभिः सहितं अष्टधाऽणिमादि भेदेन अष्टविधमैश्वर्यं च आत्मनः भजतः पुंसः मलमपहन्तीति तथा तद्यशो यस्मिन् इत्यर्थः ॥ १६ ॥

1. K.T.W. Omit सुखितः 2- -2 B. Omits

**विज०** श्रिया सहितवत्समुरः श्रीवत्सं उरो वत्सञ्च वक्षश्च भुजान्तरमुदीर्यत इति उत्पलमालाभिधानं पादलक्षणः पादाङ्कः श्रीवत्समिति नाम जायतामित्यन्वयः ॥ १३,१४ ॥

भूयांसमत्त्युत्तमं यतो यस्माद्धरेः शान्तिर्मोक्षो मङ्गलं वा, पुंस इति शेषः ॥ १५ ॥

एकान्तभक्तानां धर्मादिष्वनपेक्षा लक्षणं वैराग्यमात्मनो मनसो मलनाशनम् ॥ १६ ॥

**मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् ।**
**अकिञ्चनानां साधूनां यमाहुः परमां गतिम् ॥ १७ ॥**

**सत्त्वं यस्य प्रिया मूर्तिः ब्राह्मणास्त्विष्टदेवताः ।**
**भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः ॥ १८ ॥**

**त्रिविधा[1-]ऽऽकृतयस्तस्य[-1] राक्षसा असुरा सुराः ।**
**[2-]गुणिन्या मायया[-2] सृष्टाः सत्वं [3-]तत्तीर्थसाधनम्[-3] ॥ १९ ॥**

**श्रीशुक उवाच**

**[4]एवं सारस्वता विप्रा नृणां संशय नुत्तये ।**
**पुरुषस्य पदाम्भोज सेवया तद्गतिं गताः ॥ २० ॥**

1. M. Ma "धा मूर्तयस्तस्य 2- -2 M. Ma गुणास्तन्मायया 3- -3 M. Ma तत्राऽर्थदर्शनम् 4. K.M.Ma.Ml.T.V.W. इत्थं

**श्रीध० त्रिविधेति।** तस्य भगवत एव यद्यपि त्रिविधा आकृतयः तत्र तासु सत्वमेव तीर्थसाधनं[1] पुरुषार्थ हेतुः ॥ १७-१९ ॥

**एवमिति** इत्थं निश्चित्य सरस्वतीतीरवासिनो विप्रा [2-]हरिपदाम्भोज[-2] सेवया मुक्तिं प्रापुरिति ॥ २० ॥

---

1. Ml.V. अर्थ 2- -2 B.G.Omit.

**वीर० मुनीनामिति**। न्यस्तदण्डानां भूतद्रोहरहितानां समचेतसां सर्वात्मब्रह्मबुद्धीनामकिञ्चनानां प्रयोजनानन्तररहितानां परोपकार शीलानां यं परमां गतिं प्राप्यमाहुः ॥ १७ ॥

**सत्त्वमिति**। सत्त्वं रजस्तमोभ्यां अननुविद्धं शुद्धसत्त्वं यस्य प्रिया मूर्तिः शरीरं यस्य च इष्टदेवताः ब्राह्मणा अनाशिषः निष्कामाः शान्ताः जितेन्द्रियाः निपुणा बुद्धिः येषां ते यं भजन्ति ॥ १८ ॥

**त्रिविधेति**। तस्येत्थ भूतस्य निःसमाभ्याधिकस्य गुणिन्या सत्त्वादि त्रिगुणमय्या मायया सृष्टा राक्षसा असुराः सुराश्चेति त्रिविधा अप्याकृतयः तस्यैव शरीरभूता इत्यर्थः। तत्र देवाः सत्त्वप्रचुराः, असुरास्तु रजः प्रचुराः, राक्षसास्तमः प्रचुराः। देवादिषु त्रिष्वप्यासुरमानुषदैव सम्पत्तिभिः अभिजाताः सन्त्येवेति भगवद्गीतासु उक्तम्। एवञ्च सर्वेप्येते नोपास्या इति भावः। तथा चोक्तं शौनकेन - 'आब्रह्मस्तम्ब पर्यन्ता जगदन्तर्व्यवस्थिताः। प्राणिनः कर्म जनितसंसार वशवर्तिनः॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः। अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः। पश्चादुद्भूतबोधाश्च ध्यानेनैवोपकारकाः। नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः॥ तस्मात्तदमलं ब्रह्म निसर्गादेवबोधवत्। इति एतदेवाह - सत्त्वं तत्तीर्थसाधनमिति। यत्सत्वं शुद्धसत्वमयं भगवच्छरीरं तदेव तीर्थं साधनं उपास्यमानं सन्निश्शेषप्रकृतिसम्बन्धक्षपणद्वारा आत्मशुद्धिसाधनमित्यर्थः ॥ १९ ॥

**इत्थं** इति। सारस्वताः सरस्वती तीरवासिनो विप्राः नृणां संशय निवृत्तये इत्थं निश्चित्य परमपुरुषस्य पदाम्भोज सेवया तद्गतिं मुक्तिं प्राप्ताः ॥ २०॥

**विज०** यस्य हरेः सत्त्वं गुणः प्रियामूर्तिः प्रेष्ट प्रतिमा यस्य, इष्टदेवता ब्राह्मणाः अनाशिषो निष्कामाः ॥ १७,१८॥

तत्र तेषु गुणेषु सत्वं नाम गुणः आर्यं सर्वपूज्यं श्रीहरिं दर्शयतीत्यार्य दर्शनः तद्विषयज्ञानोत्पादकः ॥ १९,२०॥

**[1-]सूत उवाच[-1]**

**इत्येतन्मुनितनयस्य पद्म[2]गन्धपीयूषं भवभयभित्परस्य पुंसः ।**
**सुश्लोकं श्रवणपुटैः पिबत्यभीक्ष्णं पान्थोऽध्वभ्रमणपरिश्रमं जहाति ॥ २१ ॥ ★**

**श्रीशुक उवाच**

**एकदा द्वारवत्यान्तु विप्रपत्न्याः कुमारकः ।**
**जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत! ॥ २२ ॥**

**विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः ।**
**इदं प्रोवच विलपन्नातुरो दीनमानसः ॥ २३ ॥**

**ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः ।**
**क्षत्र बन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः ॥ २४ ॥**

---

1- -1. M. Ma. Omit 2. M. Ma गर्भ 3. B. K. MI.T.V.W सुश्लोक्यं ; M. Ma सुश्लोकैः 4. MI.V. संसारभ्रमण। ★विजयध्वजपाठानुसारेण अत्र त्रिनवतितमोऽध्यायः समाप्तः।

**श्रीध० इतीति।** व्यास नन्दनस्य मुख पङ्कजात् उद्गतं गन्धयुक्त पीयूषतुल्यं हरेः प्रशस्तं यशो यः संसारी सेवते स मुक्तो भवतीति ॥ २१ ॥

स च उक्तलक्षणो भगवान् श्रीकृष्ण एवेति दर्शयितु माख्यानान्तरमाह - **एकदेति** ॥ २२-२४ ॥

**वीर०** प्रकृतेतिहासश्रवणफलमाह - सूतः **इतीति**। मुनेः द्वैपायनस्य यः तनयः शुकस्तस्यास्य पद्मं मुखपद्मं तस्य गन्धो यस्मिंस्तत्, पीयूषममृतमेतद्भगवतः परत्व प्रकाशकेतिहासात्मकं भयं संसृतिभयं भिनत्तीति तथा सुश्लोक्यं बहुमन्तव्यं प्रसिद्धामृतं तु नैवं विधमिति भावः अभीक्ष्णं पुनः पुनः कर्णपुटैः श्रोत्रचषकैः पिबन्पान्थः संसाराध्वगः अध्वभ्रमण परिश्रमं प्रकृतिमण्डलपरिभ्रमणजं श्रमं जहाति मुक्तो भवतीत्यर्थः ॥ २१ ॥

अत्र केचिदध्यायं समापयन्ति। अथ योसावुक्तविधः परमपुरुषः स एव श्रीकृष्णः इति दर्शयितुमितिहासान्तरं प्रस्तौति - **एकदेत्यादिना**। विप्रस्य कस्यचित् पत्न्या कुमारो हे भारत! जातमात्रस्तदैव भुवं स्पृष्ट्वा ममार ॥ २२ ॥

**विप्र** इति। स विप्रः राजद्वारे उपधाय निधायेदं वक्ष्यमाणं प्रोवाच ॥ २३ ॥

इदमिति विवक्षितमेवाह द्वाभ्यां - **ब्रह्मद्विष** इति। ब्रह्म ब्राह्मणान् द्वेष्टीति तथा तस्य शठस्य मूर्खस्येव धीर्यस्य लुब्धस्य निषादतुल्यस्य अजितेन्द्रियस्य क्षत्रबन्धोः क्षत्रियाभासस्य राज्ञः कर्मदोषात् दुर्व्यापारदोषात् ममार्भकः पञ्चत्वं मरणं प्राप्तः मयि तु न कश्चिद्दोष इति भावः ॥ २४ ॥

विज० –

श्रीशुक उवाच

कदाचिद्वाजिमेधेन यष्टुमुद्यम्य केशवः ।
महीं प्रदक्षिणी कर्तुं प्राहिणोत्प्रोक्षितं हयम् ॥ 1 ॥

हार्दिक्यं कृतवर्माणं युयुधानञ्च सात्यकिम् ।
चारुदेष्णं सुदेष्णञ्च प्रद्युम्नं साम्बमेव च ॥ 2 ॥

अंशुमन्तं सुभानुञ्च बहुसैन्यांश्च यादवान् ।
रक्षणार्थं तुरङ्गस्य प्राहिणोद्यदुनन्दनः ॥ 3 ॥

ते वै प्रदक्षिणं कृत्वा वसुधां प्रोक्षितं हयम् ।
उपानिन्युरदीर्घेण कालेन भरतर्षभ! ॥ 4 ॥

यष्टु कामं हरिं श्रुत्वा हयमेधेन भारत! ।
आजग्मु दीर्घ तपसो मुनयः संशितव्रताः ॥ 5 ॥

होतारञ्च तथाध्वर्यु मुद्गातारञ्च केशवः ।
कल्पयित्वा यथा न्यायं तथान्यानपि ऋत्विजः ॥ 6 ॥

ऋषिभि र्ब्राह्मण श्रेष्ठैर्यज्ञ विद्याविचक्षणैः ।
दीक्षां प्रपेदे भगवन् कृतपुण्याहमङ्गलः ॥ 7 ॥

तमुपास्तमहीपाला नानाजनपदेश्वराः ।
आजग्मुर्देव सङ्काशाः किरीटमुकुटोज्वलाः ॥ 8 ॥

पाण्डवाश्च महीपाला यज्ञदर्शनमिच्छवः ।
आहूता वासुदेवेन द्वारकामाययुर्नृप ॥ 9 ॥

तस्मिंस्तथा वर्तमाने हयमेधे महोत्सवे ।
आसंस्तृप्ता द्विजा भोज्य वस्त्रगोभूमिकाञ्चनैः ॥ 10 ॥

**दीक्षां प्रविश्य गोविन्दः कामैस्तर्पयति द्विजान् ।**
**भुञ्जानेषु द्विजाग्र्येषु प्रतिगृह्णत्सु वाञ्छितम् ॥ 11 ॥**

**आसीनेषु यथा योगं भूपालेषु समन्ततः ।**
**वदत्सु मा शब्द इति वेत्र झर्झरपाणिषु ॥ 12 ॥**

**तृणमूलधरः कश्चिद्ब्राह्मणोऽभ्येत्य सत्वरः ।**
**चुक्रोश आर्त्त उद्बाहुर्यज्ञवाटमुखे स्थितः ॥ 13 ॥**

**क्षुत्क्षामकण्ठः शुष्कास्यो गलद्बाष्पाकुलेक्षणः ।**
**इदं चोवाच विलपन्नातुरो दीनमानसः ॥ 14 ॥**

**ब्रह्मद्विषः षठधियो लुब्धस्य विषयात्मनः ।**
**क्षत्रबन्धो कर्मदोषात्पञ्चत्वं मे गतास्सुताः ॥ 15 ॥**

लोकसङ्ग्रहायाश्वमेधयज्ञकरणमन्यासाध्य मृतविप्रपुत्रानयन माहात्म्यञ्च निरूपयत्यस्मिन्नध्याये। तत्रादौ हयस्य प्रदक्षिणप्रकारं वक्ति **कदाचिदिति**। उद्यम्य उद्योगं विधाय ॥ 1,2 ॥

बहवः सैन्याः सेनानायकाः येषां ते तथा तान् यदून् नन्दयतीति यदुनन्दनः ॥ 3,4 ॥

हयमेधेन अश्वमेधेन दीर्घकालं तपो येषां ते तथा ॥ 5-7 ॥

उपास्तुं निषेवितुं किरीटैः मुकुटैः सुवर्णैश्चोज्वलाः ॥ 8-11 ॥

वेत्रेण झर्झराः कर्कशाः पाणयो येषां ते तथा तेषु ॥ 12 ॥

तृणमूलधरः तृणानां मूलं चूडां धारयतीति तृणमूलं, यष्टिं च धारयतीति वा ॥ 13-15 ॥

**★ हिंसा विहारं नृपतिं दुःशीलमजितेन्द्रियम् ।**
**प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः ॥ २५ ॥**

**एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च ।**[1]
**विसृज्य स नृपद्वारि तां गाथां समगायत ॥ २६ ॥**

**तामर्जुन उपश्रुत्य कर्हिचित्केशवान्तिके ।**
**परेते नवमे बाले ब्राह्मणं समभाषत ॥ २७ ॥**

**● किं स्विद्ब्रह्मस्त्वन्निवासे इह नास्ति धनुर्धरः ।**
**राजन्य [2-]बन्धुरेते[-2] वै ब्राह्मणाः सत्रमासते ॥ २८ ॥**

★ According to M. Ma editions these three half verses are found in 100th chapter as 16th &17th Slokas. 1. K.T.W. ब्रह्मर्षि° ● According to M.Ma editions this verse is found in 100th chapter as 22nd Sloka. 2- -2 MI.V. °रप्येते

**श्रीध० एवमिति।** ब्रह्मद्विष इत्यादिकां तां गाथां वाक्यम् मयि न कश्चिद्दोषोऽतो राजदोषेणैव मत्पुत्रा म्रियन्त इति वारं वारं चुक्रोशेत्यर्थः ॥२५-२७॥

**किमिति।** ब्रह्मन् किं स्विदिति किमर्थं वृथा रोदिषि यतस्त्वन्निवासे धनुर्धरमात्रोऽपि राजन्य बन्धुरपि नास्ति, ब्रह्मण्यस्य तु का वार्ता, एते तु सत्रे याग [1]इव ब्राह्मणा मिलिता भवितुमर्हन्तीत्यर्थः ॥ २८॥

1. MI.V. एव

**वीर०** [1-]तदेव द्रढीकरोति[-1], हिंसैव विहारो यस्य तं, दुष्टं शीलं वृत्तिर्यस्य तमजितेन्द्रियं नृपं भजन्त्यः प्रजाः सीदन्ति दुख्यन्ति नित्यं दरिद्रा दुःखिताश्च भवन्ति ॥ २५ ॥

**एवमिति।** एवमेव च अष्टकृत्वः स विप्रो नृपद्वारि मृतकं विसृज्य तां गाथां 'ब्रह्मद्विष' इत्यादिवाक्यमगायत प्रोवाच ॥ २६ ॥

**तामिति।** परेते मृते सति नवमे बाले पूर्ववद्विप्रेण गीतां तां गाथां श्रुत्वा ॥ २७ ॥

भाषणमेवाह - **किंस्विदिति** त्रिभिः। हे ब्रह्मन्! इह त्वन्निवासभूते पुरे धनुर्धरः कोऽपि नास्ति किं स्वित्? धनुर्धरमात्रो राजन्यबन्धुरपि नास्ति किमित्यर्थः। ब्रह्मण्यो नास्त्येवेति भावः। एते तु सत्त्रमासते ये ब्राह्मणाः सत्त्रयागे ब्राह्मणा इव मिलिताः धनादिभिर्युक्ताः सुखमासत इत्यर्थः ॥ २८ ॥

1- -1. B.T.W. Omit.

**विज०** इत्युक्त्वा सपुनश्चैव चुक्रोश भृशदु:खितः ।

**तदाकर्ण्यार्जुनो मानी समुत्थाय वरासनात् ।**
**अपृच्छत्स्वयमासाद्य ब्राह्मणं केशवान्तिकात् ॥**

**किमासन्नर्भकाः ब्रह्मंस्तवकेनासि दु:खितः ।**
**ब्रूहि तत्त्वमशेषेण त्वामद्य सुखयाम्यहम् ॥**

**इत्युक्तो ब्राह्मणः प्राह जातो जातोऽर्भको मम ।**
**नीयते तात केनापि तत्क्षणे सूतिका गृहात् ॥**

हिंसा विहारादि कर्मयुक्तं नृपतिं भजन्त्यः सीदन्ति ॥ २५॥

द्वितीयं द्विवारं, तृतीयं त्रिवारं, पुनश्चतुर्वारम् ॥ २६,२७ ॥

केनापि पुंसामीयते ॥

किमाहेत्यत्राह किं ब्रह्मणेति। इह त्वन्निवास स्थाने धनुर्धरो नास्ति किमित्यब्रवीत् धनुर्धरेण किं कार्यमत्राह, राजन्य बन्धोरिति, एते ब्राह्मणाः राजन्यबन्धोर्हेतोः सत्रमासते वै ॥ २८॥

**❖ धनदारात्मजाऽपृक्ता[1] यत्र शोचन्ति ब्राह्मणाः ।**
**ते वै राजन्य वेषेण नटा जीवन्त्यसुम्भराः ॥ २९ ॥**

**अहं प्रजां वां भगवन्नक्षिष्ये दीनयो रिह ।**
**अनिस्तीर्ण प्रतिज्ञाऽग्निं प्रवेक्ष्ये हतकल्मषः ॥ ३० ॥**

**ब्राह्मण उवाच**

**सङ्कर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ।**
**अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥ ३१ ॥**

**तत्कथं नु भवान् कर्म दुष्करं जगदीश्वरैः ।**
**चिकीर्षसि त्वं बालिशात्तन्न श्रद्दध्महे वयम् ॥ ३२ ॥**

---

❖ According to M.Ma editions these four verses are found in 100th chapter as 23rd to 26 Slokas. 1. K.MI.T.V.W. °युक्ता

**श्रीध०** तदेवाह - **धनदारात्मजापृक्ता यत्रेति**। धनादिभिः वियुक्ताः सन्तो यत्र येषु जीवत्सु राजन्येषु शोचन्ति ते [1-]जीवन्ति केवलं[-1] जीविकां सम्पादयन्ति ॥ २९ ॥

**अहमिति**। हतकल्मष इति। अग्निप्रवेशेन ब्राह्मण विलापश्रवणपातकात्पूतो भवेयमित्यर्थः। अहतकल्मष इति वा ॥३०,३१॥

**तदिति**। न श्रद्दध्महे न सम्प्रतीमः ॥ ३२ ॥

---

1- -1 B. Omits

**वीर०** यत्र येषु जीवत्सु ब्राह्मणाः धनदारात्मजैः अयुक्ताः [1]वियुक्ताः एवं शोचन्ति ते वै राजन्य रूपेण क्षत्रियवेषेण नटा इव असुम्भरा स्वप्राणपोषणपराः जीवन्ति ते जीवच्छवप्राया इति भावः ॥ २९ ॥

**अहमिति**। दीनयोः वां युवयोः प्रजां जनिष्यमाणं पुत्रमहं इहैव स्थित्वा रक्षिष्ये यद्यहमनिस्तीर्णप्रतिज्ञः अनिष्पादित प्रतिज्ञः स्यां तर्ह्यग्निं [2]प्रवेक्ष्ये। ततो हतकल्मष ब्राह्मणविलाप श्रवणपातकादनृत भाषणाख्य पातकान्मुक्तो भवेयम्। 'अहत कल्मष' इति वा च्छेदः। यद्यनिस्तीर्ण प्रतिज्ञस्तर्ह्यनिरस्तपापस्तदपनोदनाय प्रवेक्ष्यामि इत्यर्थः ॥ ३० ॥

एवमुक्तः प्राह - विप्रः **सङ्कर्षण** इति द्वाभ्याम्। सङ्कर्षणो बलदेवः, वासुदेवः श्रीकृष्णः, धन्विनां श्रेष्ठः, प्रद्युम्नः न विद्यते प्रतिरथः समबलो यस्य सोऽनिरुद्धश्चेत्येते यन्मदपत्यं त्रातुं न शक्नुवन्ति ॥ ३१ ॥

तज्जगदीश्वरैः अपि कर्तुमशक्यं मदपत्यत्राणात्मकं कर्म कथं भवान् कर्तुं शक्नोति यतस्त्वं बालिशादज्ञानान्मौर्ख्याद्वा चिकीर्षसि तत्तस्माद्वयं न श्रद्दध्महे न विश्वसिमः ॥ ३२ ॥

---

1. B. Omits वियुक्ता 2. B. Omits प्रवेक्ष्ये

**विज०** राजापि स एव श्रेयानितरो दुःखहेतुरित्याह - **धनदारेति**। यत्र यस्मिन् देशे राजन्य वेषेणासुम्भरा नरा जीवन्ति तस्मिन् देशे स्थितास्ते भृत्या राज्ञा भरणीयाः ब्राह्मणाः धनदारात्मजैः सह शोचन्तीत्यन्वयः। यद्वा यत्र येषु राजसु सत्सु ब्राह्मण धनादिभिः सह शोचन्ति ते राजन्यवेषेण नटा एव जीवन्ति, न तु सद्वंश्याः। कुतः? असुम्भराः स्वप्राणपोषण परायणा वै यस्मात् तस्मात् दीनयोर्युवयोः अहतकल्मषः मिथ्याप्रतिज्ञत्वात् ॥ २९, ३० ॥

तत्रार्जुनस्याहङ्काराविष्करणाय ब्राह्मणो वक्ति **सङ्कर्षण** इति। सङ्कर्षणादयस्त्रातुं न शक्नुवन्ति, यद्यस्मात्तस्मा ज्जगदीश्वरैः दुष्करं कर्म कथं चिकीर्षति 'बालिशो बालमूर्खयोरिति' (वैज.को 7-4-20) वचनात् बालिशात् आत्मशक्त्यनभिज्ञानात् इह कर्मणि तव वाक्यं न श्रद्दध्महे ॥ ३१,३२ ॥

**अर्जुन उवाच**

**❖ नाहं सङ्कर्षणो ब्रह्मन्! न कृष्णः कार्ष्णिरेव च ।**
**अहं [1-]वा अर्जुनो[-1] नाम गाण्डीवं [2-]यस्य वै धनुः[-2] ॥ ३३ ॥**

**मावमंस्था मम ब्रह्मन्! वीर्यं त्र्यम्बक तोषणम् ।**
**मृत्यं विजित्य प्रधने [3-]आनेष्ये ते प्रजां प्रभो[-3]! ॥ ३४ ॥**

**[4-]श्रीशुक उवाच**

**★ एवं विश्रम्भितो विप्रः [5]फाल्गुनेन परन्तप! ।**
**जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥ ३५ ॥**

**प्रसूति काल आसन्न भार्यया द्विज सत्तमः ।**
**पाहि पाहि [6]प्रजां मृत्योरित्याहार्जुनमातुरः ॥ ३६ ॥**

---

❖ According to M.Ma edns. these two verses are found in 100th chapter as 28 & 29 Slokas 1- -1 M.V. पार्थोऽर्जुनो 2- -2 M. Ma गाण्डीवं तस्य कार्मुकम्। 3- -3 Ml. V. आनेष्ये ते प्रजाः प्रभो ; M. Ma आनयिष्ये तव प्रजाः ; K.T.w. आनेष्ये ते प्रजां विभो! 4- -4 B.G.J.K.M.Ma.T.W. omit.

★ According to M.Ma editions these two Slakas are found in 100th chapter as 39&40 slokas. 5.K.Ml.V. फ॰ 6.Ml.V. सुतं

**श्रीध० एवमिति**। एवं प्रौढिवादैर्विश्रम्भितो विश्वासं प्रापितः निशामयन् श्रृण्वन् ॥ ३३-३६ ॥

**वीर०** इत्थमुक्तः प्राह अर्जुनः - **नाहमिति** द्वाभ्याम्। कार्ष्णिः कृष्णस्यापत्यं पुमान् प्रद्युम्नः चकारादनिरुद्धश्च न भवामि। किन्तु तेभ्योप्यतिशयितशक्तिः अर्जुनोऽहं यस्य अर्जुनस्य मम गाण्डीवं धनुरस्ति ॥ ३३ ॥

हे ब्रह्मन्! मम वीर्यं मावमंस्थाः अवहेलनं मा कार्षीः। तत्र हेतुत्वेन विशिनष्टि-त्र्यम्बकतोषणं त्र्यम्बको रुद्रः स तुष्यत्यनेनेति तथा तत्, अतो हे प्रभो! मृत्युमपि प्रधने युद्धे विजित्य त्वत्प्रजामानेष्ये ॥ ३४ ॥

**एवमिति**। इत्थं फल्गुनेनार्जुनेन[1] विस्रम्भितः विश्वासं प्रापितः विप्रः प्रीतः स्वगृहं जगाम। ततो हे परन्तप! पार्थस्य वीर्यं निशामयन्नास्ते इति शेषः ॥३५॥

**प्रसूतीति**। भार्यायाः प्रसूतिकाले आसन्ने सति तदा द्विजसत्तमः आतुरस्सन् अर्जुनं प्रतीत्थमाह - कथम्? मम प्रजां मृत्योः पाहि पाहीति ॥ ३६ ॥

---

1. B. फा°

**विज०**

इति विस्रम्भयित्वा तं कृष्णमाहार्जुनो नृप ।
अनुज्ञां देहि भगवन् ब्राह्मणार्थे प्रयास्यतः ॥ 21 ॥

यजतां वाजिमेधेन भवानेभिर्महात्मभिः ।
इति ब्रुवन्तं बीभत्सुमनुज्ञां प्रेप्सुमच्युतः ॥ 22 ॥
बद्ध तूणं च गाण्डीवं स्मयमानोऽब्रवीद्वचः ।

**श्रीभगवानुवाच**

अहमेवागमिष्यामि न त्वया शक्यतेऽर्जुन ।
तमसाधारणंभूतं मन्ये येन हतोर्भकः ॥ 23 ॥

**अर्जुन उवाच**

सलोकपालो देवेन्द्रः खाण्डवो विजितो मया ।
किरातरूपी युद्धेन तोषितश्च त्रियम्बकः ॥ 24 ॥

निवातकवचाश्चैव बासवेनापि दुर्जयाः ।
मयैवानिहताः सङ्ख्ये हिरण्यपुरवासिनः ॥ 25 ॥

तेभ्योऽधिकतरं भूतं किं नु दानवसूदन!
बिभीषयसि मां कस्मादनुज्ञां देहि साम्प्रतम् ॥ 26 ॥

### श्रीशुक उवाच

इत्युक्तः प्रददौ कृष्णस्त्वनुज्ञां सव्यसाचिने ।
निर्ययौ यज्ञशालायाः सङ्गृहीत शरासनः ॥ 27 ॥

रथमास्थाय विपुलं समुच्छ्रित कपिध्वजम् ।
अग्रे ब्राह्मण मारोप्य तद्ग्राममभितो ययौ ॥ 28 ॥

तत्र गत्वा प्रविष्टायां तत्पन्त्यां सूतिकागृहम् ।
ब्राह्मणं प्राह बीभत्सु    रवरोप्य रथान्नृप ॥ 29 ॥

### अर्जुन उवाच

याहि स्व भवनं ब्रह्मन् अभयं भव सर्वतः ।
दत्तं मयाऽद्य तद्भीतां पत्नीमाश्वासयाऽऽशु ते ॥ 30 ॥

प्रोवाच द्रुतमभ्येत्य पार्थः शस्त्रभृतां वरम् ।
एहि पार्थ महाबाहो ! यत्तो भव युधां वर ।
अत्र पूर्व कृतानां हि पौरुषाणां निदर्शनम् ॥ 31 ॥

### श्रीशुक उवाच

इत्युक्तो रथमारुह्य सज्यं कृत्वा तु गाण्डीवम् ।
त्वरन् जगाम बीभत्सुः सूतिका भवनान्तिकम् ।
ब्राह्मणोऽपि प्रविश्याह मुहूर्ते सूतिकागृहे ॥ 32 ॥

अत्रार्जुनः स्वगर्वमुद्गलयति अर्जुन इति। "धनञ्जयो रणे रणे" (ऋग्वे.1-74-3C) इति श्रुति प्रसिद्धेः। अहं धनञ्जयो नाम प्रख्यातः धनुष्मत्ता च ईदृशीत्याह - गाण्डीवमिति ॥ ३३ ॥

मावमंस्था अवमानं न कुरु मृत्युम् यमम् ॥ ३४,३५ ॥

ततः किं फलितमत्राह - इतीति ॥ १ ॥

तत्र कृष्णोऽहङ्कारिणो देवप्रसादो न स्यादिति भाववानर्जुनं निवारयन्निव वक्ति इतीति। बद्धतूणं पृष्ठबद्ध तूणीरम् ॥ २ ॥

अल्पकार्य हेतुस्त्वद्गमनं किमर्थमित्यत्राह तं असाधारणमिति भूतं देवयोनिम् ॥ ३ ॥

अर्जुनः स्वगर्वमुद्गलयति स लोकपाल इति ॥ ४,५॥

भूतं देवयोनिम् ॥ 26,27॥

अभित उद्दिश्य ॥ 28,29॥

युधाम्वर युध्यन्तीति युधो योधास्तेषां वर पौरुषाणां पुरुष पराक्रमाणां निदर्शनं दृष्टान्तः ॥ ३६ ॥

**★स उपस्पृश्य शुच्यम्भो[1] नमस्कृत्य महेश्वरम् ।**
**[2-]दिव्यान्यस्त्राणि संस्मृत्य[-2] सज्यं गाण्डीवमाददे ॥ ३७ ॥**

**न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः ।**
**तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ३८ ॥**

**ततः कुमारः सञ्जातो विप्रपत्न्याः रुदन् मुहुः[3] ।**
**सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ३९ ॥**

**तदाह विप्रो विजयं विनिन्दन् कृष्णसन्निधौ ।**
**मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥ ४० ॥**

---

★According to M.Ma (editions) in 100th chapter 44 to 47 1. MI.V. °म्भु 2- -2 K.T.W. दिव्यान्यस्त्राण्यनुस्मृत्य ; MI.V. दिव्यास्त्राणि च संस्मृत्य 3. K.T.W मृतः

**श्रीध० स** इति। ब्राह्मणोपेक्षकत्वेन कृष्णमवज्ञाय महेश्वरं नमस्कृत्य ॥ ३७ ॥

**न्यरुणदिति**। न्यरुणदावृतवान्। तदेवाऽऽह तिर्यगूर्ध्वमिति ॥ ३८ ॥

**तत** इति। अदर्शनमापेदे देहोऽपि नावशिष्ट इत्यर्थः ॥ ३९, ४०॥

---

1- -1 B.J. कृष्णावज्ञया 2. MI.V. नावशिष्ठते

**वीर० स** इति। सोऽर्जुनः शुचिः शुद्धमम्बु जलम् उपस्पृश्याऽऽचम्य ॥ ३७ ॥

**न्यरुणदिति**। न्यरुणदावृतवान्। तदेवाह - तिर्यगूर्ध्वमिति ॥ ३८ ॥

**तत** इति। विप्रपत्न्याः सञ्जातः कुमारो रुदन्नेव मृतः। अदर्शनमापेदे, देहोऽपि नावशिष्टः इत्यर्थः ॥ ३९ ॥

**तदेति**। अहो मम मौढ्यं पश्यत योऽहं क्लीबस्य षण्डस्यार्जुनस्य कत्थनं प्रगल्भभाषणं श्रद्दधे विस्रब्धवान् अस्मि अतोऽहं मूढः ॥ ४० ॥

**विज०** सूतिकागारं सूतिकागृहं शरैर्न्यरुणत् आवृतवान् ॥ ३७,३८ ॥

भगवदनुग्रहरहितस्य साधनबाहुल्येन किं फलमिति भावेनाह - **तत** इति ॥ ३९ ॥

तदनन्तरं किमभूदित्यत्राह - **तदेति**। अथार्जुनं विनिन्दति तत्रेति ॥ ४० ॥

**★न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः ।**
**[1]यस्य शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः ॥ ४१ ॥**

**धिगर्जुनं मृषावादं[2] धिगात्मश्लाघिनो धनुः।**
**दैवोपसृष्टं[3-] यो[-3] मौढ्यादानिनीषति दुर्मतिः ॥ ४२ ॥**

**एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः[4] ।**
**ययौ संयमनीमाशु यत्रास्ते भगवान् यमः ॥ ४३ ॥**

**विप्रापत्यमचक्षाणः तत्र ऐन्द्रीमगात् पुरीम् ।**
**आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां वारुणीमथ ॥**
**रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥ ४४ ॥ △**

---

★ According to M. Ma editions in 100th chapter 48 to 52 Slokas. 1. K.MI.T.V.W. यत्र 2. MI.V °चं 3- -3 K.T.W. °सादितं 4. K.MI.V. फ° △ According to Viza second half verse is in next unit.

**श्रीध० नेति**। यस्य प्रजाः तत्तत्र ॥ ४१-४४ ॥

**वीर०** प्रद्युम्नादय एव यत्परित्रातुं न शेकुः न प्रबभूवुः तत् मदपत्यमवितुं त्रातुं को वा ईश्वरः समर्थः ॥ ४१ ॥

अतोऽर्जुनं धिक् स निन्द्य इत्यर्थः। 'उभ सर्वतसोः' (वार्तिक.under अष्टा. 1-4-48) इति द्वितीया। तत्र हेतुर्मृषा वदतीति तथा तम्। आत्मस्तुतिशीलस्यास्य धनुर्गाण्डीवमपि धिक्। तत्र हेतुर्योऽर्जुनः दुष्टा मतिर्यस्य स तथाभूतस्सन् दैवेनोपसादितं लोकान्तरं प्रापितं मौढ्यादानिनीषति। आनेतु मिच्छतीति ॥ ४२ ॥

**एवमिति**। एवं विप्रर्षौ शपति निन्दति सति स फाल्गुनोऽर्जुनः विद्यां सर्वलोकसञ्चारावहां योगविद्यामाश्रित्य तावत्संयमनीं यमपुरीं प्रति ययौ। यत्र संयमिन्यां भगवान् यम आस्ते तां इत्यर्थः ॥ ४३ ॥

तत्र विप्रस्यापत्यमचक्षाणोऽपश्यन् एवं क्रमेणैन्द्रियादि पुरीः, तत्र तत्राचक्षाणो ययौ । याम्या पुरी इयमन्या अस्यैव यमस्यैव सम्बन्धिनी दक्षिणदिक्स्था रसातलं पातालं नाकपृष्ठं नाकस्य स्वर्गस्य पृष्ठम् उपरितनं लोकं, किं बहुना? सर्वांश्च लोकान्वायुवञ्चचार ॥ ४४ ॥

**विज०** यस्य ममार्भकं परित्रातुं न शेकुः सोऽहं कृष्णस्य सन्निधौ यस्य तव विकत्थनं श्रद्दधे वै तं त्वां धिक्, आत्मश्लाघिनः स्वस्य तव धनुश्च धिक्, तदधिकेश्वरः तेभ्यः प्रद्युम्नादिभ्योऽधिकेश्वरश्च कः ॥ ४१ ॥

किमित्येवं निन्दसीति तत्राऽऽह - दैवेति। दैवेनोपसृष्टयो रुपद्रुतयो रावयोः पुत्र मानिनीषति आनेतुमिच्छति ॥ ४२ ॥

विद्यां मनुष्यागम्यगमन सामर्थ्यकरीम् ॥ ४३ ॥

नैर्ऋतीं निर्ऋते विद्यमानां दिशं, सौम्यां सोमस्य.वायव्यां वायोः, वारुणीं वरुणस्य ॥ ४४ ॥

**★ ततोऽलब्धद्विजसुतो ह्यनिस्तीर्ण प्रतिश्रुतः ।**
**अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥ ४५ ॥**

**दर्शये द्विजसूनूं स्ते मावज्ञा[1-]त्मनः[-1] कृथाः ।**
**[2-]ये ते न कीर्तिं विमलां मनुष्याः स्थापयन्ति ते[-2] ॥ ४६ ॥**

**इति सम्भाव्य भगवा नर्जुनेन [3]महेश्वरः ।**
**दिव्यं स्वरथ मास्थाय प्रतीचीं दिशमाविशत् ॥ ४७ ॥**

**सप्तद्वीपान् सप्तसिन्धून् [4] सप्तसप्तगिरी नथ ।**
**लोका लोकं तथाऽतीत्य विवेश सुमहत्तमः ॥ ४८ ॥**

**तत्राऽऽश्वाः शैब्यसुग्रीव मेघपुष्प वलाहकाः ।**
**तमसि [5] भ्रष्टगतयो बभूवु भरतर्षभ ! ॥ ४९ ॥**

**तान्दृष्ट्वा भगवान्कृष्णो महायोगेश्वरेश्वरः ।**
**सहस्रादित्य सङ्काशं स्वचक्रं प्राहिणोत्परः ॥ ५० ॥**

---

*According to M.Ma editions in 100th chapter these are 52 to 57 Slokas. 1- -1 B.G.J.MI.V. "त्मानमात्मना 2- -2 MI. V. मानया: स्थापयिष्यन्ति कीर्तिं निन्दन्ति ये हि नः। 3. G. स° 4. MI.V. गत्वा 5. MI. V. सा

**श्रीध० तत** इति। प्रत्युक्तो वारितः उपपत्तिभिः प्रतिषेधं कुर्वता ॥ ४५ ॥

**दर्शय** इति। मावज्ञ माऽवजानीहि, ये निन्दन्ति त एव मनुष्या नः कीर्तिं स्थापयिष्यन्ति निश्चलां करिष्यन्ति. पाठान्तरन्तु छन्दोभङ्गभया दागन्तुकमिति ॥ ४६,४७ ॥

**सप्तद्वीपानिति**। सप्त सप्त संख्या गिरयो येषु द्वीपेषु तान् ॥ ४८-५० ॥

**वीर०** ततस्तत्र सर्वत्राऽप्यलब्धो द्विजसुतो येन सः। अत एव अनिस्तीर्ण प्रतिज्ञः, अत एवाऽग्निं प्रवेष्टु मिच्छु. प्रतिषेधता सामोक्तिभिः प्रतिषेधङ्कुर्वता श्रीकृष्णेन प्रत्युक्तो निवारितः ॥ ४५ ॥

प्रतिषेधपूर्वक निवारण प्रकारमेवाह-दर्शय इति। द्विजस्य सूनूं स्ते तुभ्यं दर्शये दर्शयिष्यामि। आत्मनः स्वस्य अवज्ञां मा कृथाः। एवञ्चेत्तव अमलां कीर्ति मेते मनुष्याः स्थापयन्ति निश्चलां करिष्यन्ति। दूषयन्तीति पाठान्तरम्, तदात्मनोऽवज्ञा मा कृथाश्चेत् कीर्तिं दूषयिष्यन्तीत्यर्थः ॥ ४६ ॥

**इतीति**। सम्भाष्य सम्भाषणेन प्रतिबोध्य भगवान्महेश्वरः श्रीकृष्णोऽर्जुनेन सह स्वकीयं रथमारुह्य पश्चिमां दिश माविशत् ॥ ४७ ॥

**सप्तद्वीपानिति**। सप्तसप्तगिरयो येषु तान्, द्वीपांश्च ततो लोकालोकं पर्वत मतीत्य सुमहन्निबिडं तमोऽन्धकारं विवेश ॥ ४८ ॥

तत्र तमसि शैब्यादयोऽश्वाः प्रतिहतगतयो बभूवुः। हे भरतर्षभ! ॥ ४९ ॥

**तानिति**। तान् भ्रष्टगतीनश्वान् दृष्ट्वा श्रीकृष्णः स्वचक्रं सुदर्शनं पुरोऽश्वानां पुरतः प्राहिणो त्प्रायुङ्क्त ॥ ५० ॥

1. B. °ज्ञां माकृथाश्चेत् K. °ज्ञानं करोषि चेत्

**विज०** अनिस्तीर्ण प्रतिश्रुतः असाधित प्रतिज्ञः प्रत्युक्तः नेत्युक्तः प्रतिषेधता निषेधं कुर्वता, कथं नेत्युक्त इति तत्राऽऽह - दर्शय इति। आत्मनैव स्वयं आत्मानं मावधीः मा हिंसीः। सन्धि रार्षः। एतेन पुत्रादानादिना त्वन्निमित्तेन मानुष्यं मनुष्यलोकस्थां यथा स्यात्तथा ईश्वरादपि महानुत्तमः ॥ ४५-५० ॥

★ **तमस्सुघोरं गहनं कृतं महद्विदारयद्भूरितरेण रोचिषा ।**
**मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥ ५१ ॥**
**द्वारेण चक्रानुपथेन तत्तमः परं परं ज्योतिरनन्तपारम् ।**
**तमश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽपिदधेऽक्षिणी उभे ॥ ५२ ॥**
**ततः प्रविष्ट स्सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभीषणम् ।**
**तत्राऽऽद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम् ॥ ५३ ॥**
**तस्मिन्महाभीम मनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः ।**
**विभ्राजमानं द्विगुणोल्बणेक्षणं सिताचलाभं शितिकण्ठजिह्वम् ॥ ५४ ॥**

★ According to M.Ma edns. in 100th chapter these are 58 to 61 Slokas. 1- -1 MI.V. कृतं सुघोरं गगनच्छदं 2. MI.V. रगम् 3. MI.V. °पि° 4. B.G.J. MI.V. भृ° 5. MI.V. °हीन्द्रम° 6- -6 MI.V. द्विसहस्र नेत्रैः

**श्रीध० तम** इति। प्रकृतिपरिणामरूपं नाऽऽलोकाभावमात्रम् ॥ ५१ ॥

**द्वारेणेति**। चक्रानुपथेन चक्रमनुगतेन द्वारेण तत्तमः परं तस्मात्तमसः परं दूरे वर्तमानं श्रेष्ठं भागवतं ज्योतिः समश्नुवानं व्याप्नुवत् प्रसमीक्ष्य प्रताडिताक्षो नेत्रे न्यमीलयदिति ॥ ५२ ॥

**तत** इति। एजन्त उच्चलन्तो बृहन्तो महान्त ऊर्मयो भूषणं यस्य तत्, तत्र सलिले भवनं महाकालपुरं द्युमत्तमं द्युतिमत्सु श्रेष्ठम् ॥ ५३ ॥

तस्मिन्निति। सहस्रं मूर्ध्नि भवाः फणास्तासु मणय स्तेषां द्युतिभिः द्विसहस्रनेत्रैरूर्जितं स्फटिकगिरिसङ्काशं शितिकण्ठजिह्वं कण्ठाश्च जिह्वाश्च कण्ठजिह्वाः शितयो नीलाः कण्ठजिह्वाः यस्य तम् ॥ ५४ ॥

**वीर० तम** इति। गहनं दुष्प्रवेशं सुघोरं भयङ्करं महदपारं कृतम् भगवतैव सृष्टं तमो भूरितरेण बहुतरेण स्वतजेसा विदारयन्मनोजवं सुदर्शनं विवेश यथा रामस्य दाशरथेः शरो गुणान्मौर्व्याच्च्युतः चमूं रावणसेनां विवेश तद्वत् ॥ ५१ ॥

**द्वारेणेति**। चक्रानुपथेन चक्रमनुगतेन द्वारेण तस्मात्तमसः परं दूरे वर्तमानं भागवतमनन्तपारं ज्योतिः समश्नुवानं प्राप्नुवच्चक्रं प्रसमीक्ष्य फाल्गुनोऽर्जुनः प्रताडिते प्रतिहते अक्षिणी दृष्टी यस्य सः, उभे अप्यक्षिणी अपिदधे न्यमीलयत् ॥५२॥

**तत** इति। तत स्तमसः परतो जलं प्रविष्टः। कथम्भूतः? बलीयसा प्रचण्डेन नभस्वता वायुना एजन्ते उच्चलन्तः बृहन्तः ऊर्मयस्तरङ्गाः तै भीषणं, भीषणमिति पाठे तदा ऊर्मय एव भूषणं यस्य तथाभूतं तस्य जलस्याधस्तादद्भुतं भवनं, प्रविष्ट इत्यनुषङ्गः। कथम्भूतम्? द्युमत्तमं द्युतिमच्छ्रेष्ठं भ्राजतां मणिमयस्तम्भानां सहस्रेणोपशोभितम्॥ ॥ ५३ ॥

**तस्मिन्निति**। तस्मिन्भवने तं प्रसिद्धमनन्ताख्यं महान्त महिं ददर्शेत्युत्तरेण सम्बन्धः। कथम्भूतम्? अद्भुतं विस्मयनीयं सहस्रं मूर्धानः फणाः तेषु भवा स्तेषां महतां मणीनां द्युभिर्दीप्तिभिः विशेषेण भ्राजमानं, द्विगुणैः द्विसहस्रसंख्यैः ईक्षणैः उल्बणमुग्रं सिताचलः स्फटिकपर्वतः तस्य आभा इव आभा यस्य तं, शितिः नीलः कण्ठो जिह्वाश्च यस्य तमिति ॥ ५४ ॥

**विज०** गगनं छादयतीति गगनच्छदं गुणच्युतः मौर्व्या मुक्तः ॥ ५१ ॥

चक्रानुपथे सुदर्शन गतानुकूलमार्गे कृतद्वारेण समश्नुवानं गच्छन्तं यदुत्तमं प्रसमीक्ष्य अक्षिणी पिदध इत्यन्वयः। अनन्त पारं अन्तपार वर्जितम् ॥ ५२ ॥

ततस्सलिलं प्रविश्य गतो भवनं ददर्श त्यन्वयः। बलीयसा नभस्वता वायुना एजद्भिः कम्पमानैः बृहद्भिः ऊर्मिभिः तरङ्गैः भीषणं, तत्र सलिले ॥ ५३ ॥

तस्मिन् भवने अनन्तं ददर्श, सिताम्बराभं श्वेताकाशवत् शोभमानं, शितिः नीलः कण्ठो यस्य सः, शितिकण्ठः जिह्मगः नम्रगात्रतस्तम् ॥ ५४ ॥

**☆ ददर्श तद्भोग सुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम् ।**
**सान्द्राम्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरायतेक्षणम् ॥ ५५॥**

**महामणिव्रात किरीट कुण्डल प्रभापरिक्षिप्त सहस्रकुन्तलम् ।**
**प्रलम्ब चार्वष्टभुजं स[1] कौस्तुभं श्रीवत्सलक्ष्म्या वनमालया वृतम् ॥ ५६ ॥**

**सुनन्दनन्दप्रमुखैः स्वपार्षदैः[2] चक्रादिभिर्मूर्तिधरैर्निजायुधैः ।**
**पुष्ट्या श्रिया कीर्त्यजयाऽखिलर्द्धिभिः निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ५७ ॥**

**ववन्द आत्मान मनन्त मच्युतो जिष्णुश्च तद्दर्शन जात साध्वसः ।**
**ता वाह भूमा परमेष्ठिनां प्रभुः बद्धाञ्जली सस्मित मूर्जया गिरा ॥ ५८ ॥**

---

★ According to M.Ma editions in 100th chapter these are 62 to 65 Slokas. 1. K.T.W. सु° 2. K.T.W. च पा°

**श्रीध० ददर्शेति**। तद्भोगसुखासनं तस्यानन्तस्य भोगो देहः सुखकरमासनं यस्य तम् ॥ ५५ ॥

**महामणि** इति। महान्तो मणि व्राता येषु तेषां किरीटकुण्डलानां प्रभा तया परिक्षिप्ताः सर्वतः स्फुरन्तः सहस्रमपरिमिताः कुन्तला यस्य तम् ॥ ५६ ॥

**सुनन्देति**। कीर्त्यजया कीर्तिसहितया अजया अखिलर्द्धिभिः अणिमादि विभूतिभिः मूर्तिधराभिः ॥५७॥

**ववन्देति**। ऊर्जया ऊर्जितया गिरा ॥ ५८ ॥

**वीर० ददर्शेति**। तस्यानन्तस्य भोगः शरीरमेव सुखासनं यस्य तं विभुं भगवन्तं ददर्श। कथम्भूतम्? महाननुभावः प्रभावो यस्य तं पुरुषोत्तमानां ब्रह्मादीनामप्युत्तमं, सान्द्रस्य अम्बुदस्येव आभा यस्य। शोभने पिशङ्गे वाससी यस्य, प्रसन्नं वक्त्रञ्च यस्य, रुचिरे सुन्दरे आयते च ईक्षणे यस्य तम् ॥ ५५ ॥

महान्तो मणिव्राता येषु तेषां किरीटकुण्डलानां प्रभया परिक्षिप्ताः सर्वतः स्फुरन्तः अनन्ताः कुन्तलाः यस्य तं, प्रलम्बा दीर्घा श्चारवो वर्तुलाश्च अष्टौ भुजा यस्य, शोभनः कौस्तुभो यस्य, श्रीवत्सं लक्ष्मं चिह्नं यस्य तं, वनमालया अलङ्कृतञ्च ॥ ५६ ॥

सुनन्दनादिभिः पार्षदैः विग्रहधरैः चक्रादिभिः स्वासाधारणैरायुधैश्च पुष्ट्यादिभिश्शक्तिभिः मूर्तिमतीभिः तथा अखिलर्द्धिभिः अणिमादिभिस्सेव्यमानं परमेष्ठिनां ब्रह्मादीनां पतिम् ॥ ५७ ॥

**ववन्द** इति। अजं हेयप्रतिभटं स्वस्मादनन्यं तमच्युतो ववन्दे ननाम। तथा जिष्णु रर्जुनश्च तस्य भगवतो दर्शनेन जातं साध्वसं भक्तिपूर्वकभयं यस्य सः ववन्दे। ततो बद्धाञ्जली तौ कृष्णार्जुनौ प्रति परमेष्ठिनां पतिः प्रभुर्भगवान् ऊर्जितया गम्भीरया गिरा प्राह ॥ ५८॥

---

1. K.T.W. अक्षिणी

**विज०** तस्यानन्तस्य भोगे सुख मासनं यस्य सः तथा तद्भोग सुखासनः, तम् ॥५५,५६॥

परमेष्ठिनां ब्रह्मणां, पतिम् ॥ ५७ ॥

अच्युतः कृष्णः, जिष्णु रर्जुनः ॥ ५८॥

**✤ द्विजात्मजा मे[1] युवयो र्दिदृक्षुणा**
**मयोपनीता भुवि धर्मगुप्तये ।**
**कलावतीर्णा ववने र्भरासुरान्**
**हत्वेह भूयस्त्वरयेतमन्ति मे ॥ ५९ ॥**

**पूर्णकामावपि युवां नरनारायणा वृषी ।**
**धर्ममाचरतां स्थित्यै ऋषभौ लोकसङ्ग्रहम् ॥ ६०॥**

**इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना ।**
**ओमित्यानम्य भूमान मादाय द्विजदारकान् ॥ ६१ ॥**

**न्यवर्तेतां[2] स्वकं धाम सम्प्रहृष्टौ यथागतम् ।**
**विप्राय ददतुः पुत्रान् यथारूपं[3] यथावयः ॥ ६२ ॥**

---

✤ According to M.Ma editions in 100th chapter these are 66 to 69 Slokas 1. MI.V. वै 2. B.G.J.T.W. °र्तेतां 3. K.T.W. रूपां स्तदा प्रभू ; MI.V. रूपां स्तथा प्रभू

**श्रीध० द्विजेति**। मे कलावतीर्णाविति सम्बोधनम्। शीघ्रं मे अन्ति सकाशम् इतमागच्छतम् ॥ ५९॥

**पूर्णकामा** इति। आचरतं कुरुतम्। इदं भारतयुद्धात्पूर्वमेव कृतमपि श्रैष्ठ्य कथन प्रस्तावेनाऽत्रोक्तम् ॥ ६० ॥

**वीर०** उक्तिमेवाह द्वाभ्यां **द्विजात्मजा** इति। युवयो र्युवां दिदृक्षुणा द्रष्टुमिच्छता मया द्विजात्मजा मे उपनीताः मदन्तिकं प्रापिताः। किमावयोः दर्शनेन? इत्यत्र आह - धर्मगुप्तये भुवि कलया अवतीर्णौ, कलावतीर्णा विति छत्रिन्यायेनोक्तम्। कृष्णस्तु भगवान्स्वयमित्युपक्रमे पूर्णावतारत्वोक्तेः। अतो मदवतारत्वान्मम दिदृक्षा जातेति भावः। अर्जुनस्य नरांशत्व प्रसिद्धि मुपजीव्य इत्थमुक्तम्। नरस्य नारायणांशावतारत्वात् अवनेः भूमेः भारायितानसुरान् हत्वा भूय स्त्वरया मे मम अन्तिकं समीपम्, इत मागच्छतम्। इण् गतौ इत्यस्य रूपम् ॥ ५९ ॥

किञ्च **पूर्णकामा विति**। युवां पूर्वं नरनारायणा वृषी भूत्वेति शेषः। ऋषभौ श्रेष्ठौ, हेतुगर्भमिदम्। अतः पूर्णकामावपि स्थित्यै जगद्रक्षणार्थं लोकसङ्ग्रहं धर्म माचेरतु राचरितवन्तौ लोकोऽर्वाचीनो जनः सङ्गृह्यते। प्रवर्त्यतेऽनेनेति तथा तम्। अत्र "यद्य दाचरति श्रेष्ठः" (भ.गी.33-21) इत्यादि गीता वचनार्थः उपक्षिप्तः ॥ ६० ॥

**इतीति**। भगवता परमेष्ठिना इत्थ मादिष्टौ तौ कृष्णौ श्रीकृष्णार्जुनौ ओमिति तदाज्ञा मङ्गीकृत्य भूमानं भगवन्तं प्रणम्य द्विजपुत्रानादाय सम्प्रहृष्टौ धाम स्वगृहं प्रति यथाऽऽगतं न्यवर्तेताम्, आजग्मतुः। विप्रायेति यथारूपा ननतिक्रान्त स्वस्व पूर्वरूपान् प्रभू कृष्णार्जुनौ ददतुः ॥ ६१,६२ ॥

**विज०** युवयोः कृष्णार्जुनयोः ॥ ५९ ॥

जगतः स्थित्यै । लोकसङ्ग्रहं धर्मम् ॥ ६० ॥

कृष्णौ यदूत्तमार्जुनौ आनन्दभूमानं पूर्णानन्दम् ॥ ६१ ॥

प्रसूयतां प्रसवं गच्छतां रूपं यथा प्रसूतिकाले यद्रूपं तादृशं रूपं दधानान् ॥ ६२ ॥

**★ निशाम्य वैष्णवं धाम पार्थः परमविस्मितः ।**
**यत्किञ्चित्पौरुषं पुंसां मेने कृष्णानुकम्पितम् ॥ ६३ ॥**

**△ इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन् ।**
**बुभुजे विषया[1]न्रम्या नीजे चाऽत्यूर्जितैर्मखैः ॥ ६४ ॥**

**प्रववर्षाऽखिलान् कामान् प्रजासु ब्राह्मणादिषु ।**
**यथाकालं यथैवेन्द्रो भगवान् श्रैष्ठ्य मास्थितः ॥ ६५ ॥**

**हत्वा नृपानधर्मिष्ठान् घातयित्वाऽर्जुनादिभिः ।**
**अञ्जसा वर्तयामास धर्मं धर्मसुतादिभिः ॥ ६६ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसहस्त्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे द्विजकुमारानयनं नाम एकोननवतितमोऽध्यायः ॥ ८९ ॥

★ According to M.Ma editions in 100th chapter this Sloka is 70th Sloka. △ 64,65,66 Slokas are not found in M.Ma Editions. 1. B.G.J. K I W "यान्ग्राम्या"

**श्रीध० निशाम्य** इति ॥ ६३-६६ ॥

इति श्रीमद्भागवते दशमस्कन्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां उत्तरार्धे एकोननवतितमोऽध्यायः ॥ ८९ ॥

**वीर० निशाम्येति**। विष्णोस्सम्बन्धि धाम स्थानं निशाम्य दृष्ट्वा पुंसां यत्किञ्चित् पौरुष मस्ति तत्सर्वं कृष्णानुकम्पितं श्रीकृष्णकृपालब्धमेवेति मेने। "शब्दः खे पौरुषं नृष्वि" ति(        ) गीतं दृष्टान्तमुखेन निश्चितवानित्यर्थः ॥ ६३ ॥

**इतीति**। ईदृशानि अतिदैव मानुषाणि चरित्राणि दर्शयन् अखिलेश्वरो भगवान् ग्राम्यान् विषयान् भोगान् बुभुजे। अखिलेश्वर इत्यनेन भोगप्रयुक्त कर्मवश्यत्वं व्युदस्यते ऊर्जितैः पुष्कलदक्षिणै र्मखैः यज्ञैः ईजे इष्टवान् ॥ ६४ ॥

**प्रववर्षेति**। ब्राह्मणा आदिर्यासां तासु प्रजासु अखिलानभिलषितान् कामान् प्रववर्ष। यथेन्द्रो - यथाकालं वर्षर्तुमनतिक्रम्य वर्षति तथा भगवानपि श्रैष्ठ्यं परत्व मास्थितः[1] कामान् ववर्ष ॥ ६५ ॥

**हत्वेति**। कांश्चिदधर्मिष्ठान् स्वयं हत्वा कांश्चि दर्जुनादिभि र्घातयित्वा धर्मसुतादिभिः युधिष्ठिरादिभिः अञ्जसा ऋजुमार्गेण सुखेन वा धर्मं वर्णाश्रमा द्यनुगुणं प्रवर्तयामास ॥ ६६ ॥

इति श्रीमद्भागवते दशमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां व्याख्यायां
उत्तरार्धे एकोननवतितमोऽध्यायः ॥ ८९ ॥

1. B. माश्रितः

**विज०**

According to M.Ma editions in 100th chapter these are 71 to 74 Slokas.

तथाप्रविश्य गोविन्दो यज्ञवाटं पुनः स्वयम् ।
पूर्णपुरोहितैर्विप्रैः ऋत्विग्भिः क्षत्त्रियर्षभैः ॥ क ॥

प्रायश्चित्तन्तु चलने दीक्षायां य उदाहृतः ।
तं चकार यथान्यायं ब्राह्मणै रनुमोदितः ॥ ख ॥

समाप्य यज्ञं विधिवत्तर्पयित्वाऽर्थिनो द्विजान् ।
ऋत्विग्भ्यः पूजयित्वाऽन्या नृपांश्च कुरुसत्तम ॥ ग ॥

यमुनायां महानद्यां कृत्वाऽवभृथमज्ञनम् ।
विजहार यथाकामं महर्षिभि र्यदूत्तमः ॥ घ ॥

पुंसां यत्किञ्चित्पौरुषं कृष्णानुकम्पितं मेने ॥ ६३-६६ ॥

दीक्षायां मध्ये चलने तत उत्थय गमने प्रायश्चित्त मुद्दिश्य यः कर्मविशेष उदाहृतः तं चकार ॥ क.ख.ग.

अवभृथनिमित्तमज्ञनम् ॥ घ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे उत्तरार्धे एकोननवतितमोऽध्यायः ॥ ८९ ॥
(श्रीविजयध्वजरीत्या शततमोऽध्यायः)



# नवतितमोऽध्यायः

(विजयध्वजरीत्या द्विशततमोऽध्यायः)

**श्रीशुक उवाच**

**[1]सुखं स्वपुर्यां निवसन् द्वारकायां श्रियः पतिः ।**
**सर्व सम्पत्समृद्धायां [2]जुष्टायां वृष्णिपुङ्गवैः ॥ १ ॥**

**स्त्रीभिश्चोत्तमवेषाभिः नवयौवनकान्तिभिः ।**
**[3-]कन्दुकैः हर्म्य सौधेषु[-3] क्रीडन्तीभिस्तटिद्द्युभिः ॥ २ ॥**

**नित्यं सङ्कुलमार्गायां मदच्युद्भिर्मतङ्गजैः ।**
**स्वलङ्कृतैर्भटैरश्वै रथैश्च [4]कनकोज्ज्वलैः ॥ ३ ॥**

**उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ।**
**निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः ॥ ४ ॥**

**रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ।**
**[5-]तावद्विचित्र रूपोऽसौ[-5] [6]तद्गेहेषु महर्द्धिषु ॥ ५ ॥**

**प्रोत्फुल्लोत्पलकह्लार कुमुदाम्भोजरेणुभिः ।**
**वासितामलतोयेषु कूजद्द्विज[7]कुलेषु च ॥ ६ ॥**

1. T.W स्वयं 2. Ml.V. संवृतो 3- -3 B.G.J.K.T.W. कन्दुकादिभिर्हर्म्येषु ; Ml.V. हर्म्येषु कन्दुकाद्यैस्तु 4. Ml.V. वचो° 5- - 5 M.Ma.Ml.V. तावन्ति बिभ्रद्रूपाणि 6. B.G.J °द्गे° 7.M.Ma. कुलादिभिः ॥

## श्रीधरस्वामि विरचिता भावार्थदीपिका

चरमे तु पुनः प्रोक्ता कृष्णलीला समासतः। यदुवंशप्रसूतानामानन्त्यञ्च सकारणम् ॥

श्रीकृष्ण विभूतिं समासेन दर्शयति - **सुखमिति**। सर्व[1]सम्पद्विशिष्टायां श्रियः पतिः षोडशसहस्र पत्नीनामेकवल्लभस्सन् तासां गेहेषु रेमे इत्यन्वयः ॥ १-५ ॥

[2] गृहविशेषणं **प्रोत्फुल्ले**त्यादिश्लोकेन ॥ ६ ॥

---

1. B.J. "म्पदादि वि" 2. B.G. गे"

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ भगवतः श्रीकृष्णस्य स्वपत्नीभिस्सह क्रीडाप्रकारं तासां तस्मिन्ननुरागातिशयं पुत्रपौत्रादि सन्तती: प्रकृत स्कन्धार्थ श्रवणादि फलञ्च वर्णयति नवतितमेन **सुखं स्वपुर्यामि**त्यादिना। श्रियःपतिः इत्यस्य 'रेमे षोडशसाहस्र पत्नीनामेकवल्लभः' इत्युपरिष्टात् सम्बन्धः। वृष्णिपुङ्गवैः स्त्रीभिश्च जुष्टायां सेवितायाम् इति सम्बन्धः ॥ १ ॥

कथम्भूताभिः? नवयौवनेन कान्तिर्यासां ताभिः तडितामिव द्यौर्द्युति र्यासां ताभिः ॥ २ ॥

**नित्यमिति**। सङ्कुलाः सङ्कीर्णाः मार्गा तस्यां द्वारकायाम् इति पूर्वेण सम्बन्धः। मदच्युद्भिः मदजल स्राविभिः मतङ्गजैः गजैः सुष्ठलङ्कृतैः भटैः कनकेनोज्ज्वलै रथैश्च ॥ ३ ॥

किञ्च। उद्यानैरुपवनैश्च आढ्यायां, कथम्भूतैः? पुष्पिता ये द्रुमाः तेषां राजिषु पङ्क्तिषु निर्विशन्तो भृङ्गाणां निवहाः समूहाः येषु तैः, नादितायामित्यस्य मतङ्गजादिभिरिति शेषः। यद्वा - निर्विशतां भृङ्गाणां निवहैः नादितायाम् ॥४॥

**रेमे** इति। षोडशसहस्रपत्नीनामेक एव वल्लभः पतिस्सन् तावन्ति षोडश सहस्राणि रूपणि मूर्ती बिभ्राणः तासां गृहेषु रेमे इति सम्बन्धः। कथम्भूतेषु? महत्य ऋद्धयः भोग्यभोगोपकरणादि समृद्धयः येषु ॥ ५॥

प्रोत्फुल्लानां उत्पलानां रेणुभिर्वासितानि अमलानि तोयानि येषु तेषु कूजन्ति द्विजानां पक्षिणां कुलानि समूहा येषु तेषु ॥ ६ ॥

## श्रीविजयध्वज तीर्थकृता पदरत्नावली

अनेनाऽध्याय द्वयेन गृहस्थधर्मानुकरण लक्षणं हरेस्सनिधानात् सर्वतीर्थोत्तमत्त्वं द्वारकायाश्च कथ्यते। तत्र प्रथमं द्वारकापुरं वर्णयति **सुखमिति** ॥ १ ॥

**हर्म्येषु** धनिनां योग्येषु समुन्नतगृहेषु सौधेषु सुधाधवलितेषूत्तम गृहेषु ॥ २,३ ॥

**निर्विशद्भिः** मिथ उपभुञ्जनैः भृङ्गविहङ्गैः नादितायां घोषवत्कृतायाम् ॥ ४,५ ॥

वासितामलतोयेषु परिमलीकृतजलेषु ॥६॥

**विजहार विगाह्याम्भो ह्र[1]दिनीषु महोदयः ।**
**कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च[2] योषिताम् ॥ ७ ॥**

**उपगीयमानो गन्धर्वै र्मृदङ्गपणवानकान् ।**
**वादयद्भिर्मुदा वीणाः[3] सूतमागधवन्दिभिः ॥ ८ ॥**

**[4]सिच्यमानोऽच्युत स्ताभिर्हसन्तीभि[5]श्च[6] रेचकैः ।**
**[7]प्रतिसिञ्चन्विचिक्रीडे [8-]यक्षीभिर्यक्षराडिव[-8] ॥ ९ ॥**

**ताः क्लिन्नवस्त्र विवृतोरु कुचप्रदेशाः सिञ्चन्त्य उद्धृत बृहत्कबरप्रसूनाः ॥**
**[9-]कान्तं स्म रेचक जिहीरषयो[-9]पगुह्य जातस्मरो[10]त्सवलसद्वदना विरेजुः ॥ १० ॥**

---

1. MI.V. ह्रा° 2. M.Ma °स्स्व 3. B.G.J. °णां 4. M. Ma.T.W. सेव्य° 5. B.G.J. °स्सम 6. K.T.W. सैचनैः 7. MI.V. पत्नीः सि° 8--8 M. Ma मुखरः शक्तिभिः स्वयम्। 9--9 K.T.W. कान्तं स्व सेचन जिहीर्षुतयो° ; M.Ma कान्तस्य चेतन जिहीर्षतयो ; MI.V. कान्तं स्म रेचक जिहीर्षुतयो° 10. M. Ma. MI.V. °त्स्मय

**श्रीध०** तथा ह्र[1]दिनीषु चाऽम्भो विगाह्य विजहार। महानुदयो वैभवं यस्य सः। योषितां कुचकुङ्कुमैर्लिप्ताङ्गः, यतः ताभिः परिरब्धः ॥ ७ ॥

**उपगीयमान** इति। सूतमागधवन्दिभिश्चोपगीयमानः ॥ ८,९ ॥

**ता** इति। ताः क्लिन्नवस्त्राः अत एव विवृतोरु कुचप्रदेशाः उद्धृतानि विस्रस्तानि बृहत्कबरेभ्यः प्रसूनानि यासां ताः, जातेन स्मरेण य उ[2]त्सवस्तेन लसन्ति वदनानि यासां ताः ॥ १० ॥

---

1. MI.V. ह्रा° 2. MI.V. उत्स्मय°

**वीर०** किञ्च **उपगीयमान** इति। सूताः पौराणिकाः। मागधाः वंशावलि पाठकाः। कथम्भूतैः? वीणादीन् वादयद्भिः ॥७,८॥

**सेव्यमान** इति। ताभिर्योषिद्भिः सेचनैः जलसेचनैः हसन्तीभिः सेव्यमानः स्वयमपि ताः प्रतिषिञ्चन् यक्षीभिः यक्षराट् कुबेर इव विचिक्रीडे विक्रीडितवान् ॥ ९ ॥

**ता इति**। क्लिन्नानि सिक्तानि वस्त्राणि यासां ताः, अत एव विवृतोरुकुचप्रदेशाः ताश्च उद्धृतानि विस्रस्तानि बृहत्कबरेभ्यः प्रसूनानि यासां ता योषितः कान्तं भगवन्तं सिञ्चन्त्यः स्वसेचन जिहीर्षुतया स्वशब्दः कान्तपरः। तस्य सेचनपरिहारेच्छया तमेवोपगुह्याऽऽलिङ्ग्य तेन जातेन स्मरेण उत्स्मयः उत्कृष्टहासः तेन लसन्ति वदनानि यासां ता विरेजुः ॥ १० ॥

**विज०** ह्लादिनीषु नदीषु। स्वयोषितमिति षष्ठी तृतीयार्थे ॥ ७ ॥

वीणाः इति द्वितीया ॥ ८ ॥

रेचकैः जलप्रक्षेपणचर्मपात्रैः शक्तिभिः भार्यादिभिस्सह ॥ ९ ॥

क्लिन्नान्यार्द्राणि वस्त्राणि यासां ताः, विवृता ऊरुप्रदेशाः कुचप्रदेशाश्च यासां ताः, बृहन्ति कबराणि बृहत्कबराणि उद्धृतानि उन्मुक्तानि बृहत्कबरपूरितानि प्रसूनानि यासां ताः, कान्तस्य कमनीयस्य कृष्णस्य चेतनजिहीर्षतया चित्तवशीरणेच्छया उपगूहनक्रियया जातेनाऽऽविर्भूतेन स्मरोत्स्मयेन उत्कृष्टेन मन्दस्मितेन लसन्ति वदनानि यासां ताः ॥ १० ॥

**कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक्[1-]क्रीडाभिषङ्गधुतकुन्तलबृन्दबन्धः[-1] ।**
**सिञ्चन्मुहुर्युवतिभिः [2]प्रतिषिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः ॥ ११ ॥**

**❖ नटानां [3]नर्तकीनाञ्च गीतवाद्योपजीविनाम् ।**
**क्रीडालङ्कार वासांसि कृष्णोऽदात्तस्य च स्त्रियः ॥ १२ ॥**

**कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः।**
**नर्म[4]क्ष्वेलीपरिष्वङ्गैः स्त्रीणां किल हृता धियः ॥ १३ ॥**

**ऊचुर्मुकुन्दैकधियोऽगिर उन्मत्तवज्जडम्।**
**चिन्तयन्त्योऽरविन्दाक्षं [5]तानि मे गदतः शृणु ॥ १४ ॥**

---

1--1. M. Ma °त सकुन्तलकुन्दगन्धः। 2. M. Ma. MI.V. परि। ❖ अत्र विजयध्वजरीत्या द्व्यधिकशततमोऽध्यायः समाप्यते। अग्रे सप्तविंशश्लोकावधि श्लोका न विद्यन्ते । अष्टाविंशतिश्लोकमारभ्य त्र्यधिकशततमाध्यायत्वेन पठ्यते च ॥ 3. K.MI.T.V.W. का° 4. B. G. J. T.W. क्ष्वेलि° ;MI.V. केलि° 5. MI.V. यानि

**श्रीध० कृष्ण** इति। तासां स्तनेभ्यो विषज्जित कुङ्कुमा स्रग्यस्य, क्रीडाया[4]मभिषङ्गेण अभिनिवेशेन धुतः कम्पितः कुन्तलबृन्दबन्धो यस्य सः ॥ ११-१३ ॥

**ऊचुरिति**। मुकुन्दैकधियः समाहिता इव उन्मत्ता[2] इव क्षणमगिरस्सत्यः पुनस्तमेवेशं चिन्तयन्त्यो जडं यथा भवति तथा, यानि वाक्यानि ऊचुस्तानि मे मत्तो गदतः शृण्वित्यर्थः ॥१४॥

---

1. B.J. या अभि 2. B.J. omit उन्मात्ता इव

**वीर० कृष्णस्त्विति**। तासां स्तनेभ्यो विषञ्जिता कुङ्कुमस्रग्यस्य सः, क्रीडायामभिषङ्गेणाऽभिनिवेशेन धुतः कम्पितः कुन्तलबृन्दबन्धो यस्य सः, स्वयं मुहुः सिञ्चन् युवतिभिः प्रतिषिच्यमानश्च करेणुभिः परिवृतो गजराडिव रेजे ॥ ११ ॥

**नटानामिति**। गीतैः वाद्यैः च उपजीवन्तीति तथा। तेषां नटादीनां नटादिभ्यः क्रीडार्थं येऽलङ्काराः भूषणानि वासांसि च तानि प्रादात् प्रायच्छत्। तथा स्त्रियोऽपि नर्तकीभ्यः प्रायच्छन् ॥ १२ ॥

**कृष्णस्येति**। कर्तरि षष्ठी गत्यादिभिरेवं विहरता कृष्णेन स्त्रीणां धियः हृताः ॥ १३ ॥

अत एव मुकुन्द एवैकस्मिन् धीर्यासां ताः, तमरविन्दाक्षं चिन्तयन्त्यः, तत्सान्निध्याभाव दशायामिति शेषः। अगिर इति छेदः क्षणमगिरः, धृतमौना इत्यर्थः। तत उन्मत्त इव जडं यथा तथा यानि वाक्यान्यूचुः तानि सम्यगादरतः कथयतो मत्तः शृणु ॥ १४ ॥

**विज०** तासां स्तनेभ्यः विषञ्जितानि सङ्क्रान्तानि कुङ्कुमानि तत् स्तनविषञ्जित कुङ्कुमानि तैर्मिश्रा स्रग्यस्य सः तथा कुन्तलैः सह वर्तमानस्सकुन्तलः क्रीडाया मतिसङ्गतश्चाऽयं सकुन्तलश्च कुन्दगन्धश्च तथा कुन्दपुष्पवत् गन्धो यस्य स तथा। सिञ्चन्, जलमिति शेषः ॥ ११-१४ ॥

**गृहेषु तासामनिवार्य ईश्वरो निरस्तसाम्यातिशयो व्यवस्थितः।**
**रेमे रमाभिर्निजसौख्यसम्प्लुतो यथेतरो गार्हकमेधिकांश्चरन् ॥ क ॥**

अनिवार्य इत्यस्य विवरण मीश्वर इति। रमाभी रामाभिः लक्ष्मी सन्निधान युक्ताभिर्वा। निजसौख्य सम्प्लुतः स्वरूपानन्द समुद्रमग्नः गार्हकमेधिकान् गृहस्थाश्रमयोग्य धर्मांश्चरन् कुर्वन् ॥ क ॥

**इत्थं रमापतिमवाप्य पतिंस्त्रियस्ता ब्रह्मादयोऽपि पदवीं न विदुर्यदीयाम्।**
**भेजुर्मुदाऽविरत मेधितयाऽनुराग हासावलोक नवसङ्गमलज्जयैव ॥ ख ॥**

नवसङ्गमे या लज्जा सैव स्थिता तया अनुरागादियुक्तया ॥ ख

**महिष्य ऊचुः**

**कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति[1] जगति राज्यामीश्वरो[2] गुप्तबोधः ।**
**वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता[3] नलिननयनहासोदार लीलेक्षितेन[4] ॥ १५ ॥**

**नत्रे निमीलयसि नक्तमदृष्टबन्धुस्त्वं रोरवीषि करुणं बत चक्रवाकि !**
**दास्यङ्गता वयमिवाच्युतपादजुष्टां किं वा स्रजं स्पृहयसे कबरेण वोढुम् ॥ १६ ॥**

**भो भो सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः ।**
**किं वा मुकुन्दापहृतात्मलाञ्छनः प्राप्तां[5] दशां त्वञ्च गतो[6] दुरत्ययाम् ॥ १७ ॥**

**त्वं यक्ष्मणा बलवता[7] निगृहीत इन्दो क्षीणस्तमो न निजदाधितिभिः क्षिणोषि ॥**
**कच्चिन्मुकुन्दगदितानि यथा वयं त्वं विस्मृत्य भो स्थगित भीरुपलक्ष्यसे नः ॥ १८ ॥**

---

1. MI.V. प 2. K. °रो ग्रस्त ; MI.V. °रग्रस्त 3. MI.V. °विद्ध 4. MI.V. °क्षणेन॥ 5. K.T.W. प्राप्तो 6. K.T.W. यतो 7. B.G.J. °ताऽसि

**श्रीध० कुररीति।** ईश्वरः श्रीकृष्णः स्वपिति। त्वन्तु निद्राभङ्गं कुर्वती विलपसि न शेषे न स्वपिषि तदनुचितमित्यर्थः। अथवा नाऽपराधः तवापीत्याशयेनाऽऽहुः - नलिननयनस्य भगवतो हासेन सहित मुदारं यल्लीलेक्षितं तेन कच्चिद्गाढं निर्विद्धचेतास्त्वमिति ॥ १५ ॥

**नेत्र** इति। नक्तं रात्रावदृष्टबन्धुः सती रोरवीषि। किं वा नैतावत्, अपि तु वयमिव स्पृहयसे ॥ १६ ॥

**भो भो** इति। अलब्धनिद्रस्सदा निष्टनसे क्रोशसि, किं वा अस्माभिः प्राप्तां दशां त्वमपि गतोऽसि? अहो कष्टम् यथा वयं सम्भोगेन मुकुन्दापहृत कुचकुङ्कुमादि लाञ्छनाः तथा त्वमपि, यतोऽपहृत श्रीकौस्तुभादिलाञ्छनो ऽलक्ष्यसे ॥ १७ ॥

**त्वमिति।** मुकुन्दगदितानि रहस्यानि विस्मृत्य तदेकचिन्तया कच्चित्त्वं क्षीणोऽसि? वयमिव स्थगितगीः स्तब्ध[1] वाक् हे इन्दो! न स्तथैवोपलक्ष्यसे ॥ १८ ॥

---

1. B. J. तनुवाक्

**वीर०** कानि पुनस्तानीत्यत्राऽऽह - कुररीत्यादिना इतीदृशेनेत्यतः प्राक्तनेन। तत्रैकस्या वाक्यमाह **कुररीति**। हे कुररि! अस्मिन् जगति रात्र्यामीश्वरः कृष्णः प्रस्त (गुप्त) बोधः विलुप्तबाह्यविषय ज्ञानः सन् स्वपिति शेते। त्वन्तु विगतनिद्रा सती विलपसि न तु शेषे न स्वपिषि। अनुचितं तन्निद्राभङ्गं करोषीति भावः। अथवा, नाऽपराधः तवापीत्याशयेनाऽऽह - नलिननयनस्य हासेन सहितमुदारं यल्लीलयेक्षितं तेन हे सखि! वयमिव त्वमपि गाढं यथा तथा निर्भिन्नं चेता यस्यास्सा कच्चित् किमितिप्रश्नः ॥ १५ ॥

अन्यस्या वाक्यमाह - **नेत्र** इति। एवमाग्रेऽपि ज्ञेयम्। चक्रवाकि! नक्तं रात्रौ अदृष्टबन्धुः अदृष्टपतिः सती नेत्रे निमीलयसि किं किं वा करुणं यथा रोरवीषि। बतेति खेदेऽन्यम्। नैतावत् अपि तु वयमिव दास्यं प्राप्ता सती अच्युतपादेन जुष्टां सेवितां स्रजं कबरेण वोढुं स्पृहयसे किं वा ॥ १६ ॥

क्वचित् (काचित्) उदन्वन्तं प्रत्याह - **भो भो** इति। हे उदन्वन्! समुद्र! अलब्धनिद्रः अधिगत प्रजागरश्च सदा निष्टनसे नितरां ध्वनसि ष्वन शब्दे इति धातुः। किं वा अस्माभिः प्राप्तां दुरत्ययां दशां अवस्थां त्वमपि गतोऽसि? अहो कष्टं यथा वयं सम्भोगेन मुकुन्दापहृतकुचकुङ्कुमाद्यात्मलाञ्छनाः तथा त्वमपि, यतोऽपहृत श्रीकौस्तुभादि लाञ्छनो लक्ष्यसे अतस्त्वां पृच्छामीत्यर्थः ॥ १७ ॥

**त्वमिति**। हे इन्दो! त्वं बलवता यक्ष्मणा क्षयरोगेण नितरां गृहीतः अत एव क्षीणस्सन् स्वकान्तिभिः तमोन्धकारं न क्षिणोषि न विनाशयसि किं? यथा वयं तथा त्वमपि मुकुन्दगदितानि रहस्यानि विस्मृत्य तदेक चित्ततया स्थगितगीः स्तब्धवाक् सन् नोऽस्माभिः उपलक्ष्यसे ॥ १८ ॥

**[1] किं वा चरित मस्माभिर्मलयाऽनिल तेऽप्रियम् ।**
**गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥ १९ ॥**

**★ मुग्धे ध्यायसि किं गृहाण पुरतः कुन्दं विकासोन्मुखं**
**किं कुन्दं न ममाऽमुना सुमनसः कीदृग्विधास्त्वत्प्रियाः।**

**पुन्नागं मृगये सखि श्रुतिशिरोभूषाविशेषायितं**
**गावोप्युज्झितसूनमासत तदामोद प्रकर्षोन्मुखाः ॥ २० ॥**

**मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं श्रीवत्साङ्कं वयमिव भवान् ध्यायति प्रेमबद्धः ।**
**अत्युत्कण्ठ[2]श्शबलहृदयोऽस्मद्विधो बाष्पधाराः स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः ॥२१॥**

**प्रियराव पदानि भाषसे मृतसञ्जीविकयाऽनया गिरा ।**
**करवाणि किमद्य ते प्रियं वद मे वल्गित कण्ठ कोकिल ॥ २२ ॥**

**▲ शुकराज गाय यदुदेव सत्कथां कुर्मस्तवाङ्ग! पयसोपसेचनम् ।**
**विरहाग्नितप्त हृदयेष्वलं रमारमणाभिधान सुधया च सिञ्च नः॥ २३ ॥**

**न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम् ।**
**अपि बत वसुदेव वन्दनाङ्घ्रिं वयमिव कामयसेस्तनैर्विधर्तुम् ॥ २४ ॥**

---

1. B.G.J. किन्त्वा° ★ This verse is found only in K.T.W. Edns. 2. K. स्सजल ▲ This verse is found only in K.T.W. Edns.

**श्रीध० किमिति**। अप्रियाचरणं विना स्मरोदीरणेन व्यथाजननं हे मलयानिल! तवानुचितमित्यर्थः ॥ १९ ॥

**मेघेति**। आतपार्तिहरणादि साम्यत्त्वं यादवेन्द्रस्य नूनं दयितसखाऽसि। अतो भवान् तं ध्यायति। ध्याने लिङ्गान्याहुः- अत्युत्कण्ठ इत्यादि। अहो किमिति त्वया तेन सख्यं कृतं यतो दुःखदः तत्प्रसङ्ग इति ॥ २०॥

**प्रियरावेति**। हे कोकिल! मे प्रियरावस्य प्रियंवदस्य श्रीकृष्णस्य पदानीव पदानि शब्दां स्त्वं भाषसे मृतान् सञ्जीवयतीति तथा। तयाऽनया कोमलया गिरा वल्गितकण्ठ! रमणीयकण्ठ! मे [1]वद कथय, किं तव प्रियं करवाणीति ॥ २१॥

**नेति**। हे क्षितिधर! त्वं न वदसि न चलसि, अतो नूनं महान्तमर्थं चिन्तयसे बत! तर्हि अपि किं यथा स्तनैर्विधर्तुं वयं कामयामहे तथा त्वं स्तनतुल्यैः शृङ्गैर्वोढुं कामयसे? ओमिति चेत्तर्हि तवाऽप्यस्म दवस्था भविष्यतीति भावः ॥२२॥

---

1. B. J. Omit वद

**वीर० किं वेति**। हे मलयानिल! ते तुभ्यमस्माभिः किं वा अप्रियमाचरितं कृतम्, यतस्त्वं गोविन्दस्याऽपाङ्गैः नितरां भिन्ने नोऽस्माकं हृदि हृदये स्मरं काममीरयसि। अप्रियाचरणं विना स्मरोदीरणेन व्यथाजननं तवाऽनुचितमित्यर्थः ॥ १९ ॥

काञ्चित्प्रियमन्वेषयन्ती पुष्पाण्यन्वेषयन्तीमिव आलक्ष्य कस्याश्चिदुत्तर प्रत्युत्तर रूपं वाक्यमाह - **मुग्ध** इति। हे मुग्धे! किं ध्यायसि? पुरतः स्थितं विकासोन्मुखं कुन्दं गृहाण - एवमुक्ता प्राह - किं कुन्देन ममाऽमुनेति। अमुना मुवर्णरहितेन कुन्देन किम्? न किञ्चिदपि प्रयोजनम्। किन्तु मुकुन्दमेवान्वेषयामीत्यभिसन्धिः। सा पुनः प्राह त्वत्प्रिया स्सुमनसः पुष्पाणि कीदृग्विधा इति सा पुनः प्राह - पुन्नागं मृगये सखि! श्रुतिशिरोभूषाविशेषायितं इति हे सखि! श्रुतिशिरोभूषा विशेषायितं श्रोत्रयोः शिरसि च भूषणविशेषवदाचरत् पुन्नागं मृगये। श्रुतिशिरस्सु वेदान्तेषु भूषाविशेषायितं पुन्नागं पुरुषश्रेष्ठं मृगये इत्यभिसन्धिः। ननु किं बह्वीषु सुमनस्सु सतीषु विशेषेण पुन्नागमेव मृगयसे इत्यत्राऽऽह गावोऽपीति। उज्झितं गलितं सूनं पुन्नाग कुसुमं तदामोदप्रकर्षेण उन्मुखा आसत। मृगयन्त्योऽवतिष्ठन्ते पशवोप्येवं, किं पुनरहमिति भावः। पक्षान्तरे गावः वेदान्तवाचोऽपि उज्झितसूनं त्यक्तजन्मानम् अजमित्यर्थः। पुरुषश्रेष्ठं तदामोदप्रकर्षे तत्कल्याणगुण गणप्रकर्षे उन्मुखाः प्रतिपादनोन्मुखाः औन्मुख्यतामात्र मेव तासां नतु कार्त्स्न्येन तत्प्रतिपादनम्, आनन्त्यादिति भावः। आसत केवलं मृगयन्त्यः समासत इत्यर्थः ॥ २० ॥

**मेघेति**। हे मेघ! त्वं यादवेन्द्रस्य यदूत्तमस्य त्वं दयितः प्रियोऽसि । नूनं आतपार्तिहरणादिसाम्यात् त्वां तत्सुखमालक्षये इति भावः। अतो भवान् वयमिव श्रीवत्साङ्कं तद्विषयप्रेम्णा बद्धो निश्चलो ध्यायति किम्? ध्यानलिङ्गान्याह - अत्युत्कण्ठमित्यादि। अस्मद्विधः वयमिवेत्यर्थः। अत्युत्कण्ठं यथा तथा सजलहृदयः बाष्प धाराः मुञ्चसि। युक्तश्चैतदित्याह - दुःखदः तत्प्रसङ्ग इति ॥ २१ ॥

**प्रियेति**। हे कोकिल! प्रियरावस्य प्रियंवदस्य श्रीकृष्णस्य पदानीव पदानि शब्दान् भाषसे। मृतान् सञ्जीवयतीति तथा। कोमलया गिरा हे वल्गितकण्ठ! रमणीयकण्ठ! मे कथय किं तेऽद्य प्रियं करवाणि इति ॥ २२ ॥

**शुकराजेति**। हे शुकराज! यदुदेवस्य सत्कथां गाय कथय। गैशब्दे लोटो मध्यमैकवचनम्। अङ्ग! हे शुक! तव पयसा क्षीरेण उपसेचनमभिषेकं कुर्मः त्वं नोऽस्माकं विरहाग्निना तप्तेषु हृदयेषु रमारमणस्य लक्ष्मीकान्तस्य अभिधानसुधया कथामृतेन अलं नितरां सिञ्च॥ २३ ॥

**न चलसीति**। हे क्षितिधर! त्वं न चलसि न वदसि च। किन्नु महान्तमर्थं चिन्तयसे, तर्हि किं वयं यथा स्तनै र्वसदेवनन्दनस्य श्री कृष्णस्य अङ्घ्रिं विधर्तुं कामयामहे तथा त्वमपि स्तनतुल्यैः शृङ्गैः धर्तुं कामयसे किम्? ॥ २४ ॥

**शुष्यद्ध्रदाः[1] कृशतरा बत सिन्धुपत्न्यः सम्प्रत्यपा[2]स्तकमलश्रिय आ[3]स्त भर्तुः ।**
**यद्वद्वयं य[4]दुपतेः प्रणयावलोक मप्राप्य शु[5]ष्क हृदया पु[6]रु कर्शिताः स्म ॥ २५॥**

**हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां**
**दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा ।**

**किं वा नश्चल सौहृदः स्मरति तं कस्माद्भजामो वयं**
**क्षौद्राऽऽलापय कामदं श्रिय मृते सैवैकनिष्ठा स्त्रियाम् ॥ २६ ॥**

1. B.J. करशिता 2. MI.V. °पेत 3. B.G.J.K.T.W. इष्ट 4. G.J.T.W. मधु 5. B.G.J.K.T.W. मृष्ट 6. K. उरु

**श्रीध० शुष्यदिति**। भोः सिन्धुपत्न्यो नद्यः ! सम्प्रति ग्रीष्मे सिन्धुर्मेघद्वारा अमृतवृष्ट्या युष्मान्नाऽऽनन्दयति। बत अहो कष्टम्! अतः शुष्यन्तो ह्रदाः यासां ताः अपगतकमलशोभाः कृशतराश्च वयं यथा प्रियतमस्य भर्तुर्मधुपतेः स्म प्रसिद्धम् ॥ २५ ॥

तदैव दैवादागतं हंस दूतं कल्पयित्वाऽऽहुः - **हंसेति**। नोऽस्मान्प्रति पुरा रहस्युक्तं, किं वा चलसौहृदः स्मरति, स्मृत्वैव मां प्रस्थापितवानिति चेत् अत आहुः, हे क्षौद्र! क्षुद्रस्य दूत! कस्मात् तं वयं भजामः कामार्थमाह्वयति युष्मानिति चेत्, अत आहुः अहो तर्हि तमालापय आकारय ओमिति गच्छन्त मिव तं पुनराहुः - याऽस्मान्वञ्चयित्वा एकाकिनी सेवते तां श्रियमृते तमेवाऽऽलापय। सा तदेकनिष्ठा कथं परिहर्तुं शक्यते? इति चेत् अताऽऽहुः स्त्रियाम् जातौ एकवचनम्। अस्मासु स्त्रीषु मध्ये किं सेवैकनिष्ठा नतु वयमित्यर्थः-। "क्षौद्रालापं अकामदमिति" पाठान्तरे तु क्षौद्रं मधु तद्वन्मधुरालाप मात्रं यस्य तमकामदमरतिप्रदं, श्रिय मृते वयं कस्माद्भजामः किन्त्वनाहताऽपि सती पुनः पुनस्सैव भजतु, यतोऽस्मादृश्यो मानिन्यः स्त्रिय एकनिष्ठा एकत्रैव स्वसम्मानसिद्धौ निष्ठा यासामिति ॥ २६ ॥

**वीर० शुष्यद्धृदा** इति। हे सिन्धुपत्न्यः, नद्यः ! यद्वद्यथा वयं यदुपतेः प्रणयावलोक मप्राप्य तेन मुष्टानि अपहृतानि हृदयानि यासां ताश्च उरु नितरां (कर्शिताः स्म तथा यूयमपि सम्प्रति ग्रीष्मेशुष्यन्तो हृदा यासां) ताः अपगतकमलशोभाश्च इष्टस्य भर्तुस्सिन्धोः प्रणयाव लोकमप्राप्य कर्शिताः स्थ इत्यर्थः। बतेति खेदे अव्ययम् ॥ २५ ॥

हंसं प्रत्याह **हंसेति**। हे हंस! आस्यताम् उपविश्यताम्। पयः क्षीरं पिब अङ्ग! हे हंस! शौरेः श्रीकृष्णस्य कथां वार्तां ब्रूहि नु इति वितर्के। त्वां शौरेर्दूतं विदामः[1] अजितः श्रीकृष्णः स्वस्त्याऽस्ते कच्चित्? पुरा रहस्युक्तं चल सौहृदः, हेतुगर्भमिदम्। अतः स्मरति किम्, ननु स्मृत्वैव मां प्रस्थापितवानित्यत आह हे क्षौद्र! क्षुद्रदूत! कस्मात्तं वयं भजामः। कामार्थ माह्वयतीत्यत्राह - अहो तर्हि तमिहाऽऽलापय आकारय। ओमिति गच्छन्तं तं पुनराह या अस्मान् वञ्चयित्वा एकाकिनी रमते तां श्रियमृते विना तमेवाऽऽलापय। या तदेकनिष्ठा कथं परिहर्तुं शक्येत्यत्र आह स्त्रियामिति। जातौ एकवचनम्। अस्मासु स्त्रीषु मध्ये किं सैवैकनिष्ठा न तु वयमित्यर्थः ॥ २६ ॥

1. K.T.w. विदाम

**इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे ।**
**क्रियमाणेन माधव्यो लेभिरे [1] परमां गतिम् ॥ २७ ॥**

**श्रुतमात्रोऽपि यः [2] पुंसां प्रसह्याऽऽकर्षते मनः ।**
**उरुगायोरुगीतो वा पश्यन्तीनां [3] च किं पुनः ॥ २८ ॥**

**[4] याः सम्पर्यचरन्प्रेम्णा पाद[5] संवाहनादिभिः ।**
**जगद्गुरुं भर्तृबद्ध्या तासां किं वर्ण्यते तपः ॥ २९ ॥**

*** एवं वेदोदितं [6] धर्ममनुतिष्ठन्सतां गतिः ।**
**[7] गृहं धर्मार्थकामानां [8-] मुहुश्चादर्शयत्पदम् [-8] ॥ ३० ॥**

1. K. MI.T.V.W. वैष्णवीं 2. B. G. J. K.T.W. स्त्रीणां 3. B. G.J.K.T.W. कुतः 4. K. MI.T.V.W. यास्तम्प 5. K. घट्ट * अत्रारभ्य M. Ma. प्रकाशेषु अपि मूलानुसारेण श्लोकाः दृश्यन्ते। 6. K.T.W. कर्मस्वनु ; MI.V. धर्मं ह्यनु 7. K.T.W. गृहान् ; M.Ma. गृहे 8- -8 M. Ma. मुहुस्सन्दर्शयन् पदम्॥

**श्रीध०** तासां कृष्णे एवम्भूतो भावो नातिचित्र मित्याह - **श्रुतमात्रोऽपीति**। उरुभिः गायैः गीतैः उरुधा गीतो वा यैः कैश्चिदपि गीतैः कथाभिः कथञ्चिदपि गीतो वेत्यर्थः ॥ २७,२८॥

पदं स्थानम् ॥ २९,३०॥

**वीर० इतीति**। माधव्यो माधवस्य (कृष्णस्य) स्त्रियः योगेश्वरेश्वरे कृष्णे क्रियमाणेन इत्थम्भूतेन भावेन वैष्णवीं गतिं मुक्तिं लेभिरे ॥ २७॥

कृष्णे तासामित्थम्भूतो भावो नातिचित्रमित्याह - **श्रुतमात्रोपीति**। उरुभिः बहुभिः गायैः गीतैः, उरु बहुधा गीतो वा। उरुगाय इति पृथक्पदं वा। सन्धिस्त्वार्षः। किं बहुना? यथाकथञ्चिच्छ्रुतमात्रोऽपि वा स्त्रीणां मनः प्रसह्य बलात्, आकर्षते, किं पुनः साक्षात्पश्यन्तीनां स्त्रीणां मन आकर्षतीति ॥ २८ ॥

यतः तासामित्थम्भूतो भावो ततस्ता अनुमोदते **या** इति। तं कृष्णं जगद्गुरुं सर्वोत्तमं परमपुरुषमपि भर्तृबुद्ध्या याः पादसङ्घट्टनादिभिः प्रेम्णा पर्यचरन्त सेवन्त तासां तपः किं वर्ण्यते कथं वर्ण्यत इत्यर्थः ॥ २९ ॥

**एवमिति**। सतां गतिः स्वप्राप्त्युपायभूतोऽप्यनुतिष्ठन् गृहान् धर्मादीनां पदं स्थानमित्यदर्शयत् पदमिति दर्शयितुं अन्वतिष्ठत् इत्यर्थः ॥ ३०॥

**विज०** Note: विजयध्वजव्याख्यातग्रन्थरीत्या, 12 श्लोकमारभ्य 27 पर्यन्त श्लोकाः न सन्ति। अतो न व्याख्याताः ॥

धर्मार्थकामानां पदं विषयं सन्दर्शयन् त्रिवर्गाणामाश्रयो गृहस्थ इति सम्यक् दर्शयन् द्वारका मावसति, श्रीकृष्णे इति शेषः ॥ ३० ॥

Note:- अत्र विजयध्वजतीर्थव्याख्यारीत्या अधिकश्लोकाः व्याख्या च ॥

**एवं शासति भूचक्रं चक्रपाणौ जनार्दने ।**
**द्वारका वृष्णिनिलया योजनद्वादशायता ॥ 1 ॥**

**मुनिभिर्ब्राह्मणैश्चैव क्षत्रियैश्चाऽपि वन्दिभिः ।**
**आसीत्पूर्णा कुरुश्रेष्ठ सततं समलङ्कृता ॥ 2 ॥**

**पिण्डारकात्कुरुक्षेत्राच्छालग्रामाच्च पुष्करात् ।**
**वाराणस्याः प्रयागाच्च वेङ्कटाच्छ्रीगिरेरपि ॥ 3 ॥**

**स्थानं दूराच्च गोकर्णाच्चन्द्रतीर्थाच्च शोभनात् ।**
**सह्याद्रेश्च भृगुक्षेत्रात्कुमारनिलयादपि ॥ 4 ॥**

**गोदावरीतटात्पुण्यान्नर्मदा निकटादपि ।**
**शूर्पाकारात्प्रभासाच्च पुण्याद्बदरिकाश्रमात् ॥ 5 ॥**

**पावनान्नैमिशारण्या द्ब्रह्मदुर्गाच्च दुर्गमात् ।**
**आययुर्मुनयश्शान्ता नित्यव्रतपरायणाः ॥ 6 ॥**

**अब्भक्षा वायुभक्षाश्च निराहारा दृढव्रताः ।**
**वल्कलाजिनसंवीता जटिनश्चाऽपि मुण्डिनः ॥ 7 ॥**

**त्रिकालस्नायिनश्चैव मौनव्रतपरायणाः ।**
**वेदस्वाध्यायनिरताः स्तुतिस्तोत्रपरायणाः ॥ 8 ॥**

**ध्यानैकतानमनसः समाधौ कृतनिश्चयाः ।**
**त्वगस्थिमात्रावयवाः सिराधमनिसन्तताः ॥ 9 ॥**

**आगत्य मुनयो राजन् सर्वतश्शान्तचेतसः ।**
**उपासत महाराज! नित्यं तत्त्वैकचिन्तकाः ॥ 10 ॥**

**क्षत्रियैश्च महावीर्यै ब्राह्मणैश्च तपोधनैः ।**
**सूतैश्च मागधैश्चैव श्लोकस्तुतिपरायणैः ॥ 11 ॥**

**पूर्णमङ्गलघोषैश्च वादित्राणाञ्च निस्वनैः ।**
**निर्घुष्टा ब्रह्मघोषैश्च द्वारका कुरुनन्दन ! ॥ 12 ॥**

**क्षेत्राणामपि सर्वेषां तीर्थानाञ्चाऽघहारिणाम् ।**
**देवदेवस्य सान्निध्यादग्रण्या च बभूव सा ॥ 13 ॥**

ततः परं किमत्रेत्याह - **एवमिति**। भूचक्रं भूमण्डलं द्वारका मुन्यादिभिः पूर्णा निबिडा आसीदित्यन्वयः ॥ 1,2 ॥

पिण्डारकादि तीर्थ क्षेत्रेभ्यो द्वारकोत्तमतीर्थमित्यह **पिण्डारका**दित्यादिना ॥ 3 ॥

कुमारनिलयात् कुमारपर्वतात् ॥ 4,5 ॥

द्वारकामिति शेषः ॥ 6,7 ॥

स्तुतिस्तोत्रपरायणाः स्तुतिरप्रबन्धरूपा , स्तोत्रं प्रबन्धरूपं तज्जपैकपरायणाः ॥ 8 ॥

ध्यानैकतानमनसः श्रीहरिगुणगण सञ्चिन्तनायामेव विस्तृतमनसः समाधौ चित्तनिग्रहे कृतनिश्चयाः समीचीनाधिष्ठान लक्षणमुक्तौ वा सिरा रेखाः ॥ 9 ॥

सर्वत आगत्य ॥ 10-12 ॥

अग्रण्या अग्रण्येति छान्दसः उत्तमोत्तमाश्रया ॥ 13 ॥

**आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम्[1] ।**
**आसन् षोडशसाहस्त्र[2] महिष्यो[3]ऽष्टशताधिकाः[4] ॥ ३१ ॥**

**तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः ।**
**रुक्मिणीप्रमुखा [5-]राजंस्तत्पुत्रांश्चानुपूर्वशः[-5] ॥ ३२ ॥**

**एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान् ।**
**यावत्य[6] आत्मनो भार्या अमोघगतिरीश्वरः ॥ ३३ ॥**
**तेषामुद्दाम[7]वीर्याणामष्टादश महारथाः ।**
**आसन्नुदारयशस स्तेषां नामानि मे शृणु ॥ ३४ ॥**

---

1. M.Ma नः 2. B.G.J. स्त्रं 3. B.G.J. °ष्यश्चश 4. B.G.J. °कम् 5--5 K.T.W. राजन् सह पुत्राश्च सर्वशः 6. B. J. M. Ma न्त्य 7. Ml. V. दार

**श्रीध० तासामिति**। या रुक्मिणी प्रमुखा अष्टावुदाहृताः प्राक् ॥ ३१, ३२॥

**एकैकस्यामिति**। एवमष्टोत्तरशताधिकषोडशसहस्रमहिषीणां पुत्रा लक्षमेकमशीत्युत्तरैकषष्टिसहस्राणि च भवन्ति ॥३३,३४॥

**वीर०** अथ भगवतः स्वपत्नीषु सन्तानमनुवर्णयितुं प्रस्तौति - **आस्थितस्येति**। परं गृहमेधिनां धर्ममास्थितस्य अनुतिष्ठतः कृष्णस्य महिष्यः पत्न्यः आसन् ॥ ३१ ॥

तासां स्त्रीरत्नरूपाणां मध्येऽष्टौ रुक्मिणीप्रमुखाः याः पूर्वं कथिताः सर्वशः सर्वाश्च सहपुत्राः पुत्रवत्य एवेत्यर्थः। तासां पुत्रास्तु लक्षमेकमशीत्युत्तरैकषष्टिसहस्राणि भवन्ति ॥ ३२ ॥

तदेवाऽऽह - **एकैकस्यामिति**। अजीजनत् जनयामास। आत्मनः स्वस्य यावत्यो भार्याः तासामेकैकस्याम् इति सम्बन्धः। तत्र हेतुत्वेन कृष्णं विशिनष्टि - अमोघगतिरप्रतिहतसङ्कल्पः ॥ ३३ ॥

तेषामुक्तसंख्यानां पुत्राणां मध्ये उदारयशसः विपुलयशस्विनः ॥ ३४ ॥

**विज०** कृष्णस्य षोडशसाहस्रमहिष्यः ॥ ३१ ॥

तासां मध्ये याः रुक्मिणीप्रमुखा अष्टौ महिष्यः प्रागुक्ताः अनुपूर्वशः तत्पुत्राश्चोक्ताः ॥ ३२ ॥

आत्मनो यावत्यो भार्याः तासु एकस्यामेकस्यां भार्यायां दश दश आत्मजानजीजनत् ॥ ३३ ॥

तेषां पुत्राणां मध्ये अष्टादशमहारथाः आसन् ॥ ३४ ॥

प्रद्युम्नश्चारुदेष्णश्च[1] दीप्तिमान्भानुरेव च ।
साम्बो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः[2][3] ॥ ३५ ॥

पुष्करो देवबाहुश्च[4] श्रुतदेवस्सुनन्दनः[5] ।
चित्रबाहुर्विरूपश्च[6-6] कविर्न्यग्रोध एव च ॥ ३६ ॥

★ त्रिवक्राया उपक्रोशः[7] पुत्रः कृष्णमनुव्रतः ।
शिष्यस्साक्षान्नारदस्य[8-8] दधौ[9] चित्तमखण्डितम्[10] ॥ ३७ ॥

तेनोक्तं[11] सात्त्वतं तन्त्रं यज्ज्ञात्वा मुक्तिमान्[12] भवेत् ।
यत्र स्त्रीशूद्रदासानां[13] संस्कारो वैष्णवः स्मृतः ॥ ३८ ॥

एतेषामपि राजेन्द्र तनुजानां मधुद्विषः ।
प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः ॥ ३९ ॥

सा रुक्मिणो दुहितरमुपयेमे महारथः ।
तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः[14] ॥ ४० ॥

1. B. G. J. K. Ml.T.V.W. श्चाऽनिरुद्धश्च 2. M. Ma. Ml. V. मित्रर्बृ° 3. M. Ma. र्भानुविन्दो वृ°- ; Ml. v. मित्र्राविन्दो वृ° 4. B. G.J. वेद 5. M.Ma चक्र 6- -6 M. Ma. Ml.V. भानुर्वरूधश्च ★ These two begining with त्रिवक्राया ...... ending with मखण्डितम्, तेनोक्तं.... स्मृतः verses are not found in G.J. Edns. 7. M. Ma विशोकश्च 8- -8 M.Ma आशीश्शिष्यो ना° 9. M. Ma. ददौ 10. B.W. व्रत 11. M.Ma. येनो° 12. M. Ma मूर्तिमान् 13. M. Ma °शानां 14. M. Ma. तस्यां ततो° ;Ml.V. तस्यां सतो°

**श्रीध०** अनिरूद्धश्चेति। अतः पुत्राणां मध्ये सप्तदशैव महारथाः ज्ञेयाः। अथवा अनिरुद्धनामाऽपि कश्चित्पुत्र एवेति ॥ ३५-४० ॥

**वीर० प्रद्युम्नश्चेति**। अनिरुद्धनामाऽपि कश्चित्पौत्रादन्यः पुत्रः ॥ ३५-३६ ॥

**त्रिवक्राया** इति। उपक्रोशो नाम त्रिवक्रायाः पुत्रः, स तु कृष्णमनुव्रतोऽनुवर्तमानः साक्षान्नारदस्य शिष्यो भूत्वा अखण्डितमविच्छिन्नं यथा तथा चित्तं दधौ, भगवत्समाधिनिष्ठो बभूवेत्यर्थः ॥ ३७ ॥

तमेव विशिनष्टि - **तेनेति**। सात्त्वतं पाञ्चरात्रं, उक्तं सात्त्वतमन्त्रार्थविषयः कश्चिद्ग्रन्थविशेषः प्रतिपत्तिसौकर्याय नातिसङ्ग्रह विस्तररूपेण कृत इत्यर्थः। तस्य अनादिशास्त्रस्य अर्वाचीनत्वायोगात्। तन्त्रं विशिनष्टि - यत्रेति। स्त्रीशूद्रादीनामपि वैष्णवः विष्णुप्रापकः संस्कारः तापपुण्ड्रादिसंस्कारः स्मृतः ॥३८॥

**एतेषामपीति**। मधुद्विषः श्रीकृष्णस्य तनूजानां पुत्राणामेतेषामष्टादशानां मध्ये यः प्रद्युम्नः स तु रुक्मिणीसुतः पितृवद्रूपेण गुणैश्च पितृतुल्यः सर्वेषां प्रथम आसीत् ॥३९॥

स प्रद्युम्नः रुक्मिणो मातुलस्य दुहितरमुपयेमे परिणीतवान् । तस्यां भार्यायां ततः प्रद्युम्नात् अनिरुद्धो नाम नागायुतबलः पुत्रोऽभूत् ॥४०॥

**विज०** त्रिवक्रायाः सैरन्ध्र्याः, स नारदस्तस्मै स्वशिष्याय अखण्डितं चित्तं पूर्वापरानुभवस्मरणसमर्थं ज्ञानं ददौ ॥ 1 ॥

येन नारदेन सात्त्वतं तन्त्रं पञ्चरात्रसंहिता यत् यं ज्ञात्वा पुमान् मूर्तिमान् निजरूपाभिव्यक्तिमान् भवेत्। यत्र यस्मिंस्तन्त्रे स्त्रीशूद्रादीनां वैष्णवः संस्कारः स्मृतः विष्णुविषयानुष्ठानेन शरीरशुद्धिः कथिता ॥ 2 ॥

तनुजानां पुत्राणाम् ॥ ३५-४० ॥

**स चाऽपि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ।**
**व्रजस्तस्याम[1]भूद्यस्तु मौसलादवशेषितः ॥ ४१ ॥**

**प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चाऽऽत्मजः ।**
**सुबा[2]होः उग्रसेनोऽभू[3]च्छतसेनस्तु तत्सुतः ॥ ४२ ॥**

**न ह्येतस्मिन् कुले जाता अधना अबहु[4]प्रजाः ।**
**अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ ४३ ॥**

**यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ।**
**संख्या न शक्यते कर्तुमपि वर्षायु[5]तैर्नृप ! ॥ ४४ ॥**

1.B.G.J. °भवद्यस्तु ; MI.V. °त्मभूर्यस्तु 2.B.G.J. °हो: शान्त° ; K.T.W. °हो: धर्म° 3.K.T.W. °च्छु° 4.MI.V. °श्रुता: 5.K.T.W. °तैरपि

**श्रीध०** (41-44 श्लोकानां श्रीधरीय व्याख्या नास्ति ॥)

**वीर०** स चाप्यनिरुद्धोऽपि रुक्मिणो दौहित्रः तस्य पौत्रीं जगृहे उपयेमे। ततोऽनिरुद्धात्तस्यां वज्रो नाम पुत्रो बभूव। तं वज्रं विशिनष्टि यस्त्विति। मौसलात् (ब्राह्मण) शापप्रयुक्तयदुकुलक्षयकारात् मुसलादवशेषितः, स एको अवशेषित इत्यर्थः। कृष्णेनेति शेषः ॥ ४१ ॥

तस्माद्वज्रात्प्रतिबाहुः, तस्य प्रतिबाहोरात्मजः सुबाहुः [1-]तत्सुतः धर्मसेनसुतः श्रुतसेनः[-1] ॥ ४२ ॥

सर्वान् वंश्यान्विशिनष्टि - **न हीति** । अधना निर्धनाः ॥ ४३ ॥

तेषामानन्त्यमाह · **यदुवंशप्रसूतानामिति** ॥ ४४ ॥

---

1--1 T.W. Omit

**विज०** पौत्रीं पुत्रपुत्रीं दौहित्रः दुहितुः पुत्रः अनिरुद्धः 'निहते रुक्मिणी श्याले नाऽब्रवीत्साध्वसाधु वा। रुक्मिणीबलयो राजन् स्नेहभङ्गभयाद्धरिः' (भाग.10-61-30) इत्यनेन सर्वसमस्य हरेः स्नेह भङ्गभयमुच्यते। तत्कथं घटत इतीयमाशङ्का - "न स्नेह भङ्गो देव्यास्तु न भयं केशवस्य च। स्नेहभीत इवाऽथाऽपि नोचे रुक्मिवधे हरिः" (ब्रह्माण्डे) इत्यादिना परिहर्तव्या। अत्र श्रीमद्भगवत्पादैः सिंहावलोकनन्ययेन अध्यायेयत्ता सूचनाय चेदं प्रमाणमुक्तं मौसलात् मुसलयुद्धात् ॥ ४१,४२॥

एतस्मिन् कुले अधनादिदोषयुक्ता न जज्ञिरे इत्यन्वयः ॥ ४३ ॥

तेषां यदुवंशप्रसूतानाम् ॥ ४४ ॥

**तिस्रः कोट्यस्सहस्राणामष्टाशीतिशतानि च ।**
**आसन्[1-]यदुकुलाचार्याः[-1] कुमाराणामिति श्रुतम् ॥ ४५ ॥**

**संख्यानं यादवानां कः करिष्यति महात्मनाम् ।**
**यत्राऽयुतानामयुतलक्षेणाऽऽस्ते स आहुकः ॥ ४६ ॥**

**देवासुराहवहता दैतेया ये सुदारुणाः ।**
**ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥ ४७ ॥**

**तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ।**
**अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥ ४८ ॥**

**तेषां प्रमाणं भगवान् प्रभुत्वेना**[2]**ऽभवद्धरिः ।**
[3]**ये चाऽनुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥ ४९ ॥**

**शय्यासनाटनालापक्रीडास्नाना**[4]**शनादिषु ।**
**न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ ५० ॥**

---

1- -1 M. Ma. Ml. V. कुमाराणां आचार्याणामिति 2. Ml. V. चा° 3. Ml. v. चेतोऽ 4. B. G. J: °नादिकर्मसु

**श्रीध० तिस्र** इति। सहस्राणामपरिमितानां कुमाराणामित्यन्वयः ॥ ४५ ॥

**संख्यानमिति**। यदा प्रत्येकं बहूनध्यापयतामाचार्याणामियं संख्या तदपि श्रुतमात्रं, न तु सम्यक् ज्ञायते। तदा कुमाराणामेवं संख्यानं कर्तुं न शक्यते। कुतः पुनः सर्वयादवानामिति ॥ ४६ ॥

**देवासुरेति**। ते चोत्पन्ना इति प्रत्येकं बहुभी रूपैरिति ज्ञेयम् ॥ ४७ ॥

**तन्निग्रहायेति**। एवमेव यदुकुलेऽपि देवा इति, तथा चोक्तम् - सहस्रशः समुद्भूता देवा यदुकुले पृथगिति ॥ ४८-५० ॥

**वीर० तदेव** कैमुत्यनयाभिप्रायेणाऽऽह - **तिस्रः कोट्य** इति। यदुकुलस्याचार्याः तत्कुमाराणामनुशिक्षका अध्यापकाः तिस्रः कोट्यः सहस्राणामष्टाशीतिः शतानि च सहस्राण्यध्यापका एवैतावन्तः, किम्पुनस्ते? इत्यर्थः ॥ ४५ ॥

एकस्य वसुदेवस्यैव वंशजानां संख्यैवम्भूता, किम्पुनः सर्वेषां सम्भूतानामित्याह - **संख्यानमिति**। यत्र यदूनां वंशे य आहुको वसुदेवः स एवायुतानामयुतलक्षपुत्रः ॥ ४६ ॥

तेषां **वीर्य**शौर्यादि गुणनिरूपणायाऽऽह - **देवेति**। देवासुराहवे देवासुरयुद्धे हता ये अतिदारुणा दैतेयाः, ते मनुष्येषु चैद्यमागधादि रूपेण जाताः दृप्तास्सन्तः, प्रजा इति द्वितीयान्तम्। बबाधिरे [1-]पीडां कृतवन्तः[-1] ॥ ४७ ॥

**तन्निग्रहायेति**। तेषां निग्रहं कर्तुं प्रोक्ता आदिष्टाः देवाः यदोः कुलेऽवतीर्णाः, येषामवतीर्णानां कुलमेकाधिकशतम्। वृष्ण्यन्धकदाशार्हादिरूपेण एकाधिकशत भेदभिन्नमित्यर्थः ॥ ४८ ॥

**तेषामिति**। तेषां कुलानां प्रभुत्वे निमित्ते भगवान् श्रीकृष्णरूपेण अभवदवततार। ये सर्वे यादवास्ते तस्य श्रीकृष्णस्य अनुवर्तिनः, हेतुगर्भमिदम्। ववृधुः एधाञ्चक्रिरे ॥ ४९ ॥

किं ते तं परमात्मबुद्ध्या अन्ववर्तन्त? नेत्याह - **शय्येति**। वृष्णयो यदवः शय्यासनादिषु कृष्णे एव चेतो येषां तथाभूता अपि तं श्रीकृष्णं स्वमात्मानं, स्वान्तरात्मानं, परमात्मानमित्यर्थः। न विदुः, किन्तु यादवविशेषं विदुरिति भावः ॥ ५० ॥

1- -1 K.T.W. Omit

**विज०** संख्याज्ञानाभावेऽपि तदाचार्याणां संख्यां कामपि श्रावयामीत्याह - **तिस्र** इति ॥ ४५ ॥

यत्र येषाम् ॥४६॥

देवांशानां यादवानां अवन्यामुत्पत्तुं निमित्तमाह - **देवेति** ॥ ४७ ॥

श्रीकृष्णो भगवान्, तेषां प्रभुत्वे सामर्थ्ये दैवे प्रमाणं यतः श्रीकृष्णो नारायणावतारः प्रसिद्धः तेषाममानुषसामर्थ्ये हेतुश्च। ततो यादवा देवा इति सिद्धम्। एतदेव दृढीकरणाय पुनर्वक्ति - ये चेति ॥ ४९ ॥

स्वामिनं न विदुः शय्यादिषु सन्तं सह वर्तमानं आत्मानं स्वरूपभूतं श्रीनारायणम् ॥ ५० ॥

**★ ईजे क्रतुभिरात्मानं सर्ववेदार्थसङ्ग्रहं स्वयोगमायारचितैः कुरुक्षेत्रे [1]द्विषट्समाः ।**

**कृष्णगार्ध्यसितावन्ति रामाचार्योद्धवेश्वरः दीक्षितो [2]ह्यग्रपत्नीभिः [3]पुण्यश्लोकशिखामणिः ॥ ५१ ॥**

**तीर्थञ्चक्रे [4]नृपोनं यदजनि यदुषु स्वस्सरित्पादशौचं**
**[5-]विट्स्निग्धाः [-5]तत्स्वरूपं [6-]ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः[-6] ।**
**[7-]यन्नामामङ्गलघ्नं श्रुतमथगदितं यत्कृतो गोत्रधर्मः[-7]**
**कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ ५२ ॥**

**▲ जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्[8-]स्वैर्दोर्भि[-8]रस्यन्नधर्मम् ।**
**स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्धयन्कामदेवम् ॥ ५३ ॥**

**इत्थं परस्य निज[9]धर्मरिरक्षयात्त लीलातनोस्तदनुरूपविडम्बनानि ।**
**कर्माणि कर्मकषणानि यदूत्तमस्य [10]श्रूयादमुष्य पदयो रनुवृत्तिमिच्छन् ॥ ५४ ॥**

**मर्त्यस्तयाऽनुसवमेधितया[11] मुकुन्द श्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।**
**तद्धाम [12-]दुस्तरकृतान्तजवापवर्गं[-12] ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः[13] ॥ ५५ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्त्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे

नवतितमोऽध्यायः ॥ ९० ॥

---

★ This verse is only found is M.Ma.Ml.V. Edns & Commented by vijayadhvajateertha only. 1. Ml.V. त्रादिषु क्रमात् 2. M. Ma °ऽग्रण्य 3. M. Ma सहाग्रणीः 4. M. Ma. नृणां यो 5- -5 B. G. J. K.T.W. विद्विट् स्निग्धाः स्व° ; M. Ma. षड्भिश्चात्तं स्व 6- -6 M. Ma. पर उरसि रमा सर्वदा यस्य चाऽऽस्ते 7- -7 M.Ma. यच्छास्त्रं च प्रमाणं यदनु च सदसद्व्यक्तयो यत्र धर्माः ▲ This verse appears like this in M.Ma Edns :-जयति जननिवासो देवकीजन्मवादो नियमकृतपादाब्जैर्दस्युपीडां स्वदोर्भिः। मुदमुभयदृशीनां श्रीनिकेतात्ममूर्त्या स्मरवरबलानां स्निग्धहासेक्षया च ॥ 8- -8 °र्षाद्भिर्दोर्भि 9. B. G. J. वर्त्म 10. M Ma. गाथा° 11. M. Ma. Ml.v. °याऽनुवृत्त्या 12- -12 M.Ma. दुष्करकृतं जनतापवर्गं ; K. Ml.T.V.W. दुस्तरकृतान्तजनापवर्गं 13. M. Ma. र्थे

**श्रीध०** तस्मात्कृष्णकीर्तेः सर्वतीर्थोत्तमत्वं कृष्णस्य च सर्वदेवोत्तमत्वं न चित्रमित्याह - **तिर्थश्चक्र** इति। इतः पूर्वं स्वस्सरिदेव सर्वतोऽधिकं तीर्थमित्यासीत्, इदानीन्तु यदुषु यदजनि जातं तीर्थं श्रीकृष्णकीर्तिरूपमेतत्स्वस्सरिद्रूपं पादशौचं तीर्थमूनमल्पं चक्रे, स्वयमेव सर्वतीर्थोपरि विराजत इत्यर्थः। श्रीकृष्णस्य विद्विषः स्निग्धाश्च तस्य स्वरूपं सारूप्यं ययुरित्यपि नातिचित्रम्, तस्य परमकारुणिकत्वात् तथेदञ्च न चित्रम्। किं तत्? अजितपरा अजिता अपराजिता कैश्चिदप्यप्राप्ता परा सर्वतः परिपूर्णा श्रीः कृष्णस्यैव नाऽन्यस्येति, तदेवाऽऽह - यदर्थेऽन्येषां ब्रह्मादीनां यत्न इति। ननु निरपेक्षं तमेव लक्ष्मीः श्रयत इति चित्रमेवेति चेत् न हि परममङ्गलनामधेयत्वात् तस्येत्याह - यन्नामेति। तदपि नाऽर्थस्मरणापेक्षमित्याह - श्रुतमथगदितमिति सर्वधर्माश्रयत्वादपीत्याह - यत्कृतो गोत्र धर्म इति। गोत्रेषु तत्तदृषिवंशेषु धर्मो यत्कृतो येन प्रवर्तितः तस्य क्षितिभरहरणं नैव चित्रमित्याह - कृष्णस्यैतदिति। कालचक्रायुधस्येति सर्वसंहारककालमूर्तेर्विशेषतो दुरन्तप्रभावचक्रायुधस्य कियदेतदित्यर्थः ॥ ५१ ॥

यत एवम्भूतः श्रीकृष्णस्ततः सेव्यः स एव सर्वोत्तम इत्याह - **जयतीति**। जनानां जीवानां यो निवासः आश्रयः तेषु वा निवसत्यन्तर्यामितया, तथा स कृष्णो जयति। देवक्यां जन्मेति वादमात्रं, यस्य सः [1-]वस्तुतः अजन्मा[-1]। यदुवराः पर्षत् सभा सेवकरूपा यस्य। इच्छामात्रेण निरसनसमर्थोऽपि क्रीडार्थं स्वैः दोर्भिरधर्ममस्यन् क्षिपन् स्थिरचरवृजिनघ्नोऽधिकारि विशेषानपेक्षमेव बृन्दावनगततरुलतागवादीनामपि संसारदुःखहन्ता तथा विलासवैदग्ध्यानपेक्षं व्रजवनितानां पुरवनितानाञ्च

सुस्मितेन शोभनहास्ययुतेन श्रीमता मुखेनैव कामदेवं वर्धयन् कामश्चाऽऽसौ दीव्यति विजिगीषति संसारमिति देवस्तं भोगद्वारा मोक्षप्रवर्धयन्नित्यर्थः ॥ ५२ ॥

**इत्थमिति**। तत्तत्कार्यविशेषैः स्वीकृतमत्स्यकूर्मादिनानावतारमूर्तेः विशेषतो यदूत्तमस्य सतः परस्य परमस्य तदनुरूपानुकारीणि [2-]कर्मकषणानि कर्मनिबर्हणानि[-2] कर्माणि चरितानि श्रूयात् शृणुयादित्यर्थः ॥ ५३ ॥

अनुवृत्तेः फलमाह - **मर्त्य** इति। श्रीमत्याः कथायाः श्रवणकीर्तनयुक्तया चिन्तया संवर्धितयाऽनुवृत्त्या तया तन्निष्ठत्वेन तस्य धाम लोकमेति लोकत्वेऽपि कालानाकलितत्वमित्याह - दुस्तरेति। दुर्लभपुरुषार्थतामाह - ग्रामादिति ॥ ५४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां नवतितोऽध्यायः ॥ ९० ॥

---

1- -1 Ml. V. Omit 2- -2 B. J. Omit

**वीर०** स्वमात्मानं न विदुरित्यनेन तन्माहात्म्यं न विदुरिति सूचितम्। तदेवाऽनितरसाधारणं वदन्नत्याश्चर्यमेतद्भूभारापहरणमिति विस्मयमपनुदन्नाह - **तीर्थमिति**। हे नृप! इतःपूर्वं स्वस्सरित् स्वर्णदी गङ्गैव सर्वतोऽधिकं तीर्थमासीत् इदानीन्तु यदुषु यदजनि जातं तेषु जातं श्रीकृष्णकीर्तिरूपं तत्कर्तृस्वस्सरिद्रूपं पादशौचं तीर्थम् ऊनम् अल्पं चक्रे, यत् यशोरूपं तीर्थमेव सर्वतीर्थोपरि विराजत इति भावः। तथा द्विषन्तः शत्रवः स्निग्धा अनुरक्ताश्च तत्स्वरूपं ययुः प्रापुः। स्वं स्वासाधारणं रूपमाकृतिः तत्साधर्म्यमिति यावत्। तत्प्रापुः प्रीत्यप्रीत्यात्मकस्य स्वविषयस्य ज्ञानस्य साधर्म्य प्रापणस्वा भाव्यादिति भावः। तथा अजितपदा कैश्चिदप्यप्राप्तपदा श्रीश्च यस्यैवेति शेषः। यस्यैवानन्यार्हशेषभूतेत्यर्थः। तां श्रियं विशिनष्टि - यदर्थेऽन्ययत्न इति। यदर्थेऽन्ययत्नः यच्छ्रीकटाक्षलेशप्रसरणार्थम् अन्येषां ब्रह्मादीनां यत्नः श्रमः भवति इत्यर्थः। किञ्च यस्य भगवतो नाम श्रुतमथ (वक्तरि सति, अथवा) गदितं उच्चरितं (श्रोतरि सति) अर्थज्ञानरहितमपि अमङ्गलघ्नं, किञ्च गोत्रेषु तत्तद्वृष्णिवंशेषु धर्मो यत्कृतः येन प्रवर्तितः तस्यैतस्य श्रीकृष्णस्यैतन्न चित्रं, किं तत् यत् क्षितिभरहरणं, तत्र हेतुत्वेन पुनस्तं विशिनष्टि कालचक्रायुधस्येति। कालचक्रं कालाभिमानिसुदर्शनाख्यं चक्रमायुधं यस्य तस्य। कालायत्तं हि सर्वमिति भावः ॥ ५१ ॥

उक्तविधासाधारणप्रभावनिर्वाहकं परत्वमाह - **जयतीति**। सर्वोत्कर्षेण वर्तते। [1-]को जयतीत्यत आह जननिवास[-1] इति। जनानां स्थावरजङ्गमानां निवासः धारकः जनेषु निवसति धारकतयेत्यर्थः। तर्हि परमात्मनः कथं प्राकृतेषु जन्म इत्यत्राऽऽह - देवकीति। देवक्यां जन्मेति वादमात्रं यस्य सः न तस्य प्राकृतस्येव कर्मायत्तं जन्म, अपि तु स्वेच्छामूलकं

तदिति भावः। तदपि किमर्थमित्यत्राऽऽह - यदुवराः यदुश्रेष्ठाः तेषां परिषदः सङ्घाः ताभिरेव दोर्भिः भुजैः अधर्ममस्यन्। 'लक्षणहेत्वोः' (अष्टा.3-2-126) इत्ययं[2] शता, प्रतिक्षेप्तुमित्यर्थः। न केवलं तदेव तस्य सङ्कल्पमात्रेणाऽपि सुशकत्वात्। किन्त्वेतदेवाऽवतारकृत्यं मुख्यमित्यभिप्रेत्य विशिनष्टि - स्थिरचरवृजिनघ्नः अधिकारमनपेक्ष्य स्थिराणां बृन्दावनादिगतानां तरुगुल्मादिरूपाणां स्थिराणां चराणां पशुशकुनि प्रभृतीनां केनचित्स्वसम्बन्धेन वृजिनं प्राप्तिप्रतिबन्धकं पापं हन्तीति तथा। तदेवोदाहर्तुं विशिनष्टि - शोभनं स्मितं यस्मिन्, तेन श्रीमुखेन व्रजवनितानां पुरवनितानाञ्च कामदेवं वर्धयन् ताः कामस्वभावाः वनिताः स्वेनैव स्वभावेन स्वविषयकेण मुच्येरन्निति तं तासां वर्धयन्निति भावः। वर्धयन् जयतीति सम्बन्धः। यद्वा अयमपि 'लक्षणहेत्वोः' (अष्टा. 3-2-126) इति शता वर्धयितुं देवकीजन्मवादो जयतीति सम्बन्धः ॥ ५२ ॥

प्रस्तुतस्कन्धार्थश्रवणफलं तदधिकारिणञ्चाऽऽह - **इत्थमिति**। निजधर्मरिरक्षया स्वनिगमोक्तधर्मरक्षणेच्छया आत्ता परिगृहीता लीलार्था तनुर्येन। लीलापदेन तन्वाः कर्मफलभोगार्थव्युदासः तस्य यदूत्तस्य परमपुरुषस्येत्थम्भूतानि तदनुरूपाणि अवतारानुरूपाणि धर्मरिरक्षानुरूपाणि वा विडम्बनानि मर्त्यचेष्टानुकारीणि कर्मणां कषणानि शृण्वतां कीर्तयताञ्च भक्तियोगोत्पत्ति प्रतिबन्धकानि पापकर्माणि कषन्ते निरस्यन्तीति तथा कर्माणि चेष्टितानि श्रूयात् शृणुयात् कः यः अमुष्य भगवतः पदयोः अनुवृत्तिं भक्तिमिच्छन् कामयमानः ॥ ५३ ॥

ननु किमनुवृत्तेरित्यत आह - **मर्त्य** इति। अनुसवमनुसन्ध्यं मुकुन्दस्य श्रीमत्याः कथायाः श्रवणकीर्तनचिन्तया श्रवणकीर्तनयुक्ता या चिन्ता तया समेधितयाऽनुवृत्त्या दुस्तरकृतान्तजनापवर्गं दुस्तरः कृतान्तो यैस्तेषां जनानामपवर्गं दुःखावसानहेतुभूतं तस्य भगवतो धाम स्थानमेति प्राप्नोति। दुस्तरेत्यादिविशेषणेन दुर्लभत्वं सूचितम्। तत्स्पष्टमेवाऽऽह- ग्रामादिति। यदर्थाः यद्धाम अर्थः। प्रयोजनं येषां ते यद्धाम प्रप्तिकामा इत्यर्थः। ग्रामाद्वनं ययुः यान्ति, तपस इति शेषः। यद्वा, यदनुवृत्तिकामाः दुस्त्यजकृतान्तभवापवर्गमिति पाठान्तरम्। दुस्तरः कृतान्तो मृत्युस्तत्तुल्यो भवस्संसारः तस्याऽपवर्गोऽवसानं यस्मात्तद्धाम एतीति सम्बन्धः ॥ ५४॥

**विभुर्विजयतेतरां विविधविश्वजन्मोदय स्थितिप्रभृतिनोदयो निरवधिस्वरूपः स्वतः।**
**निरस्तनिखिलाशुभः सकलशोभनोपाश्रयश्रियस्सहचरः पुमान् श्रुतिदृशाम्मनोज्ञाकृतिः॥**
**क्षाम्यन्त्वतिक्रमन्त्वत्र शब्दार्थविषयं मम। निर्मत्सरास्सुमनसो गुणान् गृह्णन्तु सर्वशः ॥**

समाप्तोऽयं दशमः स्कन्धः

इति श्रीवत्सान्वयपयः पारावारराकासुधाकरस्य सर्वविद्यानिधेः चक्रवर्तिनः
श्रीशैलगुरोस्सुतेन तच्चरणकमलपरिचर्या प्रसादिततत्सूक्तिसमधिगत
श्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा लिखितायां
श्रीमद्भागवतचन्द्रिकायां व्याख्यायां दशमस्कन्धे उत्तरार्धे नवतितमोऽध्यायः ॥ ९० ॥

1--1 T.W. Omit 2.B. त्र

**विज०** सर्ववेदार्थत्वेन सर्ववेदविषयत्वेन सम्यग्ग्रहो ग्रहणं यस्य स तथा तं स्वयोगमायया स्वरूपसामर्थ्येन रचितैरुत्पादितैः कृष्णो वेदव्यासः गाधिर्विश्वामित्रः, असितः आवन्तिः, सान्दीपनिः रामः एत आचार्या यस्य कृष्णस्य सः उद्धवस्य ईश्वरः उद्धवेश्वरः कृष्णगाध्यसितावन्तिरामाचार्यश्चाऽऽसौ उद्धवेश्वरश्च तथा अग्रण्यपत्नीभिः रुक्मिण्यादि श्रेष्ठपत्नीभिस्सह सन्दीक्षितः अग्रणीः सर्वोत्तमः ॥५१॥

श्रीकृष्णस्मरणार्थं संक्षिप्य तान् गुणान् कथयति - **तीर्थमिति**। तीर्थं कीर्तिलक्षणं नृणां चक्रे यत् यः यदुष्वजनि प्रादुर्भूतः यस्य पादशौचं पादप्रक्षालनजलं स्वस्सरित् स्वर्गनदी गङ्गाऽभूत्, यस्य स्वरूपं ऐश्वर्यादिषड्गुणैराप्तं पूर्णं, यस्य उरसि वक्ष उपरि रमा सर्वदाऽऽस्ते यस्य शास्त्रं शासकं वचनं तत्प्रमाणं, लोकस्येति शेषः। यच्छास्त्रं वेदादिशास्त्रं तत्प्रमाणमिति वा। सदसद्व्यक्तयः कार्यकारणव्यक्तयः यदनु यस्यानन्तरं विद्यमाना यदनुकूलत्वेन सत्तासम्बन्धिन्यः धर्मा यत्र यद्विषयत्वेन वर्तन्ते तस्य धर्मा यत्र यद्विषयत्वेन वर्तन्ते तस्य कृष्णस्यैतत् क्षितिभारहरणं न चित्रं, किन्त्वस्माकमेव हेत्वन्तरमाह- कालेति ॥ ५२ ॥

देवकीजन्मवादः देवकीपुत्रत्वेन वादः कीर्तिर्यस्य स तथा। जननिवासः जगन्निवासो जयति। कथमत्राऽऽह - नियमेति। भूभारक्षपणार्थं नियमेन भूमौ कृतानि पदाब्जानि पादन्यासपद्मानि यानि तैः स्वदोर्भिश्च दस्युपीडां, कुर्वन्निति शेषः। उभयदृशीनां अन्तर्बहिः स्थितिरूपस्य दृशिः दर्शनं येषां तेषां मुदं कुर्वन् अबलानां स्त्रीणां श्रीनिकेतात्ममूर्त्या लक्ष्मीमन्दिरात्मस्वरूपेण स्निग्धहासेक्षया स्निग्धमन्दस्मितशोभितरूपकटाक्षनिरीक्षणेन च स्मरवपुः काममूर्तिरिव स्थितः ॥ ५३ ॥

**यो ह्यात्मा जगदादिमध्यनिधनो योऽव्यक्तजीवेश्वरो**
**यः सृष्ट्वेदमनुप्रविष्ट ऋषिणा चक्रे पुनस्संहिताम् ।**
**यं सम्पद्य जहात्यजामनुशयी सुप्तःकुलायं यथा**
**तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥**

जगत आदौ मध्ये निधने वर्तत इति जगदादिमध्यनिधनः जगदुत्पत्तिस्थितिसंहारकर्ता अव्यक्तजीवयोरीश्वरः ऋषिणा व्यासात्मना भागवतीं संहितां अनुशयी जीवः यं सम्पद्य प्राप्य अजां बन्धकशक्तिं जहाति 'सता सोम्य तदा सम्पन्नो भवति' (छान्दो.उ. 3-6-8-1) इति श्रुतेः। सुप्तः परमात्मानं प्राज्ञं प्राप्तः यथा कुलायं शरीराभिमानं त्यक्त्वाऽऽस्ते तथा कैवल्येन सच्चिदानन्दस्वरूपस्थित्या निरस्तयोनिं नित्यनिरस्तप्रकृतिम् ॥

इत्थं एवंविधस्य यदूत्तमस्य कर्माणि विक्रमलक्षणानि गायेदित्यन्वयः। निजधर्मरिरक्षया (रिरक्षिषया?) स्वकल्पितधर्मरक्षणेच्छया तस्यानुकूलविडम्बनानि कर्मकषणानि दुष्कर्मनिराकरणसमर्थानि अनुवृत्तिमनुगमनमिच्छन् ॥५४॥.

मर्त्यः तयाऽनुवृत्त्या तस्य हरेर्धाम लोकमेति। कीदृश्या? श्रीमत्याः कथायाः श्रवणकीर्तनचिन्तनलक्षणया दुष्करेण तपसा कृतं साधितं जनतायाः क्रियासाध्यफलरूपं जनतापवर्गं यस्य हरेर्धामार्थं क्षितिभुजोऽपि ग्रामाद्वनं ग्रामं विहाय वनं ययुः यान्ति किम्पुनरन्य इति ॥ ५५॥

## सूत उवाच

**य इदमनुशृणोति श्रावयेद्वा मुरारे श्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ।**
**जगदघभिदलं तद्भक्तकर्णावतंसं भगवति कृतचित्तो याति तत्क्षेमधाम ॥**

स्कन्धार्थमुपसंहरति - **य इदमिति**। व्यासपुत्रैः शुकादिभिः जगतोऽघं पापं भिनत्तीति जगदघभित् तद्भक्तानां कर्णावतंसं कर्णालङ्कारायमानं श्रवणादिफलमाह - भगवतीति। क्षेमधाम मोक्षलक्षणं स्थानम्। श्रवणादिकुर्वतां इत्थंभाव्यमित्यत उक्तं भगवतीति। - "सर्वोत्तमोऽपि भगवान्गुणभावं जनार्दनः। दर्शयेद्वासुदेवोऽपि ह्यात्मनो जीवतामपि। अज्ञाशक्तादिभावस्तु कुतस्तस्याऽखिलेशितुः। कुतश्च जीवता तस्य प्रधानपुरुषेशितुः। कुतो दोषास्सर्वगुणपूर्णस्यानन्दवारिधेः" (वामने) इत्येतत्प्रमाणम् । अज्ञजनेन कृष्णे क्रियमाणसर्वशङ्कानिराकरणार्थं भगवत्पादैः स्कन्धान्ते दर्शितमिति ज्ञातव्यमिति

"योऽयाचि त्रिदशैः कुभारहतयेऽवतारि येन क्षितौ जघ्ने येन सुरासुहृत्समुदयो येन त्रिलोक्याऽपि सा।
येनाऽधायि युधिष्ठिरो निजपदे धर्मोऽपि येनाङ्कुरि श्रीकृष्णं तमकृष्णकृष्णदयितं वन्दामहे सन्ततम् ॥
पदरत्नावलिर्नाम दशमस्कन्धसङ्गता कृष्णप्रीत्या समाप्तोऽयं विद्वन्मानसहर्षिणी ।.

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे उत्तरार्धे नवतितमोऽध्यायः ॥ ९० ॥
समाप्तोऽयं दशमः स्कन्धः

# श्रीमद्भागवतदशमस्कन्धस्थ तृतीय भागस्य श्लोक पादानुक्रमणिका

| | अध्यायः | श्लोकः | पादः | | अध्यायः | श्लोकः | पादः |
|---|---|---|---|---|---|---|---|
| अत्रैवोदाहरन्तीमं | 88 | 13 | a | अथोपवेश्यपर्यङ्के | 80 | 20 | a |
| अथ तत्रकुरुश्रेष्ट | 85 | 27 | a | अथो मुनिर्यदुपतिना सभाजितः | 71 | 18 | a |
| अथ ते रामकृष्णाभ्याम् | 82 | 28 | a | अथोवाच हृषीकेशं | 69 | 37 | a |
| अथ तैरभ्यनुज्ञातः | 79 | 9 | a | अथोषस्युप्रवृत्तायां | 70 | 1 | a |
| अथ नारायणो देवः | 63 | 23 | c | अदत्त मवरुन्धीत | 68 | 28 | c |
| अथ पर्वण्युपावृत्ते | 79 | 1 | a | अदहन् वह्निमुत्सृजन् | 67 | 3 | d |
| अथ पृच्छामहे युष्मान् | 70 | 37 | c | अदान्तस्याविनीतस्य | 78 | 26 | a |
| अथ राजाहते क्षौमे | 75 | 22 | a | अदायि मेदिनी येन | 62 | 2 | c |
| अथार्त्विग्भ्योऽददा त्काले | 84 | 52 | a | अदीर्घ बोधाय विचक्षणास्त्वयं | 81 | 37 | c |
| अथर्त्विजो महाशीलाः | 75 | 25 | a | अदूषय च्छकृन्मूत्रैः | 67 | 6 | c |
| अथर्वाकश्यपो धौम्यः | 74 | 9 | a | अद्भुतं रोमहर्षणम् | 63 | 7 | b |
| अथवितथास्वमूष्ववितथं तव धाम समः | 87 | 18 | c | अद्यन स्त्वत्पदाम्भोजम् | 86 | 31 | c |
| अथाऽत्रब्रूहनुण्ठेयं | 70 | 47 | c | अद्यनिष्कौरवीं पृथ्वीम् | 68 | 40 | a |
| अथादिशन्प्रयाणाय | 71 | 12 | a | अद्यनोजन्मसाफल्यम् | 84 | 21 | a |
| अथान्यदपि कृष्णस्य | 76 | 1 | a | अद्यप्रभृतिवोभूपाः | 73 | 18 | a |
| अथाऽपतद्भिन्न शिराः | 88 | 36 | a | अद्यश्व इति मासांस्त्रीन् | 84 | 66 | c |
| अथाऽपिकालेस्वजनाभिगुप्तये | 84 | 18 | a | अद्याऽपि च पुरं ह्येतत् | 68 | 54 | a |
| अथाऽपिब्रूहि नो ब्रह्मन् | 69 | 22 | a | अद्याऽपि दृश्यते राजन् | 65 | 33 | a |
| अथाप्याश्रावये ब्रह्मन् | 70 | 41 | a | अद्याऽहं भगवल्लँक्ष्म्या | 89 | 12 | a |
| अथाऽऽप्लुतोऽम्भस्यमले यथाविधि | 70 | 6 | a | अधना अबहुप्रजाः | 90 | 43 | b |
| अथाब्रवी न्नभोवाणी | 61 | 33 | a | अधनोऽयं धनं प्राप्य | 81 | 21 | a |
| अथाऽऽह पौण्ड्रकं शौरिः | 66 | 19 | a | अधर्मस्ते कृतः प्रभो | 78 | 29 | d |
| अथैकदात्मजौ प्राप्तौ प्राप्तौ | 85 | 1 | a | अधुनावद्यकर्मणा | 88 | 49 | b |
| अथैकदाद्वारवत्यां | 82 | 1 | a | अधुना श्रीमधान्धाक्षा | 84 | 63 | c |
| अथोचुर्मुनयो राजन् | 84 | 34 | a | अध्यात्मशिक्षया गोप्यः | 82 | 48 | a |
| अथो न राज्यं मृगतृष्णिरूपितं | 73 | 14 | a | अद्यासीनञ्चतान्विप्रान् | 78 | 23 | c |
| अथोपविष्टः परमासने विभुः | 70 | 19 | a | अध्यास्ते प्रतिलोमजः | 78 | 24 | b |

| | अध्यायः | श्लोकः | पादः | | अध्यायः | श्लोकः | पादः |
|---|---|---|---|---|---|---|---|
| अध्रुवेण ध्रुवंगताः | 72 | 21 | d | अनुग्रहो यद्भवतः | 73 | 9 | c |
| अनक्षज्ञो ह्ययं राजन् | 61 | 28 | a | अनुजानी हि मां देव | 69 | 39 | a |
| अनङ्गोऽङ्गयुत स्तया | 61 | 22 | b | अनुजानी हि मां कृष्ण | 64 | 29 | a |
| अनन्तस्याऽप्रमेयस्य | 67 | 1 | c | अनुज्ञातो गतोऽर्णवम् | 79 | 17 | d |
| अनन्तस्याऽप्रमेयस्य | 79 | 33 | c | अनुज्ञातो विमानग्र्यम् | 64 | 31 | c |
| अनन्यमेकंजगदात्मकेतं | 63 | 45 | c | अनुज्ञाप्य गुरून् विभुः | 71 | 12 | d |
| अनपगतान्तकत्र दनाधिरूढ पदाद्भवतः | 87 | 39 | d | अनुतिष्ठन् सतां गतिः | 90 | 30 | b |
| अनपायिभि रस्माभिः | 62 | 29 | a | अनुनीता बुभौ विप्रौ | 64 | 19 | a |
| अनयोर्मातुलेयं माम् | 72 | 29 | c | अनुमित मन्त्रात्वयि विभाति मृपैकरसे | 87 | 37 | b |
| अनःस्यार्थैर्दिदृक्षया | 82 | 32 | d | अनुयुग मन्वहं सगुणगीत परम्परया | 87 | 40 | c |
| अनागत मतीतञ्च | 61 | 21 | a | अनुविश्यावभासते | 86 | 45 | d |
| अनागतां हलाग्रेण | 65 | 25 | e | अनुसेवां महाभुजः | 65 | 10 | f |
| अनात्मने स्वात्मविभक्तुमृत्यवे | 86 | 48 | b | अनुस्मरन्ता वन्योन्यम् | 79 | 28 | c |
| अनादरणकारणम् | 84 | 31 | b | अनुस्त्रोतेन सरयूम् | 79 | 10 | a |
| अनिच्छन्त मपीश्वरः | 74 | 49 | b | अन्तरं प्रेप्सुरर्जुनः | 86 | 8 | b |
| अनिरीक्षन्गदाग्रजः | 63 | 21 | b | अन्तःपुरचरादिपु | 69 | 36 | b |
| अनिरुद्धं विलिखितम् | 62 | 21 | a | अन्तःपुरजनैःप्रीत्या | 71 | 38 | a |
| अनिरुद्धोऽप्रतिरथः | 89 | 31 | c | अन्तःपुरजनो दृष्ट्वा | 80 | 24 | a |
| अनिवृत्तां व्रजेश्वरि | 82 | 38 | b | अन्तेच यः स्वात्मनि रुद्धविश्वः | 68 | 46 | c |
| अनिस्तीर्ण प्रतिज्ञोऽग्निं | 89 | 30 | c | अन्त्युपेतगुणात्मनाम् | 86 | 47 | d |
| अनिस्तीर्ण प्रतिश्रुतः | 89 | 45 | b | अन्यदान्यावहारिकः | 85 | 14 | d |
| अनिस्तीर्यत्यजन् पतेत् | 84 | 39 | d | अन्याश्चाभ्यागतायास्तु | 71 | 43 | c |
| अनीशा मधुरां ययुः | 84 | 69 | d | अन्यांश्चैवाऽऽत्मपक्षीयान् | 82 | 14 | a |
| अनीह एतब्दद्बुधैक आत्मना | 84 | 17 | a | अन्ये च तन्मुख सरोज मुदारहास | 86 | 20 | c |
| अनीहया गताहार्यं | 86 | 14 | c | अन्ये निर्भिन्न बाहूरु | 61 | 38 | a |
| अनुकालं समाहितः | 64 | 43 | b | अन्योन्यतोंसकटिपाद करोरु जत्रून् | 72 | 37 | b |
| अनुकुर्वन्स्वमायया | 83 | 7 | d | अन्योन्यसन्दर्शन हर्षरंहसा | 82 | 15 | a |

